हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम्।
कालकूटविषस्पर्शजातमूर्च्छागमामिव ॥ ३ ॥
नमः सर्वविदे तस्मै व्यासाय कविवेधसे।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ४ ॥

---

पूज्यमहेश्वरस्य सर्वाधारत्वेन सर्वज्ञत्वं, स्त्रीजनसुलभेन सारल्येन बाल्यत्वेन च अचिरादेव वाञ्छितावयवपूरणं सम्भाव्य च तत्करोपार्जिताया महाशया पार्वतीं स्तवीति, हरेति।—हरस्य—पशु पशुपतेरित्यर्थ, कण्ठग्रह—कण्ठाश्लेष, स आनन्द,—आह्लाद निरतिशय सुखमित्यर्थ, तेन मीलिते—सङ्कुचिते तदुपभोगात् ईषन्मुकुलिते इत्यर्थं, अक्षिणी—नेत्रे यस्या ता, स्वयग्रहाश्लेषसुखसम्पन्नामुमामित्यर्थ, अत एव काल-कूटस्य—कालकूटाभिधेयस्य, कालकूटेति स्वनामप्रसिद्धस्येति यावत, हरकण्ठस्थितस्येति भाव, ("काकोलकालकूटहलाहला विषभेदा अमी नव" इत्यमर) विषस्य—गरलस्य [अत्र कालकूटस्यैव विषविशेषार्थकतया तेनैव प्रस्तुतार्थसङ्गतौ पुन विष-पदोपादान पौनरुक्त्यदोषमावहतीति नाशङ्कनीय, गोबलीवर्दन्यायेनैव झटिति अर्थ-प्रतीतिबोधनार्थं सामान्यविशेषार्थपरशब्दद्वयप्रयोगस्य सुधीसम्मतत्वात्, यथा हि बलीवर्दस्य गोविशेषत्वे पि तस्य झटिति गोत्वेन बोधनार्थे "बलीवर्दमानय" इति उक्त्वाऽपि पुन 'गामानय' इति कथयति, तथाऽत्र कालकूटस्य विषविशेषत्वेऽपि झटिति तस्य विषत्वेन बोधनार्थं पुनर्विषशब्दप्रयोग समाहृत इति सुधीभिर्विभाव्यम्। कालकूटेति विशेषणं च विषस्य निरतिशयोत्कटत्व प्रकटीकृतम्] स्पर्शेन—सश्लेषेण, सम्पर्केणेत्यर्थ, जात,—उद्भूत, मूर्च्छागम,—मोहावेश यस्या तथाभूतामिव, उमा—गौरीं नमामि—वन्दे, विषाक्तद्रव्यसंसर्गे हि तादृशगरलप्रभावत श्वासप्रश्वास बयात संसर्गे शरीरेऽपि विषक्रियासम्भवात् मूर्च्छा नासम्भवनीया तत्र हि विष कण्ठस्य स्पर्शेन सञ्जातग्रहालिङ्गनजनितानन्दविगलितलज्जाया सुन्दर्या पत्युस्त दृष्टिषु विशेषहृतत्वम् अथवा निमीलन सुसङ्गतमेवेति कविना तदर्थ्यालिङ्गनसुखोप-भोगकृतनयननिमीलनेऽपि पतिकण्ठसङ्क्रामितविषक्रियाकृतमोहावशत्वेन उत्प्रेक्षित-मिति बोध्यम्। अत्र प्रकृते पतिकण्ठालिङ्गनजनितानन्दकृते नेत्रनिमीलने त्रिषं सम्पर्कजनितत्वेन सम्भावनात् उत्प्रेक्षालङ्कार। अनुष्टुप् छन्दः ॥ ३ ॥

अथ आत्मन प्रकृष्टकविताभिमानप्रकटनाय कविकुलशिरोमणि भगवन्त महर्षि श्रीकृष्णद्वैपायन स्तौति, नम इति।—सर्वविदे—सर्वं—सकलं वेदादिकं गीतादि महाकाव्यापर्यन्तं, वेत्ति—जानातीति तथोक्ताय योगजसन्निकर्षेण सर्वज्ञायेत्यर्थः,

प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः ।
कोकिला इव जायन्ते वाचालाः कामचारिणः ॥ ५ ॥

त्रिभुवनमापीति यावत्, कविवेधसे—कवीनाम्—काव्यरचयितॄणाम्, वेधाः,—विधाता तस्मै, कविषु अभिनवमहाकाव्यरचनापद्धतिप्रदर्शनेन स्रष्टाविधायिने इति यावत्, "अपारे काव्यसंसारे कविरेव प्रजापतिः" इति स्मरणात्, तस्मै—प्रसिद्धाय, व्यस्यति—विभजति, ऋग्यजुःसामाथर्वभेदेन वेदानिति व्यासः तस्मै, नमः,—प्रह्वीभूतो भवति इत्यर्थः । [प्रथमतो वेदमात्रम् अविभक्ततयाऽपरीक्षावस्थितं तत्र पराशरसुतो द्वैपायनः ऋग्यजुस्सामाथर्वाख्यया भक्त्या ब्राह्मण-उपनिषदादितया विभज्य, पञ्चमवेदभूतमहाभारतेन तथा वेदार्थोपनिबन्धनपुराणादिना बहुधा विस्तारयाम् इत्यस्य व्यासस्यापि प्रसिद्धिः ]। प्रख्यापितकविविधावलम्बनाय रचितग्रन्थव्यापनेन विविधमपि, यश्चक्रे इति।—यः,—कविवेधाः व्यास इत्यर्थः, भारतं—तदाख्यं महाकाव्यं भारतं वर्षमिव—भरत-राजाधिष्ठितप्रदेशमिवेत्यर्थः, [ अत्र "भारतम्" इत्येकस्यैव पदस्य श्लेषविधया उभयार्थ-परतया "वर्षमिव" इत्यनेनान्वयेति इति बोध्यम् ] सरस्वत्या—वागधिष्ठात्र्या देव्या, पक्षे,—ब्रह्मनिर्गतजलप्रवाहप्रवर्धितया सरस्वत्याख्यप्रसिद्धया नद्येत्यर्थः, पुण्यं—पवित्रं, चक्रे—कृतवान्, तदुक्तम्,—"भारताध्यापनात् पुण्यादपि पादमधीयतः । श्रद्दधानस्य पूयन्ते सर्वपापानि देहिनः ॥" इति। यथा विधाता निजनिर्माणकौशलस्य परां कोटिमेकत्र प्रदर्शयितुं सकलगुणमनोहरं विविधाभ्युदयाकरं सर्वतः समधिकं समुत्कर्षं भारतवर्षं सृष्ट्वा प्रकटिताखिलकल्मषनाशया अमलसलिलशालिन्या परम-पवित्रप्रवाहिण्या सरस्वत्या नीरमय्या पवित्रीचकार, तथाऽयमपि योजनगन्धा-सुतो निखिलविद्याप्रकाशं वेदव्यासः सर्वसारसमुच्चयम् अखिलकाव्यकलापनिधिं स्वप्रणीतं महाभारतं लोकातिशायिना वर्णनीयगुणभावप्रवर्धिना वागधिदेवतायाः कला-विलासेन पवित्रतामनयदिति निष्कृष्टार्थः । अत्र महाभारतस्य भारतवर्षेण सह सर्वैश्वर्यसाम्यकथनादुपमाऽलङ्कारः, तेन च व्यासस्य विधातृसादृश्यं व्यज्यते तथा च उपमाऽलङ्कारेण रूपकालङ्कारध्वनिरिति बोध्यम् । अनुष्टुप् वृत्तम् ॥ ४ ॥

अथेदानीं श्लोकपञ्चकेन लौकिककवीनां स्वभावं पर्यालोचयन्नाह, प्राय इति।—रागः, विषयाभिनिवेशः तेन अधिष्ठिता—आक्रान्ता, दृष्टिः,—ज्ञानं येषां तथा विधाः, अत एव कुकवयः,—कु—कुत्सिताः कवयः,—काव्यप्रणेतारः, अकाव्य-रचयितारः इति यावत्, प्रायः,—बाहुल्येन लोके—जगति, दृश्यन्ते इति शेषः, विषयरागासक्ततया अज्ञानोपहतदृष्टीनां कुकवीनां यानि हि भूयांसि काव्यानि इह लोके दृश्यन्ते, तानि तु आलङ्कारिकादिप्रदर्शितलक्षणानुपयुक्ततया ऐकवचनसारतर-

किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी ।
कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ १० ॥

काव्येषु सामाजिकजनानामभीप्सितगुणसमुदायानां समता अतीव दुर्लभेत्याह नव इति ।—नव —नूतन अर्थः कविभिरनिबद्ध इति यावत् अर्थः —अभिधेय अभिनवोपनिबद्ध वस्तित्यर्थे ("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः) अग्राम्या—अधमजनप्रयुज्यमाना वाक्यपद यस्य स च दोषविप्रकलया श्लाघ्या सज्जिता जातिः —काव्यानानुत्पत्ति अभिनवदोषविरहितकाव्यरचनमित्यर्थ, श्लेषः —शब्दार्थोभयशक्ति श्लिष्टपदप्रयोगोपनाजनिताऽलङ्कारविशेष, अक्लिष्ट —अदुर्बोध, अगूढतया स्फुटविभावानुभावादिभि व्यञ्जित इति यावत् रस —शृङ्गारादि, स्फुट —सुखसंवेद्यतया नवसमकालमेव सुव्यक्त तथा विकट —वैकल्य हि पदानां नृत्यप्रायत्व तदुपविशिष्ट अक्षर —वर्णाद्यादिरेव तेन बन्ध —गौडीरीत्युपकाव्यवै व्याडम्बरबहुलो गौडदेशप्रकृतो वर्णो गुम्फनमित्यर्थः एतत् कृत्स्नं—समग्रम्, अभिनवविषयविरचितत्वं ग्राम्यादिदोषविनिर्मुक्तत्व सुबोधश्लेषालङ्कृतत्व स्फुटरसत्वं गौडरीतिसम्पन्नत्वञ्च एकत्र—एकस्मिन् काव्येनेतीति यत् दुष्कर—दुर्लभमिति यावत् एते काव्योत्कर्षविधायका गुणा एकस्मिन् साधारणकविनिबद्ध काव्ये न दृश्यन्ते, महाकवीनां काव्यम् सकलगुणशालितया सहृदयप्रीतिकरमिति तदेव सुपाठ्यमिति भाव । अनुष्टुप् वृत्तम् ॥ ८ ॥

प्रागुक्तगुणवती रचनैव सर्वोत्तमोदिता अत एव ये हि कवय प्रोक्तगुणग्रामयुतं काव्य रचयितुमक्षमा तेषां कवित्वख्यातिलाभाय काव्यप्रणयनप्रयासो व्यर्थ इति प्रकट यति किमिति ।—तस्य—मन्दबुद्धे कवियशःप्रार्थिन काव्यरचयितु कवे—छन्दम काव्येन किं प्रयोजनम्, सर्ववृत्तान्तगामिनी—सर्वविषयप्रकाशिनी यस्य सर्वार्थं वाणि इत्यादि—यथा भाषा गद्य-समाजेषु विश्वसाहित्यानि विविध न कुर्वन्ति तथाम् अत्रम्—अवयव व्यक्ति या यथाभूता तथाभूतविषयक ग्राम जिज्ञजनहृदयग्राहिणी प्रत्यक्ष भारतवर्षे—दीपवदखिलवृत्तान्तप्रकाशिनी पदार्थानुस्यूततया च सकलतत्त्वप्रविशोधिनी प्रागुक्त सर्वार्थोद्दिष्टञ्च गुप्तोद्भासिनी च भारतीव—महाभारतकथा इव दिगन्तरम्—अन्यां दिशं न प्राप्नोति—न गच्छति अभिनवया प्रतिभया असीमया सत्यतया च झटिति सकलानि मानसानि व्याप्नोति [ एतेनास्य कविरिदम् अनवद्य काव्य भारतीया कथा [illegible] प्रीतगुणसंवृतत्वात् सर्वलोकमनोहारकमिति ध्यानतम् ] भगवत द्वैपायनस्य महाकाव्यस्य सर्वलोकसमादृतत्व दृश्यते, तथा हि—"नारदोऽश्रावयद्देवानसितो

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थिति. ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ १३ ॥
अविनाशिनमग्राम्यमकरोत् सातवाहन ।
विशुद्धजातिभिः कोष रत्नैरिव सुभाषितैः ॥ १४ ॥

---

अहङ्कार नून—निश्चितम् अपलत—अपसमवापेन्वय । इन्द्रदत्तामिकपुरुषघातिनी प्रतिभवेत्य पाण्डवा यथा विजयाद्यारहिता इतदर्पा आसन तथा महाकवे सुबन्धो कृती श्रीहर्षगुणराजिभूषितस्य वासवदत्ताख्यग्रन्थ चारुतामवलोक्य सर्वे कवय तत समुत्कर्षं मनसापि कर्तुमक्षमा इताहङ्कारा अभवन्निति निष्कर्ष । [ एतेन वासव दत्तारससदृशस्यानीव समुत्कर्षं उक्त, तथा महाकविसुबन्धुविरचितवासवदत्ता श्रीहर्षचरितकथापि लोकगुणालङ्कृता सहृदयानां हृदयग्राहिणी च इत्यभिप्रायो व्यज्यते ]। उपमालङ्कार.। अनुष्टुप वृत्तम् ॥ १२ ॥

अथ सुकवीनामपेक्षरस कविकुलतिलकस्य महाकवे हरिचन्द्रस्य गद्यकाव्यस्य प्राधान्य प्रतिपादयति पदेति।—पदाना—सुप्तिङन्तानां बन्ध वैदर्भ्यादिरीत्या रचनाविशेष, तत्पक्षे—समरभूमावेष्टनम् तेन उज्ज्वल—समुद्भासित, हारी—मनोहर, हाराख्यहारमाली च [ "अहारी" इति पा०—नास्ति हारी—हर्षो यस्मात तथाभूत, अपव,—न हरति कस्यापि अर्थमित्यहारीत्यर्थ ] कृता—सम्पादिता वर्णानाम्—अक्षराणा, ब्राह्मणादीनाञ्च, क्रमेण—रीतिपरिपाट्या मर्यादाम् सारेण च, स्थिति,—संनिवेश, अवस्थानञ्च यस्मिन येन वा तथोक्त, भट्टार,—पूज्य, हरिचन्द्र —तदाख्य कश्चिन कविविशेष तस्य गद्यबन्ध,—गद्यग्रन्थ, [ "पद्यबन्ध" इति पाठान्तर] नृप,—राजा, स इवाचरतीति नृपायते—राजवत् समुद्भासते सर्वोत्कर्षेण वर्तते इत्यर्थ । हरिचन्द्रकवे काव्यं सर्वश्रेष्ठमिति तात्पर्यम् । अनुष्टुप वृत्तम् ॥ १३ ॥

अपरमपि कविश्रेष्ठ सातवाहनं प्रशंसति अविनाशिनमिति।—सातवाहन,—तदाख्य कवि, विशुद्धा—निर्दोषा जाति —अभिनवकाव्यार्थानामुत्पत्ति, अलङ्कार विशेषा वा येषु तथाविधै, सुभाषितै,—हृदयग्राहिभि वाक्यै रत्नैरिव—मण्यादिभि रिव, पद्यरत्नसमूहैरित्यर्थं अविनाशिनम्—अनश्वरम, अतिरमणीयत्वेन चिरस्थायिन मिति भाव, अग्राम्य—ग्राम्यदोषवर्जितं, कोषं—काव्यसङ्ग्रहम् अकरोत्—विदधौ, अत्र रत्नै सह सुभाषितानामौपम्यबोधप्रतीतेरुपमालङ्कार । अनुष्टुप वृत्तम् ॥ १४ ॥

कीर्त्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ १५ ॥
सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ १६ ॥

---

प्रवरसेननामकमपरमपि कवीन्द्रं प्रशंसति कीर्त्तिरिति।—प्रवरसेनस्य—तदाख्यस्य कवेः, पक्षान्तरे,—प्रवे—वृक्षशिखरे प्लवनात् प्लवे इत्यर्थः, रसः,—रागो येषां ते प्रवरसाः—वानराः, तेषामिनः,—स्वामी तस्य वानरराजस्य सुग्रीवस्येत्यर्थः, ("इनः पत्यौ नृपार्कयोः" इति मेदिनी) कुमुदवत्—कैरववत्, उज्ज्वला—प्रदीप्ता धवला च, यद्वा,—कुः,—पृथिवी, तस्या मुत—आनन्द तया उज्ज्वला—भासुरा, कीर्त्तिः—एकत्र—काव्यप्रणयनजम्, अपरत्र—वैदेह्या समुद्धरणजनितं यशः, ("यशः कीर्त्तिः समज्ञा च" इत्यमरः) कुमुदोज्ज्वला—कुमुदेन—तदाख्येन वानरसेनापतिना, उज्ज्वला—प्रबला, तस्य शौर्य्यसमुल्लसिता इत्यर्थः, कपिसेनेव—वानरचमूरिव, सेतुना—तदाख्यकाव्यग्रन्थेन, अपरत्र—तदाख्यया प्रसिद्धेन श्रीरामकृतमार्गेण सागरस्य परं पारं प्रयाता—गता। यथा वानरसेना सेतुबन्धेन सागरमुत्तीर्य्य अपरपारस्थिता लङ्कां गता, तथा प्रवरसेनस्य यशः तदीयकाव्यग्रन्थस्य प्रचारेण सागरमपि उत्तीर्य्य देशान्तरं गतमिति निर्गलितोऽर्थः। अनुष्टुप् छन्दः ॥ १५ ॥

अत्र दृश्यकाव्यरचयितारमतीव प्राचीनं भासकविं स्तौति सूत्रेति।—भासः,—तदाख्यः कविः, सूत्र—नाटकीयप्रयोगानुष्ठानं, धारयतीति सूत्रधारः,—नाटकाभिनेतृप्रधानपुरुषविशेषः, स्थपतिश्च, तेन कृतः आरम्भो येषां तैः, बह्वी भूमिका—अनुकरणार्थमाविष्करणं वेशपरिवर्त्तः, रचना च, शिल्पकौशलमिति यावत् येषु तथाभूतैः, पताका—"बीजं बिन्दुः पताका च प्रकरी कार्यमेव च। अर्थप्रकृतयः पञ्च" इति पञ्चविधासु तृतीया अर्थप्रकृतिः, सा च 'यत् वृत्तं परार्थं स्यात् प्रधानस्योपकारकम्। प्रधानवच्च कल्प्येत सा पताकेति कीर्त्यते ॥' इत्युक्तलक्षणा, वैजयन्ती च, तया सहितैः, देवकुलैरिव—देवमन्दिरैरिव, नाटकैः,—रूपकभेदैः, तल्लक्षणं दर्पणकारेण,—"तत्र रूपारोपात्तु रूपकम्" इति, "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारसनिरन्तरम्। पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ॥ चत्वारः पञ्च वा मुख्याः कार्यव्यापृत

आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि।
जिह्वाऽन्तः कृष्यमाणेव न कवित्वे प्रवर्तते ॥ १९ ॥
तथाऽपि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
करोम्याख्यायिकाऽम्भोधौ जिह्वाप्लवनचापलम् ॥ २० ॥

---

काम यस्या तथोक्ता, यदा,—समुद्दीपित,—प्रज्वलित, कन्दर्प,—काम यस्या तथाभूता, मदनप्रकटीकृतविविधविलासा इत्यर्थ, (पुरा हि भगवत शङ्करस्य समाधिभङ्गाय मनसिजेन विविधस्य विलासस्य अनुष्ठापितत्वादिति) कृतम्—अनुष्ठित, गौर्या,—ईश्वर्या, प्रसाधनम्—आराधन, नायकेन नरवाहनदत्तेनेति भाव यस्या तथाभूता, अन्यत्र,—कृतम्—अनुष्ठित, गौर्या—पार्वत्या, (कर्तृभूतया) प्रसाधनम्—आराधन, करम्यति भाव, यदा —गौर्या (कर्मभूताया) प्रसाधनम्—अलङ्करण, हरेण यस्यात भाव यस्या तथाभूता, बृहत्कथा—तदाख्यम् इतिहासकाव्य, हरलीलेव—शिवविलास इव, कस्य—जनस्य, विस्मयाय—आश्चर्याय, गर्वपरिहाराय वा, नो ? भवतीति शेष, अपि तु सर्वस्यैव कवे सामाजिकजनस्य च विस्मयाय भवतीत्यर्थ। उपमाऽलङ्कार। अनुष्टुप् वृत्तम् ॥ १८ ॥

अधरस्थ आढ्यराजनामान कवि प्रशंसति, आढ्येति।—आढ्यराजो नाम कश्चित् कवि, तेन कृता,—प्रणीता, ये उत्साहा,—स्वीयासीमाध्यवसायफलभूता सन्दर्भविशेषा ते, हृदयस्थे,—चित्तनिहिते, मनसा पर्यालोचितैरित्यर्थ, अपि—किंवा, स्मृतै,—कदाचित् स्मरणपदवीं गते सति, जिह्वा—रसना, मदीयेति भाव, अन्त-कृष्यमाणेव—केनचित् बलात् हृदयाभ्यन्तर नीयमानेवेत्यर्थ, तया तव वाङ्मि हास्यप्रयास क्लेशान् उत्साहाना पुरस्तादित्याशयेनेति भाव, कवित्वे—कवित्व प्रकटयितुमित्यर्थ, न प्रवर्तते—नोत्सहते, उत्साहसन्दर्भ ईदृशगौरव यत्, तदग्रे मम सन्दर्भ न सुष्ठु प्रतिभातु शक्नोतीति भाव। ["आढ्यराजकृतोत्साहै" इत्यत्र "आढ्यराजकृतोच्छ्वास" इति पाठ—उच्छ्वासा,—तदाख्यकाव्यभेदा इत्यर्थ। अत्र प्रकृतायाः कवित्वप्रकटनाप्रवृत्ताया जिह्वाया अप्रकृतेन अन्त कृष्यमाणत्वेन सम्बन्धानुपपत्त्या तादात्म्याध्यासादुत्कटैककोटिकसन्देहोदयात् उत्प्रेक्षाऽलङ्कार। अनुष्टुप् वृत्तम् ॥ १९ ॥

इदानीं पूर्वोक्तमुत्कर्षापेक्षया आत्मनो न्यूनत्वेऽपि काव्यप्रणयने हेतु प्रकटयति, तथाऽपीति।—तथाऽपि—आढ्य राजकृतोत्साहै मे जिह्वाया अन्त कृष्यमाणत्वेऽपि, नृपते,—राज्ञ श्रीहर्षस्य, स्वचरितवर्णने मम प्रवर्तकस्येति भाव, भक्त्या—अनुरागपारवश्येनेति भाव, निर्वहणे—परिसमाप्तौ, आकुल,—महाराजस्य चरितकथायाः परिसमाप्ति-

दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे।
कथञ्चित् नीयते शय्यां कथा नववधूरिव ॥ २२ ॥
जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्ष॰ ।
सकलप्रणयिमनोरथसिद्धश्रीपर्व्वतो हर्षः ॥ २३ ॥

---

अथ चिकीर्षितस्याख्यायिकायाः सेवेक्षा सामाजिकाना युगपदाखादयितुकरणे दुष्करमिवेत्याह, दर्शयन्तीति।—मुखे—प्रारम्भे, वदने च, खेद—विमनायमानानां सामाजिकानां विरामनिति यावत्, अन्यत्र,—सुरतविधौ अनिच्छाजनितम् अनुराग-मित्यर्थः, दर्शयन्ती—प्रकटयन्ती, तथा पदे पदे—प्रतिपदप्रयोगामन्ते इति भावः, अन्यत्र,—प्रतिपादविक्षेपमित्यर्थः, प्रस्खलन्ती—व्याकरणालङ्कारादिसदनुमोलितपदात् अनियतं प्रच्यवमाना, अन्यत्र,—नववधूचितलज्जया सङ्कमसाध्वसेन वा पतिमुपगन्तु-मनिच्छन्ती, अत एव नववधूरिव—नवोढा कामिनीव, कथा—आख्यायिकाकाव्य, कथञ्चित्—महता कष्टेन, अतिप्रयत्नेनेत्यर्थः, शय्या—सहृदयहृदयरूपविश्रामस्थानम्, अन्यत्र,—शयन, नीयते—प्राप्यते। अत्र नववध्वा सह कथाया साम्यप्रदर्शनात् श्लिष्टविशेषणोत्थापिततया श्लेषानुप्राणितोपमालङ्कारः। अनुष्टुप् वृत्तम् ॥ २२ ॥

साम्प्रतं स्ववर्णनीयकाव्यनायकमाशिषा सवर्द्धयति, जयतीति।—ज्वलन्—दीप्य-मानः, प्रताप एव ज्वलनम्—वह्निः, तदेव प्राकारः—सालः, प्राचीरम् इत्यर्थः, ("प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः) तेन कृता जगतां रक्षा येन तथाभूतः, प्राकारवेष्टिता पुरी यथा अनायासेन संरक्षितुं शक्यते तथा विशालमपि साम्राज्यं महाप्रतापेन येन एकपुरमिव सुखं पालयाञ्चक्रे, एतेनास्या-प्रतिमशौर्यमाहात्म्य प्रतिपादितमिति, तथा सकलानां—समग्राणां, प्रणयिनाम्—अर्थिनां, मनोरथस्य—अभीष्टस्य, सिद्धौ—सम्पूर्त्तौ श्रिया—सम्पदा, पर्व्वतः,—गिरिः, लक्ष्मीनिवाससमूताचल इत्यर्थः, लक्ष्मीसम्भूत अनन्तवसुप्रसव गिरि यथा समागतानां धनार्थिनामीप्सितं पूरयति, तथैव यो हि अज्ञातरमर्थिषु धन तोयवत् विकीर्य अर्थिसार्थमनोरथमपूपुरत्, एतेनास्याक्षीणदानशौण्डत्वं प्रतिपादितमिति ज्ञेयम्, हर्षयति—आनन्दयति जनानिति हर्षः,—तदाख्यः नृपतिः, जयति—सर्वोत्कर्षेण वर्त्तते। [जयति ज्वलत्" इत्यत्र "जय ज्वलत्" इति पाठे—त्वं जय इति व्याख्यायते]। अत्र प्रतापे ज्वलनतादात्म्याध्यासात्, तथा राजनि हर्षे च श्रीपर्व्वताभेदारोपात् निरङ्ग रूपकमलङ्कारः। आर्य्या वृत्तम् ॥ २३ ॥

एवमनुश्रूयते—(१) पुरा किल भगवान् स्वलोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोद्याः कथाः कुर्वन् अन्याश्च निरवद्या विद्यागोष्ठीर्भावयन् कदाचिदासाञ्चक्रे। (२) तथाऽऽसीनञ्च तं त्रिभुवनप्रतीक्ष्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरःसरा महर्षयः सिषेविरे। केचिद् ऋचः स्तुतिचतुराः

---

(१) एवमिति।—अनुश्रूयते—परम्परया आकर्ण्यते। किलेति—प्रसिद्धौ। भग,—ऐश्वर्यादिषट्कं विद्यते अस्येति भगवान्, तदुक्तम्,—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥" इति। स्वस्य—आत्मनः लोकं स्वलोकं—ब्रह्मलोकमित्यर्थः। अधितिष्ठन्—समादरेण तदधीनं चेतादिकमादधन्। परमे—सर्वोत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी—ब्रह्मा। विकासिनि—विकस्वरे। पद्ममेव—कमलमेव, विष्टरः,—आसनं तस्मिन् पद्मविष्टरे। सुनासीरप्रमुखैः,—इन्द्रप्रभृतिभिः, ["वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः। सुष्ठु नासीरः,—अग्रगं सैन्यं यस्य सः, इन्द्र इति व्युत्पत्तिः]। गीर्वाणैः,—देवैः, ("गीर्वाणा दानवारयः" इति देवपर्यायेष्वमरः)। परिवृतः,—चतुर्दिक्षु परिवेष्टितः, गम्यं चतुराननत्वात्। ब्रह्मोद्याः,—ब्रह्म—वेदः, ("वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः) परमात्मा वा, उद्यते—कथ्यते, कीर्त्यते इति यावत् याभिस्ताः, ["वद सुपि क्यप् च" (३।१।१०६ पा०) इति भावे क्यप्, कर्मणि प्रत्ययः इत्येके, तथा च उक्तम्,—"ब्रह्मोद्या या कथा यस्यामुद्यते ब्रह्म शाश्वतम्" इति, तासां वक्ष्यमाणगीतागुणानुकूलत्वेन प्रधानतया तस्य प्रतिपादनम्। "ब्रह्मोदिता" इति पाठे—ब्रह्मणा—वेदेन उदिता—उक्ता इत्यर्थः]। अन्याः,—वेदवार्त्ता इत्यर्थः, निरवद्याः,—अनिन्द्याः, विद्यागोष्ठीः,—ज्ञानगोष्ठीः सभाः, समानविद्यावित्तशीलबुद्धिवयसामनुरूपैरालापैरेकत्रोपवेशनरूपा इति यावत्, तथा च वात्स्यायनीये,—"या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी। परहिंसात्मिका या च न तामवतरेद् बुधः॥ लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया। गोष्ठ्या सह चरन् विद्वान् लोके सिद्धिं नियच्छति॥" इति। भावयन्—सम्पादयन्। आसाञ्चक्रे—स्थितवान्।

(२) तथाऽऽसीनमिति।—तथा—तेन प्रकारेण, आसीनम्—उपविष्टं, त्रिभुवनप्रतीक्ष्यं—त्रिलोकीपूज्यं, ("प्रतीक्ष्यः पूज्यः" इत्यमरः)। ऋचः,—ऋग्वेदान्।

समुदचारयन्, केचिदपचितिभाञ्जि यजूंषि अपठन्, केचित् प्रशंसासामानि जगुः; अपरे विततकर्म्मक्रियातत्त्वात् मन्त्रान् व्याचचक्षिरे। विद्याविसंवादकृताश्च तत्र तेषाम् अन्योऽन्यस्य विद्याविवादाः प्रादुरभवन्।

(३) अथातिरोषणः प्रकृत्या महातपा मुनिः अत्रेः तनयः तारापतेः भ्राता नाम्ना दुर्व्वासा द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरम् अकरोत्। सर्व्वेषु च शापभयप्रतिपन्नमौनेषु मुनिषु, अन्यालापलीलया अवधीरयति कमलसम्भवे, कुमारी किञ्चिदुन्मुक्त-

---

स्तुतिचतुराः,—स्तुतिषु—स्तवपाठेषु, चतुराः,—दक्षाः। समुदचारयन्—सम्यक् उदात्तादिस्वरादिप्राधान्येन उच्चारितवन्तः। अपचितिभाञ्जि—अपचिति—पूजां, भजन्ते इति तथोक्तानि, पूजामुखस्थानीयम्, ("पूजा नमस्याऽपचितिः" इत्यमरः)। यजूंषि—यजुर्व्वेदभागानित्यर्थः। प्रशंसासामानि—स्तुतिरूपाणि सामानि, सङ्गीत प्रधान वेदभागानित्यर्थः। जगुः,—गीतवन्तः। विततकर्म्मक्रियातत्त्वात्—विततानि—प्रकटितानि, कर्म्मक्रियाणां—कार्य्यानुष्ठानानां, तत्त्वानि—प्रकरणानि यैः येषु वा तान्। ["विततक्रतुक्रियातत्त्वान्" इति पाठान्तरे—विततानि क्रतुक्रियाणां—यज्ञकर्म्मणां, तत्त्वानि यैस्ते] विद्याविसंवादकृताः,—विद्यानां—दर्शनादीनां, विसंवादेन—मतभेदेन, कृताः,—जनिताः, न तु मात्सर्य्यादिना।

(३) अतिरोषणः,—अतिकोपनः। प्रकृत्या—स्वभावेन, अन्यथा ब्रह्मसंसदि कथमेवमाचरेत् स्यात्। तारापतेः,—चन्द्रस्य। ["मन्दपालनाम्ना" इत्यत्र "मन्दुपालनाम्ना" इति पाठान्तरम्]। कलहायमानः,—कलहं कुर्व्वन्। गायन्—सङ्गीतस्वरेण पठन्। विस्वरं—विकृताः स्वराः,—उदात्तादयः यस्मिन् तथाभूतं यथा तथा। दुर्व्वाससि तथा विस्वरं साम गायति यदि कश्चित् दोषमुत्कीर्त्तयति, तदा तं प्रति अनेन शापोत्सर्गः क्रियते इत्याशयेनाह, शापेति।—शापभयप्रतिपन्नमौनेषु—शापात् भयं शापभयं, तेन प्रतिपन्नम्—अङ्गीकृतं, मौनं यैः तथाभूतेषु। अन्यालापलीलया—अपरकथाच्छलेनेत्यर्थः। अवधीरयति—अवज्ञां कुर्व्वति, दुर्व्वाससं प्रतीति शेषः। कमलसम्भवे—पद्मयोनौ, ब्रह्मणीत्यर्थः। कुमारी—अनूढा बाला, कौमारव्रतं—ब्रह्मचर्य्यं तरन्ती वा। ["कुमारी" इत्यतः प्राक् "भगवती" इति विशेषणत्वेन क्वचित् पाठः

बालभावे भूषितनवयौवने वयसि वर्त्तमाना, गृहीतचामरप्रचलभुजलता पितामहमुपवीजयन्ती, (४) निर्भर्त्सनताडनजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना, शिञ्जद्धृदयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, मदननगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयं, सलीलम् उत्कलहंसकुलकलाऽऽलापप्रलापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया, विद्वन्मानसनिवासलग्नेन गुणकलापेनेव अंसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वत्स्वच्छनायकम् अनेकमुक्ताऽनुयातम् अपवर्गमार्ग-

---

—सम भगवती—प्रागुक्तवर्णनेत्यर्थः ]। किञ्चिदुन्मुक्तबालभावे—ईषद्विगतशैशवे इत्यर्थः। गृहीतचामरप्रचलभुजलता—गृहीतेन चामरेण—बालव्यजनेन, प्रचला—चञ्चला, भुज एव लता यस्याः तथोक्ता, ["प्रचलभुजलता" इत्यत्र "प्रचलद्भुजलता" इति पाठान्तरे—प्रचलन्ती भुज एव लता यस्याः सा]। पितामहम्—ब्रह्माणम्। उपवीजयन्ती—वीजनेन आराधयन्तीत्यर्थः।

(४) निर्भर्त्सनेति।—निर्भर्त्सनाय—विरहव्यथया दुःखिताम् प्रति तिरस्काराय, ताडनं—प्रहारः, पीडाद्वितीयमित्यर्थः, तेन जातः,—उद्भूतः, रागः,—लौहित्यं ययोः तथाभूताभ्याम्, स्वभावारुणाभ्याम्—सहजरक्ताभ्याम्। समुद्भासमाना—सम्यक् विद्योतमाना। पदक्रममुखरेण—पदयोः क्रमः,—विक्षेपः, तेन मुखरं—सशब्दं, तद्विधं तेन। वाचालितचरणा—वाचालितौ—नदन्तौ, चरणौ यस्याः तथोक्ता। मदननगरतोरणस्तम्भविभ्रमं—मदनस्य—कामस्य, नगरम्—अवस्थानस्थानं, तस्य तोरणं—बहिर्द्वारं, ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः) तस्य स्तम्भौ तयोः विभ्रम इव विभ्रमः,—विलासः यस्य तथाभूतम्। जङ्घाद्वितयम्—जङ्घायुगलम्। ["मदन" इत्यत्र "धर्म" इति पाठान्तरम् अप्रसिद्धत्वादुपेक्ष्यम्]। उत्कलेति।—उत्कानाम्—उत्सुकानां, कलहंसानां कुलस्य कलः—मधुरास्फुटरवः, स एव आलापः,—आभाषणं, तद्वत् प्रलापिनि—मधुरास्फुटशब्दायमाने इत्यर्थः। मेखलादाम्नि—काञ्चीयष्टौ। विद्वन्मानसनिवासलग्नेन—विदुषां मानसं—हृदयं, तत्र निवासः,—सार्वकालिकी स्थितिः, तेन लग्नं—संसक्तं तेन, गुणकलापेनेव—दाक्षिण्यशीलादिगुणसमूहेनेव। अंसावलम्बिना—स्कन्धविलम्बमानेन, ब्रह्मसूत्रेण—यज्ञोपवीतेन। भास्व-

प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसकुसुममधुकरकुलैः उपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेनेव अंशुकेनाच्छादितशरीरा, वाङ्मयमिव निर्मलं दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास।

(७) दृष्ट्वा च तां तथा हसन्तीं स मुनिः,—"आः पापे! दुर्गृहीतविद्यालवावलेपदुर्विदग्धे। माम् अपि उपहससि?" इत्युक्त्वा शिरःकम्पविशीर्यमाणबन्धविसरैः उन्मिषत्तडित्तन्तुपिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण

---

कर्पेण। विकसितेति।—विकसिता—विकासं गता, या सितसिन्धुवारस्य—एक पुष्पलताविशेषस्य, मञ्जरी—वल्लरी, तद्वत् शुभ्रा—सच्छाञ्जिना, अत एव हसन्तीव—दुर्वाससं प्रति अवहेलनजनित हास्यं कुर्वतीव। प्रकटितेति।—प्रकटित,—प्रकाशित, विद्यामद,—विद्याजनिताऽहङ्कारः यया तादृशी। श्रुतिप्रणयिभि,—श्रुतिभि,—कर्णं सह, य प्रणय स विद्यते येषां ते, श्रुतिभिस्सह सम्बन्धिभिरिति यावत, मधुरध्वनित्वादिति भाव, अथच,—श्रुतिषु—वेदेषु, प्रणय,—सर्वात्मत्वेन प्रियता, अनुराग इत्यर्थ, तद्वद्भि। प्रणवैरिव—ब्रह्मप्रतिपादकमन्त्रविशेषैरिव। कर्णावतंसकुसुममधुकरकुलै,—कर्णभूषणीकृतपुष्पलग्नभ्रमरवृन्दै, उपास्यमाना—सेव्यमाना। प्रज्ञाप्रतानेन—प्रज्ञा—प्रकृष्टा ज्ञान, तस्या प्रतान —प्रसर तेनेव। अंशुकेन—वसनेन। वाङ्मयमिव—विद्यामिव। दशनज्योत्स्नालोक—दन्तचन्द्रिकाधवलितमिव। विकिरन्ती—वर्षन्ती।

(७) दृष्ट्वेत्यादि।—स मुनि तां तथा हसन्तीं दृष्ट्वा आपतत् जगादेत्यन्वय। तदेति।—सरस्वताऽवमानकृतिमत्सरपूर्वकमित्यर्थ। स मुनि,—पूर्वकथित स्वरूप। आ इति कोपद्योतकमव्ययम् [ पापे' इत्यत्र पापकारिणि" इति पाठान्तरम् ]। दुर्गृहीतेति।—दुर्गृहीत,—दुरभ्यस्त, य विद्यालव,—विद्यालेश, स्वल्पमात्रा विद्येत्यर्थ, तेन अवलेप —गर्व, तेन दुर्विदग्धा—दुर्विनीता, तत्सम्बुद्धौ। मामपि—निजाप्रतिहततेजसं दुर्वाससमपीत्यर्थ। शिर:कम्पेति।—शिरस कम्पेन—विधूननेन, विशीर्यमाणा —विश्लथ्यमाना, ये बन्धविसरा,—बन्धनसञ्चया तै। उन्मिषत्—उद्यत, तडित्तन्तु—विद्युद्धारा, पिङ्गलिमा—पिङ्गत्वं यस्य तथाभूतस्य। जटासञ्चयस्य—जटासमूहस्य। [ 'शिरःकम्पशीर्यमाणबन्धविसरारी·

दश दिश, (८) कृतकालसन्निधानामिव अन्धकारितललाट-पट्टाष्टापदाम् अन्तकालपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटि-माबध्नन्, अतिलोहितेन चक्षुषा अमर्षदेवतायै रुधिरोपहार-मिव प्रयच्छन्, निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलाय-माना वाचमिव निरुन्धन्, अंसस्रंसिनः शापशासनपट्टस्येव ग्रन्थिम् अन्यथा कृष्णाजिनस्य, स्वेदकणप्रतिबिम्बितैः

---

रुचिरपिङ्गलिनो जटाकलापस्य" इति पाठे,—शिरःकम्पेन क्षोभ्यमाणो यो चन्द्र तेन विसारी,—विसृमरस्य, इतस्ततः इति योजना, अत एव उन्मिषत् उद्यत्, पिङ्गलिमा—पिङ्गलत्वं यस्य तथाभूतस्य, जटाकलापस्य—जटासमुच्चयस्य ]। रोचिषा—अर्चिषा ("शोचिषा" इति पाठोऽपि स एवार्थः, "रोचिः शोचिरुभे क्लीबे" इत्यमरः)। सिञ्चन्निव वर्षन्निव रोषदहनद्रवेण—कोपाग्निप्रसरेण।

(८) कृतेति।—कृतं कालस्य—अन्तकस्य, कृतान्तस्य वा सन्निधानम्—उपस्थितिर्यया तथाभूताम्। अन्धकारितेति।—अन्धकारितम्—आकुञ्चितत्वेन दुष्प्रेक्ष्यं, ललाटपट्टमेव अष्टापदः—हेम यया तादृशीम्, [एतेन भ्रुकुटिविषयप्रकटीकृतस्वरूपत्वेन एतस्याः दर्शनीयत्वं विज्ञापितम्]। अन्तकेति।—अन्तकस्य—यमस्य, यत् पुरम्—अव-रोधकामिनीनिलय तस्य मण्डनाय—अलङ्करणाय, पत्रभङ्गस्य मकरिका—मकरा-कारविन्यासविशेषः इयं ताम्, रूपकमलङ्कारः। [ 'अन्तकालपुर—' इति पाठान्तरम् तत्र मण्डनमकरिकायाः भयङ्करत्वादित्यर्थः ]। भ्रुकुटि—भ्रूभङ्गम्, ( "भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटि परिचक्षते" इति कोषः )। आबध्नन्—कुर्वन्निव। अतिलोहितेन—अति रक्तेन। अमर्षदेवतायै—अमर्षः,—क्रोधः, तस्य अधिष्ठात्री या देवता तस्यै। रुधिरोप-हार—रक्तरूप पूजाद्रव्यम्। ["रुधिरोपहारम्" इत्यत्र "सरुधिरोपहारम्" इति पाठान्त-रम्]। प्रयच्छन्—अर्पयन्। निर्दयेति।—निर्दयं—दृढं यथा तथा, दष्टः दशनच्छदः,—ओष्ठः, अधरोष्ठ इति यावत् येन तथाभूतः। दन्तांशुच्छलेन—दशनकिरणनिर्गमन-व्याजेन। भयपलायमाना—भयात्—शापादिवचनादिति भावः, पलायमाना—प्रतिष्ठमानाम्। निरुन्धन्—निरुद्धां कुर्वन्। ["निर्दयदष्टदशनच्छदभयपलाय-मानामिव वाचं रुन्धन् दन्तांशुच्छलेन" इति पाठे—निर्दयं यथा तथा दष्टः यो दशनच्छदः तस्मात् भयेन पलायमानामिवेति समासः]। अंसस्रंसिनः,—स्कन्धाव-लम्बिनः, स्खलत इति भावः। ["अंसस्रंसिनः" इत्यत्र "अंसावस्रंसिनः" इति पाठा-न्तरम्]। कृष्णाजिनस्य—कृष्णमृगचर्मणः। शापस्य शासनपट्टः,—सनन्दफलक

मुनिमनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि ?" इत्यभिदधाना, (११) रोषविमुक्तवेत्रासनैः ओङ्कारमुखरितमुखैः उत्क्षेपदोलायमानजटाभारभरितशिरोभिः परिकरबन्धभ्रमितकृष्णाजिनच्छायाश्यामायमानदिवसैः (१२) अमर्षनिःश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिः अग्निहोत्रपवित्रभस्मस्मेरललाटैः

दूरीकरणनिश्चय यस्य तथोक्त, तत्सम्बुद्धि । क्वचित् पुस्तके "मुनिश्रेष्ठ ! चपल ! निराकृत !" इति प्रत्येकं पृथक् पृथक् सम्बोधनपदं दृश्यते, तच्च निराकृतम् ।—चपलाध्याय इत्यत्र ]। चापलस्खलितेति ।—चापलेन,—चपलत्वेन, स्खलितं—दोषः, विस्वरपठनरूपं स्खलितमिति भावः, तेन विलक्ष,—लज्जित, लज्जा प्राप्त यौवन इत्यर्थः, तत्सम्बुद्धि । सकलसुरेति ।—सकलानामपि सुरासुरमुनिमानवानामपि एव न कश्चिद्विशेष इति भावः । [ "चापलस्खलितविलक्ष ! कथं सकलसुरासुर—" इत्यत्र 'कथमात्मस्खलितविलक्ष सुरासुर—' इति पाठान्तरे—आत्मनः स्खलितेन विलक्ष,—लज्जा प्राप्तः योग्योऽपि त्वमित्यर्थ ]।

(११) रोषेति ।—रोषेण—दुर्वाससं प्रति क्रोधेन, विमुक्तानि—त्यक्तानि, वेत्रासनानि—वेत्रनिर्मितानि आसनानि यैः तथोक्तैः । ओङ्कारेति ।—ओङ्कारेण मुखरितं—ध्वनितं, मुखं येषां तैः, सतत प्रणवमुच्चरद्भिरिति भावः । उत्क्षेपेति ।—उत्क्षेपेण—उत्क्षेपेण, दोलायमानैः,—चलद्भिरित्यर्थः, जटाभारैः,—जटासमूहैः, भरितानि—आपूरितानि, शिरांसि येषां तैः । [ "जटाभारभरितशिरोभिः" इत्यत्र "जटाभारभरितदिग्भिः" इति पाठान्तरे—जटाभारैः, भरिताः,—व्याप्ताः दिशः यैः तैः ]। परिकरेति ।—परिकरबन्धेन,—कटिबन्धेन, तेन भ्रमितं—घूर्णितं, यत् कृष्णाजिनं तस्य छायया—कान्त्या, प्रभया इत्यर्थः ("छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः) श्यामायमानाः —कृष्णतामापद्यमानाः, दिवसाः यैः तथाभूतैः, ["—कृष्णा—" इत्यत्र कृष्णाजिनाटोपच्छाया" इति पाठान्तरम् ]।

(१२) अमर्षेति ।—अमर्षेण—क्रोधेन, यः निःश्वासः स एव दोला—दोलनयन्त्रं, पुनःपुनः चलनस्वभावत्वात् निश्वासस्येति भावः, तया प्रेङ्खोलितः,—आन्दोलितः, ब्रह्मलोकः यैः तथाभूतैः । सोमरसमिवेति—सोमो नाम लताविशेषः, तस्य रसं तमिव । स्वेदविसरव्याजेन—घर्मप्रसरच्छलेन । स्रवद्भिः,—क्षरद्भिः । अग्निहोत्रेति ।—अग्निहोत्रस्य पवित्रं—विशुद्धं यत् भस्म तेन स्मेराणि—विकस्वराणि, ललाटानि येषां तैः ।

(१४) अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्, उद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलम्, अतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः, सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सुधीरमुवाच,—"ब्रह्मन्! न खलु साधुसेवितोऽयं पन्थाः, येनासि प्रवृत्तः; निहन्त्येष परस्तात्।

---

विपन्ना, न सङ्कुलेति यावत्, मतिः,—चित्तं येषां तथाभूताः। ["असम्भृतमतयः" इत्यत्र "असंस्कृतमतयः" इति पाठान्तरेऽप्ययमेवार्थः]।

(१४) अथेत्यादिकं भगवान् पितामहः सुधीरमुवाच इत्यन्वयसम्बन्धः। तथेति।—तेन प्रकारेण शप्ताम् निर्दोषां सरस्वतीम् दृष्ट्वा इत्यन्वयः। कमलेति।—कमलात्—नारायणनाभिपद्मात् या उत्पत्तिः,—जन्म, सम्भव इति भावः, तया हेतुभूतया लग्नम्—संसक्तम्, मृणालसूत्रम् कोमलपद्मतन्तुरिति भावः यस्याः तथाभूतामिव। धवलेति।—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति प्रशंसार्थे नित्ययोगार्थे वा "अत इनिठनौ" (५।२।११५ पा०) इति मत्वर्थीयः प्रत्ययः "विशेषणसमासखण्डेऽपायेऽपत्यं" इत्यादाविव बोध्यः, न चेत्, कर्मधारयानन्तरम् एकप्रत्ययानुसारात्मके बहुव्रीहौ प्रतिपत्तिः सम्पद्यते, अन्यत्र तु द्विविधयोग इति नियमबलस्य अनुपादेयत्वम्। उद्गच्छदिति।—उद्गच्छत्—उदयमानम्, अच्छस्य—विशदस्य अङ्गुलीयकमरकतस्य—मरकतनिर्मिताङ्गुरीयकस्य मयूखलताकलापः,—किरणावलीसमूहः यस्मात् तथाभूतेन। त्रिभुवनेति। —त्रिभुवनस्य—विश्वस्य, उपप्लवः,—सङ्कटं तस्य प्रशमाय—शान्तये कुशापीडः —कुशतन्तुसमूहः धारयतीति तच्छीलेनेव, कुशानां मालिकालेन अलङ्करणम् कुर्वतेति भावः। भावीति।—भाविनः—भविष्यतः, कृतयुगस्य—सत्ययुगस्य, आरम्भे यः सूत्रपातः—सूत्रविन्यासः तमिव। पातयन्—कुर्वन् इह केवलधात्वर्थगतानुकारक्रियार्थं, "भवता चालितं वस्त्रं" इत्युदाहरणवज्ज्ञेयम्। दशनकिरणैः,—दन्तमयूखैः। सरस्वतीति।—सरस्वत्याः,—ब्राह्म्या इति भावः, प्रस्थानम्—ब्रह्मलोकात् मर्त्यलोके गमननिमित्तम्, तस्य मङ्गलपटहः,—माङ्गलिकवाद्यविशेषः, तेनेव। सुधीरम्—सुगम्भीरम्। येनासि प्रवृत्तः,—येन पथा प्रवृत्तः,—प्रचलित-

(१५) उद्दामप्रसृतेन्द्रियवाजिसमुत्थापितं हि रजः कलुषयति दृष्टिम् अनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते? विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्व्वानर्थान् असतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्म्मक्रोधयोः एकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि? क्षमा हि मूलं सर्व्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न ते आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता? क्व पुरोभागित्वम्? अतिरोषणश्चक्षुष्मान् अन्ध एव जनः। न हि कोपकलुषिता विमृशति मतिः कर्त्तव्यमकर्त्तव्यं वा। कुपितस्य हि प्रथमम् अन्धकारिणी भवति विद्या, ततो भ्रुकुटिः। आदौ इन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः। आरम्भे तपो गलति, पश्चात् स्वेदसलिलम्।

---

सुयन, अस्ति—भवति। निःक्षेप,—स्थ,—पक्ष, निहन्ति, गच्छन्तमिति शेष।

(१५) उद्दामेति।—उद्दामम्—उत्कटं यथा तथा, प्रसृतानि—प्रधावितानि, प्रचलितानीत्यर्थः, इन्द्रियाण्येव वाजिनः,—अश्वाः तैः समुत्थापितं समुद्धतम्। रजः—धूलिः। कलुषयति—आविलयति, कार्याकार्यदर्शनसामर्थ्यनाशं करोतीति भावः। अनक्षजिताम्—अक्षाणि—इन्द्रियाणि जितानि यैः ते अक्षजिताः, ते न भवन्तीति अनक्षजिताः तेषाम् अजितेन्द्रियाणामित्यर्थः। कृतबुद्धयः—शिक्षितमतयः। निसर्गविरोधिनी—स्वभाववैरिणी। पयःपावकयोरिव—जलानलयोरिव। महातपोभारवैवधिकता—महतः तपसः भारस्य वैवधिकः,—वाहकः तस्य भावः तत्ता, ("वोढा भारस्य वीवधिके वैवधिकः स्मृतः" इति कोषः)। पुरोभागित्वम्—दोषैकदर्शित्वम्। ("दोषैकदृक् पुरोभागी" इत्यमरः)। विमृशति—विचारयति। प्रथमा—सर्वप्रथमा, अन्धकारिणी—अन्धकाराच्छन्ना, कलुषितेति भावः। ["कुपितस्य प्रथमम् अन्धकारीभवति विद्या" इति पाठे—कुपितस्य विद्या—ज्ञानं, प्रथमम्—आदौ, अन्धकारीभवति—आच्छन्नीभवतीत्यर्थः] ततः,—तदनन्तरं, भ्रुकुटिः,—भ्रूभङ्गः, भवतीति शेषः। रागः,—समासक्तिः, लौहित्यञ्च। समास्कन्दति—आश्रयति। चरमं—पश्चात्, चक्षुः समास्कन्दतीत्यन्वयः। आरम्भे, कोपस्येति

पूर्वमयशः स्फुरति, अनन्तरमधरः। कथं लोकविनाशाय ते विषपादपस्येव वल्कलानि जातानि? अनुचिता खलु अस्य मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। (१६) शैलूष इव वृथा वहसि कृत्रिमम् उपशमशून्येन चेतसा तापसाकल्पम्। अल्पमपि न ते पश्यामि कुशलजातम्। अनेनातिलघिम्ना अद्याप्युपर्येव प्लवसे ज्ञानोदन्वतः। न खलु अनेडमूकाः एडा जडा वा सर्व्वे एते महर्षयः। रोषदोषनिषद्ये! स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्? एतानि तानि आत्मस्खलितवैलक्ष्याणि, येषामयशः

---

इव। स्फुरति—चलति क्रोधोद्भूतकम्पवशादित्यर्थः। पूर्वं—प्राक्। अयशः,—अकीर्त्तिः। विषपादपस्येव—विषवृक्षस्येव। ["वल्कलानि" इत्यत्र "जटावल्कलानि" इति पाठे—जटाः,—शिखाः, मिथोऽसम्मिलितत्वेन परस्परं लग्नकेशाः इत्यर्थः मूलानि च। वल्कलानि—मुनिवसनानि त्वचश्च। वृत्तमुक्ता—सुचरितमुक्ता, सुवर्त्तुलमुक्ताफला च।

(१६) शैलूष इव—नट इव, "जायोपजीवी शैलूषः कथितो बुधैः" ... वा। उपशमशून्येन—शान्तिरहितेन। तापसाकल्पं—मुनिवेशम्। कुशलजातं—मङ्गलसमूहम्। अतिलघिम्ना—अतिलाघवेन। ज्ञानोदन्वतः,—ज्ञानसमुद्रस्य, उपरि एव प्लवसे—सन्तरसि न तु मध्यमाग्रं विशसीति भावः। अनेडमूकाः,—श्रोत्रवाक्शक्तिरहिताः। एडाः,—श्रुतिहीनाः। जडाः,—मूर्खाः। तदुक्तं,—"कथिता अनेडमूका श्रोत्रवाग्रहिताः खलु ॥ ये जडाः। एडास्तु श्रुतिहीनाः स्युर्जडास्तु मूर्खा बुधैः प्रोक्ता" इति। ["अनेडमूका" इत्यत्र "अनेलमूका" इति पाठान्तरम्]। रोषेति।—रोष,—क्रोध एव, दोष इव निषीदति अस्यां निषद्या—आपणः, तत्सम्बुद्धौ, हे रोषदोषापणः। इत्यर्थः, यद्वा—रोष एव दोषः तस्य निषद्या—आधार एव तादृशि। स्वहृदये—निजचित्ते। निग्राह्ये—निग्रहीतुमर्हे सतीत्यर्थः। अनागसं—निरपराधाम्, ("आगः पापापराधयोः" इति कोषः)। आत्मस्खलितेति।—आत्मनः—स्वस्य, स्खलितानि—प्रमादाः, तैः वैलक्ष्याणि—लज्जितानि, साधुजनानां मुखाश्रितविषयत्वमात्रविशेषाः। ["आत्मस्खलितवैलक्ष्याणि" इत्यत्र "आत्मप्रमाद दर्शितवैलक्ष्याणि" इति पाठान्तरे—आत्मनः प्रमादेन—अनवधानतया, यत् स्खलितम्, प्रमादः एव स्खलितम् इत्यर्थो वा]। अयशः—अकीर्त्तिः,

याति अविदग्धो जनः” इत्युक्त्वा पुनराह,—“वत्से सरस्वति! विषादं मा गाः, एषा त्वामनुयास्यति सावित्री, विनोदयिष्यति च अस्मद्विरहिताम्। आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति” इति। एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणाय उदतिष्ठत्। सरस्वत्यपि तथा किञ्चिदधोमुखी (१७) धवलकृष्णशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभिनिश्वासपरिमललग्नैर्मूर्त्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा शोकशिथिलितहस्ता अधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुररवव्याहाराहूतैः भवन-

---

अविदग्ध,—मूढ़'। पुनराहेति।—वाच्यतामित्यत्री एव अस्मान्तेऽपि वाक्यक्रमे पुनरित्युपादानम्। विनोदयिष्यति—आनन्दयिष्यति। [“अस्मद्विरहिताम्” इत्यत्र “अस्मद्विरहदुःखिताम्” इति पाठान्तरम्]। समुचिताह्निककरणाय—समुचित यद् आह्निक—दिवसकार्य्यं, तस्य करण तस्मै। सरस्वतीत्यादिके,—सरस्वत्यपि तथा इत्यादिरन्वयसम्बन्धः।

(१७) धवलकृष्णशारा—धवल,—श्वेत, कृष्ण,—नील ताभ्यां शारा—शबला, सवर्णितैवर्ण ताम्, शारत्वञ्च धवलकृष्णाभिति वदनीये शारपदेन रक्तिमवर्णस्यापीति स्फुटा। कृष्णाजिनलेखामिव—कृष्णसारचर्म्मश्रेणीमिव। तपसे—तपश्चरणाय। षट्चरणचक्रे,—भ्रमरनिकरैः। [“षट्चरणचक्रे” इत्यत्र “षट्चरणकदम्बकैः” इति पाठान्तरम्]। शोकेति।—शोकेन—शापजनितेन दुःखनिचयं, शिथिलितौ—श्लथौ, अस्वाधीनौ इत्यर्थः, हस्तौ यस्याः सा। [“शोकशिथिलित—” इत्यत्र “शापशोकशिथिलित—” इति पाठान्तरम्]। अधोमुखीभूतेन—अधोमुखतां गतेन, य आश्रितोऽपि अन्यायीपरेभ्यः ददाति, स तपसाऽधमेनाधोमुखो जायते इति भाव। नखेति।—नखमयूखाना—नखकिरणाना, जालक—समूह तेन। नूपुरेति।—नूपुरयो रवा —निस्वना एव, व्याहारा —वचनानि, (“व्याहार उक्तिर्लपितं भाषितं वचनं वचः” इत्यमर) तैः, हूता,—आकृष्टा तैः। [“नूपुररवव्याहाराहूतैः” इत्यत्र “नूपुरव्याहाराहूतैः” इति पाठान्तरम्]।

उपशमयः। स्वयम् (२०) ऋतुराजस्य अभिषेकार्द्राः चामरकलापा इव अप्रट्यन्त कामिनीनां चिकुरचयाः कुसुमायुधेन। हिमदग्धसकलकमलिनीकोपेन इव (२१) हिमालयाभिमुखीं यात्राम् अधात् अंशुमाली।

अथ (२२) ललाटन्तपे तपति तपने लिखितललाटिकापुण्ड्रकैः (२३) अलकचीरचीवरसंवीतैः (२४) स्वेदोदबिन्दुमुक्तावलयवाहिभिः दिनकराराधननियमा इव अप्रट्यन्त

---

इति। प्रतपन्—प्रकर्षेण सन्तापं जनयन्, अध्यन,—ग्रीष्मदिवसेषु प्रवासमनुमापयन्। स्वयमिति आदरातिशयप्रदर्शनार्थं बोध्यम्।

(२०) ऋतुराजस्य—ग्रीष्मस्य। अभिषेकार्द्राः,—स्नानार्द्राः। चामरपक्षे,—माङ्गलिकोदकसिञ्चनसम्पादार्द्रत्वम्। अप्रट्यन्त—धृता इत्यर्थः। चिकुरचया,—केशकलापाः कुसुमायुधेन—कामेन, ग्रीष्मे स्नानार्द्रतया अशयनात् अतिसुन्दरत्वेन प्रतीयमाना तथाविधा कामिनीनां केशाः विशेषेण कामम् उद्दीपयन्तीति भावः। उक्तञ्च कालिदासेन,—"स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु। कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम्॥" इति।

(२१) हिमालयाभिमुखीं—हिमालय,—उत्तरदिशि स्थित स्वनामप्रसिद्ध पर्वतविशेष, तदभिमुखी ता, यात्रा—गतिम्, उत्तरायणम् इत्यर्थः, अधात्—अकरोत् इत्यर्थः। हिमेन निजकान्तानां कमलिनीनां दग्धीभूतत्वात् कोपेन तत्प्रतिकारार्थं हिमालयपदयात्रं बोध्यम्। ["अधात्" इत्यत्र "अकरोत्" "अदात्" इति पाठान्तरद्वयम्]। अंशुम्—किरणान्, मलति—धारयति इति अंशुमाली—सूर्य, एतेनास्य हिमपरिभवजक्रोधत्व प्रकटीकृतम्।

(२२) ललाटन्तपे—ललाटतापिनि, खरतरे इत्यर्थः, तपने—सूर्ये, तपति—तापं वितरति सति। लिखितेति।—लिखितललाटिकापुण्ड्रकैः—लिखित—चित्रित, हरिचन्दनेन इति भावः, [ललाटे अलङ्कार ललाटिका "कर्णललाटात् कनलङ्कारे" (४।३।६५ पा०) इति कन् तत स्त्रियामापि कृते कापि परे टकाकारस्य इत्वम्] ललाटिकापुण्ड्रक—ललाटभूषण तिलकमिद येषु तथाविधे।

(२३) अलकेति।—अलका,—चूर्णकुन्तला एव, चीरचीवराणि—वस्त्रखण्डानि, तै संवीता,—आवृता तै।

(२४) स्वेदेति।—स्वेदोदबिन्दव,—धर्मजलबिन्दव एव, मुक्तावलया,—

मननाम्नाटेन्दुभिः। (२५) चन्दनधूसराभिः पर्यस्त-म्बराभिः कुमुदिनीभिः इव दिवसम् अमुच्यत सुन्दरीभिः। (२६) निदाघसमा रत्नालोकम् अपि न असहन्त दृशः, किमुत स्फुटम् आतपम्। (२७) अशिशिरसमयेन चक्रवाकमिथु-नाभिनन्दिता, सरित इव तनिमानम् अनीयन्त मौग्ध्याः सर्वैः। (२८) अभिनवपटुपाटलामोदसुरभिपरिमलं न

केवलं जलं, जनस्य पवनस्य पवनम् अपि पातुम् अभूत् अभिलाषो दिवसकरसन्तापात्।

क्रमेण च (२९) खरखरमयूखे, खण्डिततडित्कैशवे, शुष्यत्सरसि, (३०) सीदत्स्रोतसि, मन्दनिर्झरे, (३१) झिल्लीकाझाङ्कारिणि, (३२) कातरकपोतकूजितानुबन्धबधिरितविश्वे, विश्वसत्पतत्त्रिणि, (३३) करीषङ्कषमरुति, विरलवीरुधि,

यस्य तादृशम्। पवनस्य—वायोः, पवनमपि—सञ्चलनमपि, तादृशसौरभ वहन्तं पवनमपि इत्यर्थः। ["पवनस्य पवनम्" इत्यत्र "पवनम्" इति पाठान्तरम्। एष च पाठः सुबोधतया समीचीनः प्रतिभाति]। पातुमभिलाषोऽभूत् इत्यन्वयः।

(२९) खरखरमयूखे—खरः,—तीक्ष्णः, खरमयूखः,—उष्णरश्मिः सूर्य इत्यर्थः यस्मिन् तथोक्ते, निदाघकाले इति सर्वत्रान्वयः। ["खरखरमयूखे" इत्यत्र "खरखगमयूखे" इति पाठे—खे—आकाशे गच्छति इति खगः,—सूर्यः ("खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे" इति मेदिनी) खरः खगस्य—मयूखः यत्र तादृशे]। खण्डितेति।—खण्डितः—निर्जितः, तडित्—विद्युत्, शैशवं—बाल्यं, शिशुतानिबन्धनं चापल्यमिति भावः, येन तथाभूते, विद्युदालोकादपि अतितीक्ष्णालोकशालिनीति भावः। ["खण्डिततडित्कैशवे" इत्यत्र "खण्डितशैशवे" इति पाठे—खण्डितम्—अपगतं—शैशवं—बाल्यभावः, प्रथमावस्था इत्यर्थः, यस्य तथाभूते, प्रवर्द्धमाने इत्यर्थः]। शुष्यदिति।—शुष्यन्ति—शोषं गच्छन्ति—सरांसि यस्मिन् तथोक्ते।

(३०) सीददिति।—सीदन्ति—अवसादं गच्छन्ति, स्रोतांसि यस्मिन् तादृशे। मन्दनिर्झरे—मन्दाः,—अल्पाः —निर्झराः —प्रस्रवणानि यत्र तथोक्ते।

(३१) झिल्लीकेति।—झिल्लीका,—क्षुद्रा कीटविशेषाः, तासां झाङ्कारो विद्यतेऽस्मिन्निति तथोक्ते, तथाविधे समये निश्चलस्थिता झिल्लीरवरूपं झाङ्कारं कुर्वन्तीति प्रसिद्धिः।

(३२) कातरेति।—कातराणां ग्रीष्मार्त्तानामिति यावत्, कपोतानां कूजितानुबन्धेन कूजनसातत्येन बधिरितं—बधिरीकृतं विश्वं—जगत् येन तथोक्ते। कपोता खलु अतीव मेदोमयत्वात् नितान्तं ग्रीष्मासहाः, अत एव पतत्त्रिष्वपि अस्य पृथक्त्वेन ग्रहणम्। पतत्त्रिणामपरेषां तु श्वासस्यैव औचित्यं चौक्यं, तेषां तादृशपीडाभावात्। विश्वसत्पतत्त्रिणि—विशेषेण श्वसन्तः,—क्लान्ततयेति भावः, पतत्त्रिणः —पक्षिणः, कपोतेभ्योऽन्ये इति भावः, यस्मिन् तथोक्ते।

(३३) करीषङ्कषेति।—करीषाणि—गोमयानि कषन्ति—शोषयन्तीति तादृशाः

( २४ ) रुधिर-कुतूहल-केशरिकिशोरक लिह्यमानकठोर-धातकीस्तबके, ( २५ ) ताम्यत्स्तम्बेरमयूथ वमथु तिम्यन्महा-महीधरनितम्बे, ( २६ ) दूयमानद्विरददौमदानाख्यानश्यामिका-लीन मूकमधुलिहि, ( २७ ) लोहितायमान-मन्दार-सिन्दूरित-सीम्नि, ( २८ ) सलिल स्यन्दसन्दोह सन्देह-मुह्यन्महामहिष-विषाणकोटि- विलिख्यमानस्फुटत्स्फाटिकदृषदि,

---

मरुत,—वायव यस्मिन तथोक्ते। विरलवीरुधि—विरला,—अल्पा, वीरुध,—लता यत्र तादृशे।

( २४ ) रुधिरेति।—रुधिरेषु, कुतूहलिन—लोलुपा इति यावत् यै केशरिकिशोरका —सिंहशिशव, तै। [ किशोरकशब्देन दन्ताभावस्तता, सौन्दर्यातिशयश्च द्योत्यते ], लिह्यमान,—आस्वाद्यमान रक्तधियेति भाव कठोर,—परिणत, धातकीस्तबक —धातकीलताया पुष्पगुच्छ, ("धाइफुल" इति बङ्गभाषा) रक्तवर्ण इति भाव यस्मिन् तथोक्ते।

( २५ ) ताम्यद्भिरिति।—ताम्यताम्—आतपतापेन क्लिश्यतामित्यर्थ, स्तम्बेरम यूथाना—हस्तिसङ्घाना वमथुभि —उद्गारै कम्बीकरैरिति यावत, तिम्यन —आर्द्रीभवन महता महीधराणा नितम्बा —कटकदेशा यस्मिन् तथाभूते।

(२६) दूयमानेति।—दूयमानानां—ताम्यता द्विरदानां—गजानां दौमनस्य—क्षीणतां गतस्य दानस्य—मदस्य आख्याना—अपसरणधर्मकत्वात् ईषच्छुष्का, या श्यामिका—मदलेखासम्बन्धिनी श्यामवर्णरेखा तस्या लीना —अतितृषात् सक्ता, मूका — आर्ततया नि शब्दा, गुञ्जितरहिता इत्यर्थ मधुलिह,—भ्रमरा यस्मिन तथोक्ते।

( २७ ) लोहितायमानेति।—लोहितायमानै —अलोहिता लोहिता भवन्त तै पुष्पविकाशात् रक्तायमानैरित्यर्थं, मन्दारै —पारिजाताख्यतरुविशेषै ("मन्दार पारिजातक" इत्यमर ) सिन्दूरिता —सञ्जातसिन्दूरा दत्तसिन्दूरा इवेत्यर्थ सीमान —प्रान्तभागा यामाथामिति अथ यस्मिन् तथोक्ते।

( २८ ) सलिलेति।—सलिलानां—जलानां स्यन्दा —स्रवा तेषां सन्दोह,—समूह तस्य सन्देहेन—भ्रमेणेति यावत् मुह्यद्भि —चित्तविभ्रान्ति गच्छद्भि महद्भि महिषै विषाणाना—शृङ्गाणां कोटिभि,—अग्रभागै विलिख्यमाना —घृष्यमाणा स्फुरन्त्य सौर्यातपेन चकासमाना इत्यर्थ स्फाटिकदृषद,—स्फटिक

(३९) घर्मर्मरितगर्मुति, तप्तपांशुकुकूलकातरविकिरे, (४०) विवरशरणश्वाविधि, (४१) तटार्जुनकुररकूटज्वरविवर्तमानोत्तानशफरशारपङ्कशेषपल्वलाम्भसि, (४२) दावजनितजगन्नीराजने, (४३) रजनीराजयक्ष्मणि, कठोरीभवति निदाघकाले प्रतिदिशम् आढौकमाना इव ऊषरेषु

शिला यस्मिन् तथोक्ते। ["स्फटिकदृषदि" इत्यत्र 'स्फाटिकदृषदि' इति पाठे,—स्फटिकमणिमयशिला यस्मिन् तथोक्ते इत्यर्थ ]।

(३९) घर्मेति।—घर्मेण—उष्मणा, मर्मरिता —शुष्कतया मर्मरध्वनियुता, गर्मुत —लताविशेषा यस्मिन् तादृशे। ('गर्मुत् स्त्री स्वर्णभेदयोर्मक्षिकाविशेषरप्यी। शरभास्करयो पक्षि' इति मेदिनी। गत,—नलाख्य लताविशेष )। तप्तेति।—तप्ता पांशव —रजांसि एव कुकूला,—तुषानला तै कातरा विकिरा,—कुक्कुटादिपक्षिभेदा यस्मिन् तादृशे।

(४०) विवरेति।—विवराणि—गर्ता एव शरणम्—आश्रय येषां तादृशा श्वाविध,—शल्या "सजारु" इत्याख्य पशुभेदा इत्यर्थ यस्मिन् तथोक्ते।

(४१) तटेति।—तटेषु—तीरेषु ये अर्जुना,—श्वेतवर्णा पक्षिभेदा, तेष ये कुररा,—उत्क्रोशाख्यपक्षिभेदा श्वेता इति भाव, तथा कूटा,—ध्वनिविशेषा, तै ज्वर,—सन्ताप यद्वा —कूटा एव ज्वरा तादृशसमयी स्तोक इति भाव, तत्र विवर्तमाना,—विलुठन्त, उत्ताना,—ऊर्ध्वमुखा इति भाव, ["विवर्तमान—" इत्यत्र 'निवर्तमान—' इति पाठ —निवर्तमाना,—विरमन्त, जलमध्ये गमनादिति भाव, अत एव उत्ताना,—उद्भ्रममाणा तीरस्था कुररा यदा कूजन्ति, तदा मत्स्या भीता सन्त उत्प्लवन्त इति सरलस्वभाव ] शफरा,—क्षुद्रमत्स्यभेदा तै शारा —शबला पङ्का —कर्दमा, शेषा येषां तादृशानि, पल्वलाना—क्षुद्रसरसाम अम्भांसि—जलानि यस्मिन् तथोक्ते।

(४२) दावेति।—दावेन—वनानलेन ("दवदावौ वनानले" इत्यमर ) जनितं—सम्पादितं जगता नीराजनम्—आरात्रिकाख्य शान्तिकर्मविशेष यस्मिन् तथोक्ते।

(४३) रजनीति।—रजन्या —रात्रे, राजयक्ष्मा—क्षयरोग तस्मिन्, रात्रे क्रमेण दाघशोषसम्पादनात इति भाव। कठोरीभवति—प्रवृद्धता गच्छति। प्रतिदिशम्—दिशि दिशि। ('उन्मत्ता,—उद्भ्रमाणा, मातरिश्वान,—वाता, प्रावर्तन्' इति उत्तरेण सम्बन्ध )। तानेव विशिनष्टि, आढौकमाना इत्यादिभि।—

(५२) दावदग्धस्थलीमसीमिलनमलिनाः (५३) शिथिलक्षपणकव्रतय इव मयूरपिच्छचयान् उच्चिन्वन्तः, सप्रयाणगुञ्जा इव (५४) शिञ्जानजरत्करञ्जमञ्जरीबीजजालकैः, सप्ररोहा इव (५५) आतपातुरवनमहिषनासानिकुञ्जस्थूलनिश्वासैः, सापत्या इव (५६) उड्डीयमानजवनतरहरिणपरिपाटी-

भ्राम्यन्ति, तथैव ये हि वात्यामयौ भैरवभ्रमौ तदा नियतमुत्पादयामासुरिति तात्पर्यम्, तदुक्तम्—"प्लुतावपातप्लुतगर्जितानि छेद्यानि मायाकृतमिन्द्रजालम्। चित्राणि युद्धानि च यत्र नित्यं तां तादृशीम् आरभटीं वदन्ति॥" इति।

(५२) दावेति।—दावेन—वनाग्निना, दग्धा—भस्मीकृता, या स्थली—अकृत्रिमा भूमिः, सैव मसी, तस्या मिलनेन—सङ्गेन, मलिनाः। ["मसीमिलनमलिना" इत्यत्र "मसीमलनमलिना" इति पाठे—मसीनां मलनेन—धारणेन, मलिनाः]।

(५३) शिथिलेति।—शिथिलं—श्लथम्, क्षपणकानां—जैनसंन्यासिनां, व्रतं,—व्यवहारो येषां तथाभूता इव, जैनानां स्नानप्रक्षालननिषेधात् मलिनकायत्वमिति भावः। ["मयूरपिच्छचयान्" इत्यत्र "वनमयूरपिच्छचयान्" इति पाठान्तरम्]। उच्चिन्वन्तः,—धारयन्तः क्षपणका अपि मसीमलिनानि पिच्छानि जैनधर्मानुपालनात् धारयन्ति, ["शिखण्डस्तु पिच्छबर्हे नपुंसके" इत्यमरवचनात् पिच्छशब्दस्य मयूरपुच्छार्थकत्वाभावात् मयूरपदमाधिक्यमेवोपात्तम्]। उन्मत्तपक्षेऽपि,—विकारादिवशात् यदृच्छया पिच्छचयान् वहन्ति, अत एव सप्रयाणगुञ्जा इव—प्रयाणे—यात्रायां गुञ्जन्तीति गुञ्जाः,—ढक्काविशेषास्तैः सह वर्तमाना इव। उन्मत्तानामपि नृत्यकाले दर्शकाः करतालादिकं वादयन्ति।

(५४) शिञ्जानेति।—शिञ्जानाः,—अस्फुटं शब्दायमानाः जरन्तः—प्राचीनाः, करञ्जानां—तरुविशेषाणां, या मञ्जर्यः, तासां बीजजालकैः,—बीजनिचयैः सप्ररोहा इव—साङ्कुरा इव।

(५५) आतपेति।—आतपेन—सन्तापेन, आतुराः,—आर्ताः, ये वनमहिषाः तेषां नासाः निकुञ्जा इव—दीर्घरोमावततया लतादिपिहितोदरा वनभूमय इव ("निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः) तेषां स्थूलनिश्वासाः,—महानिश्वासाः, तेभ्यो निर्गता इति भावः। उन्मत्ता अपि आतपक्लिष्टा दीर्घं निश्वसन्ति। सापत्या इव—सपुत्रा इव सन्ततानां रक्षिण इव। उन्मत्तान् अपि सम्भावितपतनभयात् अपत्यानि न त्यजन्ति।

(५६) उड्डीयमानेति।—उड्डीयमानानाम्—आतपतापासहिष्णुतया उत्पतताम्,

पेटकै, सभ्रूकुटय इव (५७) दह्यमानखलधानतुसकूटकुटिलधूमकोटिभिः, सावीचिवीचय इव महोष्मसुक्तिभिः, लोमशा इव (५८) शीर्यमाणशाल्मलिफलतूलतन्तुभिः, दद्रुला इव (५९) शुष्कपत्रप्रकराकृतिभिः, शिराला इव (६०) तृणवेणीविकिरणैः, उच्छ्रयाश्रव इव

जवनतराणाम्—अतिवेगिनां हरिणानां ["जवनतरहरिण" इत्यत्र 'जवनवात-हरिण' इति पाठे—जवनानां—वेगगामिनां, वातहरिणानां वाताभिमुखं गच्छतां हरिणानाम्] परिशब्द —क्षयोरा तथा पेटका,—वदन्तका, यूथानि इत्यर्थः, ("पेटक पुस्तकादीनां मञ्जूषाया वदन्तके" इति मेदिनी)। सभ्रूकुटय इव—भ्रूभङ्गसहिता इव। उन्मत्ता अपि क्रोधमाया एव, भ्रुकुट्यादयस्तु क्रोधस्य अनुभावाः।

(५७) दह्यमानेति।—दह्यमानानाम्—आतपतापेन सन्ताप्यमानानां खलधानानां—धान्यमर्दनस्थानस्थितानां धान्यानां, तुसकूटाः,—तुषराशयः, कुटिलाः —कुटिलगामिन्यः, (कुटिलपदेन भ्रुकुटीसादृश्यं व्यनक्ति) धूमकोटय इव धूमराशय इव ते, आसानां ज्वालाभावात् तेषां धूमलेशोपचयमनुमितमेवेति। सावीचिवीचय इव—अवीचिः,—नरकविशेषः, ('तद्भेदास्तपनावीचि-महारौरवरौरवाः" इत्यमरः। तद्भेदाः,—नरकभेदाः) तस्य वीचयः,—तरङ्गाः, ज्वाला वा, तैः सह वर्तमाना इव। महोष्मसुक्तिभिः—महान्तः ऊष्माणः तेषां सुक्तिभिः, त्यागैः, दृष्टिभिरित्यर्थः, यद्वा, —ऊष्माणः,—सन्तापाः, तेषां सुक्तिभिः,—विसर्गैः सन्तापविसर्गैरित्यर्थः। लोमशा इव—रोमपूर्णा इव। उन्मत्ता अपि खेदादिवशाद् रोमाञ्चिताः।

(५८) शीर्यमाणेति। शीर्यमाणानां—विदीर्यमाणानां शाल्मलिफलानां तूलतन्तुभिः,—तूलसूत्रैः। दद्रुला इव—दद्रुरोगवन्त इव। उन्मत्ता अपि कदाचित् नायकरणात् दद्रुयुक्ता भवन्ति। ["दद्रुला" इत्यत्र 'दद्रुणा' इति पाठोऽपि स एवार्थः। दद्रू अस्य अस्तीति दद्रुणः, "दद्रुवा कुष्ठवान्" इति न]।

(५९) शुष्केति।—शुष्काणां पत्राणां प्रकराः,—समूहाः, तेषाम् आकृष्टयः,—आकर्षणानि ताभिः। शिराला इव—शिरासमूहशालिन इव, सुव्यक्तशिरासमूहा इवेत्यर्थः। उन्मत्ता अपि कार्श्यात् वातव्याधेश्च शिराला भवन्ति।

(६०) तृणेति।—तृणानां वेणी—राजिः, (शिरासादृश्यप्रदर्शनार्थं वेणीपदम्) तस्याः विकिरणैः,—विक्षेपैः, उच्छ्राणि—उन्नतानि अविरलपतितानि इत्यर्थः, अश्रूणि—नयनजलानि येषां तथाभूता इव। उन्मत्ता अपि रुदन्ति। ["उच्छ्राश्रव, इत्यत्र

(६१) धूयमानयवशूकशकलश्मश्रुभिः, दंष्ट्रालां इव (६२) चलितशल्लसूचीशतैः, जिह्वाला इव वैश्वानरशिखाभिः, उत्सर्पत्सर्पकञ्चुकचूडाला: (६३) ब्रह्मास्तम्भरसाभ्यवहरणाय कवलग्रहमिवोष्ठैः कमलमधुभिः अभ्यस्यन्त, (६४) सकलसलिलोच्छोषघर्मघोषणापटहैः इव शुष्कवेणुवनास्फोटनपटुरवैः,

"उत्खनयव" इति पाठे,—उत्—उन्नतानि, श्मश्रुणि—कूर्चा येषां तथाभूता इव। उन्मत्ता अपि चिरं क्षौरकर्माभावात् दीर्घश्मश्रवो जायन्ते]।

(६१) धूयमानेति।—धूयमानाः—सञ्चलनात् कम्पमानानां, यवानां शूकाः,—शूक्ष्म, शिखासूच्य इत्यर्थः, ("शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे" इति मेदिनी) तेषां शकलाः,—खण्डाः, श्मश्रव,—कूर्चा इव तैः। ["धूयमानयव—" इत्यत्र "धूयमानलवयव—" इति पाठान्तरे,—धूयमानानां लवानाम्—अभिनवोत्पन्नानां, यवानाम्] दंष्ट्राला इव—दीर्घदन्तयुक्ता इवेत्यर्थः। उन्मत्ता अपि दन्तादिविकासैः भयं भावयन्ति।

(६२) चलितेति।—चलितानां—चलताम्, उड्डीयमानानामिति यावत्, शल्लानां—श्वाविधां दीर्घकण्टकरूपलोम्नां, ("श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्" इत्यमरः) सूचीशतैः,—सूच्याग्रभागैः। जिह्वाला इव—रसनावन्त इव, बहिर्निर्गतरसना इवेत्यर्थः। उन्मत्ता अपि जिह्वां निःसार्य भीषयन्ते। वैश्वानरशिखाभिः—वह्निशिखाभिः। उत्सर्पदिति।—उत्सर्पन्ति—उच्चतापात् प्रचलन्ति सर्पाणां कञ्चुकैः,—निर्मोकैः, चूडालाः,—शिखावन्तः। उन्मत्ता अपि स्नानादिना विना उत्सुकचूडा भवन्तीति दृश्यते। ["उत्सर्पत्सर्पकञ्चुकैः चूडाला इव" इति पाठो युज्यते]।

(६३) ब्रह्मेति।—ब्रह्मस्तम्भ,—ब्रह्माण्डं, तस्य रसाभ्यवहरणाय—रसशोषणाय रसानां मधुरादीनां भोजनाय वा, कवलग्रहं—ग्रासग्रहणम् 'असंत्राव्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा' इति, अभ्यस्यन्त,—पुनः पुनः कुर्वन्त इवेत्यर्थः, मधुपानात् ग्रीष्मस्य रसशोषणं भवतीति प्रसिद्धम्।

(६४) सकलेति।—सकलानां सलिलानां—जलानाम्, उच्छोष,—अतिशयेन शोषणं, यो घर्मः,—उष्मा, तस्य घोषणा—प्रचारः तस्याः पटहाः,—वाद्यभेदाः तैः इव, शुष्काणां वेणुवनानां—वंशारण्यानाम्, आस्फोटनस्य—सन्तापातिशयात् विदरणस्य, पटुरवाः—महानिनादाः तैः,

त्रिभुवनविभीषिकाम् उद्भावयन्तः, (६५) च्युतचलचाषपक्ष-श्रेणीशारितहृतयः, (६६) त्विषिमन्मयूखलताऽलातप्लोषकल्माष-वपुष इव (६७) स्फुटितगुञ्जाफलस्फुलिङ्गाङ्गाराङ्किताङ्गाः, (६८) गिरिगुहागम्भीरझाङ्कारभीषणभ्रान्तयः, (६९) भुवन-भस्मीकरणाभिचारचरुपचनचतुराः रुधिराहुतिभिः इव पारिभद्र-द्रुमस्तवकवृष्टिभिः तर्पयन्तः तारवान् वनविभावसून्,

---

त्रिभुवनविभीषिका—त्रिलोकीभीतिम्, उद्भावयन्तः,—जनयन्तः, ये चक्षुषैव जगत् भीषयितुमुद्यताः, ते अवश्यमेव त्रिभुवनविभीषिकां जनयन्ति इति बोध्यम्।

(६५) च्युतेति।—च्युताः,—गात्रेभ्यः स्खलिताः, अत एव चलाः,—चपलाश्च, याः चाषाः—नीलकण्ठाख्यपक्षिणः, पक्षश्रेण्यः, ताभिः शारिताः,—चित्रिताः, आक्रान्ता इत्यर्थः, व्याप्ता इति यावत्, हृतयः,—मार्गा यैः तथाभूताः, ("हृति स्त्री गमने मार्गे" इति मेदिनी)।

(६६) त्विषिमदिति।—त्विषिमान्—सूर्यः, [समस्यमानात् "त्विषि" इति पदात् मतुप् असम्भवात् "त्विड्वान्" "त्विषावान्" इति वा पदं भवितुं युक्तम्] तस्य मयूखलता—किरणराजिः, अलात इव—ज्वलदङ्गार इव, ("अङ्गारोऽलातमुल्मुकम्" इत्यमरः) तेन च प्लोषः,—दहनम्, तेन कल्माषः—चित्रम्, ईषत्कृष्णवर्णमित्यर्थः, ("चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः) वपुः,—शरीरं येषां तथोक्ता इव।

(६७) स्फुटितेति।—स्फुटितानि—आतपतापेन आवरणकोषस्फुटनात् विकसितानीत्यर्थः, यानि गुञ्जाफलानि—रक्तकृष्णमुखवर्णफलविशेषाः, ("कुँच्" इति भाषा) तदेव स्फुलिङ्गाः—अग्निकणाः तद्रूपा इति यावत्, ये अङ्गाराः, तैः अङ्किताः—चिह्निताः, दग्धमित्यर्थः अङ्गं येषां तथोक्ताः ("त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः)। ये च साङ्गाराः ते च मलिनशरीरा भवन्ति।

(६८) गिरीति।—गिरिगुहासु—पर्वतगह्वरेषु गम्भीरेण—घनेन झाङ्कारेण भीषणाः भयावहाः, भ्रान्तिः,—घूर्णनं येषां तथाभूताः। उन्मत्ता अपि अग्निसम्भ-गिरिगुहादिषु निर्भीका भ्रमन्ति।

(६९) भुवनेति।—भुवनस्य—जगतः भस्मीकरणं—दहनमेव, अभिचारः—अथर्ववेदविहितं हिंसात्मकं कर्म, तत्र चरुपचने—हवनीयद्रव्यविशेषपाके, चतुराः,—पटवः। रुधिराहुतिभिरिव—रक्ताहुतिभिरिव, पारिभद्रो नाम द्रुमः,—वृक्षः, (लोके "धाविधा मादार" इति प्रसिद्धः, "पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि" इति

(७०) अग्निशिखसिकतातारकितरंहसः, (७१) तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदिशः, दावदहनपच्यमानचटकाण्डखण्डखचिततरुकोटरकीटपटलपुटपाकगन्धकटवः, प्रावर्त्तन्त उन्मत्ता मातरिश्वानः।

(७२) सर्वतश्च भूरिभस्त्रासहस्रसम्भुक्षणक्षुभिता इव जरदजगरगम्भीरगलगुहावाहिवायवः, क्वचित् (७३) स्वच्छन्दतृण-

मेदिनी) तस्य स्तबका,—रक्तकुसुमगुच्छा तेषां छटया,—पाता तासि तर्पयन्त,—प्रीणयन्त, तारकान्—तत्सम्भविन, वन्यविभावसून्—दावाग्नीन्। अभिचारिकस्तु मारणोच्चाटनार्थं हवनकाले रुधिरैरनलं तर्पयन्ति इति। उन्मत्ता अपि रुधिरास्थिप्रभृतिकमपवित्रद्रव्य स्वैराचारतया अग्नौ निक्षिपन्ति, तैश्च अनलतर्पणमुपपद्यते।

(७०) अग्निशिखेति।—अग्निशिखाभि—तप्ताभि सिकताभि,—वालुकाभि, तारकित—सञ्जाततारकमिव लक्ष्यमाणम् इत्यर्थ, रंह,—वेगो येषा तथोक्ता।

(७१) तप्तेति। तप्तेषु शैलेषु पर्वतेषु, विलीयमानाना—गलता शिलाजतूना—तदाख्यानाम् उपधातुभेदाना रसलवै,—रसबिन्दुभि, लिप्ता दिशो यै तथोक्ता। दावेति—दावदहने, वनाग्नौ पच्यमानाना—दह्यमानाना चटकाना—चटकाख्यपक्षिविशेषाणाम् अण्डखण्डै,—डिम्बशकलै खचितेषु व्याप्तेषु, तरुकोटरेषु—वृक्षगर्त्तेषु यानि कीटपटलानि—पिपीलिकावृन्दानि, तत्तदण्डभक्षणार्थम् आगतानीति भाव तेषा पुटपाकस्य—अभ्यन्तरपाकस्य, गन्धेन कटव,—उद्वेजका इत्यर्थ। प्रावर्त्तन्त प्रावहन्। उन्मत्ता,—उच्छृङ्खला मातरिश्वान,—वायव। सर्वत्र वाक्ये ध्वनिकाया अन्वयैरिति।

(७२) सर्वत इति।—'दारुणा दावाग्नयश्च प्रत्यदृश्यन्त' इति उत्तरेण अन्वय। तानेव दावाग्नीन् विशिनष्टि, भूरीत्यादिभि।—जरता—जीर्यता, ["जरदजगर" इत्यत्र "जरठाजगर" इति पाठे,—जरठाना—परिणताना, वृद्धानामित्यर्थ] अजगराणा—सर्पाणा, गम्भीरा गला—गलदेशा एव गुहा ताभ्य वाहिन—बहिर्निसरन्त वायव येषु तथोक्ता, अत एव भूरीति।—भूरिभि—बहुभि भस्त्राणा—'जाँता' इति प्रसिद्धानाम् अग्निसन्धुक्षणयन्त्रभेदानां, सहस्रै सम्भुक्षणेन—समुद्दीपनेन क्षुभिता इव—समुत्तेजिता इव।

(७३) स्वच्छन्देति।—स्वच्छन्द—यथारुचि यथा तथा, तृणेषु—शष्पेषु इति

चारिणो हरिणाः, क्वचित् ( ७४ ) नकुलविवरवर्त्तिनो बभ्रवः, क्वचित् जटाऽवलम्बिनः कपिलाः, क्वचित् ( ७५ ) शकुन-कुलकुलायपातिनः श्येनाः, क्वचित् ( ७६ ) विलीनलाक्षारस-लोहितच्छवयोऽधराः, क्वचित् ( ७७ ) आसादितशकुनपक्ष-कृतपटुगतयो विशिखाः, क्वचित् ( ७८ ) दग्धनिःशेषजन्म-

---

भाव, चरन्ति—प्रसरन्तीति तथोक्ता, अन्यत्र—दृष्यानि चरन्ति—भक्षयन्ति इति तथाभूता, हरिणा,—पाण्डुवर्णा, ( "हरिण पाण्डुर पाण्डु" इत्यमर ) अन्यत्र,—मृगा ( "हरिण पुंसि सारङ्गे विशदे त्वभिधेयवत्" इति मेदिनी )।

( ७४ ) नकुलेति।—नकुलेषु यानि विवराणि—गर्त्तानि, तेषु वर्त्तन्ते इति तथोक्ता, [ "विवरवर्त्तिन" इत्यत्र "विवरविवर्त्तिन" इति पाठान्तरम् ]। अत्र,—पिङ्गला, अन्यत्र,—नकुला। ( 'बभ्रुर्वैश्वानरे · ·· ·। विशालेऽपि नकुले पुंसि पिङ्गले त्वभिधेयवत्॥" इति मेदिनी )। जटाऽवलम्बिन,—जटा,—मूलानि, अवलम्बन्ते—आश्रयन्तीति जटाऽवलम्बिन, अन्यत्र,—जटाधारिण, कपिला,—पिङ्गला, अन्यत्र,—कपिलाख्यमुनिविशेषव्रतधारिण तापसा एवाभेदोपचारात् कपिला इति मन्तव्यम्, एते तु जटावल्कलधारिणो भवन्ति इति।

( ७५ ) शकुनेति।—शकुनकुलाना—पक्षिविशेषसमूहाना, कुलायान—नीडानि, ( "कुलायो नीडमस्त्रियाम" इत्यमर ) पातयन्ति—दग्धा निक्षिपन्तीति यावत् तथोक्ता, श्येना,—शुक्लवर्णा, अन्यत्र,—पक्षिवृन्दकुलायनिक्षेपका पक्षिभेदा, ( "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयो"। "श्येन पक्षिणि पाण्डरे" इति च मेदिनी )।

( ७६ ) विलीनेति।—विलीन,—द्रवीभूत यो लाक्षारस,—अलक्तद्रव, तद्वत् लोहिता,—रक्ता, अन्यत्र,—तेन लोहिता,—रक्ता, छवय,—कान्तय येषा तथाभूता, अधरा,—अनुन्नता, निकृष्टा वा, अन्यत्र,—अधरा,—ओष्ठा, ( "अधरोऽधस्तात् ओष्ठे" इत्यमर )।

( ७७ ) आसादितेति।—आसादितेषु—प्राप्तेषु, यद्वा—आ—समन्तात्, सादितेषु—अवसादं गतेषु, खलितेषु इत्यर्थ, शकुनाना—पक्षिणा [ "शकुनि" इति पाठान्तरम् ] पक्षेषु—गरुत्सु, कृता—लब्धा, पटुगति—सम्यक् प्रसर यै, अन्यत्र,—आसादिता—प्राप्ता शकुनपक्षेण—पक्षिगरुता, कृता जनिता पटुगति,—सत्वर-गमन यै तथोक्ता। वि—विविधा, शिखा—ज्वाला येषा तथोक्ता, अन्यत्र—शरा।

( ७८ ) दग्धेति।—दग्धा,—भस्मीकृता, निःशेषा,—समस्ता, जन्म-

क्षयिणः, क्वचित् (८३) सर्व्वांवरसभुजः पीवानः, क्वचित् (८४) दग्धगुग्गुलवो रौद्राः, क्वचित् (८५) ज्वलितनेत्रदहनदग्धसकुसुमशरमदनाः (८६) कृतस्थाणुस्थितयः, चटुलशिखाः, नर्त्तनारम्भारभटीनटाः, (८७) शुष्ककासारवृत्तिभिः, स्फुटत्क्षीरसनीवारबीजलाजवर्षिभिः ज्वालाञ्जलिभिः अर्च्चयन्त इव घर्मांशुरश्मिम्, अतृष्णा इव

---

क्षयीति भाव, क्षिणाजनु यैं तथोक्ता, क्षयिण —निर्वाण गता, क्षयरोगिणश्च, तत्र निदानमाह्यैं,—"शिलाधानुप्रयोगात्त मल्लादाचाङ्ग माद्वरात्। भजामूल-प्रयोगाच्च चय चीयेत नान्यथा॥" इति।

(८३) सर्वेति।—सर्वाणि भक्षानि—खाद्यवस्तूनि, रसान्—सलिलादींश्च, भुञ्जते इति तथोक्ता, अत एव पीवान,—स्थूलशरीरा, ये नित्य मधुरादिवस्तूनि उपभुञ्जते, ते स्थूला एव भवन्ति। ["सर्वाम्बरस—" इत्यत्र "सर्व्वरस—" इति पाठान्तरम्]।

(८४) दग्धेति।—दग्धा गुग्गुलव,—गन्धद्रव्यभेदा यैं तथोक्ता, रौद्रा,—भीषणा, रुद्रोपासकाश्च ते हि रुद्रपूजायां गुग्गुलुदहनेन धूप ददति।

(८५) ज्वलितेति।—ज्वलितः,—नेत्राणा—मूलाना, ("नेत्र मथिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नयाच" इति मेदिनी) दहनेन दग्धा सकुसुमा,—सपुष्पा, शरा,—तृणभेदा, मदना,—मदनाख्यवृक्षभेदाश्च यैं तथोक्ता, अन्यत्र, —ज्वलितेन नेत्रदहनेन—ललाटनयनाग्निना, दग्ध,—भस्मीकृत, सकुसुमशर—पुष्पशरसहित, मदन,—काम यैं तथोक्ता।

(८६) कृतेति—अत एव कृता स्थाणुषु—छिन्नशाखेषु वृक्षेषु स्थिति यैं ते; अन्यत्र—कृता, स्थाणौ —हरस्य स्थितय —व्यवहारा यै ते। चटुलशिखा,—चटुला,—चञ्चला, शिखा,—ज्वाला येषा तथोक्ता, अन्यत्र —चञ्चलचूडा इत्यर्थ।

(८७) शुष्केति।—शुष्केषु कासारेषु—सरःसु तड़ागेषु शुष्कजलजलाशयेषु इति भाव, वृत्ति,—प्रवृत्ति येषां ते। स्फुटदिति।—स्फुटन्ति—अग्न्युत्तापात् लाजतां प्राप्तानीति भाव, क्षीरसानि यानि नीवारबीजानि—धान्यविशेषा, तथा लाजान वर्षन्तीति तथोक्तै। ज्वालाञ्जलिभि —ज्वाला —शिखा एव अञ्जलय तै। घर्मांशुरश्मिम्—सूर्यरश्मि, सूर्यामित्यर्थ। अतृष्णा इव—तृष्णा—स्पृहा तद्रहिता इव।

(८८) हठह्यमानकठोरस्थलकमठवसाविस्रगन्धलम्पटाः, खमपि धूमम् (८९) अच्छोदसमुद्भूतिमिवैव भक्षयन्तः, सलिलाहुतय इव (९०) स्फुटद्बहलबालकीटपटलाः कच्छेषु, खिन्ना इव (९१) शोषविघटद्वल्कलधवलशम्बूकशुक्तयः शुष्केषु सरःसु, स्वेदिन इव (९२) विलीयमानमधुपटलगोलगलितमधूच्छिष्टवृष्टयः काननेषु, खलतय इव (९३) पर्यन्तशीर्यमाणशिखा-

(८८)—हठेति।—हठात्—सहसा, दह्यमाना—दह्यमाना, कठोराणां स्थलकमठानां—स्थलचारिणां कच्छपानां, या वसा,—मेदांसि, तस्या यो विस्रगन्धः,—आमगन्धः, ("विस्रं स्यादामगन्धि यत्" इत्यमरः) तस्य लम्पटाः,—लोलुपाः।

(८९) अच्छोदेति।—अच्छोदानां—मेघानां स्वविनाशिनामिति भावः, समुद्भूतिं,—समुत्पत्तिं, तस्या भीत्या तमेव धूमं भक्षयन्तः,—संहरन्तः, सम्यक्ज्वलनेनेति भावः, उक्तञ्च मेघदूताख्ये काव्ये महाकविना कालिदासेन—"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः" इति। सलिलाहुतय इव—जलाहुतय इव, ता हि वह्निं निर्वापयन्तीति भावः।

(९०) स्फुटदिति।—स्फुटन्ति—विशीर्यन्ति, अन्यत्र,—निर्गच्छन्ति, बहलानि—भूरीणि, बालानि—क्षुद्राणि, कीटपटलानि—क्षुद्रप्राणिवृन्दानि, अन्यत्र क्रिमिवृन्दानि यत्र तदीका। कच्छेषु—नूतनवनेषु ("कच्छौ तु तरुपोतकौ" इत्यमरः), अन्यत्र—गर्भकोशविशिष्टेषु। खिन्ना इव—धवलाक्षरोगदत्ता इव।

(९१) शोषेति।—शोषेण—दहनेन विघटन्ति—घटन घटदिति शब्दं कुर्वन्ति यानि वल्कलानि—आवरणानि, [वल्कलशब्दोऽत्र त्वगुपलक्षणम्] तैः धवलाः शम्बूकाः—घोङ्घाख्यजलजन्तुभेदाः शुक्तयः—मुक्तास्फोटाख्या जलजन्तुभेदाश्च येषां तथोक्ताः। स्वेदिन इव—घर्माक्ता इव।

(९२) विलीयमानेति।—विलीयमानेभ्यः—विलयं गच्छद्भ्यः मधुपटलगोलेभ्यः,—मधुचक्रेभ्यः, गलिता—निःसृता मधूच्छिष्टानां—सिक्थकानां वृष्टिः यैः तथोक्ताः। खलतय इव—खल्वाटा इव।

(९३) पर्यन्तेति।—पर्यन्तेषु—प्रान्तदेशेषु शिरसो निम्नभागेषु च शीर्यमाणाः,—प्रसरन्तः, ["पर्यन्तशीर्यमाण—" इत्यत्र "परिशीर्यमाण—" इति पाठे—परि—शेषे, प्रान्तभागे इत्यर्थः] शिखाः—ज्वालानाम्, अन्यत्र,—चूडानां,

संहतयो महीधरेषु, (८४) गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः।

तथाभूते च तस्मिन् अत्युग्रे ग्रीष्मसमये कदाचित् अस्य स्वगृहाग्रस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवः चन्द्रसेननामा प्रविश्य अकथयत्,—"एष खलु (८५) देवदेवस्य चतुःसमुद्राधिपतेः (८६) सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः (८७) सर्वचक्रवर्त्तिनां धौरेयस्य (८८) महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवताम् अन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारम् अध्यास्ते" इति। सोऽब्रवीत्,—"आयुष्मन्! अविलम्बितं प्रवेशय एनम्" इति।

---

सहति,—समूह येषां तथाभूता। महीधरेषु—महत्सु अधरेषु, मरुषु इत्यर्थः, एतेषु दाह्यवस्तूनाम् अभावात् प्रान्तदेशेषु दावाग्निप्रादुर्भाव इति भावः।

(८४) गृहीतेति।—गृहीतं शिला [redacted] कवल—ग्रासो यैः तथाभूता। ज्वलितसूर्यमणिशकलेषु—दीप्तसूर्यकान्तोपलखण्डेषु। शिलोच्चयेषु—पर्वतेषु, दावाग्नयः,—वनवह्नयः, ("—दवदावौ तु वनवह्नौ वनेऽप्युभौ" इति मेदिनी)।

(८५) देवदेवस्य—देवानां—राज्ञां, देवः—राजा, सम्राडित्यर्थः तस्य, [ "देवदेवस्य" इत्यत्र "देवस्य" इति पाठान्तरम् ]।

(८६) सकलेति।—सकलानां राजचक्राणां—भूपसमूहानां या चूडामणिश्रेण्यः,—शिरोरत्नराजयः, ता एव शाणाः,—निकषपाषाणविशेषाः, तेषां कोणेषु—प्रान्तभागेषु यत् कषणं—घर्षणं, तेन निर्मलीकृता—विशदीकृताः, चरणयोर्नखा एव मणयः,—रत्नानि यस्य तथाभूतस्य, राजचक्रनिषेव्यमानस्येति भावः।

(८७) सर्वेति।—सर्वेषां चक्रवर्तिनां—सार्वभौमानां, धौरेयस्य—अग्रगण्यस्य।

(८८) महेति।—महतां राजाधिराजानां परमेश्वरः,—सर्वाधिपतिरित्यर्थः, स चासौ श्रीहर्षदेवश्चेति तथोक्तस्य। अन्तिकं—समीपम्। प्रज्ञाततमः,—अतिप्रतीतः, अतिशयेन विज्ञात इत्यर्थः, अतिविश्वस्त इति यावत्। दीर्घाध्वगः,—दीर्घम् अध्वानं गच्छतीति तथोक्तः, सुदूरादागत इति भावः। प्रहितः,—प्रेषितः। एतेन बाणं प्रति राज्ञ आदरातिशयः सूच्यते।

—"एष खलु स्वामिनो माननीयस्य लेखः प्रहितः" इति विमुच्य च अर्पयत्। अथ बाणः सादरं गृहीत्वा स्वयमेव अवाचयत्,—"मेखलकात् सन्दिष्टम् अवधार्य (१०५) फलप्रतिबन्धी धीमद्भिः अपहरणीयः कालातिपात इति (१०६) एतावत् अत्र अर्थजातम्, इतरत् वार्त्तासंवादनमात्रकम्"। अवधृतलेखार्थश्च समुत्सारितपरिजनः सन्देशं पृष्टवान्। मेखलकः तु अवादीत्,—"एवम् आह मेधाविनं स्वामी,—जानाति एव मान्यः यथा (१०७) एकगोत्रता वा, समानजातिता वा, समं संवर्द्धनं वा, एकदेशनिवासो वा, दर्शनाभ्यासो वा, परस्परानुरागश्रवणं वा (१०८) परोक्षोपकारकरणं वा, समानशीलता वा स्नेहस्य हेतवः। त्वयि तु विना कारणेन अदृष्टेऽपि

[ "अतिदूरं" इत्यत्र "नातिदूरे" इति पाठान्तरम् ]। स्वामिनः,—अस्माकम्, [ अत्र कर्त्तरि विवक्षया षष्ठी, निष्ठाया तद्विधेयात्, अव्ययीपपद्यमाने मिरीदेवदत्तस्यायमनुभावति ] माननीयस्य—सम्मानार्हस्य। प्रहितः,—प्रेषितः, भवत समीपे इति शेषः। अर्पयत्—दत्तवान् लेखमिति शेषः। मेखलकात्—तदाख्यात् प्रायुतात् पत्रवाहकात्। सन्दिष्टं—वाचिकम्।

(१०५) फलेति।—फल—कार्य्ये, प्रतिबध्नाति—रुणद्धीति तथोक्तः, कार्य्यव्याघातक इत्यर्थः। कालातिपातः,—कालविलम्बः, अपहरणीयः,—त्याज्यः, अकरणीय इति यावत्।

(१०६) एतावत्—एतत्परिमितम्। अत्र—लेखमालिकायाम्। अर्थजातम्—प्रतिपाद्यवस्तु, अभिधेयविषय इत्यर्थः। इतरत्—अन्यत्, वार्त्तासंवादनमात्रकम्—कुशलालापनमात्रम्। अवधृतलेखार्थः,—विदितलिपिनिबद्धवृत्तान्तः। मेधाविन—प्रकृष्टधीशक्तिसम्पन्नम्। स्वामी—अस्माकं प्रभुः। मान्यः, भवानिति शेषः।

(१०७) एकगोत्रता—एककुलोत्पत्तिः। अत्र "एकगोत्रता" इत्यादि स्नेहकारणम् उत्तरोत्तर हीनबलं ज्ञेयम्। समानजातिता—तुल्यजातित्वम्। समं—सह, संवर्द्धनम्। एकदेशनिवासः,—एकस्थानस्थितिः। दर्शनाभ्यासः,—पुनः पुनः साक्षात्करणम्। परस्परानुरागश्रवणम्—अन्योऽन्यसद्भावाकर्णनम्।

(१०८) परोक्षोपकारकरणं—साक्षात्काराभावेऽपि उपकारकरणम्। समान-

प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयं दूरस्थेऽपि इन्दाविव कुमुदाकरे। (१०८) भवन्तम् अन्तरेण अन्यथा चक्रवर्त्ती दुर्जनैः ग्राहित आसीत्, (११०) न च तत् तथा। (१११) न सन्त्येव ते, येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। (११२) शैशवापल्यापराधीनचित्तवृत्तितया च भवतः केनचित्

धीमत्ता—समस्तभावत्वम्। स्नेहस्य—प्रणयबन्धनस्य। प्रत्यासन्ने—निकटवर्त्तिनि। बन्धाविव—सुहृदीव। बद्धपक्षपातं—बद्धस्नेहम्। कुमुदाकरे—कैरवोत्पत्तिभुवि, ("आकरो निकरोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी)।

(१०९) भवन्तमिति।—भवन्तं—त्वाम्, अन्तरेण—विना, तवानुपस्थिते त्वां लक्ष्यीकृत्येत्यर्थं, दुर्जनैः,—दुष्टै लोकैः, चक्रवर्त्ती—सम्राट्, अन्यथा—अन्येन प्रकारेण, ["अन्यथा चक्रवर्त्ती" इत्यत्र "अन्यथा नान्यथा नाथ चक्रवर्त्ती" इति पाठे—अथम्—एष, महात्मा इति भाव, चक्रवर्त्ती अन्यथा च अन्यथा च—प्रकृत नीचायित्वा अन्येन बहुविधेन ग्राहितेनेत्यर्थः। एतेन किञ्चिदपि सम्भवतीति प्रकटयति]। ग्राहित,—अवबोधित, आसीदित्यन्वय। राजाधिराजसन्निधौ भवतो दोषोत्कीर्त्तनात् राज्ञ त्वयि मनोभङ्ग कारित इति भाव। अत्र "आसीत्" इति भूतप्रयोगात् अधुना तु दुर्जनैः विफलाभिमता जाता इति शङ्करटीकूतम्, एतत्तु उपरिष्टात "तथेति च प्रतिपन्नम्" इत्यादिवक्ष्यमाणे व्यक्तीभविष्यति।

(११०) न चेति।—तत्—राज्ञस्त्वयि मनसोऽन्यथात्वमिति भाव, तथा—तादृशं, न च—नैवेत्यर्थः। त्वयि राज्ञो मनोविकृति न जातेति भाव। अथवा,—तत्—तै कृतमन्यथा ग्रहणं, तथा—तादृक्, न, मिथ्यैवेत्यर्थः। तथात्वे तु बाणस्य दुर्वृत्तता प्रसज्येत, कृष्णस्यापि बाणे तथाविध अनुराग नृपतिवचनञ्च दोषायैव स्यादिति।

(१११) न सन्त्येव ते इति।—ते—मानवा, न सन्त्येव—नैव विद्यन्ते इत्यर्थः। सतामपि सतामित्यादि।—सतां—साधूनां, सदाचारवतामित्यर्थः सतां विद्यमानानामपि, मित्रोदासीनशत्रव,—मित्राणि—सुहृद, उदासीना —मध्यस्था शत्रव —विद्वेषिण, न विद्यन्ते—न तिष्ठन्ति, सर्वेषामेव मानवानां मित्रोदासीनशत्रवो विद्यन्ते इत्यर्थः।

(११२) शैशवापल्येति।—शैशवापल्य—शैशवचापल्य, बाल्यकालिकचञ्चलतेति यावत्, तेन अपराधीना—अपराधमुखी, चित्तवृत्तिर्यस्य तस्य तया,

(११३) असहिष्णुना यत्किञ्चित् असह्यम् उदीरितम्, इतरो लोक' तथैव तत् गृह्णाति, वक्ति च। (११४) सलिलानि इव गतानुगतिकानि लोलानि खलु भवन्ति अविवेकिनां मनांसि। (११५) बहुसुखश्रवणनिश्चलीकृतनिश्चयः किं करोतु पृथिवीपति ? तस्मात् अन्वेषिभिरिव अस्माभिः दूरस्थितोऽपि (११६) प्रत्यक्षीकृतोऽसि। विश्रमः चक्रवर्त्ती त्वदर्थम् ;—यथा प्रायेण प्रथमे वयसि सर्वस्य एव चापलैः शैशवम् अपराधि इति। तथेति च

---

तात्कालिकचित्तरसे ईषदुन्मार्गप्रवृत्ततया इति भाव। [ "विमतहसितया" इत्यत्र "वैतीत्रसितया" इति पाठान्तरम् ]।

(११३) असहिष्णुना—लोकमयञ्जुषता, विद्वेषिणा वा। असह्यम्—अयुक्त, विरुद्धमित्यर्थ, उदीरितम्—उक्तम्। इतरो लोक,—साधारणो लोको नीचो वा, तत—असह्यं वाक्य त्वयि प्रयुक्तमिति भाव, तथा एव—सत्यमेव, गृह्णाति—मन्यते, वक्ति च—कथयति च।

(११४) सलिलानि इवेति।—अविवेकिना—विवेकशून्याना जनाना, मनांसि सलिलानि इव—जलानि इव गत—गमनम् अनुगति—पश्चाद्गमन च कुर्व्वन्ति यानि तानि गतानुगतिकानि [ "गतानुगतिकानि" इत्यत्र "गतागतिकानि" इति पाठे,—गमनागमनशीलानि, न तु स्थिराणि इति भाव ] अत एव लोलानि चपलानि; इतरजनानाम अयमेव स्वभाव खलु यत्, ते स्थिरतया कुत्रापि दीर्घकाल स्थातु न प्रभवन्तीति भाव।

(११५) बहुसुखेति।—बहूना सुखाना—भूरीणा श्रवणसन्तर्पणाना प्रियाणा वचसा, कर्णेजपाना चाटुवाचामित्यर्थ, श्रवणेन [ "बहुसुखश्रवण—" इत्यत्र "बहुमुखश्रवण—" इति पाठे,—बहूना, जनानामिति शेष, मुखेभ्य श्रवणात् ] निश्चलीकृत निश्चय,—अवधारणा यस्य तथाभूत, दुर्ज्जना सतत राजानं निन्दाया बहून मनोषकरान् विषयान् कीर्त्तयन्ति, तेन असौ समाकृष्टचेता वितथान्यपि तान्येव तथ्यानि तेषा वचनानि इति अवधारयति, नास्य तत्त्वमनुसन्धत्ते इति भाव।

(११६) प्रत्यक्षीकृत,—साक्षात्कृत, परिचित इति भाव। प्रथमे वयसि—यौवनप्रारम्भे इत्यर्थं। चापलै,—चपलकर्म्मभि, शैशव—बाल्यम्, अपराध्यतीति अपराधि—सदोष भवति इति यावत्।

(११७) प्रतिपन्नं स्वामिना। अतो भवता राजकुलम् अकृत-कालक्षेपम् आगन्तव्यम्। अवकेशीव अदृष्टपरमेश्वरो (११८) बन्धुमध्यम् अधिवसन् नासि मे बहुमतः, न च (११९) सेवावैषम्यविषादिना वा परमेश्वरोपसर्पणभीरुणा भवता भवितव्यम्। यतो यद्यपि,—

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम्।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं मनोभव इवेश्वरदुर्विदग्धः॥ ३॥

---

(११७) प्रतिपन्नं—विदितं, स्वीकृतमित्यर्थः। स्वामिना—प्रभुणा, राज्ञेत्यर्थः। अकृतकालक्षेपं—कालविलम्बमकृत्वेत्यर्थः। अवकेशीव—विफलतरुरिव, ("वन्ध्योऽफलोऽवकेशी च" इत्यमरः) अदृष्टपरमेश्वरः,—न दृष्टः परमेश्वरः,—राजाधिराजः, एकिव देव स्याभूत। अदृष्टपरमेश्वरबन्धुमध्यगतस्याधानम् अवकेशी अपि न कस्यचित् प्रियः।

(११८) बन्धुमध्य—बन्धूनां—ज्ञातीनां, ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः) मध्यम् अधिवसन्—अधितिष्ठन्, मे—मम [वर्तमानक्रियायोगात् कर्तरि षष्ठी] बहुमतः,—बहुमानितः, न असि—न भवसि, यथा रविकिरणालाभे तरुः निष्फलो भवति, तथा राजानुग्रहं विना भवादृशस्य निष्फला स्थितिरिति भावः।

(११९) सेवेति।—सेवायाः—परिचर्यायाः वैषम्यं—क्लेशातिशय इति यावत् तेन विषीदतीति तेन। परमेश्वरोपसर्पणभीरुणा—परमेश्वरस्य—चक्रवर्तिनः, उपसर्पणम्—आनुगत्यं तस्मात् भीरुः तेन कदाचित् कथमपि अपराद्धे दण्डभयात् कुण्ठितेन इत्यर्थः।

दुष्टात् प्रभोः मर्यादाऽभावमाशङ्कमानाय बाणाय सम्पादितम् इत्थं स्वकीयं स्वामिनं प्रशंसितुं प्रसङ्गात् दुर्विनीतप्रभोः स्वरूपमुपवर्णयन्नाह स्वेच्छेति।—ईश्वरदुर्विदग्धः,—दुर्विदग्धः,—अपण्डितः, ईश्वरः,—प्रभुः निजदानादक्षमत्वे इत्यर्थः, अविवेकी नृपतिरिति यावत् [आहिताग्न्यादित्वात् वैकल्पिकः परनिपातः], अथच,—ईश्वरेण—हरेण दुर्विदग्धः,—दुः,—दुःखं कष्टकरं यथा तथा दग्धः, वि—विशेषेण, दग्धः,—भस्मीकृत इत्यर्थः, नेत्रजन्मना वह्निनेति शेषः, मनोभव इव—काम इव,

कष्टं—क्लेशहेतुरित्यर्थः, भवतीति शेषः, अन्धबुद्धेः प्रभोः सेवा अतीव क्लेशकरीति भावः । पादत्रयेण अविवेकिनः प्रभोः सेवाया कामप्रसरनिरोधस्य च दुःखकारत्व सुपपादयितुमाह, स्वेच्छेति ।—दुर्विनीतं मूर्खश्च प्रभुः, स्वेच्छया—निजाभिलाषेण, उपजाता,—उपस्थिता, विषया—भोग्यवस्तूनि, स्रक्चन्दनवनितादयः अर्था इति यावत् यस्य तथाभूत, यथेच्छं व्ययोपभोगयोग्यसम्पदोऽधिगच्छन्नपीत्यर्थः, अन्यत्र—स्वेच्छया—यथेष्टम्, उपजाता,—उपगता, विषया—लक्ष्याणि यस्य तथाभूतः, यथेच्छं कामिजनरूपाणि लक्ष्याणि विध्यन्नपीत्यर्थः, देहीति—प्रयच्छ इति, वस्तु—कथयित न याति—न ददातीत्यर्थः, [ धातूनामनेकार्थत्वात् अत्र याधातुर्दानार्थः ] याचके किञ्चित् देहीति कथयति सति विरज्यते इति भावः, अन्यत्र,—देहीति—देहवान् इति वक्तुं—वचनम्, [ अत्र तुमर्थोऽविवक्षित, धात्वर्थमात्रमेव विवक्षितम् ] न याति—न गच्छति, न प्राप्नोति इत्यर्थः, यद्वा,—वक्तुं न याति—शरीरीति वक्तुं योग्यतां न प्राप्नोतीत्यर्थः, अनङ्गत्वात् इति भावः, मार्गणकैः,—याचकैः, पुनः पुनः याञ्चाभिरित्यर्थः, कातरतापूर्णा मर्त्याः न तथा, ते तु अकिञ्चनाः देहीति सोऽनयस्तु वक्तुं प्रार्थितव्यमोकर्णनात् प्राप्तैव तेषाम् अप्रार्थितमपि अकातरं विदधन्ति इति विशेषः, अन्यत्र,—शरैः, ( "—मार्गणो याचके शरे । याञ्चाऽन्वेषणयो क्लीबम्—" इति मेदिनी ) दुःखं ददाति—क्लेशं जनयति, एकत्र,—अनुजीविभ्यः, अन्यत्र,—कामिभ्य इति शेषः । यद्वा—देहीति पदम् अविवेकिप्रभुपक्षे मार्गणकैरित्यनेनान्वितं कृत्वा व्याख्यातव्यं, देहीति याचकानां याञ्चाभिः तेभ्यः नियतं दुःखं ददाति, न तु किञ्चित् तेभ्यः अर्पयतीत्यर्थः, अत्र पक्षे वक्तुमिति पदं धातूनामनेकार्थत्वात् भोक्तुमिति कृत्वा भोगार्थकत्वेन व्याख्यातव्यमिति सङ्क्षेपः, अकाण्डे—सहसा, कारणान्तरं अनपेक्ष्यैवेति यावत्, मोहात्—अज्ञानात् यथायथं दोषादोषयोः अनवबोधात् इत्यर्थः सम्यक् विचारशक्तेरभावादिति भावः, अन्यत्र—मोहात्—स्वविकारजनितं मोहमुत्पाद्येत्यर्थः, [ ल्यब्लोपे पञ्चमी ] जीवनमपि—प्राणानपि एकत्र,—अनुजीविनाम्, अन्यत्र,—कामिनामिति शेषः, समुत्क्षिपति—समुत्कर्षति, दण्डयति इत्यर्थः, अन्यत्र,—हरतीत्यर्थः । [ "समुत्क्षिपति" इत्यत्र "समाक्षिपति" इति पाठे—समाकर्षति, दण्डयतीत्येवार्थः ] अत्र मूर्खदुर्विनीतेश्वरस्य, मनोभवेन सह वैधर्म्योक्तिविरहितसाम्यकथनादुपमाऽलङ्कारः, स च देहि-मार्गणादिपदानां श्लिष्टतया श्लेषानुप्राणित इति बोध्यम् । अयमेव च श्लोकः श्लेषालङ्कारविचारावसरे साहित्यदर्पणे,—"कष्टं प्रसूनविशिख प्रभुरन्धबुद्धि" इति चतुर्थपादमात्रं विपरिवर्त्त्य उदाहृतो विश्वनाथेन, अस्मिंस्तु पाठे—प्रसूनविशिख,—काम, तथा अन्धबुद्धि,—अबोध,

तथाऽपि (१२०) अन्ये ते भूपतयः, अन्य एव अयं न्यक्कृत-नृग-नल-निषध-नहुषाम्बरीष-दशरथ दिलीप-नाभाग-भरत-भगीरथ ययातिः अमृतमयः स्वामी। न अस्य (१२१) अहङ्कारकालकूटविषदग्धदुष्टा दृष्टयः, न (१२२) दर्पगदगुरुगरगलग्रहगद्गदा गिरः, न (१२३) अतिस्मयोष्मापस्मारविस्मृतस्थैर्याणि स्थानकानि, न (१२४) उद्दामदर्पदाहज्वरवेग-

---

प्रभुः—स्वामी चेत्युभयमपि द्रष्टव्यं, कार्ष्ण—लोमशास्त्रमित्यर्थः, अन्यत् सर्वं पूर्ववत्। अस्मिंस्तु पद्ये प्राकरणिकाप्राकरणिकयोरन्युद्धियम्नु समुच्चयशिरश्छयोरेकधर्माभिसम्बन्धा-द्दीपकमलङ्कारः, सोऽपि श्लेषानुप्राणित इति बोध्यम्। वसन्ततिलकं वृत्तम्॥ ३॥

(१२०) अन्ये ते भूपतय इति।—ते—तादृशा इत्यर्थः, दुर्विदग्धा इति भावः, भूपतयः,—राजानः, अन्ये—अपरे, अस्मात् राज्ञः पृथगित्यर्थः। अयं—चक्रवर्ती इत्यर्थः। न्यक्कृतेति।—न्यक्कृताः,—अधः कृताः, नृगादयो येन तथाभूतः नृगनलादीन् अतिधार्मिकान् भूपतीन् निजधर्म्मोन्नतया तिरस्करोति इत्यर्थः। अमृतमयः,—अमृतपूर्णः, देवतुल्य इति यावत्। अत्र "अमृतमयः" इति विशेषणं साभिप्रायम्; यत अहङ्कारदर्पादिकं कालकूटगदादिना रूपयति, अतः अहङ्कारादीनामत्यन्ता-भावप्रकटनेच्छया अस्य राज्ञः अमृतमयत्वं प्रदर्शितम्, यः खलु अमृतमयः तस्य काल-कूटादिसम्बन्धः सम्भावयितुं न शक्यते इति। अस्य—चक्रवर्त्तिनः।

(१२१) अहङ्कारेति।—अहङ्कार एव कालकूटं—विषं तेन दग्धाः, अत एव दुष्टा। [ "—विषदिग्धदुष्टा" इति पाठान्तरम् ]। दृष्टयः,—दर्शनानि।

(१२२) दर्पेति।—दर्प एव गदः,—रोगः, [ "दर्पगद—" इत्यत्र "गर्व—" इति पाठान्तरम् ] स एव गुरुः,—महान् गरः,—विषं, तेन गलस्य—कण्ठस्य, यः ग्रहः,—ग्रहणम्, अवरोधनमित्यर्थः तेन गद्गदाः,—अस्पष्टाक्षरा इत्यर्थः। [ "—गल ग्रहगद्गद्गदा" इति पाठान्तरम् ]। गिरः,—वाचः।

(१२३) अतिस्मयेति।—अतिस्मयः—अतिगर्व एव, ऊष्मा—सन्तापः, स एव अपस्मारः—वातव्याधिविशेषः तेन विस्मृतं स्थैर्यं—निश्चयः यैषां तथाभूतानि, अपस्मारयोगस्तु सन्तापकादिति अभेदाध्यासबीजं, तेन च धैर्य्यच्युतिरपि भवतीति। स्थानकानि—स्थितयः।

(१२४) उद्दामेति।—उद्दामेन—उत्कटेन दर्पेण उन्मादित इति भावः, दर्पे

विक्लवा विकाराः, न (१२५) अभिमानमहासन्निपातनिर्म्मिताङ्गभङ्गानि गतानि, न (१२६) मदार्दितवक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा च,—(१२७) अस्य विमलेषु साधुषु रत्नबुद्धिः, न शिलाशकलेषु। (१२८) मुक्ताधवलेषु गुणेषु

---

शाक्वर, तस्य वैरेण—रवेण, विक्लवा,—व्याकुला। विकारा,—चित्तविकृतय, मनसो भावान्तराणि इत्यर्थः।

(१२५) अभिमानेति।—अभिमान,—अहमेव महान् इत्याकारहाभिमान एव, महान् सन्निपात,—त्रिदोषजनितो व्याधिभेद, तेन निर्म्मित,—जनित, अङ्गानाम्—एकत्र—स्वजनानां, तेषामहङ्कारदर्शनेन विरागोत्पादात्, अपरत्र—अवयवानां, भङ्ग,—विकृतिविशेष येषु तथाभूतानि। गतानि—गमनानि।

(१२६) मदेति।—मद,—सौभाग्ययौवनाद्यर्थसम्पज्जो विकारविशेष, तथा चोक्तं दर्पणे,—"मदो विकारः सौभाग्ययौवनाद्यवलेपजः" इति तेन अर्दित,—पीडित, आक्रान्त इत्यर्थ, अत एव वक्रीकृत, यद्वा,—मद एव अर्दित,—वातव्याधिभेद, तेन वक्रीकृत, तथा चोक्तं वैद्यके,—"शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगा। अर्द्दयत्यनिलो वक्त्रमर्द्दितं जनयत्यथ॥ वक्रीभवति वक्त्रार्द्धम्—" इत्यादि य ओष्ठ, तस्मात् निष्ठ्यूतानि—निर्गलितानि निष्ठुराणि—दारुणानि, कर्कशानि वा, अक्षराणि—वर्णा, कथनीयान् इत्यर्थ येषु तानि, मदवशात् पुरुषस्य यथेच्छं वाक्प्रयोगाद्यदर्शनात् अयथापदमभिधानात् तेन मदेन सह वातव्याधेरपि तथा भूतत्वादभेदाध्यास। जल्पितानि—वचनानि। तथा च—तमेवार्थं आलोडि इत्यर्थ।

(१२७) तस्य—चक्रवर्त्तिन। विमलेषु—अनघेषु, अपापेषु इत्यर्थ, अन्यत्र—निर्म्मलेषु भास्वरतया सुच्छायेषु इत्यर्थ, साधुषु—सज्जनेषु, रत्नबुद्धि—रत्नानि एते इति बुद्धि,—ज्ञानमित्यर्थ। शिलाशकलेषु—प्रस्तरखण्डेषु, हीरकादिषु इति यावत्, (अत्र हीरकमरकतादिषु इति वक्तव्ये "शिला" इत्यादि पदं साधुषु आदरातिशय्य प्रकटनार्थमिति बोध्य) न, रत्नबुद्धिरिति शेष। अत्र अप्रस्तुत विमलत्वरूपसाधारणधर्म्मत्वात् साधुषु निरूपिताया रत्नबुद्धे तथाविधेषु अन्येषु शिलाशकलेषु व्यपोहनात् परिसङ्ख्याऽलङ्कार; तदुक्तं दर्पणे,—"प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् परिसङ्ख्या" इति। एवमुत्तरत्र।

(१२८) मुक्ताधवलेषु—मौक्तिकवत् विशदेषु, गुणेषु—विद्याविनयादिषु,

प्रसाधनधी, न आभरणभारेषु। (१२८) दानवत्सु कर्मसु (१३०) साधनश्रद्धा, न करिकटेषु। सर्व्वाग्रेसरे यशसि महाप्रीति, न जीवितजरत्तृणे। (१३१) गृहीतकरासु आशासु प्रसाधनाभियोग, न (१३२) निजकलत्रधर्म्मपुत्त्रिकासु। गुणवति धनुषि सहायबुद्धि, न पिण्डोपजीविनि सेवकजने। अपि च,—यस्य (१३३) मित्रोपकरणम् आत्मा, भृत्योपकरणं प्रभुत्वं, पण्डितोपकरणं वैदग्ध्य,

---

अथवा,—गुणानि धनानि गुणेषु—शरेषु मौक्तिकहारेषु इत्यर्थः, प्रसाधनधी—अलङ्कारबुद्धि, यद्वा—प्रसाधन—प्रकर्षम् अर्ज्जनं, गुणार्ज्जनमेव अर्ज्जनं, न तु आभरणार्ज्जनम् इति भाव। आभरणभारेषु—भारभूतेषु आभरणेषु—अलङ्कारेषु, कटककुण्डलादिसमूहेषु इत्यर्थः, न प्रसाधनधीरस्ति श्रीष।

(१२९) दानवत्सु—दानयुक्तेषु धनदानपात्रेषु इत्यर्थं, अन्यत्र,—मदयुक्तेषु, ("दान गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी)।

(१३०) साधनश्रद्धा—निष्पादनानुराग, अथवा—साध्यते अनेन इति साधन—सैन्य, तेनाक्रमियम्, वशीकरिष्यामि अश्रद्धा, मनागपि न युद्धादिकार्य्यसम्पादनबुद्धिरित्यर्थं। करिकटेषु—हस्तिगण्डेषु, दानवत्सु—मदजलवर्षिषु इत्यर्थं, साधनश्रद्धा—सम्पादनानुराग, न मदमुचा हस्तिना सङ्ग्रहानुरागी न इत्यर्थं। जीवितजरत्तृणे—जीवनरूपे जीर्णे—अवमङ्गुरे इति भाव, तत्र महाप्रीति,—महानुराग, न इत्यर्थं।

(१३१) गृहीतेति।—गृहीत कर,—स्वदायो भाग याभि तथाविधासु, अन्यत्र—गृहीत,—धृत, कर,—पाणि याभि तासु, आशासु—दिक्षु अन्यत्र अभिलषितविषयरूपासु वा, प्रसाधनाभियोग,—वशीकरणप्रयास, रञ्जनानुरागो वा। ["प्रसाधनाभियोग" इत्यत्र "प्रसाधनाऽभियोग" इति पाठान्तरम्]।

(१३२) निजेति।—निजकलत्राणि—स्त्रीधर्म्मार्थाः [न तु परकीया इति भवन्ति] तान्येव धर्म्मपुत्त्रिका,—धर्म्मार्थकारितपुत्त्रलिका तासु न प्रसाधनाभियोग इति शेष। गुणवति—मौर्व्वीसमन्विते, अन्यत्र,—विद्याविनयादिसम्पन्ने। पिण्डोपजीविनि—अन्नदानेन भरणीये इति भाव।

(१३३) मित्रोपकरणम्—सुहृद्धनम् उपकरणम—उपकारकं वस्तु आत्मा—स्वरूपम, आत्मभावेन सम्भवतो प्रसाधयति, न तु सहायतासाध्येन इति

बान्धवोपकरणं लक्ष्मी, (१३४) कृपणोपकरणम् ऐश्वर्य्यं, द्विजोपकरणं सर्व्वस्वं, (१३५) सुकृतसंस्मरणोपकरणं हृदयं (१३६) धर्म्मोपकरणम् आयुः, साहसोपकरणं शरीरं, (१३७) असिलतोपकरणं पृथिवी, विनोदोपकरणं राजकं, प्रतापोपकरणं प्रतिपक्षः। (१३८) न अस्य अल्पपुण्यैः

---

मार्गैरस्य मितमासीदित्यर्थ, न परबुद्धिचालित इति भाव। भृत्योपकरण—भृत्यानाम् उपकारसाधन, प्रभुत्व—प्रभाव, अनुचरादीनाम उपकारसम्पादनमेवास्य प्रभुत्वफलम् इति भाव। पण्डितोपकरण—पण्डितानाम् उपकारसाधन वैदग्ध्य—विदग्धत्व, वैचक्षण्य वा। बान्धवोपकरण—बान्धवानाम् उपकारसाधन, लक्ष्मी,—सम्पदित्यर्थ, सम्पद्भि बान्धवा उपक्रियन्ते इति भाव।

(१३४) कृपणोपकरण—कृपणाना—दीनानाम्, उपकरणम्—उपकारसाधन, पोषणम् इत्यर्थ, ऐश्वर्य्यं सम्पदित्यर्थ, न हि विजातिपदैर्ति सर्वंस्वमर्हन्ति, किन्तु दारिद्र्यमोचनोपयोगि इति भाव। अस्य ऐश्वर्य्ये दरिद्राणा दारिद्र्यमोचनार्थं तेषा पोषणायैवासीदिति तात्पर्य्यम्। द्विजोपकरण—द्विजानां—ब्राह्मणानाम्, उपकरणम् —उपकारसाधन, सर्वस्व—सर्वं धनम्, ब्राह्मणानामुपकारसम्पादनार्थं सर्वस्वमपि असौ दातु शक्नोतीति भाव।

(१३५) सुकृतेति।—सुकृतस्य—कृतोपकारस्य, संस्मरण—सम्यक् स्मरण, तत्र उपकरणम्—उपकारक, हृदय—चित्तम्, कृतज्ञोऽयमिति भाव।

(१३६) धर्म्मोपकरण—धर्म्मोपार्ज्जनसाधनमित्यर्थ, आयु,—जीवनकाल इत्यर्थ, धर्म्मार्ज्जनायैवाय जीवति इति भाव। साहसोपकरण—सहसा—सामर्थ्यमवलम्ब्य बलेन क्रियमाण कर्म्म साहसम्, तस्य उपकरणम—उपकारसाधनम्।

(१३७) असीति।—असिलता—खड्गयष्टि तस्या उपकरणम—उपार्ज्जन-भक्तिरित्यर्थ, खड्गेनैवानेन पृथिवी आयत्तीकृता इति भाव। विनोदोपकरण—विनोदस्य—प्रीते, उपकरणम्—उपकारसाधन, राजक—राजचक्र राज्ञा समूह इत्यर्थ अनुगतान् राज्ञा सुहृच्चर्य्येणैव, धर्म्मानुसारिणा राज्यपालनेन वा अय प्रीतिमनुभवति इति भाव। प्रतापोपकरण—प्रतापस्य—"स प्रताप प्रभावश्च यत्तेज कोषदण्डजम्" इत्युक्तलक्षणस्य, उपकरणं—ख्यापनसाधनमिति भाव, प्रतिपक्ष,—शत्रु, शत्रुविजयेनैवास्य प्रतापोपलब्धिरिति भाव।

(१३८) नास्येति।—अल्पपुण्यै,—अधन्यै, अल्पभाग्यैरिति भाव, ("अल्पपुण्ये,"

अवाप्यते सर्व्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छाया" इति। श्रुत्वा च तमेव चन्द्रसेनं समादिशत्,—"कृतकशिपुं विश्रान्त-सुखिनम् एनं कारय" इति।

अथ गते च तस्मिन्, (१३९) पर्य्यस्ते च वासरे, (१४०) सङ्कुचमानरक्तपङ्कजसम्पुटपीयमाने इव क्षयिणि क्षामतां व्रजति बालवायसारुणे पराङ्मुखातपे, (१४१) शिथिलित-निजवाजिजवे (१४२) जपाऽऽपीडपाटले अस्ताचलशिखर-

---

इत्यनेन पादयोः कोमलत्वं व्यज्यते, पुष्पवत्त्वादेव तत्पादे )। अस्य—समाज, सर्व्वाति-शायी—सर्व्वेभ्य उत्कर्षवानित्यर्थः,यः सुखरसः,—सुखमेव रसनधर्म्मितया रसः,तस्य प्रसूतिः,—उत्पादहेतुः, सुभगानाम् आनन्दास्वादजननीत्यर्थः, यद्वा,—आनन्दास्वादोत्पत्तिर्यस्याः तथाभूता। पादपल्लवच्छाया—पादपल्लवस्य—चरणकिसलयस्य, छाया—अनातप, आश्रय इत्यर्थः। अत्र पादपल्लवस्य छायावत्त्वं बहूनां जनानामाश्रयणीयत्वात् उपपद्यते। कृतकशिपु—रचितशयनीयम्, यद्वा,—सम्पादितभोजनाच्छादनव्यापारम्, तथा चोक्तं,—"भोजनाच्छादने सङ्क्षेपे कशिपुरुच्यते" इति। [ "कृतकशिपुम्" इत्यत्र "कृतसेवम्" इति पाठान्तरम् ]।

(१३९) पर्य्यस्ते—अवसिते।

(१४०) सङ्कुचमानेति।—सङ्कुचमान,—सम्मीलत्,यः रक्तपङ्कजसम्पुटः,—रक्तपद्म-रूपसम्पुटकः, तेन पीयमाने इव—ग्रस्यमाने इव क्षयिणि—क्षयोन्मुखे। क्षामतां—क्षीणतां, व्रजति—गच्छति, वासरे—दिवसे। बालवायसारुणे—बाल,—सद्योजात, यो वायस,—काकः, तद्वत् अरुणः,—रक्तवर्णः तस्मिन्। पराङ्मुखातपे—पराङ्मुखा,—विमुखतां प्राप्ताः, आतपाः,—मयूखाः यस्य तथोक्ते। [ "बालवायसारुणे पराङ्मुखातपे" इत्यत्र "बालवायसास्यारुणे अपराह्णातपे" इति पाठान्तरे,—बालवायसस्य आस्यवत्—मुखवत् अरुणे इत्यर्थः ]। बालवायसास्यस्य ईषद्रक्तिमयोगात् तेन अस्ताचलगमनोन्मुखरवेः सादृश्यस्य सुखावबोधात् ग्रासितस्य विधीयमानाया दिशः साम्यं सुघटमेवेति ज्ञेयम्।

(१४१) शिथिलितेति।—शिथिलित,—खर्व्वीकृत इत्यर्थः, [ अशिथिलं शिथिलं कृतं इति च्व्यर्थे शिथिलादित्वात् क्तौ निष्ठायां रूपमेतत् ] निजानां वाजिनाम्—अश्वानां, स्वाश्वानामिति भावः जवः,—वेगः येन तथोक्ते।

(१४२) जपेति।—जपा—सूर्य्यप्रियपुष्पभेदः, तस्य आपीड,—स्तवकः, तद्वत्

दोलायमानदीर्घदेहाभोगतया मेदिनीविदलनभयेन भारमिव लघयन्तं, (२७८) दिग्भित्तितटेषु कायमिव कण्डूयमानम्, (२७९) आहवाय उदस्तहस्ततया दिग्वारणानिव आह्वयमानं, (२८०) ब्रह्मस्तम्भमिव स्थूलनिशितदन्तेन करपत्रेण पाटयन्तम्, (२८१) अमान्तं भुवनाभ्यन्तरे बहिः इव निर्गन्तुम् ईहमानं, सर्वतः (२८२) सरसबिसमयस्ताललासिभिः लैखिकैः चिरपरिचयोपचितैः घनैरिव विक्षिप्तसशैवलबिसविसरप्रबलसलिलैः सरोभिरिव च आधोरणैः आधीयमान-

---

सै । दोलायमानेति ।—दोलायमानं,—पुरतः पश्चाच्चलितम् प्रेङ्खत्, दीर्घं,—महान् देहस्य आभोगः,—विस्तारः यस्य तस्य भावः तत्ता तया हेतुना । मेदिनीति ।—मेदिन्याः,—पृथिव्याः, विदलनम्—विदारणमित्यर्थः, तस्मात् यत् भयं तेन भारमिव लघयन्तं—लघूकुर्वन्तमित्यर्थः ।

(२७८) दिगिति ।—दिश एव भित्तिः,—कुड्यः, तस्याः तटाः,—आभोगाः तेषु । कायमिव—अङ्गमिव कण्डूयमानं—घर्षन्तमित्यर्थः ।

(२७९) आहवाय—सङ्ग्रामाय । उदस्तः,—उत्क्षिप्तः, हस्तः—शुण्डः यैन, ("हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च" इति मेदिनी) तस्य भावः तत्ता तया हेतुना, दिग्वारणान्—दिग्गजान्, आह्वयमानमिव—स्पर्धया आकारयन्तमिव । [अत्र ह्वयते युद्धार्थं स्पर्धापूर्वकाकारणार्थबोधकत्वेन आत्मनेपदम्] ।

(२८०) ब्रह्मस्तम्भः—ब्रह्माण्डः, स्थूलः निशितः,—तीक्ष्णः, दन्तः तेन, करपत्रेण—क्रकचेन, पाटयन्तमिव—दारयन्तमिव, करपत्रमपि स्थूलनिशितदन्तं भवति, स्थाणुमपि च भेदयति ।

(२८१) भुवनाभ्यन्तरे अमान्तं—पर्याप्तमलभमानम्, अतिविशालतया वर्तितुमशक्नुवन्तमित्यर्थः, अत एव बहिः,—भुवनाभ्यन्तरात् बाह्यदेशे, निर्गन्तुम् ईहमानमिव—चेष्टमानमिव ।

(२८२) सरसाः,—रसयुक्ताः बिसलेयाः,—पद्मनालशाखाः, तथाविधाः याः लताः,—प्रतानाः, ताभिः लसन्ति—राजन्तीति तथोक्तैः, लैखिकैः,—घासिकैः, चिरपरिचयेन—चिरानुगत्या, उपचितैः,—समाहृतैः, घनैरिव—मेघैरिव । विक्षिप्तेति ।—विक्षिप्तानि—अर्पितानि, सशैवलानां बिसानां—मृणालानां, विसरेण—विस्तरेण, प्रबलानि—स्निग्धानि, सलिलानि यैः, तथाभूतैः । आधोरणैः,—हस्तिपालैः,("आधोरणा हस्तिपका हस्त्यारोहा

निदाघसमयसमुचितोपचारानन्दम्, अपि च (२८३) प्रतिगजदानपवनादानदूरोत्क्षिप्तेन अनेकसमरविजयगणनालेखाभिरिव वलिवलयराजिभिः तनीयसीभिः तरङ्गितोदरेण अतिस्थवीयसा हस्तार्गलदण्डेन अर्गलयन्तमिव सकलं सकुलशैलसमुद्रद्वीपकाननं ककुभां चक्रवालम्, (२८४) एकं करान्तरार्पितेन उत्पन्नाग्रेण कदलीदण्डेन अन्तर्गतशीकरसिच्यमानमूलं, मुक्तापल्लवमिव अपरं लीलाऽवलम्बिना मृणालजालकेन समररसोद्रोमाञ्चकण्टकितमिव दन्तकाण्डं वहन्तं, (२८५) विसर्पन्त्या च दन्तकाण्डयुगलकस्य कान्त्या सरःक्रीडास्वादितानीव कुमुद

---

निषादिनः इत्यर्थः)। आधीयमानः—उत्पाद्यमानः, निदाघसमयस्य—ग्रीष्मकालस्य समुचितेन—संप्रयुक्तेन उपचारेण—परिचर्यया आनन्दः—सन्तोषः यस्य तम्।

(२८३) प्रतिगजेति।—प्रतिगजानां—प्रतिद्वन्द्विहस्तिनां दानपवनस्य—मदसौरभवाहिनो मरुतः इत्यर्थः आदानेन—ग्रहणेन आघ्राणेनेत्यर्थः दूरं यथा तथा उत्क्षिप्तेन—उद्धृतेन तेन तेषां जिगीषयेति भावः। अनेकेति।—अनेकेषां—बहूनां समराणां—सङ्ग्रामाणां विजयाः तेषां गणना—सङ्ख्यानं तस्याः लेखाभिरिव—लिपिभिरिव वलिवलयराजिभिः—वलयाकारवलिश्रेणीभिः तनीयसीभिः—अत्यल्पाभिरित्यर्थः। तरङ्गितम्—अङ्कितम् उदरम्—अभ्यन्तरभागः यस्य तथोक्तेन अतिस्थवीयसा—अतिस्थूलेन, हस्तार्गलदण्डेन शुण्डारूपार्गलदण्डेन अर्गलयन्तमिव—निरुन्धन्तमिव। ककुभां चक्रवालं—दिङ्मण्डलम्।

(२८४) एकं दन्तकाण्डमित्यन्वयः। करान्तरार्पितेन करस्य—शुण्डायाः अन्तरे—मध्ये अर्पितः—दत्तः आपीडत्वेनेति भावः तेन उत्पन्नाग्रेण—उद्गतपत्रेण कदलीदण्डेन—रम्भास्तम्भेन हेतुना अन्तर्गतैः शीकरैः—अम्बुकणैः सिच्यमानं मूलं यस्य तथोक्तम्। मुक्तापल्लवमिव—मुक्ताफलकिसलयमिव अपरं दन्तकाण्डमित्यनुषङ्गः। ["अपरम्" इत्यत्र "परम्" इति पा०—अन्यमित्यर्थः] लीलाऽवलम्बिना—लीलया अवलम्बते इति तथोक्तेन मृणालजालकेन—मृणालनिचयेन। समरेति।—समरः—युद्धं तस्मिन् रसः—रागः तेन उद्गताः—उद्भूताः रोमाञ्चा एव कण्टकाः जाताः अस्येति तथोक्तमिव दन्तकाण्डं—दशनस्तम्भं वहन्तं—दधानम्।

(२८५) विसर्पन्त्या—विसरन्त्या दन्तकाण्डयुगलकस्य कान्त्या—प्रभया। सरः

वनानि बहुधा वमन्तं, (२८६) निजयशोराशिमिव दिशाम् अर्प-यन्तं, (२८७) कुकरिकीटपाटनदुर्ललितान् सिंहानिव उप-हसन्तं, (२८८) कल्पद्रुमदुकूलमुखपटमिव च आत्मनः कलयन्तं, (२८९) हस्तकाण्डदण्डोद्धरणलीलासु च लक्ष्य-माणेन रक्तांशुकसुकुमारतलेन तालुना आवलितानि रक्तपद्म-वनानि इव वर्षन्तम्, अभिनवकिसलयराशीनिव उद्गिरन्तं, (२९०) कमलकवलपीतं मधुरसमिव स्वभावपिङ्गलेन वमन्तं चक्षुषा, (२९१) चूतचम्पककानवलीलवङ्गकक्कोलवल्लि एला-

---

क्रीडेति।—हरति या क्रीडा—विहार, तत्र आस्वादितानि—भुक्तानि तानीव, [ इत्युत्प्रेक्षा ] कुमुदवनानि—कैरवसङ्घान्, बहुधा—अनेकधा, वमन्तम्—उद्गिरन्तम्।

(२८६) निजयशोराशिमिव—स्वीयकीर्त्तिसमूहमिव, दिशाम् अर्पयन्तं—दिक्षु निक्षिपन्तम्। एतयोर्वर्णसाम्यमाह,—"पय कुमुदकुन्दाभौ केतकीकुमुदद्युती। मृगाङ्ककिरणालोकौ कीर्त्तिरुन्मादकारकौ॥" इति।

(२८७) कुकरीति।—कुत्सिता—दुर्बला इति यावत्, करिण,—हस्तिन, त एव कीटा,—क्षुद्रप्राणिविशेषा, तेषां पाटनेन—खण्डनेन, दुर्ललिता,—दृप्ता तान्।

(२८८) कल्पद्रुमेति।—कल्पद्रुमस्य दुकूलं—श्वेतपट्टवस्त्रं, तदेव मुखपट,—मुखाच्छादनवस्त्रं तमिव, आत्मन,—स्वस्य, कलयन्त—धारयन्तमित्यर्थः।

(२८९) हस्तेति।—हस्त,—शुण्ड एव, काण्डदण्ड,—नलयष्टि, तस्य उद्धरणानि—उत्तोलनान्येव लीला तासु, लक्ष्यमाणेन—दृश्यमानेन, रक्तांशुकसुकुमारतलेन—रक्तवस्त्रवत् रक्तवर्णसुकोमलतलेन तालुना—तालुदेशेन हेतुना, उक्तञ्च—"रक्तोष्ठतालुरसनम्" इति। आवलितानि—भक्षितानि। वर्षन्तं—वमन्तम्। अभिनवकिसलयराशीनिव—नवपल्लवनिवहानिव।

(२९०) स्वभावपिङ्गलेन—सहजदीपशिखातुल्यवर्णेन, चक्षुषा, उक्तञ्च,—"अग्निधूम्रसमाभासे कान्तविद्धाचसन्निभे। प्रसन्नमधुपिङ्गे च स्थिरे चामौलिने तथा॥ अपरिस्राविणी चैव कुशाग्निनिभभास्वरे। नेत्रे भद्रे समे स्निग्धे दीर्घे चाविप्लपक्ष्मणी॥" इति। कमलानां कवलेन—ग्रासेन, पीतं मधुरसमिव—मकरन्दमिव। वमन्तं—वर्षन्तम्।

(२९१) चूतेत्यादिना प्रागल्भ्यमाह, यदुक्तम्,—"उभयश्रुतिरप्येव विवर्णं

लतामिर्मिश्रितानि ससहकाराणि कर्पूरपूरपूरितानि पारिजातक-वनानीव उपभुक्तानि पुरः करटाभ्यां बहलमदामोदव्याजेन विसृजन्तम्, अहर्निशं (१८२) विभ्रमक्तानहस्तस्खलितिभिः श्रद्धखण्डितपुण्ड्रेक्षुकाण्डकण्डूयनलिखितैः अलिकुलवाचालितैः दानपट्टकैः विलभमानमिव सर्व्वकाननानि करिपतीनाम्,

स्पर्शवर्जित। यदि स्यादपगन्धस्तदाऽसौ न सतां मतः॥" इति। पुरः,—अग्रतः, करटाभ्यां—गण्डाभ्यां, बहलमदामोदव्याजेन—प्रभूतदानवारिसौरभच्छलेन चूत-चम्पकलवलीलवङ्गकक्कोलवनानि—चूतम्—आम्रमुकुलमित्यर्थः, चम्पक—चम्पकपुष्प मित्यर्थं, लवली—"नीयाड" इति ख्यात वृक्षविशेष, तस्याः पुष्पमित्यर्थं, लवङ्ग—लवङ्गकलिका, कक्कोल - "कांकला" "वनकर्पूर" इति च ख्यात वृक्षविशेष कक्कोल, तस्य फलमित्यर्थ, तद्वनानि—तद्विशिष्टानि एलालतामिर्मिश्रितानि—सकलैस्तावल्लीयुक्तानि, ससहकाराणि—अतिसौरभाक्तसहितानि, ('आम्र चूतो रसालोऽसौ सहकारो-ऽतिसौरभ" इत्यमरः)। कर्पूरपूरपूरितानि—कर्पूराख्यद्रव्यविशेषस्य सुगन्धिनिर्यासप्रवाहभरेण व्याप्तानि, पारिजातकवनानि—पारिजाताख्यपुष्पविशेषस्य अरण्यानि विसृजन्तमिव—वमन्तमिव।

(१८२) विभ्रमेति।—विभ्रमेण हृता हर्षे—प्रश्रयैः,स्थिति ये तादृशैः। अर्द्धेत्यादिना इक्षुकाण्डस्य विडम्बीसाम्य प्रदर्शयति, अर्द्धेति।—अर्द्धं खण्डित —भग्न,य पुण्ड्रेक्षुकाण्ड,—इक्षुविशेषस्य काण्ड,तेन यत् कण्डूयन तेन लिखितानि—क्षतविक्षतानि तै , अलिकुलै,—भ्रमरवृन्दै वाचालितानि—मुखरितानि तै , यद्वा,—लिखितै,—क्षतलेखै, तथाऽपि अलिकुलवाचालितै,—अलिकुलेन—भ्रमरवृन्देन, वाचालितै —मुखरीभूतै, [अवाचाल वाचाल भूत इति अभूततद्भावार्थे क्विप्रत्यये वाचाल इति नामधातो कर्त्तरि निष्ठाया सिद्धम् अन्यथा विशेषणपदत्वादस्य मतर्थीयस्य इनच अप्रयोग, विधेयपदोत्तरप्रयोगस्य तस्य साधुत्वात्] [एतेन अलिकुलस्य लिपेरक्षररूपता व्यज्यते, अक्षरेषु च विद्यमानेषु अधीयमानेषु वाचालता प्रतीयते]। दानपट्टकै — दानसन्तानपत्रे, दलितपत्रे,—दानस्य—मदजलस्य, पट्टकानि—पीठानि तै शिरोहस्तकपोलादिप्रदेशे तत्र मदसम्बिलस्य प्राधान्येन क्षरणात् तस्य शिरस तत्पालेनोपवर्णनमिति वेदितव्यम्; करिपतीनां गजेन्द्राणां, सर्व्वकाननानि विलभमानमिव—सर्वशोकिविभ्रमाणमिव, दान-पट्टकलिखितानुरूप भूम्यादिक किमपि लभ्यते, तत्राक्षराणि लिखितानि च दृश्यन्ते।

(२९३) अविरलोदबिन्दुस्यन्दिना हिमशिलाशकलमयेन विभ्रमनवलमालागुणेन शिशिरीक्रियमाणं, (२९४) सकलवारणेन्द्राधिपत्यपट्टबन्धबन्धुरम् इव उच्चैस्तरां शिरो दधानं, मुहुर्मुहुः (२९५) स्थगितातपाहतदिङ्मुखाभ्यां कर्णतालवृन्ताभ्यां वीजयन्तमिव भर्तृभक्त्या दन्तपर्यङ्किकास्थितां राजलक्ष्मीम्,

---

(२९३) अविरलेति।—अविरलम—अजस्रम्, उदबिन्दुस्यन्दिना—जलकण-स्राविणा, ["मन्थौदनसक्तुबिन्दु—" (६।३।६० पा०) इति सूत्रेण वाविकल्प उदकस्य उदादेश तथा च उदकबिन्दुरित्यपि पदान्तरं भवतीति विभावनम्] हिमशिलाशकलमयेन—वातवज्रीभूत काठिन्यं हिम हिमशिला, तच्छकलमयेन—तत्खण्डमयेन। केचित्तु "हिमानि शिलाशकलानि चन्द्रकान्ता" इति प्राहुः। विभ्रमनवनलमालागुणेन—विभ्रमाय—शोभार्थमित्यर्थ, या नवनलमाला नालेव इति नवनलमाला—सद्यविगलित-संधिनिर्मिता मौक्तिकहारविशेष सा एव गुण,—पाश तेन, शिशिरीक्रियमाणं—शीतलीक्रियमाणम्, अतिभक्त्यानां वर्तुलाकाराणां मौक्तिकानां गजस्य शिरसि शोभार्थं निहितानां जलबिन्दुरूपत्वेन वर्णितत्वात् तदेव शिशिरत्वं सुसङ्गतमेवेति ध्येयम्।

(२९४) सकलेति।—सकलानां वारणेन्द्राणां—हस्तीन्द्राणाम्, आधिपत्य—प्रभुत्वं तस्य पट्टबन्ध—तत्सूचकशिरस्त्राणपट्टबन्धमिति यावत् तेन बन्धुरमिव—रमणीयमिव, शोभमानमिव इत्यर्थ, उन्नतानतमिवेति वा, गजशिरोदेशस्य समतलत्वादर्शनात्, तस्य पट्टबन्धादेव विषमत्व मातमित्युत्प्रेक्षितम्, ("बन्धुरं मुकुटे पुंसि स्त्रीलिङ्गे तैलकल्कयोः। बन्धूके बधिरे हंसे त्रिषु स्यादुन्नतानते॥" इति मेदिनी) उच्चैस्तराम—अतिशयेन ऊर्ध्वं शिरः—मस्तकं, दधानं—धारयन्तम्, तच्च करिणां प्राशस्त्यलक्षणं, यथा,—"सम उन्नत मूर्धा च नातिस्थूलोऽसमस्तकम्। आताम्र नातिरुक्षश्च विताना‍त्वचसि महत्॥" इति।

(२९५) स्थगितेति।—स्थगितम् आच्छादितं, प्रसारणावसरे इति भाव, तपात्तं प्रकम्पितञ्च सङ्कोचनावसरे इति भाव, तथातिविशालत्वादेवत्याशय, दिङ्मुखं याभ्यां तथाविधाभ्यां, कर्णतालवृन्ताभ्यां—कर्णावेव तालवृन्ते ताभ्याम्, ["कर्णतालचलतालवृन्ताभ्याम्" इति पाठे—निरन्तरचालितश्रवणरूपव्यजनाभ्याम् इत्यर्थं]। दन्तेति।—दन्त एव पर्यङ्किका—क्षुद्रपर्यङ्क राजलक्ष्म्या अवस्थानयोग्यत्वादिति भाव, तत्र स्थिता ताम्, राजलक्ष्मीं—राजश्रियं वीजयन्तमिव इत्यन्वय।

(२८६) आयतवंशक्रमागतेन गजाधिपत्यचिह्नेन चामरेणेव चलता बालधिना विराजमानं, (२८७) स्वच्छशिशिर-शीकरच्छलेन दिग्विजयपीताः सरित इव पुनः पुनः मुखेन मुञ्चन्तं, चणम् (२८८) अवधानदाननिस्पन्दीकृत-सकलावयवानाम् अन्यद्विरदडिण्डिमाकर्णनवलनानाम् अन्ते दीर्घशीत्कारैः परिभवदुःखमिव आवेदयन्तम्, (२८९) अलब्ध-युद्धमिव आत्मानम् अनुशोचन्तम्, (३००) आरोहाधिरूढि-परिभवेण लज्जमानमिव अङ्गुलीलिखितमहीतलं मदं मुञ्च-

(२८६) आयतेति।—आयत,—दीर्घं, वंश,—पृष्ठवंश इति यावत्, कुलञ्च तस्य क्रमेण—आनुपूर्व्या, परम्परया च, आगत,—उचित प्राप्तञ्च तेन। आयतवंश, वक्रवंश, अरवंश, चाक्षवंशचेति चतुर्थं आयतवंशस्यैव प्राधान्यमुक्तं, यथा,—"यावत् पूरितपार्श्वश्च वंशश्चायतलक्षणः। असौ श्रेयो गजेन्द्राणामायत' कुरुते सुखम्॥" इति। गजाधिपत्य तस्य चिह्न—लक्षणं तेन। बालधिना—पुच्छेन विराजमान—शोभमानम्।

(२८७) स्वच्छेति।—स्वच्छाना—विशदाना, शिशिराणां—शीतलाना, शीकरा-णाम्—अम्बुकणानां, छल तेन, दिशां विजये—विजयकाले, पीता या सरित,—नदी। मुञ्चन्त—त्यजन्तम्।

(२८८) अवधानेति।—अवधानस्य—मनोनिवेशस्य, दानेन—अर्पणेनैर्यर्थ, मनोनिवेशपूर्वकम् अन्यद्विरदडिण्डिमश्रवणेन इति भाव निस्पन्दीकृता,—निश्चलीकृता, सकला अवयवा यासु तासाम्, अन्येषां द्विरदाना—गजाना, डिण्डिमाकर्णने—तेषामुपरि स्थापितानां वाद्यभेदाना श्रवणे, या वलना—भावना, तदसहिष्णुता वा इति भाव तासां, ["डिण्डिमाकर्णनवलनानाम्" इत्यत्र "डिण्डिमाकर्णनाङ्गवलनानाम्" इति पाठे—डिण्डिमाकर्णने या अङ्गवलना—अङ्गचालना तासाम्] अन्त—अवसाने। दीर्घशीत्कारैः,—दीर्घकाल व्याप्य निर्गतै शीत् इत्याकारकाव्यक्तशब्दविशेषै, ["दीर्घशीत्कारै" इत्यत्र "दीर्घफुत्कारै" इति पाठान्तरम्]। परिभवदुःखमिव—पराजयव्यलीकमिव, आवेदयन्त—प्रकटयन्तम्।

(२८९) अलब्धेति।—न लब्ध युद्ध येन तथोक्तमिव।

(३००) आरोहेति।—आरोहस्य—आरोहिण उपरि, अधिरूढि,—अधि-

न्तम्, (२०१) अवज्ञागृहीतमुक्तकवलकुपितारोहारटनानुरोधेन मदतन्द्रीनिमीलितनेत्रविभागं कथं कथमपि मन्दमन्दम् अनादरात् आददानं कवलान्, (२०२) अवजग्धतमालपल्लवसुतश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनापि उत्सृजन्तं, (२०३) दलन्तमिव दर्पेण, श्वसन्तमिव शौर्येण, मूर्च्छन्तमिव मदेन, क्षुभ्यन्तमिव तारुण्येन, द्रवन्तमिव दानेन, वल्गन्तमिव बलेन, माद्यन्तमिव मानेन, उद्यन्तमिव उत्साहेन, ताम्यन्तमिव तेजसा, लिम्पन्तमिव लावण्येन, सिञ्चन्तमिव

---

गाढत्व, सैव परिमल तेन, जृम्भमाणमिव, अङ्गुलीभि—करिशरीरावयवै, अन्यत्र,—करशाखाभिश्च, लिखित—उल्लिखित महीतल—भूतल येन तथोक्त, लज्जितानां भूविलेखन स्वभाव इति भाव, मद—दान-वारि, गर्भस्य, मुकुल—अग्रभागम्, लज्जितस्य गर्भत्याग समुचित एव।

(२०१) अवज्ञेति।—अवज्ञया—अवहेलया, आदौ गृहीता पश्चात् मुक्ता,—त्यक्ता, ये कवला, तै कुपित,—क्रुद्ध, य आरोह,—हस्तिपक, तस्य आरटनानुरोधेन—निर्भर्त्सनवचनेन इत्यर्थ, मदेति।—मदेन या तन्द्री—आलस्य, निद्रा वा, ("तन्द्री निद्रा प्रमीलयो" इत्यमर। आलस्य वा इन्द्रियाणामपटुत्व वा प्रमीला) तया निमीलित नेत्रयो विभाग,—"क्वचित् एकदेशवाचिनामपि पूरणप्रत्ययम्" इति न्यायात् तृतीयो भाग इत्यर्थ यस्मिन् तत् यथा तथा, कवलान्—ग्रासान्, आददान—गृह्णन्तम्।

(२०२) अवजग्धेति।—अवजग्धानाम्—खादितानां, तमालपल्लवानां सुता,—निर्गलिता, श्यामला रसा यस्मात् तथोक्तेन, मुखेन—वदनेन, प्रभूततया—प्राचुर्येण, मदप्रवाहमिव—दान-वारिस्रोत इव, उत्सृजन्तं—मुञ्चन्तम्।

(२०३) दलन्तमिव—स्वयं भिद्यमानमिव। ["दलन्तम्" इत्यत्र "चलन्तम्" इति पाठे,—कम्पमानमित्यर्थ]। श्वसन्तमिव—जीवन्तमिव। क्षुभ्यन्तमिव—स्खलन्तमिव। द्रवन्तमिव—गलन्तमिव। दानेन—मदेन। वल्गन्तमिव—विचेष्टमानमिव। माद्यन्तमिव—मत्तता प्रकटयन्तमिव। उद्यन्तमिव—उदयमानमिव। ताम्यन्तमिव—क्लिश्यन्तमिव। लिम्पन्तमिव—संयोजयन्तमिव, मर्दयन्तमिव वा। सिञ्चन्तमिव—वर्षन्तमिव।

सौभाग्येन; (२०४) स्निग्धं नखेषु, परुषं रोमविषये, गुरुं सुखे, सच्छिष्यं विनये, मृदुं शिरसि, दृढं परिचयेषु, ह्रस्वं स्कन्धबन्धे, दीर्घम् आयुषि, दरिद्रम् उदरे, सततप्रवृत्तं दाने, (२०५) बलभद्रं मदलीलासु, कुलकलत्रम् आयततासु, जिनं क्षमासु, वह्निवर्षं क्रोधमोचेषु, गरुडं नागोद्धृतिषु, (२०६) नारदं कलहकुतूहलेषु, शुष्काशनिपातम् अवस्कन्देषु, मकरं वाहिनीक्षोभेषु, (२०७) आशीविषं दशनकर्मसु, वरुणं हस्तपाशाकृष्टिषु, यमवागुराम् अरातिसंवेष्टनेषु,

---

(२०४) स्निग्धमिति।—यथा,—"मसृणा स्निग्धा, सिता श्वेता" इति। परुष—कर्कशं, यो हि स्निग्ध (मौलिमान्) स कथं परुष (मौलिरूक्ष) भवति? इति विरोध। गुरु—महान्तम्, आचार्यञ्च। सच्छिष्य—सुशील शिष्य, विनये इति।—यथा—"विनये मुनिभिश्छाया मुद्रा नावाच यावता। निखिलशस्त्राधिकलाया मत्त माला महीपते॥" इति। यश्च गुरु, स कथं शिष्य? इति विरोध। मृदु—कोमलम्। परिचयेषु—आश्रयेषु इत्यर्थ। मृदुदृढयोरेकत्रावस्थानं न युज्यते इति विरोध। स्कन्धबन्धे—पीवामूर्ध्नि। ह्रस्वदीर्घयोर्विरोध इत्येव। दरिद्र—कृश, दीनश्च। दाने—मद वारिस्राव इत्यर्थ, त्याग च दाने—त्यागे। अत्र दरिद्र-सततदानप्रवृत्तयोर्विरोध।

(२०५) बलभद्र—बलरामम्, मदलीलासु—मद,—दान-वारि, सुरापानता च, तल्लीलासु। कुलकलत्र—कुलाङ्गना, आयततासु—दीर्घतासु। बलभद्र कुलकलत्रयो मदमत्तता बन्धुतयोश्च विरोध। जिन—बुद्धदेवम्। वह्निवर्षम्—अग्निवृष्टिम्, क्रोधमोचेषु—कोपप्रसरेषु। अत्र क्षमाप्रधानजिन वह्निवर्षयो क्षमा क्रोध-मोचयोश्च विरोध। नागोद्धृतिषु—नागाना—प्रतिपक्षहस्तिना, सर्पाणाञ्च, उद्धृतिषु—निपातनेषु।

(२०६) नारद—स्वनामप्रसिद्ध देवर्षि, नार—जल ददातीति तथोक्तञ्च, कलहकुतूहलेषु—विवादकौतुकेषु, युद्धव्यापारेषु च। शुष्काशनिपात—वृष्टि विना वज्रपतनम्, अवस्कन्देषु शत्रूणाम् आक्रमणेषु। मकर—जलजन्तुभेद, वाहिनीक्षोभेषु—सेनासंचालनेषु, नद्युद्वेलकरणेषु च।

(२०७) आशीविष—सर्प, दशनकर्मसु—दन्तव्यापारेषु, दशनक्रियासु इत्यर्थ। वरुण—जलाधिपतिं, हस्त,—शुण्ड एव पाश हस्तपाश, हस्ते पाशश्च, तेन आकर्षण,

(२०८) कालं परिणतिषु, राहुं तीक्ष्णकरग्रहणेषु, लोहिताङ्गं वक्रचारेषु, (२०९) अलातचक्रं मण्डलभ्रान्तिविज्ञानेषु, मनोरथसम्पादकं चिन्तामणिपर्य्यन्तकं विक्रमस्य, (२१०) दन्तमुक्ताशैलस्तम्भ निवासप्रासादम् अभिमानस्य, (२११) घण्टाचामरमण्डनमनोहरम् (२१२) इच्छासञ्चरणविमानं मनस्वितायाः, (२१३) मदधारादुर्दिनान्धकारं

---

—आकर्षणानि तासु। अलकासुरा—अलका कापुरा—प्रार्थितस्थानानि तासु, भटातिसंवेष्टनेषु—शत्रुसमाक्रमणेषु।

(२०८) कालं—यमं, शुभफलस्य परिणतिषु—अवसानेषु, तिर्यक् दन्तप्रहारकर्मसु इति वा, "तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति अमरः, केचित्,—परिणतिषु—शुभाशुभादिकर्मविपाकेषु कालम्—प्रहरादिरूपम् इति पक्षान्तरे व्याख्यानयन्ति। तीक्ष्णकरग्रहणेषु—तीक्ष्णेन—तीव्रेण प्रचण्डेनेत्यर्थः, यद्वा—तीक्ष्णं यथा तथा, करेण—शुण्डेन ग्रहणानि—आक्रमणानि अन्यत्र,—तीक्ष्णकरः—सूर्यः, तस्य ग्रहणानि—ग्रासाः तेषु। लोहिताङ्गं—मङ्गलग्रहं वक्रचारेषु—कुटिलगतिषु।

(२०९) अलातचक्रं—सदाग्न्युल्काचक्रविशेषम्, उल्मुकमण्डलञ्च, मण्डलभ्रान्तिविज्ञानेषु—मण्डलाकारेण भ्रान्तिः,—भ्रमणं, तस्याः विज्ञानानि—शिक्षितानि ज्ञानानि परिचया इत्यर्थः तेषु। मनोरथसम्पादकम्—अभीष्टनिर्वाहकं [ शेषे-षष्ठीसमासः "कर्मण्यण्" (३।२।१ पा०) इत्यपि ण्वुलि स्वार्थे च ]। चिन्तामणिपर्य्यन्तकं—चिन्तामणिः —चिन्तामात्रेण चिन्तितवस्तुदायकामूल्यरत्नविशेषः तस्य पर्य्यन्तकम्, —सुदूरपर्य्यन्तं तम्। [ "पर्य्यन्तकम्" इत्यत्र "पर्य्यन्तम्" इति पाठान्तरम् ]।

(२१०) दन्तेति।—दन्तावेव मुक्ताशैलस्तम्भौ—मौक्तिकपाषाणस्तम्भौ दन्तौ मुक्ताशैलस्य स्तम्भौ इव इति वा यस्य तथोक्तम्, दन्तस्य मुक्ताशैलानाञ्च स्तम्भा यत्र तादृशमिति च। निवासप्रासाद—निवासभवनम्। [ दन्तमुक्ता प्रासादम्" इत्यत्र "दन्तमुक्ताशैलस्तम्भनिवासप्रासादम्" इति समस्तपाठोऽपि दृश्यते ]।

(२११) घण्टेति।—घण्टाश्च चामराणि च तैः मण्डनेन—अलङ्करणेन, मनोहरः,—रम्यः तम्।

(२१२) इच्छेति।—इच्छया—वाञ्छानुसारेण इत्यर्थः, यथेच्छमिति भावः, सञ्चरणं—परिभ्रमणं तत्र विमानं—देवयानं सत्। मनस्वितायाः,—वीरताया इति यावत्।

(२१३) मदेति।—मदधाराभिः, दुर्दिनं—समाच्छन्नमित्यर्थः, अत एव अन्धं

गम्भीरोदकधारागृहं क्रोधस्य, (२१४) सकाञ्चनप्रतिमं महानिकेतनम् अहङ्कारस्य, (२१५) सगण्डशैलप्रस्रवणं क्रीडापर्वतम् अवलेपस्य, (२१६) सदन्ततोरणं वज्रमन्दिरं दर्पस्य, (२१७) उच्चकुम्भकूटाट्टालकविकटं सञ्चारि गिरिदुर्गं राज्यस्य, (२१८) कृतानेकबाणविवरसहस्रं लोहप्राकारं पृथिव्याः, (२१९) शिलीमुखशतझाङ्कारितं (२२०) पारिजातपादपं भूनन्दनस्य, तथा च सङ्गीतगृहं कर्णतालताण्डवानाम्,

---

करोति इति अन्धकारं तम्, गम्भीरोदकधारागृहं—सुगोपितजलधारागृहं, क्रोधस्य—कोपस्य।

(२१४) सकाञ्चनेति।—काञ्चनप्रतिमा—काञ्चनी—स्वर्णमयी, स्वर्णनिर्मिता इत्यर्थः, प्रतिमा—दन्तबन्धः, देवताकृतिश्च, तत्सहितं—तद्युक्तमित्यर्थः, ("प्रतिमा गजदन्तस्य बन्धे चाकृतावपि" इति मेदिनी)। महानिकेतनं—महामन्दिरम्, अहङ्कारस्य—दर्पस्य।

(२१५) सगण्डेति।—गण्डः,—कपोल एव, शैलः, अथवा—गण्डशैलः,—पर्वतात् निच्युतः स्थूलोपलः, ("गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः) तस्य प्रस्रवणं—दानवारिस्रावः, निर्झरश्च तेन सह वर्त्तमानम्, अवलेपस्य—गर्वविशेषस्य।

(२१६) सदन्तेति।—दन्तावेव तोरणं,—बहिर्द्वारम् अथवा,—दन्तनिर्मिततोरणं, तेन सह वर्त्तमानम्। वज्रमन्दिरं—वज्रनिर्मितगृहम्।

(२१७) उच्चेति।—उच्चौ उन्नतौ, कुम्भाविव कूटौ—शिखरे यस्य तादृशं, यत् अट्टालकं—हर्म्यं, तद्वत् विकटं—भयावहं सञ्चारि—जङ्गमम्, यदाह कौटिल्यः,—"हस्तिनो हि जङ्गमं दुर्गम्" इति। गिरिदुर्गं—पर्वतरूपं सुदुष्प्रवेशं स्थानमित्यर्थः।

(२१८) कृतेति।—कृतानि अनेकानि बाणविवरसहस्राणि बाणनिक्षेपार्थं छिद्रसमूहाः, प्राकारेषु बाणनिक्षेपार्थं विवरसहस्राणि क्रियन्ते, ये "इन्द्रकोशा" इति चाणक्यादिषु ख्याताः, यद्वा,—बाणैः, शत्रुनिक्षिप्तैरिति भावः, विवरसहस्राणि यत्र तादृशं लोहप्राकारं—लौहनिर्मितप्राचीरम्।

(२१९) शिलीमुखेति।—शिलीमुखानां—भ्रमराणां, शतैः झाङ्कारितं,—निनादितं, यद्वा,—शिलीमुखशतैः—बाणसमूहैः, शत्रुप्रहितैरिति भावः, झाङ्कारितं,—पतनदशायां झाङ्कारशब्देन विद्धं तम्।

(२२०) पारिजातपादप—देवतरुविशेषः, भूनन्दनस्य—भूः,—पृथिवी एव

(२२१) आपानमण्डपं मधुपमण्डलानाम्, अन्तःपुरं शृङ्गारा-भरणानां, मदनोत्सवं मदलीलालास्यानाम्, (२२२) अनुसप्रदोषं नक्षत्रमालामण्डलानाम्, (२२३) अकालप्रावृट्कालं मदमहानदीपूरप्लवानाम्, अलीकशरत्समयं सप्तच्छदवनपरि-मलानाम्, (२२४) अपूर्वहिमागमं शीकरनीहाराणां, मिथ्याजलधरं गर्जिताडम्बराणां दर्पणागमम् अपश्यत्।

आलोक्य चास्य चेतसि—(२२५) "नूनमस्य निर्माणे

---

नन्दनं देवकाननं तस्य अथवा—भुवः—पृथिव्याः, नन्दयति—आह्लादेन प्रीणयतीति भूनन्दनः,—राजा तस्य। कर्णतालताण्डवानां—कर्णसञ्चालनकम्पनर्त्तनानाम्।

(२२१) आपानमण्डपं—पानस्थानं, मधुपमण्डलानाम्—भृङ्गसमूहानाम् अथवा,—विटानां मद्यपायिनामित्यर्थः। शृङ्गाराभरणानां—शृङ्गाराः,—सिन्दूरादिभिः मण्डनविशेषा एव, आभरणानि अथवा,—शृङ्गारः,—रसविशेषः, ("शृङ्गारः सुरते नाट्यरसे च गजमण्डने" इति मेदिनी) तस्य आभरणानि—विलासद्रव्याणीत्यर्थः तेषाम्। मदनोत्सवं—मदयतीति मदनः,—मदकरः, उत्सवो यस्य तथोक्तम्, अथवा,—कामोत्सवम्।

(२२२) अनुसेति।—अनुसः—पूर्वः, मेघावरणादिशून्य इति भावः, प्रदोषः,—रजनीमुखं यस्य, —अथवा,—पूर्वः प्रदो—प्रकृष्टशुभः यस्य तथोक्तः, ("भुजगाङ्क प्रदेदो दो" इत्यमरः) नक्षत्रमालामण्डलानां—नक्षत्रमाला—तारकाराजय एव, मण्डलानि—चक्राकारवेष्टनानि परिधयो वा तेषां, पक्षे,—नक्षत्रमाला—सप्तविंशति-मौक्तिकहारा एव, मण्डलानि तेषाम्।

(२२३) अकालप्रावृट्कालम्—असमयवर्षासमयम्। महेति।—मदा एव महानद्यः पूराः,—प्रवाहाः तेषां प्लवाः,—गतिविशेषाः तेषाम्। अलीकशरत्समयं—मिथ्याशरत्कालं सप्तच्छदवनपरिमलानां—सप्तपर्णवनस्येव परिमलाः—सौरभाणि, मदवारीणामिति भावः तेषाम्।

(२२४) अपूर्वहिमागमं—नूतनहेमन्तं, शीकरनीहाराणां—जलकणरूपशिशि-राणाम्। मिथ्याजलधरम्—अलीकं पयोधरम्, अन्यं मेघमित्यर्थः, गर्जिताडम्बराणां—गर्जितान्येव आडम्बराः,—घटाविशेषाः तेषाम्।

(२२५) नूनं—मन्ये, [उत्प्रेक्षावाचकम्]। अस्य—वारणपतेः, निर्माणे—

गिरयो वाहिताः परमाणुतां, कुतोऽन्यथा (२२६) गौरवम् इदम् ? आश्चर्यमेतत्, विन्ध्यस्य दन्तौ ! आदिवराहस्य करः!" इति विस्मयमानम् एतं दौवारिकोऽब्रवीत्,—"पश्य,—

> मिथ्यैवाल्लिखतां मनोरथशतैर्निःशेषनष्टां श्रियं
> चिन्तासाधनकल्पनाकुलधियां भूयो वने विद्विषाम्।
> आयातः कथमप्ययं स्मृतिपथं शून्यीभवच्चेतसां
> नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि ॥ ४ ॥

---

सृष्टौ, परमाणुता वाहिता,—नीता, प्रापिता इत्यर्थः, देहस्य भौतिकपरमाणुसमष्टिमयत्वादिति भावः।

(२२६) गौरव—गुरुत्वम्। आश्चर्य—चमत्कृतिः, यत् विन्ध्यस्य—तदाख्यपर्वतस्य, दन्तौ, एतत् आश्चर्यमित्यर्थः, विन्ध्यपर्वततुल्योऽयं गजेन्द्र इति भावः। आदिवराहस्य—वराहरूपेणावतीर्णस्य भगवतो विष्णोरित्यर्थः, करः,—शुण्डः, इति च आश्चर्यम्, आदिवराहसदृशोऽयमिति भावः। विस्मयमानं—चमत्कुर्वाणम्। एतं—बाणम्।

दर्पशातस्य शिक्षमातिशय्यप्रदर्शनप्रसङ्गेन राजविद्विषां पुनरभ्युदयसम्भावनाराहित्यं प्रकटयति, मिथ्यैवेति।—निःशेषेण नष्टां तां—सम्यक् नाशं गतामित्यर्थः, श्रियं—राजलक्ष्मीं, मिथ्यामिति शेषः, पराजितत्वादिति भावः, मनोरथशतैः,—शतैः शतैः मनोरथैः, एवमेवमस्माभिः सम्पत्तिः करिष्यते इत्येवमभिलाषैरित्यर्थः, मिथ्यैव—मृषैव आल्लिखताम्—अनुशोचतामिति यावत्, ["आलिखताम्" इत्यत्र "आलिखिताम्" इति पाठे—लिखिताम्, मनसि चित्रितामित्यर्थः श्रियमित्यस्य विशेषणम्, कुर्वतामिति शेषः] भूयः,—समधिकं यथा तथा, विद्विषां—शत्रूणां। केन दुर्दैवेन अस्माकमीदृशी दुर्दशा जाता ? कं वा उपायं करिष्यामि ? इत्यादिभावनया इत्यर्थः, साधनानां—पुनरुद्धारोपायानां, कल्पनया च आकुलाः धीर्येषां तथाभूतानाम्, अत एव शून्यीभवच्चेतसां—शून्यीभवत्—निराशीभवदित्यर्थः, चेतो येषां तादृशानां ["शून्यीभवच्चेतसाम्" इत्यत्र "शून्यीभवच्चेतसा" इति पाठे तु—शून्यीभवता चेतसा कथमपि स्मृतिपथम् आयातः इत्यन्वयः] वने विद्विषां—वनवासिनां शत्रूणां, कथमपि—अतिकष्टेन स्मृतिपथम् आयातः,—तेनैव वारणेन्द्रेण यत्र नितरां निर्जिता इति स्मरणपद्धतिं गतः, अयं नागेन्द्रः,—वारणपतिः, मानसं—चित्तं, सरोविशेषश्च गतां तान् आशाः,—तृष्णाः, अभिलाषा इत्यर्थः, ता एव गजेन्द्राः, आशागजेन्द्राः,—दिग्गजाश्च तान्, न सहते—न क्षमते,

तत् एहि, पुनरपि एनं द्रक्ष्यसि, पश्य तावत् (३२७) देवम्" इत्यभिधीयमानश्च (३२८) तेन (३२९) मदजलकज्जलकान्तकपोलपट्टपतितां मत्तामिव मदपरिमलेन मुकुलितां कथमपि तस्मात् दृष्टिम् आकृष्य, तेनैव दौवारिकेण उपदिश्यमानवर्त्मा, समतिक्रम्य भूपालसहस्रसङ्कुलानि त्रीणि कक्ष्यान्तराणि, चतुर्थे (३३०) भुक्त्यास्थानमण्डपस्य पुरस्तात् (३३१) अजिरे स्थितं, दूरादूर्द्धस्थितेन प्रांशुना कर्णिकार-

---

का कथा विपचे भूपाले समस्थापितानां दन्तिनां प्रतिपत्त्यामिति तात्पर्य्यम्, एतस्य धारणे मन्दुरा मनसि पुन स्वराज्यीकारस्य भाग्याऽपि नोर्द्दतीति भाव। अत्र आत्मानु गजेन्द्राणामभेदारोपात रूपकमलङ्कार, "मानसगताम्" इति विशेषणश्लेषेण सङ्कीर्य्यते; अन्यत्र च श्लेष शब्दविषय एव। शार्द्दूलविक्रीडितं वृत्त,—"सूर्य्याश्वैर्यदि म स-जौ स-त त गा शार्दूलविक्रीडितम्" इति लक्षणात् ॥ ४ ॥

(३२७) देवं—श्रीहर्षमित्यर्थ।

(३२८) तेन—दौवारिकेण।

(३२९) मदेति।—मदजलमेव कज्जलम्—अञ्जनं, तेन कान्त—रमणीयं, य कपोलपट्ट,—गण्डतट इत्यर्थ इति भाव तस्मिन् पतिता—निक्षिप्ता ताम्। ["मदजलकज्जलकान्तकपोल—" इत्यत्र 'मदजलपङ्किलकपोल—" इति पाठे—मदजलेन पङ्किल,—मलिन इत्यर्थ]। तस्मात—वारणेन्द्रात्, मत्तोऽपि मत्तः मुकुलितदृष्टिर्जायते, चरणस्खलनादस्यैराकृष्यमाणश्च भवति। समतिक्रम्य—अतीत्य। कक्ष्यान्तराणि—प्रकोष्ठावकाशान्। चतुर्थे, कक्ष्यान्तरे इति शेष। "चतुर्थे" इत्यादौ "चक्रवर्त्तिन हर्षम् अद्राक्षीत" इत्युत्तरेण सम्बन्ध।

(३३०) त विशिनष्टि भुक्त्येत्यादिभि। भुक्त्यास्थानेति।—भुक्तस्य—भक्ष्यनिवहस्य, यत् आस्थानमण्डप—सभागृह तस्य, विचारागारस्य इत्यर्थ। ["भुक्त्या स्थानमण्डपस्य" इत्यत्र "भुक्तास्थानमण्डपस्य" इति पाठे—भुक्त—भोजन, तस्मिन सति, भोजनानन्तरमित्यर्थ, यत् आस्थानमण्डप—लोकदर्शनार्थे विश्रामार्थं वा अवस्थितिगृह तस्येत्यर्थ]। पुरस्तात—अग्रत, अग्रवर्त्तिनीत्यर्थ।

(३३१) अजिरे—अङ्गने, स्थित—तिष्ठन्तम्। दूरात्—ईषद्दूरात इत्यर्थ,

गौरेण (३३२) व्यायामव्यायतवपुषा शस्त्रिणा मौलेन शरीरपरिचारकलोकेन पङ्क्तिस्थितेन कार्तस्वरस्तम्भमण्डलेनेव परिवृतम्, (३३३) आसन्नोपविष्टविशिष्टेष्टलोकं, (३३४) हरिचन्दनरसप्रक्षालिते (३३५) तुषारशीकरशीतलतले दन्तपाण्डुरपादे शशिमये इव मुक्ताशैलशिलापट्टशयने समुपविष्टं,

---

कर्णस्थितेन—दण्डायमानेन, प्रांशुना—समुन्नतकायेन अन्वय,—प्रशस्ता अन्वयो यस्य तेन, कर्णिकारगौरेण—आरग्वधपुष्पसदृशगौरकान्तिना।

(३३२) व्यायामेति।—व्यायामेन—मल्लयुद्धनाटकक्रीडाविशेषेण, व्यायतं—विस्तारयुक्तं, विशेषेण परिपुष्टम्, वपु,—शरीरं यस्य तेन, अन्वय—अतिदीर्घं परिणाहविशिष्टगात्रेण। शस्त्रिणा—शस्त्रपाणिना, सप्तगात्रेऽपि शस्त्रं स्थाप्यन्ते सतलीनामपि शक्तित्वं सौख्यम्, मौलेन—मूलागतेन, वंशक्रमानुगतेन इत्यर्थं, परिचारकाय मौल सहक्रमेणैव निश्चामिषाटविकमैत्रेण षट्प्रकारा भवन्ति, अन्यत,—मूले—मुले भव मौल तेन सुप्रतिष्ठेन निश्चलमूर्त्तिनेति भाव, शरीरपरिचारकलोकेन—शरीरसेवकजनेन। पङ्क्तिस्थितेन—श्रेणीबद्धेन इत्यर्थं। कार्तस्वरस्तम्भमण्डलेन इव—काञ्चनमयस्तम्भनिवहेन इव; ("स्वर्णं सुवर्णं कनकं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमर,)।

(३३३) आसन्नेति।—आसन्ने—सन्निधाने, उपविष्टा,—अवस्थिता विशिष्टा,—सम्भ्रान्ता, इष्टा,—प्रिया, प्रीतिभाजनानि इति यावत्, लोका यस्य तम्।

(३३४) हरिचन्दनेति।—हरिचन्दनस्य—पीतचन्दनस्य यस्योद्घर्षणात्तस्य रक्तं कुङ्कुमस्येव राग सौगन्ध्यञ्च जायते तादृशस्य चन्दनविशेषस्य इत्यर्थ, रसेन—द्रवेण, प्रक्षालितम्—अभिषिक्तं विधौतं वा तस्मिन्।

(३३५) शशिमये इति वक्ष्यमाणानुरोधेन तुषारेत्यादिना अस्य शैत्यातिशयं प्रकटयति, तुषारेति।—तुषारशीकरवत् शीतलं तलं यस्य तथोक्ते। दन्तेति।—दन्तवत् दन्तमया वा पाण्डुरा,—श्वेता पादा,—चरणानि मयूखाश्च यस्य तथाविधे ("पादौ बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च" इति मेदिनी)। शशिमये इव—चन्द्रमये इव मुक्ताशैलस्य—मौक्तिकपर्वतस्य शिलापट्ट एव शयनं—शय्या तस्मिन्। "मुक्ताशैल" इत्यनेन प्रस्तरतयाऽपि शशिमये [redacted] इत्येतावदेव द्योतयति।

(२३६) शयनीयपर्यन्तविन्यस्ते समर्पितसकलविग्रहभारं भुजे, (२३७) दिङ्मुखविसर्पिणि देहप्रभावितानै विततमणिमयूखे घर्म्मसमयसुभगे सरसीव (२३८) मृदुमृणालजालजटिलजले सराजकं रममाणं, तेजस परमाणुभिरिव केवलैः निर्म्मितम्, अनिच्छन्त बलात् आरोपयितुमिव सिंहासनं (२३९) सर्व्वावयवेषु सर्व्वलक्षणैः गृहीतं, गृहीतब्रह्मचर्य्यम् आलिङ्गित राजलक्ष्म्या, (२४०) प्रतिपन्नासिधाराधारणव्रतम्

---

(२३६) शयनीयेति।—शयनीयस्य—शय्यातल्पस्य, पर्य्यन्ते—प्रान्तभागे, विन्यस्ते—निहिते तस्मिन् भुजे—हस्ते, समर्पितेति।—समर्पित—निहित सकलस्य विग्रहस्य—शरीरस्य, युद्धस्य च, भार येन तथोक्तम्।

(२३७) दिङ्मुखेति।—दिशां मुखानि विसर्पति—व्याप्नोतीति तथाभूते, देहप्रभावितानै—अङ्गकान्तिविस्तारे, विततेति।—तता—विस्तृता, मणीनां—रत्नानां मयूखा यत्र तादृशे, घर्म्मसमयसुभगे—ग्रीष्मकालरमणीये, मणीनां शक्रमैत्र्यात् तदीया मयूखा अपि तर्पयन्तीति घर्म्मसमयसुभगत्वं बोध्यम्।

(२३८) मृदिति।—मृदुभि,—कोमलै मृणालजालै,—विसस्तवैः, जटिलानि व्याप्तानि यस्य तथोक्ते। सराजकं—राजन्यपरिवृत यथा तथा, रममाणं—विहरन्तम्। केवलै,—निरवच्छिन्नै, तेजस—प्रतापस्य, परमाणुभिरिव निर्म्मितं—सृष्ट तेजोराशिमिव स्थितमिति यावत्।

(२३९) सर्व्वावयवेषु—हस्तपदादिषु सर्व्वाङ्गेषु, सर्व्वलक्षणै—समस्तशुभचिह्नै, गृहीत—युक्तम्, आकैऽनि कश्चित कमपि कर्म्मारोपयितु सर्व्वाङ्गेव गृह्णाति। गृहीतब्रह्मचर्य्य—गृहीतम्—अवलम्बित ब्रह्मचर्य्य—दारपरिग्रहादिवर्ज्जनेन केवल गुरुकुले वेदाध्ययनादिव्रतचर्य्या येन तथोक्तम्, अथ च राजलक्ष्म्या आलिङ्गितमिति विरोध, "सदारसन्तुष्ट ऋतुकालगामी गृहस्थोचितव्यापारवान् ब्रह्मचारी एव भवति" इति श्रुते तदापि गृहस्थमिति तत्परिहार। किञ्च "यावन्मया सकला मही न जिता, तावत ब्रह्मचर्य्यं चरामि" इति प्रतिज्ञाय श्रीहर्षं द्वादशभि वर्षै जित्वा ता मही सर्व्वां महिषीमब्रवीत्—"प्रतिज्ञा मया निर्व्यूढा" इत्यनुश्रुतिरत्र अनुशीलनीया।

(२४०) प्रतिपन्नेति।—प्रतिपन्नम्—अवलम्बितम्, असिधाराधारणव्रतम्—असिधारा—खड्गधारा, व्रतविशेषश्च असिधारायां स्थितिरिव दुष्कर व्रतमित्यर्थ तस्या धारण

अविसंवादिनं राजर्षिं, (३४१) विषमराजमार्गविनिहितपदस्खलनभियेव सुलग्नं धर्मे, (३४२) सकलभूपालपरित्यक्तेन भीतेनेव लब्धवाचा सर्वात्मना सत्येन सेव्यमानम्, (३४३) आसन्नवारविलासिनीप्रतियातनाभिः चरणनखपातिनीभिः दिग्भिरिव दशभिः प्रणम्यमानं (३४४) दीर्घैः दिगन्तपातिभिः दृष्टिपातैः लोकपालानां कृताकृतमिव प्रत्यवेक्षमाणं,

—पालनमेव, व्रतम्, असिधाराया स्थितौ यथाऽत्र स्खलने यथा भयम्, एवं यथाऽत्र स्खलने यथानिष्टं, तादृशं व्रतमिति यावत् येन तथोक्तम्, तच्च यादवेन दर्शितं यथा,—"युवा युवत्या सार्द्धं यत् मुग्धाभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्॥" यत्र स्त्रीपुंसौ अकपटौ ब्रह्मचर्येण तिष्ठत इति भावः, अविसंवादिनं—विसंवादः,—विरुद्धभावः अस्यास्तीति विसंवादी, स न भवतीति तथोक्तं तम्, पक्षे,—प्रतिपन्नेषु—विश्वसितेषु, आश्रितेषु इत्यर्थः, असिधाराधारणमेव—खड्गधाराधारणमेव, व्रतं यस्येति तथोक्तम्, यश्च च अविसंवादिनं यस्तु प्रतिपन्नेषु खड्गधारां पातयति स कथं न विसंवादी, कथं वा राजर्षिं इति विरोधः। राजर्षिं—राजा ऋषिरिव राजर्षिः तम्, यः खलु राजर्षिः प्रतिपन्नासिधारः ब्रह्मचारी च, स राजन्यत्वात् आश्रितोऽपि।

(३४१) विषमेति।—विषमे दारुणे, नतोन्नतरूपे च राजमार्गे—राजनीतौ, राजपथे च, विनिहितस्य—अर्पितस्य, पदस्य स्खलनभियेव—च्युतिभयेनेव, धर्मे सुलग्नं—कृतावलम्बनं, धृतधर्मपथमिति भावः।

(३४२) सकलेति।—सकलैः भूपालैः परित्यक्तः तेन अत एव भीतेनेव—अयमपि यदि मां न गृह्णाति,तदाऽहमशरणः इति भयेन इव इत्यर्थः,लब्धवाचा—लब्धा—गृहीता, वाक् यस्य तेन। सर्वात्मना—सर्वस्वरूपेण, सत्येन सेव्यमानं—परिचर्य्यमाणम्।

(३४३) आसन्नेति।—आसन्नानां—सन्निहितानां, परिचर्य्यार्थमिति भावः, वारविलासिनीनां—वेश्यानां, प्रतियातनाभिः,—प्रतिच्छायाभिः, ("प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्च्चा पुंसि प्रतिनिधिः" इत्यमरः), चरणनखपातिनीभिः,—पदनखपतिताभिः, दशभिर्दिग्भिरिव, पदनखानां दशसङ्ख्यकत्वादिति भावः, प्रणम्यमानम्—अभिवन्द्यमानम्।

(३४४) दीर्घैः,—आयतैः, दिगन्तपातिभिः,—दिगन्तगामिभिः। लोकपालानाम्—इन्द्रादीनां, कृताकृतमिव—कार्य्याकार्य्यमिव, प्रत्यवेक्षमाणं—परिपश्यन्तम्।

(२४५) मणिपादपीठपृष्ठप्रतिष्ठितकरेण उपरिगमनाभ्यनुज्ञा स्थ्यमानमिव दिवसकरेण, (२४६) भूषणप्रभासमुत्सारण बद्धपर्यन्तमण्डलेन प्रदक्षिणीक्रियमाणमिव दिवसेन, (२४७) अप्रणमद्भि: गिरिभिरपि दूयमान, (२४८) शौर्य्याम्भसा फेनायमानमिव चन्दनधवल लावण्यजलधिम् उद्वहन्तम् ऐकराज्योर्जितेन, (२४९) निजप्रतिबिम्बान्यपि नृपतिचक्रचूडा मणिधृतानि असहमानमिव, (२५०) दर्पदुःशासिकया चामरा

---

(२४५) मणिस्तम्भप्रतिष्ठानमेव पीडयति मणीति।—मणिपादपीठस्य—रत्नमयचरणासनस्य, पृष्ठे—उपरि, प्रतिष्ठिता,—पातिता रचिताः, करा —किरणा: हस्ताश्च यस्य तेन दिवसकरेण सूर्य्येण उपरीति।—उपरिगमने—उन्नमने था अभ्यनुज्ञा—अनुमति ता, स्यथमाणमिव—प्रार्थ्यमानमिव।

(२४६) भूषणेति।—भूषणानाम्—अलङ्काराणां प्रभाभ,—किरणै समुत्सारणेन—सन्ताडनेन बद्ध—कृत, लब्धमिति यावत पर्यन्तेषु—प्रान्तेषु, मण्डल—मण्डलाकारेण अवस्थान येन तथोक्तेन। प्रदक्षिणीक्रियमाण—परिवेष्ट्यमानमिवम।

(२४७) अप्रणमद्भि,—अप्रणतिमकुर्वद्भि, स्वभावोन्नतत्वादिति भाव, गिरिभि,—पर्वतैरपि दूयमान—अन्यमानमिव प्रसादनायमिवात भाव। दु गतौ" इत्यस्य रूपम्।

(२४८) ऐकराज्योर्जितेन—ऐकराज्यम्—एकाधिपत्य, तेन ऊर्जित,—प्रवृद्धि गत तेन, ["ऐकराज्याजितेन" इत्यत्र "एकराज्यौजस्येन" इति पाठ—एक राज्यन ऊर्जित, तस्य भाव एकराज्यौजित्य तेन] शौर्य्याम्भसा वीर्य्यप्रतापन, फेनायमानमिव—फेनमुद्गमन्तमिव, यथा जलमपि वर्णेन भवतीति लोके दृश्यते। चन्दनधवल लावण्यजलधि—"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणस्य लावण्यस्य जलधि —समुद्र तम, उद्वहन्तम्।

(२४९) नृपतिचक्रे,—राजमण्डले, ["नृपतिचक्र—" इत्यत्र नृपचक्र—" इति पाठान्तरम्] चूडामणिभि —शिरोरत्नै धृतानि—गृहीतानि निजप्रतिबिम्बानि—स्वकीयप्रतिच्छाया अपि असहमानमिव—कथ सामान्येन मत्सम इति धियति भाव।

(२५०) दर्पदुःशासिकया—अहङ्कारसमुत्थलेशरूपखङ्गेन हेतुना, चामरा

निलनिभेन बहुधेव श्वसन्तीं राजलक्ष्मीं दधानं, (३५१) सकलमिव चतुःसमुद्रलावण्यम् आदाय उत्थितया श्रिया समुपश्लिष्टम्, (३५२) आभरणप्रभाजालजायमानानि इन्द्रधनुःसहस्राणि इन्द्रप्राभृतप्रहितानि विलम्भमानमिव, राज्ञां (३५३) सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तं, काव्यकथासु (३५४) अपीतमपि अमृतम् उद्वमन्तं, (५५) विस्रम्भभाषितेषु अनाकृष्टमपि हृदयं दर्शयन्तं, (३५६) प्रसादेषु निश्चलामपि श्रियं स्थाने स्थाने स्थापयन्तं, वीरगोष्ठीषु पुलकितेन कपोल-

---

निलनिभेन—चामरमारुतव्याजेन, बहुधा श्वसन्तीं—पुनः पुनः सुदीर्घं श्वासमादाय निश्वसन्तीं, राजलक्ष्मीं—राजश्रियं, दधानमिव—धारयन्तमिव।

(३५१) सकल—समग्रम्। चतुरिति।—चतुर्णां समुद्राणां समाहारः चतुःसमुद्रं, तस्य लावण्यं तत्, आदाय—गृहीत्वा, उत्थितया—आविर्भूतया, श्रिया—लक्ष्म्या, समुपश्लिष्टमिव—समालिङ्गितमिव।

(३५२) आभरणेति।—आभरणानां प्रभाजालेन—दीप्तिसमूहेन, जायमानानि—उत्पद्यमानानि, इन्द्रप्राभृतप्रहितानि—इन्द्रेण प्राभृतेन—उपढौकनत्वेन इत्यर्थः, प्रहितानि—प्रेषितानीत्यर्थः, इन्द्रधनुषां—शक्रचापानां, सहस्राणि विलम्भमानमिव—वितीर्णं कुर्वाणमिव। राज्ञां—सामन्तनृपाणां, निर्जितानामिति भावः।

(३५३) सम्भाषणेषु—समालपनेषु परित्यक्तमपि मधु—मद्यं, मधुररसमेवेत्यर्थः, वर्षन्तं—वमन्तम्। काव्यकथासु—काव्यालोचनासु कविभिः काव्यानुशीलने इति भावः।

(३५४) अपीतमपि—अभुक्तमपि, अमृतं—पीयूषम्, उद्वमन्तं—उद्गिरन्तम्, [“अपीतमपि अमृतम्” इत्यत्र “अपीतमप्यमृतम्” इति पाठान्तरम्]।

(३५५) विस्रम्भभाषितेषु—विश्वस्तालापेषु। अनाकृष्टमपि—प्रसादकैः अनुजीविभिः अगृहीतमपि इत्यर्थः, हृदयं—चित्तं, मनोऽभिप्रायं वाऽित्यर्थः, दर्शयन्तं—प्रकटयन्तम्।

(३५६) प्रसादेषु—प्रसन्नतासु सत्सु इत्यर्थः। निश्चलामपि—स्थिरामपि, श्रियं—लक्ष्मीं, सम्पदमिति यावत्, स्थाने—योग्ये पात्रे इत्यर्थः स्थापयन्तम्—अर्पयन्तम्। वीरगोष्ठीषु—वीरसमाजेषु, पुलकितेन—रोमाञ्चितेन, उत्साहातिशया-

स्थलेन अनुरागसन्देशमिव उपांशु रणप्रियः शृण्वन्तम्, (२५७) अतिक्रान्तसुभटकलहालापेषु स्नेहदृष्टिमिव दृष्टिम् दृष्टे कृपाणे पातयन्तं, परिहासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छम् आशयमिव दशनांशुभि कथयन्तं, (२५८) सकललोकहृदयस्थितमपि न्याये तिष्ठन्तम्, अगोचरे गुणानाम्, अभूमौ सौभाग्यानाम्, अविषये वरप्रदानानाम्, अशक्ये आशिषाम्, अमार्गे मनोरथानाम्, अतिदूरे दैवस्य, अदिशि उपमानानाम्, (२५९) असाध्ये धर्मस्य, अदृष्टपूर्वे लक्ष्म्या महत्त्वे

---

इति भाव, कपोलस्थलेन—गण्डदेशेन, उपांशु—रहसि रणप्रिय,—सङ्ग्रामलक्ष्म्या, अनुरागसन्देशमिव—प्रेमसूचककथाविशेषमिव, शृण्वन्तम—आकर्णयन्तम्।

(२५७) अतिक्रान्तेति।—अतिक्रान्ता—अतीता, सुभटानां—सुयोद्धॄणां ये कलहा—सङ्ग्रामा तेषाम आलापा,—कथा तेषु। दृष्टे—अभिलषिते, प्रिये इत्यर्थ, कृपाणे—खड्गे, सङ्ग्रामयोग्ये रुधिरादिधावनसलिलकलङ्कनिवारणार्थं प्रान्तेषु यष्टी दीयते इति व्यवहार। परिहासस्मितेषु—नर्महासेषु गुरुणा—महता, प्रतापेन—तेजसा भीतस्य—त्रस्तस्य राजकस्य—राजचक्रस्य, समीपे इति शेष, दशनांशुभि—दन्तकिरणै तद्व्याजेन इति भाव, स्वच्छ—निर्मल, प्रसन्नमित्यर्थ, आशय—भाव कथयन्त—प्रकाशयन्तम्। महत्प्रतापभीतस्य च स्वच्छ—निर्मलम्, आशयं—गूढाशयमिति भाव दर्शयति टीका, अत्र "प्रताप" "स्वच्छ" इत्यादि शब्दप्रयोगवशात् जलसम्बन्धाभावेऽपि आशयशब्देन जलाशय प्रत्येतव्य।

(२५८) सकलेति।—सकलानां लोकानां—जनानां हृदयेषु स्थितमपि न्याये—नीतिमार्गे तिष्ठन्त—वर्त्तमान न्यायमनुसरन्तमित्यर्थ, सकललोकहृदयस्थित स कथमेकत्रैव तिष्ठतीति विरोध। गुणानां—विद्याविनयादीनाम, अगोचरे—अविषये सौभाग्यानाम् अभूमौ—अस्थाने वरप्रदानानाम अविषये—अगोचरे, आशिषामशक्ये असाध्य मनोरथानाम् अमार्गे दैवस्य अतिदूरे उपमानानां—सादृश्यबोधकानाम अदिशि—अविषये इत्यर्थ, अतीते इति भाव।

(२५९) असाध्ये—साधयितुमशक्ये धर्मस्य [इति कर्त्तरि षष्ठी]। अदृष्टपूर्वे—पूर्वमदृष्टे, लक्ष्म्या महत्त्वे—उत्कर्षे स्थित, महालक्ष्मीनिवासमित्यर्थ गुणादीनाम अगोचरादिषु वर्त्तते, स कथम अदृष्टपूर्वे लक्ष्म्या महत्त्वे तिष्ठतीति

श्री—१७

स्थितम्; (३६०) अरुणपादपल्लवेन (३६१) सुगत-मन्थरोरुणा (३६२) वज्रायुधनिष्ठुरप्रकोष्ठपृष्ठेन (३६३) वृषस्कन्धेन भास्वद्बिम्बाधरेण (३६४) प्रसन्नावलोकितेन मुखचन्द्रेण कृष्णकेशेन वपुषा (३६५) सर्व्वदेवताऽवतारमिव एकत्र दर्शयन्तम्; अपि च मांसलमयूखमालामलिनितमहीतले महति

विरोध, यत्र गुणसौभाग्यादयो न वसन्ते, तादृश लक्षोत्तमस्तमनुसरन्तमित्यर्थ, एतेन अस्य विरोधस्य परिहार।

(३६०) अरुणेति।—अरुण,—लोहित, पादपल्लव,—चरणकिसलय यस्य तत्र वा तेन, अन्यत्र —अरुणस्य—अनूरो, सूर्य्यसारथेरित्यर्थ, पादपल्लव तेन।

(३६१) सुगतेति।—सुष्ठु गत—गमन ययो तथाभूतौ, मन्थरौ—मन्दगामिनौ, ऊरू यस्य यत्र वा तेन, अन्यत्र,—सुगत,—बुद्धदेव, तद्वत् मन्थर,—मन्दगामी, ऊरु तेन।

(३६२) वज्रेति।—वज्रायुध—कुलिशनामास्त्र, तद्वत् निष्ठुर,—कठिन, प्रकोष्ठ,—बाहुमध्यस्थ कूर्परस्याधोभाग, ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) पृष्ठञ्च यस्य यत्र वा तेन, अन्यत्र,—वज्रायुध,—इन्द्र, तस्य निष्ठुर प्रकोष्ठपृष्ठ तेन।

(३६३) वृषस्कन्धेन—वृषस्येव स्कन्धौ यस्य यत्र वा तेन, अन्यत्र,—वृषस्य—धर्म्मस्य स्कन्ध तेन ("वृषो धर्म्मे बलीवर्दे मूषा पुराशिमेदयो" इति मेदिनी)। भास्वदिति। भास्वान्—दीप्यमान, बिम्बमिवाधरौ यस्य यत्र वा तेन, अन्यत्र —भास्वत,—सूर्य्यस्य, बिम्बमिवाधर तेन।

(३६४) प्रसन्नेति।—प्रसन्न—निर्मलम्, अवलोकित—दर्शन यस्य यत्र वा तेन, अन्यत्र,—प्रसन्न,—कश्चिद्देवविशेष, आशुतोष इति यावत, तस्य अवलोकित—दर्शन तेन, यद्वा —प्रसन्नेन अवलोकितेन—बुद्धभेदेन इत्यर्थ। मुखचन्द्रेण—मुख चन्द्र इव यस्य यत्र वा तेन, अन्यत्र —मुखे चन्द्र तेन। ['मुखचन्द्रेण' इत्यत्र 'चन्द्र-मुखेण' इति पाठान्तरम्]। कृष्ण—कृष्णवर्ण, केशो यस्य यत्र वा तेन, अन्यत्र—कृष्णस्य—श्रीहरे केश तेन। वपुषा—अङ्गेन उक्तप्रकारेण अवयवेनेत्यर्थ।

(३६५) सर्व्वेति।—सर्व्वासा देवतानामवतार तमिव। मांसलेति।—मांस लाभि,—महतीभिरित्यर्थ मयूखाना—किरणाना, मालाभि,—समूहै, मलिनित—विवर्णीकृत, नीलवर्णता नीतमित्यर्थ, महीतल येन तस्मिन्। महति—

महार्हे माणिक्यमालामण्डितमेखले महानीलमये पादपीठे कलिकालशिरसि इव सलीलं (२६६) विन्यस्तवामचरणम्, (२६७) आक्रान्तकालियफणाचक्रवालं बालम् इव पुण्डरीकाक्ष, क्षौमपाण्डुरेण चरणनखदीधितिप्रतानेन प्रसरता महीं (२६८) महादेवीपट्टबन्धेन इव महिमानम् आरोपयन्तम्, (२६९) अप्रणतलोकपालकोपेनेव अतिलोहितौ सकलनृपतिमौलिमालासु अतिपीतं पद्मरागरत्नातपमिव वमन्तौ (२७०) सर्व्वतेजस्विमण्डलास्तमयसन्ध्यामिव धारयन्तौ,

---

प्रसते महार्हे—महामूल्ये। माणिक्येति।—माणिक्यमालया मण्डिता—अलङ्कृता, मेखला—नितम्बभाग, मध्यभाग इत्यर्थ यस्य तादृशे, महानीलमये—महानीलमणिनिर्मिते। कलिकालशिरसि इव—कलियुगस्य मूर्द्धनि इव, कलिकालस्य मलिनत्वादियमुत्प्रेक्षा। सलील—सविलासं, सदर्पं वा।

(२६६) विन्यस्तेति।—विन्यस्त,—निहित, वामचरण येन तथोक्तम्; वामचरणन्यासेन तस्य तिरस्करणीयत्वमेव व्यज्यते।

(२६७) आक्रान्तेति।—आक्रान्तम्—अध्यासितं, कालियस्य—नागविशेषस्य, फणाचक्रवाल—फणमण्डल येन तथोक्त, बाल—शिशु, पुण्डरीकाक्षमिव—श्रीकृष्णमिव, पक्षे,—पुण्डरीके—श्वेतपद्मे इव, अक्षिणी यस्य तथोक्तम्। क्षौमपाण्डुरेण—क्षौम—श्वेतपट्टवसन, तद्वत् पाण्डुर—धवल तेन। महीं—पृथिवीं, प्रसरता—व्याप्नुवता, चरणेति।—चरणनखानां दीधितिप्रतानेन—मयूखजालेन।

(२६८) महादेवीति।—महादेवी—महती देवी, प्रधाना महिषीत्यर्थ, पृथिवीति भाव, तस्या पट्टबन्ध,—गौरवसूचक अतिप्रशस्तचिह्नविशेष तेनेव, महिमान—महत्त्व, पृथिव्या एकेश्वरत्वमित्यर्थ, आरोपयन्तम्, आत्मानमिति शेष।

(२६९) अप्रणतेति।—न प्रणता,—अप्रणता, ते च ते लोकपालाश्चेति अप्रणतलोकपाला तेषु कोप,—क्रोध तेनेव, अतिलोहितौ—अतिरक्तौ, अत एव सकलेति। —सकलानां—समग्राणां, नृपतीनां—राज्ञां, मौलिमालासु—मुकुटराजिषु, स्थितमिति शेष, अत एव अतपीतम्—अतिशयेन गृहीतं, प्रणामकाले पादयो प्रतिफलितत्वादिति भाव, पद्मरागरत्नानां—तदाख्यमणीनाम्, आतपमिव—आलोकमिव, वमन्तौ—उद्गिरन्तौ।

(२७०) सर्वेति।—सर्वेषां तेजस्विमण्डलानां—तेजस्विमुख्यानां, सूर्यादीनामपि

अशेषराजककुसुमशेखरमधुरससोतांसीव स्रवन्तौ, (३७१) समस्तसामन्तसीमन्तोत्तंससरकसौरभभ्रान्तैः (३७२) भ्रमरमण्डलैः अभिनीतमाङ्गैः इव मुहूर्त्तमपि अविरहितौ, संवाहनतत्परायाः श्रियो (३७३) विकचरक्तपङ्कजवनवासभवनानीव कल्पयन्तौ, (३७४) अब्जशङ्खमीनमकरसनाथललतया कथितचतुरम्भोधिभोगचिह्नौ इव चरणौ दधानम्; (३७५) दिङ्नाग-

भाव, अस्तमयसन्ध्यामिव—माग्रमासिकपलायदम्भुमिव, अस्तमनसन्ध्याकालमिव च धारयन्तौ—दधानौ। अशेषेति।—अशेषाणां—समस्तानां, राजकानां—सामन्तनृपाणां, कुसुमानि—पुष्परचितानीति यावत्, यानि शेखराणि—शिरोभूषणानि, [ "अशेषराजककुसुमशेखर—" इत्यत्र "अशेषराजकशेखरकुसुम—" इति पाठे—अशेषराजकानां शेखराणि—शिरोभूषणमाल्यरूपाणि, यानि कुसुमानि ] तेषां मधुरसः,—मकरन्दरसः, तेषां स्रोतांसीव—प्रवाहानिव, स्रवन्तौ—वर्षन्तौ।

(३७१) समस्तेति।—समस्तानां सामन्तानाम्—अधीश्वराणां, ("सामन्तः स्यादधीश्वरः" इत्यमरः) सीमन्ताः,—केशविन्यासाः, ("सीमन्तः केशविन्यासः" इत्यमरटीका) तेषाम् उत्तंसाः,—मण्डनानि, ये स्रजः,—माल्यानि, तासां सौरभेण—सद्गन्धेन, भ्रान्तानि—घूर्णमानानि तैः।

(३७२) भ्रमरमण्डलैः,—षट्पदैः. अभिनीतमाङ्गैरिव—प्रणतैः शिरोभिरिव, अविरहितौ—असुक्तौ। संवाहनेति।—संवाहनम्—पादादिमर्दनरूपा सेवा, तस्मिन् तत्परा—रता तस्याः, श्रियः,—राजलक्ष्म्याः।

(३७३) विकचेति।—विकचानि—प्रस्फुटानि, रक्तपङ्कजवनानि—रक्तकमलकाननानि एव, वासभवनानि—वासगृहाणि तानि इव, कल्पयन्तौ—रचयन्तौ।

(३७४) अब्जेति।—अब्जं—पद्मं, शङ्खः,—कम्बुः, मीनः,—मत्स्यः, मकरः,—जलजन्तुभेदः तैः सनाथ—युक्ता, सा च ययोः तयोर्भावः सत्ता तया हेतुना। अब्जेत्यादिलक्षणानि राजचक्रवर्त्तित्वज्ञापकानि बोध्यानि। कथितेति।—कथित—प्रकटित, चतुर्णाम् अम्भोधीनां—सागराणां, चतुरम्भोधिवेष्टितायाः भुव इति यावत्, भोगचिह्न—भोगलक्षणं याभ्यां तथाभूताविव, चरणौ—पादौ, दधानं—धारयन्तम्।

(३७५) दिङ्नागेति।—दिङ्नागाः—"ऐरावतः पुण्डरीकः वामनः कुमुदो

दन्तमुसलाभ्यामिव (३७६) विकटमकरमुखप्रतिबन्धबन्धुराभ्याम्, (३७७) उद्वेललावण्यपयोनिधिप्रवाहाभ्यामिव (३७८) फेनाहितशोभाभ्यां, कल्पचन्दनद्रुमाभ्यामिव (३७९) भोगिमण्डलशिरोरत्नरश्मिरज्यमानमूलाभ्यां, हृदयारोपितभूभारधारणमाणिक्यस्तम्भाभ्याम् ऊरुदण्डाभ्यां विराजमानम्; (३८०) अमृतफेनपिण्डपाण्डुना

---

इति । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥" इत्युक्तेषु अष्टसु दिग्गजेषु प्रधानीभूतत्वात् ऐरावतस्य इत्यर्थः, दन्ताविव मुसलौ ताभ्यामिव।

(३७६) विकटेति।—विकटः,—उत्कटः यो मकरः—जलजन्तुभेदः, मुखमिव प्रतिबन्धः—आगुल्फशिरोविध तेन बन्धुरौ—उन्नतानतौ ताभ्याम्, ("बन्धुरं तून्नतानतम्" इत्यमरः) यद्वा,—विकटं यो मकरमुखं,—मकरमुखाकृतिभूषणविशेषः स एव प्रतिबन्धः,—समवर्मतिरोधक इत्यर्थः तेन बन्धुरौ—रम्यौ ('बन्धुरं मुकुटे पुंसि । त्रिषु स्याद्रम्यनम्रयोः ॥" इति मेदिनी) ताभ्याम्।

(३७७) उद्वेलेति।—उद्वेलः—उच्छलन् (उद्वेलतया लावण्यस्य समुच्छलत्त्वमवगन्तव्यम्) वेलामतिक्रामन्, यः लावण्यपयोधिः,—लावण्यसागरः, लवणसमुद्रश्च, तस्य प्रवाहाविव—स्रोतसी इव ताभ्याम्।

(३७८) फेनेति।—फेनैः—श्वेतविशिष्टाभ्यां रक्ताभोऽस्मीऽप्यफेनसमूहैरित्यर्थः, सततमन्दगङ्गाधाराहितत्वात् तदुत्पन्नफेनैस्तैः वर्णोपनीदनाय अर्पितैरिति भावः, अन्यत्र,—हितैः, ("हितौ ... " इत्यमरः) आहिता—अर्पिता शोभा ययोः ताभ्याम्। कल्पचन्दनद्रुमाभ्यामिव—वाञ्छितफलप्रदचन्दनवृक्षाभ्यामिव। ['कल्पचन्दनद्रुमाभ्यामिव' इत्यत्र 'चन्दनद्रुमाभ्यामिव' इति पाठान्तरम्]।

(३७९) भोगीति।—भोगिनां—सुखभोगवतां सामाजिकानामित्यर्थः यद्वा,—भोगिनां—नृपाणां ("भोगी सुखेऽपि स्यात् ... पुमान्" इति मेदिनी) अन्यत्र—भोगिनां—सर्पाणां, मण्डलस्य—समूहस्य, शिरोरत्नानि तेषां रश्मिभिः—मयूखैः, रज्यमाने—अनुरज्यमाने, मूले—पादमूले वृक्षमूले चेत्यर्थः ययोः ताभ्याम्। हृदयेति।—हृदये—चित्ते, आरोपितः यो भूभारः तस्य धारणे माणिक्यस्तम्भौ ताभ्याम् इति शेषः।

(३८०) अमृतेति।—अमृतस्य फेनपिण्डः,—फेनराशिः तद्वत्, अन्यत्र,—फेनपिण्डे, पाण्डुः,—धवलः, तेन।

(३८१) मेखलामणिमयूखखचितेन, नितम्बविम्बव्यासङ्गिना, (३८२) विमलपयोधौतेन, (३८३) नेत्रसूत्रनिवेशशोभिना, अधरवाससा वासुकिनिर्मोकेणेव (३८४) मन्दरं द्योतमानम्; अघनेन, सतारागणेन, उपरिकृतेन, (३८५) द्वितीयाम्बरेण भुवनाऽऽभोगमिव भासमानम्; (३८६) इभपतिदशनमुसलसहस्रोल्लेखकठिनमसृणेन, (३८७) अपर्य्याप्ताम्बरप्रथिम्ना,

---

(३८१) मेखलेति।—मेखला—काञ्ची, काञ्चनिर्मित कटिबन्धनसूत्रमिति यावत्, तत्र ये मणयः,—रत्नानि, अन्यत्र,—मेखलासु—नितम्बेषु, मन्दरस्य इति भावः, ये मणयः, तेषां मयूखैः,—किरणैः, खचितं—रञ्जितं तेन। नितम्बविम्बव्यासङ्गिना—नितम्बमण्डलसंसक्तेन, अन्यत्र,—कटकतटव्यापिना।

(३८२) विमलेति।—विमलैः,—स्वच्छैः, पयोभिः,—जलैः, अन्यत्र—दुग्धैः, धौतेन—क्षालितेन, क्षीरोदस्य मथनकाले इति भावः।

(३८३) नेत्रेति।—नेत्रम्—वस्त्रविशेषस्तेऽर्थे, ("नेत्रं मथिगुणे वस्त्रभिदि मूले द्रुमस्य च" इति मेदिनी) सूत्राणां—तन्तूनां, निवेशेन—रचनया, अन्यत्र,—नेत्रं—मन्थनरज्जुः, तस्य सूत्राणां—तन्तूनां, निवेशेन—आधानेन शोभते इति तथोक्तेन। अधरवाससा—परिधानवस्त्रेण। वासुकिनिर्मोकेणेव—वासुकेः,—नागराजस्य, निर्मोकेणेव—कञ्चुकेनेव।

(३८४) मन्दरं—तदाख्यं पर्वतम्। द्योतमानं—राजमानम्। अघनेन—सूक्ष्मेण घनः,—मेघः तद्रहितेन च। सतारागणेन—तारा —सूक्ष्मस्वर्णसूत्रनिर्मितचक्राकारबिन्दवः, नक्षत्राणि च, तेषां गणः,—समूहः, तत्सहितेन। उपरिकृतेन—उपरिस्थितेन, देहोर्द्धभागस्थेनेत्यर्थः, अन्यत्र,—ऊर्द्ध्ववर्त्तिना।

(३८५) द्वितीयाम्बरेण—द्वितीयेन वसनेन उत्तरीयेणेत्यर्थः अन्यत्र—अम्बरेण—नभसा। भुवनाऽऽभोगमिव—भुवनाऽऽयाममिव, भासमानं—विराजमानम्।

(३८६) इभपतीति।—इभपतेः,—गजेन्द्रस्य दशना एव मुसलानि, तेषां सहस्राणाम् उल्लेखेन—आघातेन घर्षणेन च कठिनं—दृढं, मसृणं—कोमलञ्च, अन्यत्र—चिक्कणं तेन।

(३८७) अपर्य्याप्तेति।—अपर्य्याप्तम्—असीमैत्यर्थः, यत् अम्बरम्—आकाशं, तस्येव प्रथिमा तेन, अन्यत्र,—अपर्य्याप्ते अम्बरे प्रथिमा—विस्तारो यस्य तेन।

( ३८८ ) विविधवाहिनीसङ्क्षोभकलकलसम्मर्दसहिष्णुना, कैलासम् इव महता स्फटिकतटेन उरुणा उरःकपाटेन राजमानम्; ( ३८९ ) श्रीसरस्वत्योः उरोवदनोपभोगविभागसूत्रेणेव पातितेन, ( ३९० ) शेषेणेव तद्भुजस्तम्भविन्यस्तसमस्तभूभारलब्धविश्रान्तिसुखप्रसुप्तेन, हारदण्डेन परिवेष्टितकन्धरम्; ( ३९१ ) जीवितावधिगृहीतसर्वस्वमहादानदीक्षाचीरेणेव हारमुक्ताफलानां किरणनिकरेण

---

( ३८८ ) विविधेति।—विविधाना—बहुविधाना, वाहिनीना—चमूना, सङ्क्षोभे—समवाये, य कलकल,—कोलाहल, तेन सम्मर्द,—सङ्घर्ष, अन्यच,—वाहिनीना—नदीना, सङ्क्षोभे य कलकल, तेन सम्मर्द, त सोढु शीलमस्येति तथोक्तेन। उरुणा—महता, उरःकपाटेन—वक्षःस्थलरूपेण कपाटेन। पर्वतान्तरसामान्येऽपि एवताऽधिक्यद्योतनार्थं कैलासमित्युक्तम्।

( ३८९ ) श्रीसरस्वत्योरिति।—श्री सरस्वत्यो,—लक्ष्मी वाग्देव्यो, सपत्न्योरिति भाव, उरो-वदनयो,—यथाक्रमेण लक्ष्म्या उरस वाग्देव्या वदनस्येति यावत, उपभोग,—सम्भोग, लक्ष्म्या उरसि स्थिति सरस्वत्या मुखे स्थितिरिति भाव, तस्य विभागसूत्र—सीमाबन्धनसूत्रमित्यर्थ तेनेव, पातितेन—स्थापितेन सीमानिर्देशार्थमिति भाव।

( ३९० ) तद्भुजेति।—तस्य—हर्षस्य, भुजौ एव स्तम्भौ तयो विन्यस्त य समस्त—सम्पूर्ण, भूभार,—पृथिवीभार, तेन लब्धा—प्राप्ता या विश्रान्ति,—विश्राम तया सुखम्—आनन्द यथा तथा, प्रसुप्त,—निद्रित तेन शेषेण—अनन्तनागेनेव, ["शेषेणेव" इत्यनन्तर क्वचित् "च" इत्यधिक पाठो दृश्यते] हारदण्डेन—हारयष्टिना, कण्ठनिहितेनेति भाव, परिवेष्टिता—आलिङ्गिता ["परिवेष्टित—" इत्यत्र "परिवलित—" इति पाठोऽपि स एवार्थ] कन्धरा—ग्रीवा यस्य तम्।

( ३९१ ) जीवितेति।—जीवित—जीवनम् अवधि —शेषो येषा तानि, गृहीतानि—उपार्जितानि, यानि सर्वाणि स्वानि—धनानि, तेषा महादान—अर्थितो जीवनमपि ददाति किमु अन्यानि धनानीति भाव, यद्वा,—जीवित—जीवनमपीति भाव, अवधि,—शेषो यस्य तत् यथा तथा गृहीत—स्वीकृतम् अङ्गीकृतमित्यर्थ, सर्वस्वाना—सर्वधनानां महादान तस्मिन् या दीक्षा—व्रतधारणनियमविशेष, तस्या चीर—कौपीनरूप वसनखण्ड, वल्कल वा तेनेव, दीक्षायाश्च चीरवसनं भूयते इति भाव।

( २८२ ) प्रावृतवक्षःस्थलम् ; अजजिगीषया बालैः भुजैरिव अपरैः प्ररोहद्भिः, ( २८३ ) बाहुपधानशायिन्याः श्रियः ( २८४ ) कर्णोत्पलमधुरसधारासन्तानैरिव गलद्भिः, भुजजन्मनः प्रतापस्य निर्गमनमार्गैरिव आविर्भवद्भिः, अरुणैः केयूररत्नकिरणदण्डैः उभयतः ( २८५ ) प्रसारितमणिमयपक्षवितानमिव माणिक्यमहीधरम् ; ( २८६ ) सकललोकालोकमार्गार्गलेन ( २८७ ) चतुरुदधिपरिक्षेपखातशिलाप्राकारेण,

---

( २८२ ) प्रावृतेति ।—प्रावृतम्—आच्छादितं, वक्षःस्थलं येन यस्य वा तथोक्तम् । अजजिगीषया—न जायते इति अजः,—विष्णुः तस्य जिगीषा—जयेच्छा तया, ("अजा विष्णुहरच्छागा" इत्यमरः )। बालैः,—नवैः । प्ररोहद्भिः,—उत्पद्यमानैः, भुजैः ।

( २८३ ) बाहूपधानेति ।—बाहुरेव उपधानम्—उपबर्हः, "बालिश" इति भाषा, तस्मिन् शेते इति तथोक्तायाः, श्रियः,—राजलक्ष्म्याः । ["श्रियः" इत्यत्र "भियाः" इति पाठान्तरम् ]।

( २८४ ) कर्णोत्पलेति ।—कर्णोत्पलस्य—कर्णभूषणीभूतोत्पलस्य, मधुरसधारायाः—मकरन्दप्रवाहस्य, सन्तानैरिव—समूहैरिव गलद्भिः,—क्षरद्भिः । भुजजन्मनः,—बाहुजनितस्य, एतेन सैन्यादिकृतं शौर्यादिकृतञ्च प्रतापं व्यवच्छिनत्ति । आविर्भवद्भिः,—प्रकटीभवद्भिः । अरुणैः,—रक्तैः, केयूररत्नकिरणदण्डैः,—केयूररत्नानाम्—अङ्गदस्थमणीनां, किरणाः एव दण्डाः तैः ।

( २८५ ) प्रसारितेति ।—प्रसारितौ मणिमयौ पक्षवितानौ—विपुलपक्षौ इत्यर्थः, यस्य तथोक्तमिव । माणिक्यमहीधरं—माणिक्यरत्ननिर्मितपर्वतं, माणिक्यपर्वतं वा ।

( २८६ ) सकलेति ।—सकलानां लोकानाम् आलोकः—उद्योतः, दर्शनमित्यर्थः, तस्य मार्गः,—पन्थाः, तस्य अर्गलः,—कवाटरोधककाष्ठादिदण्डविशेषः तेन, अस्य बाहुदण्डप्रभावात् सर्वेषामेव भुजवीर्यशालिनां प्रभावजनितालोको विनाशं गत इति भावः ।

( २८७ ) चतुरिति ।—चतुर्णाम् उदधीनां—समुद्राणां सम्बन्धी, परिक्षेपः,—परिवेष्टनमेव चतुर्दिग्वर्त्तिसमुद्रा एवेत्यर्थः, खातानि—परिखाः, पृथिव्याः इति भावः, तेषां शिलाप्राकारः,—पाषाणनिर्मितः प्राचीरमित्यर्थः तेन, शिलावद्दृढेन इति भावः, नगरस्य समन्तात् प्राकारः ततः परतः परिखा तिष्ठति इति लोकव्यवहारः ।

(३९८) सर्व्वराजहंसबन्धवज्रपञ्जरेण, (३९९) भुवनलक्ष्मीप्रवेशमङ्गलमहामणितोरणेन, (४००) अतिदीर्घदोर्दण्डयुगलेन दिशां दिक्पालानाञ्च युगपदायतिमपहरन्तम्; (४०१) सोदर्य्यलक्ष्मीचुम्बनलोभेन कौस्तुभमणेरिव मुखावयवतां गतस्य अधरस्य गलता रागेण पारिजातपल्लवरसेनेव सिञ्चन्तं दिङ्मुखानि; (४०२) अन्तराऽन्तरा सुहृत्परिहासस्मितैः प्रकीर्य्यमाणविमलदशनकिरणशिखाप्रतानैः (४०३) प्रकृतिमूढाया राजश्रियाः प्रज्ञाऽऽलोकमिव दर्शयन्तम्, मुखजनितेन्दुसन्देहागतानि कुमु-

(३९८) सर्वेति।—सर्वेषां राज्ञां हंसानामिव, यद्वा,—राजहंसानां—राजश्रेष्ठानां, तदाख्यहंसविशेषाणाञ्च बन्धे—बन्धने, निरोधने इत्यर्थः, वज्रपञ्जर—वज्रनिर्म्मित पञ्जरमित्यर्थः तेन।

(३९९) भुवनेति।—भुवनानां लक्ष्म्याः प्रवेशस्य मङ्गलं—माङ्गलिकमित्यर्थः, महामणितोरणं—महारत्ननिर्म्मित बहिर्द्वारं तेन।

(४००) अतिदीर्घेति।—अतिदीर्घम्—अत्यायतं, दोर्दण्डयुगलं—भुजदण्डद्वयं तेन। युगपत्—समकालम्, आयतिं—दैर्घ्यं, प्रभावञ्च ("आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी) अपहरन्तं—नाशयन्तं, सङ्कोचयन्तम् इत्यर्थः।

(४०१) सोदर्य्येति।—सोदर्य्या—सहोदरा, एकगर्भजेत्यर्थः, भगिनीति यावत्, या लक्ष्मीः,—श्रीः, मुखसम्बन्धिनीति भावः तस्याः चुम्बनाय लोभः तेन हेतुना, कौस्तुभमणेरिव—विष्णुवक्षःस्थलस्थप्रसिद्धरत्नस्येव क्षीरसागरोत्पन्नतया सहोदरस्येव इति भावः, मुखावयवतां—वदनैकदेशतां, गतस्य—प्राप्तस्य, तद्रूपेण अवतीर्णस्येति भावः, अधरस्य गलता—स्रवता, रागेण—लौहित्येन, पारिजातपल्लवरसेनेव—पारिजातकिसलयद्रवेणेव, दिङ्मुखानि सिञ्चन्तं—क्षालयन्तम्।

(४०२) अन्तराऽन्तरा—मध्ये मध्ये। सुहृदिति।—सुहृद्भिः सह ये परिहासाः, तेषु स्मितानि—मन्दहासाः तैः। प्रकीर्य्यमाणेति।—प्रकीर्य्यमाणाः,—विक्षिप्यमाणाः, विमलाः दशनकिरणानां—दन्तमयूखानां, शिखाप्रतानाः,—प्रभाविस्तारा येषु तथोक्तैः, ["दशनकिरणशिखाप्रतानैः" इत्यत्र "दशनशिखाप्रतानैः" इति पाठान्तरम्]।

(४०३) प्रकृतिमूढायाः,—स्वभावमुग्धायाः, गुणदोषविचारानभिज्ञाया इति

दिनीवनानीव प्रेषयन्तम्; स्फुटधवलदशनपङ्क्तिकृतकुमुदवनशङ्काप्रविष्टां शरज्ज्योत्स्नामिव विसर्जयन्तम्; (४०४) मदिरास्मृतपारिजातगन्धगर्भेण भरितसकलककुभा मुखामोदेन अमृतमथनदिवसमिव सृजन्तम्; (४०५) विकचमुखकमलकर्णिकाकोशेन अनवरतमापीयमानश्वाससौरभमिवाधोमुखेन नासावंशेन, (४०६) चक्षुषः क्षीरस्निग्धस्य धवलिम्ना दिङ्मुखानि अपूर्ववदनचन्द्रोदयोद्वेलक्षीरोदप्लावितानीव कुर्वाणम्; (४०७) विमलकपोलफलकप्रतिबिम्बितां चामरग्राहिणीं विग्रहिणीमिव मुखनिवासिनीं सरस्वतीं दधानम्; अरुणेन

---

भाव । प्रत्याऽऽलोकमिव—प्रकृष्टप्रालोकमालोकमिव, दर्शयन्तम् । मुखेति ।—मुखे जनित य इन्दुसन्देह,—चन्द्रोऽयमिति संशय, तेन आगतानि कुमुदिनीवनानीव प्रेषयन्तम्—इन्दुरयं नेति ज्ञात्वा विसर्जयन्तम् । स्फुटेति ।—स्फुटधवला या दशनपङ्क्ति तया कृता—जनिता, या कुमुदवनशङ्का, तया हेतुना प्रविष्टां, मुखाभ्यन्तरमिति भाव, शरज्ज्योत्स्नां—शरत्कालिककौमुदीमिव, विसर्जयन्त—नैतानि कुमुदवनानीति ज्ञात्वा त्यजन्तम् ।

(४०४) मदिरेति ।—मदिराऽमृतवत् य पारिजातगन्ध, स गर्भे यस्य तेन, भरितसकलककुभा—सर्वदिक्प्रसारिणेति यावत्, मुखामोदेन—वदनसौरभेण, अमृतमथनदिवसमिव—पीयूषमथनदिनमिव, सृजन्तं—जनयन्तम् ।

(४०५) विकचेति ।—विकचं—प्रस्फुटं मुखं कमलमिव, तस्य कर्णिकाकोश,—अभ्यवराट, बीजकोश इत्यर्थ तेन, नासाग्रेणेति भाव ("कर्णिका करिहस्ताग्रे ... । ...ऽब्जवराटे कर्णभूषणे ॥" इति मेदिनी) । अधोमुखेन—नतमुखाग्रवर्तिना, "अधोमुखेन" इत्यनेन सौरभस्य सुग्रहत्वं तथा आपीयमानत्वमिति च प्रकटयति । नासावंशेन—नासिकादण्डेनेत्यर्थ, अनवरतं—नियतम्, आपीयमान—आघ्रायमाण, श्वासस्य सौरभं येन तथोक्तमिव ।

(४०६) क्षीरस्निग्धस्य—क्षीरवत् स्निग्धं तस्य, चक्षुष धवलिम्ना—शैत्येन, दिङ्मुखानि अपूर्व वदनमेव चन्द्र, तस्य उदयेन उद्वेल,—वेलायामुच्छलित, य क्षीरोद,, तेन प्लावितानीव—आप्लावितानीव ।

(४०७) विमलेति ।—विमले कपोलफलके—गण्डतटे, प्रतिबिम्बिता—प्रति-

सिन्धुरोधसि, (२४) परिणामश्यामश्यामाके, (२५) जनितप्रियङ्गुमञ्जरीरजसि, (२६) कठोरत्रपुसत्वचि, (२७) कुसुमस्मेरशरे शरत्समयारम्भे राज्ञः समीपात् बाणो बन्धून् द्रष्टुं पुनरपि तं ब्राह्मणाधिवासम् अगात्।

(२८) समुपलब्धभूपालसम्मानातिशयपरितुष्टाः तस्य ज्ञातयः श्लाघमाना निर्ययुः। क्रमेण च कांश्चित् अभिवादयमानः, कैश्चित् अभिवाद्यमानः, कैश्चित् शिरसि चुम्ब्यमानः, कांश्चित् मूर्ध्नि समाजिघ्रन्, कैश्चित् आलिङ्ग्यमानः, कांश्चित् आलिङ्गन्, अन्यैः आशिषा अनुगृह्यमाणः, परान् अनुगृह्णन्, बहुमन्तुमध्यवर्ती परं मुमुदे। (२९) सम्भ्रान्तपरिजनोपनीतञ्च आसनमासीनेषु गुरुषु भेजे। भजमानश्च अर्घादिसत्कारं नितरां

---

नीति यावत्, सिन्धूनां,—नदीनां, ("सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः) रोधांसि—तटानि यस्मिन् तथोक्ते।

(२४) परिणामेति।—परिणामेन—परिपाकेन, श्यामाः,—ईषत्कृष्णाः, श्यामाकाः,—तृणधान्यविशेषा यस्मिन् तथाभूते।

(२५) जनितेति।—जनितानि—उत्पादितानि, प्रियङ्गोः,—कङ्गुसंज्ञकधान्यभेदस्य, तरुविशेषस्य वा, मञ्जर्याः—वल्लर्याः, रजांसि—परागा येन तथोक्ते।

(२६) कठोरेति।—कठोराः,—कठिनाः, त्रपुसाः—कर्कटीबालुकफलानि, "शसा" इत्याख्यफलानि वा, त्वचः,—वल्कलानि यस्मिन् तथोक्ते। ["कठोरत्रपुसत्वचि" इत्यत्र "कठोरितत्रपुसत्वचि" इति पाठे,—कठोरिताः,—कठोरीभूता इत्यर्थः]।

(२७) कुसुमेति।—कुसुमैः,—पुष्पैः, स्मेराः,—विकस्वराः, शराः,—तदाख्यतृणभेदा यस्मिन् तथाविधे।

(२८) समिति।—सम्—सम्यक्, उपलब्धः,—प्राप्तः, भूपालात्—राज्ञः, सकाशादिति भावः, सम्मानातिशयः,—आदरातिशयः, तेन परितुष्टाः—प्रीताः। श्लाघमानाः,—प्रशंसन्तः। अभिवादयमानः,—वन्दमानः। अभिवाद्यमानः,—वन्द्यमानः। परान्—अन्यान्। परम्—अत्यन्तं, मुमुदे—पिप्रिये।

(२९) सम्भ्रान्तेति।—सम्भ्रान्तेन—सत्वरेण, परिजनेन उपनीतम्—आहृतम्।

ननन्द। प्रीयमाणेन च मनसा सर्वांस्तान् पर्यपृच्छत्,—(३०) "कच्चित् एतावतो दिवसान् सुखिनो यूयम्? अप्रत्यूहा वा सम्यक्करणपरितोषितद्विजचक्रा क्रातवी क्रियते क्रिया? (३१) यथावदविकलमन्त्रभाञ्जि भुञ्जते हवींषि हुतभुजः? यथाकालम् अधीयते वा वटवः? प्रतिदिनम् अविच्छिन्नो वा वेदाभ्यासः? कच्चित् स एव चिरन्तनो यज्ञविद्याकर्मणि अभियोगः? तानि एव व्याकरणे (३२) परस्परस्पर्धानुबन्धाबद्धदिवसदर्शितानि व्याख्यानमण्डलानि? सैव वा पुरातनी परित्यक्तान्यकर्तव्या प्रमाणगोष्ठी? स एव वा (३३) मन्दीकृतेतरशास्त्ररसो मीमांसायाम् अतिरसः?

---

आसीनेषु—उपविष्टेषु। भेजे—सिषेवे, अध्यतिष्ठदित्यर्थः। अश्नुवान,—लभमान। सर्वादिव्यवहार—पुण्यादिकपदकर्माणमित्यर्थः॥

(३०) कच्चिदिति। इष्टप्रश्ने ("कच्चित् कामप्रवेदने" इत्यमरः)। अप्रत्यूहा—निर्विघ्ना। सम्यगिति।—सम्यक्करणेन—सम्यगनुष्ठानेन, यथाशास्त्रसम्पादनेनेत्यर्थः, परितोषितानि—प्रीणितानि द्विजचक्राणि—विप्रवृन्दानि यया यस्या वा सा। क्रतु,—यज्ञ, तस्य इयं क्रातवी—यज्ञसम्बन्धिनी इत्यर्थः।

(३१) यथावत्—यथाविधि। अविकलेति।—अविकलान—विशुद्धानिति यावत्, मन्त्रान् भजन्ते इति तथोक्तानि। हवींषि—हवनीयानि घृतादीनीति यावत्। हुतभुज,—अग्नय। वटव,—बालकाः ब्रह्मचारिणो वा। अविच्छिन्न,—विच्छेदरहित। चिरन्तन,—चिरस्थायी। अभियोग,—आग्रह, यत्नविशेषो वा।

(३२) परस्परेति।—परस्परस्य स्पर्धा—जिगीषा, तस्या अनुबन्धेन—हासत्यनमध्या—फन्वन्, तस्य शास्त्रालोचनेन अनल्पमा इति भाव दिवसा—वासरा, तेषु दर्शितानि—प्रकटितानि, ["दर्शितानि" इत्यत्र "दर्शितादरानि" इति पाठ,—दर्शित,—प्रकटित, आदरो येषु तानि]। पुरातनी—चिरन्तनी चिरप्रसिद्धेति भाव। परित्यक्तेति।—परित्यक्तानि—परिवर्जितानि उपेक्षितानीत्यर्थ अन्यानि—अपराणि कर्तव्यानि—अवश्यानुष्ठेयानि यस्यां तथाभूता। प्रमाणगोष्ठी—तर्कशास्त्रसमालोचनस्य प्रमाणस्थलं वा।

(३३) मन्दीकृतेति।—मन्दीकृत,—शिथिल निवर्तित इति यावत्, इतरेषु—

कच्चित् तेऽत्र वा अभिनवसुभाषितसुधावर्षिणः काव्यालापाः ?” इति।

अथ ते तम् ऊचुः,—(३४) “तात! सन्तोषजुषां सततसन्निहितविद्याविनोदानां (३५) वैतानवह्निमात्रसहायानां कियन्मात्रं न' स्यात् सुखितया, (३६) सकलभुवनभुजि भुजङ्गराजदेहदीर्घे रक्षति क्षितिं क्षितिभुजो भुजे सर्व्वथा सुखिन एव वयम्; विशेषेण तु त्वयि (३७) विमुक्तकौसीद्ये परमेश्वरपार्श्ववर्त्तिनि वेत्रासनम् अधितिष्ठति। सर्व्वे च यथाशक्ति यथाविभवं यथाकालञ्च सम्पाद्यन्ते विप्रजनोचिताः क्रियाकलापाः” इत्येवमादिभिः आलापैः स्कन्धावारवार्त्ताभिश्च शैशवातिक्रान्तक्रीडानुस्मरणैः (३८) पूर्व्वजकथाभिश्च विनोदितमनाः तः

---

कार्येषु शास्त्रेषु वा,—रागो प्रेम तथाविध, मीमांसायां—जैमिनिप्रोक्तकर्तुविषयक शास्त्रे ब्रह्मविद्यायां वा, कच्चित —कच्चिदिति।

(३४) तात इति पुत्रवत्स्नेहक सम्बोधनम्। सततेति।—सततसन्निहित—निरन्तरोपस्थित, विद्या—विद्यानुशीलनमेवेत्यर्थ, विनोद,—प्रीति येषां तथाभूतानाम् अत एव सन्तोषजुषां —सन्तोषमाश्रितानाम्।

(३५) वैतानेति।—वितान,—यज्ञ तस्य अयं वैतान —यज्ञीय इत्यर्थं स चासौ वह्निश्चेति तयोक्त तन्मात्र —तदेव इत्यर्थ, न त्वन्य इति भाव, सहायो येषां तथाविधाना, न —अस्माक, सुखितया—सुखभोगेन स्यात्—प्रयोजन, कियन्मात्रं—स्वल्पमात्रमित्यर्थ।

(३६) सकलभुवनभुजि—सर्व्वा क्षिति पालयतीत्यर्थ। भुजङ्गेति।—भुजङ्गराज,—वासुकि तस्य देहवत् दीर्घे —आयत तस्मिन् क्षितिभुज,—राज्ञ, भुजे—बाहौ क्षितिं—पृथ्वीं रक्षति सति।

(३७) विमुक्तेति।—विमुक्त—त्यक्त कौसीद्यम—आलस्य निरुद्यमनेत्यर्थ येन तथाभूते, अनलसे इत्यर्थ। परमेति।—परमेश्वरस्य—सार्व्वभौमस्य श्रीहर्षस्य, पार्श्ववर्त्तिनि—पार्श्वचरसभासदीत्यर्थ। वेत्रासन—वेत्रनिर्म्मितासने, राजदत्तमिति शेष।

(३८) पूर्व्वजकथाभि,—पूर्व्वकालिककथाभि। विनोदितमना,—आनन्दित-

सह सुचिरम् अतिष्ठत्, उत्थाय च मध्यन्दिने यथाक्रियमाणाः स्थितीः अकरोत्। भुक्तवन्तश्च तं सर्वे ज्ञातयः पर्यवारयन्।

(३८) अत्रान्तरे दुकूलपट्टप्रभवे शिखण्डपाङ्गपाण्डुनी पौण्ड्रे वाससी वसानः, स्नानावसानसमये वन्दितया तीर्थमृदा गोरोचनया च रचिततिलकः, तैलामलकमसृणितमौलिः, (४०) अनुच्चचूडाचुम्बिना निबिडेन कुसुमापीडकेन समुद्भासमानः, (४१) असकृदुपयुक्तताम्बूलविमलाधरकान्तिः, (४२) एकशलाकाञ्जनजनितलोचनरुचिः, (४३) अचिरभुक्तः, विनीतम्

चेता, सदुदारचरितास्तत्तासगाहनाविति भाव। यथाक्रियमाणाः,—याहस्य सर्वं क्रियन्ते तादृशीरित्यर्थः, स्थितीः,—आचारानिति यावत्।

(३९) "अत्रान्तरे" इत्यस्य "पुस्तकवाचकः सुदृष्टिः आजगाम" इत्युत्तरेणान्वयः। तमेव विशिनष्टि, दुकूलेति।—दुकूलपट्टप्रभवे—क्षौमतन्तुजाते, ["दुकूल" इत्यत्र "दुगूल" इति पाठेऽपि स एवार्थः] शिखण्डिनः,—मयूरस्य, अपाङ्गवत्—नेत्रप्रान्तवत्, पाण्डुनी—धवले, [शिखण्डपाङ्गपाण्डुत्वेन वाससोः गम्यते] पौण्ड्रे—पुण्ड्रदेशभवे, वाससी—वसने, वसानः,—परिदधानः। स्नानावसानसमये—स्नानानन्तरं, वन्दितया—मन्त्रपूतीकृतयेत्यर्थः, तीर्थमृदा—पुण्यतीर्थमृत्तिकया, गोरोचनया—स्वनाम ख्यातसारजनीयमाङ्गल्यद्रव्यविशेषेणेत्यर्थः, रचिततिलकः,—कृततिलकः। तैलेन, आमलकेन—आमलकपिष्टेन चेत्यर्थः, मसृणितः,—स्निग्धीकृतः, मौलिः,—मस्तकेशः, केशचय इति यावत् येन यस्य वा तथोक्तः।

(४०) अनुच्चेति।—अनुच्चा—अवनतेत्यर्थः, पृष्ठदेशे इति भावः, या चूडा—शिखा, तां चुम्बति—स्पृशतीति तथोक्तेन, निबिडेन—घनेन, घनसन्निविष्टपुष्पेणेत्यर्थः, कुसुमापीडकेन—पुष्पमाल्येन, समुद्भासमानः,—शोभमानः।

(४१) असकृदिति।—असकृत्—पुनः पुनः, उपयुक्तेन—सेवितेन, चर्वितेन इत्यर्थः, ताम्बूलेन—पर्णेन, विमला—रमणीया इत्यर्थः, अधरस्य कान्तिर्यस्य तथोक्तः।

(४२) एकेति।—एकेन शलाकाञ्जनेन—शलाकाहृतकज्जलरेखया इत्यर्थः, जनिता—उत्पादिता, लोचनयोः,—नयनयोः, रुचिः,—शोभा येन तथोक्तः।

(४३) अचिरभुक्तः,—अचिरं—सद्यः, भुक्तं—भोजनं यस्य तथाभूतः, अन्य-

आर्य्यञ्च वेषं दधानः, (४४) पुस्तकवाचकः सुदृष्टिः आजगाम, नातिदूरवर्त्तिन्याञ्च आसन्द्यां निषसाद। (४५) स्थित्वा च मुहूर्त्तमिव तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैः मृदु-मृणालसूत्रैरिव आवेष्टितं पुस्तकं पुरोनिहितशरशलाकायन्त्रके निधाय, पृष्ठतः सन्निविष्टाभ्यां मधुकरपारावताभ्यां दत्ते स्थानके (४६) प्राभातिकप्रपाठकच्छेदचिह्नीकृतम् अन्तर-पत्रम् उत्क्षिप्य, गृहीत्वा च कतिपयपत्रलघ्वीं कपाटिकां,

---

समयपूर्वं कृतभोजन इत्यर्थः। विनीतम्—अनुद्धतम् आर्य्यं—सौम्यं वेषं—परिच्छदम्। [ 'वेषम्' इत्यत्र "वस्त्रम्" इति पाठेऽपि स एवार्थः ]।

(४४) पुस्तकवाचकः,—ग्रन्थपाठकः पवित्रसन्दर्भव्याख्याता वा। आसन्द्याम्—वेत्रासने।

(४५) "स्थित्वा च" इत्यस्य "पुराणं पपाठ" इत्युत्तरेणान्वयः। तत्कालेति।—तत्काले—तस्मिन् काले पाठकाले इत्यर्थः अपनीतम्—उन्मोचितं सूत्रेण वेष्टनं यस्य तथोक्तमपि सूत्रबन्धनरहितमपीत्यर्थः मृदूनि—कोमलानि मृणालसूत्राणि—बिसतन्तवः तैरिव नखकिरणैः—नखमयूखैः आवेष्टितम्—जडितम्। [ "आवेष्टितम्" इत्यत्र "वेष्टितम्" इति पाठान्तरम् ]। पुर इति।—पुरः—अग्रतः निहिते—स्थापिते शरशलाकायन्त्रके—शरनिर्म्मितनिहिते यन्त्रविशेषे। निधाय—संस्थाप्य। सन्निविष्टाभ्याम्—समीपस्थिताभ्याम् ("समीपे निकटासन्नसन्निकृष्टसनीडवत्" इत्यमरः) मधुकरपारावताभ्याम्—भ्रमरकपोताभ्याम् स्थानके—अवकाशे दत्ते सति, मधुकराः पारावताश्च निजनिजस्वनेन श्रोतॄन् सुखयन्ति अधिकन्तु पाठके पठति तेऽपि तत्कथनात् तूष्णीं स्थीयन्ते इति भावः।

(४६) प्राभातिकेति।—प्रभातस्य अयं प्राभातिकः—प्रभातकालिक इत्यर्थः प्रपाठकः—प्रवचनमित्यर्थः तस्य छेदः—विरामः तस्य चिह्नं चिह्नीकृतं चिह्नीकृतम्—इयत्पाठः पठितः नाधिकमिति स्मरणार्थं नखैः कृतचिह्नमित्यर्थः। तत्र कश्चित् पाठकः प्रभाते कियत् पठित्वा परपाठकाले पूर्व्वपठितस्मरणार्थं केनापि पत्रेण चिह्नीकरोति ततश्च स द्वाक्षात् परमस्य तत्रैव पुस्तकस्य तदनन्तरपठनाय तत्र अन्तरपत्र-मनतीत पठतीति व्यवहारः। अन्तरपत्र—मध्यस्थितविच्छेदचिह्नपत्रम्। उत्क्षिप्य—उद्घाट्य। कतिपयेति।—कतिपयैः पत्रैः लघ्वी—स्वल्पभारा इत्यर्थः तां कपाटिकाम्—पुस्तकावरणपट्टकम्।

क्षालयन्निव (४७) मसीमलिनानि अक्षराणि दन्तकान्तिभिः, अर्चयन्निव (४८) सितकुसुममुक्तिभिः ग्रन्थं, (४९) मुखसंनिहितसरस्वतीनूपुररवैरिव गमकैः मधुरैः आक्षिपन् मनांसि श्रोतॄणां गीत्या पवनप्रोक्तं पुराणं पपाठ।

तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुदृष्टो नातिदूरवर्त्ती (५०) बन्दी सूचीवाणः तारमधुरेण गीतिध्वनिम् अनुवर्त्तमानः स्वरेण इदम् आर्य्यायुगलम् अपठत्,—

"तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम्॥ ३॥

(४७) मसीमलिनानि—मसी—लिखनसाधनद्रवपदार्थ, तया मलिनानि—कृष्णवर्णानि।

(४८) सितेति।—सितानां—शुक्लानां, कुसुमानां—पुष्पाणां, मुक्तयः,—मोचनानि, वृष्टय इत्यर्थः ताभिः। ग्रन्थ—पुस्तकलिखितसन्दर्भम्।

(४९) मुखेति।—मुखे सन्निहिता—समासीना, या सरस्वती, तस्या नूपुररवा,—मञ्जीरनिनादा इव, गमयन्ति—बोधयन्ति, अर्थानिति शेष गमका,—स्वरविशेषा इत्यर्थः तैः। पवनप्रोक्त—वायुप्रोक्तम्। ["पवन" इत्यत्र "पवमान" इति पाठोऽपि स एवार्थ ]।

(५०) बन्दी—स्तुतिपाठक, सूचीवाण,—तदाख्य। गीतिध्वनिं—सहदितां गीतध्वनिनिनादम्, अनुवर्त्तमान,—अनुसरन्। आर्य्यायुगलम्—आर्य्यया जात्या निबद्धं श्लोकद्वयम्।

पुराणश्रवणेन नवोत्पन्नस्तुना राज्ञो हर्षस्य साम्यं आरचयन्, तदपीति।—तत् मुनिना—द्वैपायनेन, गीतं—कीर्त्तितमपि तत अतिपृथु—अतिविस्तृतमपि, पृथु,—आदिराजो वैन्यपृथु, तमतिक्रान्तमपि, तदतिशायीत्यर्थः तत जगद्व्यापि—जगत्प्रसिद्धं, पावनं—पुण्यवर्द्धनमपि, इदं पुराणं, वायव्यमिति शेष हि—निश्चितं, हर्षचरितात् अभिन्नं—अभेदरहितं, मे—मम, प्रतिभाति—प्रतीतिविषयीभवतीत्यर्थः। अत्र तादृशपुराणात् हर्षचरितस्य भेदेऽपि अभेदकथनात् भेदेऽप्यभेदप्रतिपत्तिरूपा अतिशयोक्तिरलङ्कारः। आर्य्या वृत्तम्॥ ३॥

वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु ।
श्रीकण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव" ॥ ३ ॥

(५१) तत् श्रुत्वा बाणस्य चत्वारः पितामहमुखपद्मा इव (५२) वेदाभ्यासपवित्रितमूर्तयः, (५३) उपाया इव साम-

---

गीतेन सह हर्षराज्यस्य साम्यं वर्णयन्नाह वंशेति।—वंश—वेणुवाद्यम्, अन्यत्र,—कुलम्, अनुगच्छतीति इत्युक्तम्, वंशवाद्यानुगतं वंशपरम्परागतञ्चेत्यर्थः, अविवादि—न स्तः विवादिनौ स्वरौ गान्धारनिषादाविति भावः यस्मिन्, अन्यत्र,—न सन्ति विवादिनः,—विरोधिनो यत्र तत्, श्रीराज्यमित्यर्थः, तत्र केषाञ्चिदपि विवादाभावादिति भावः, स्फुटकरणं—स्फुटानि—स्पष्टानि करणानि—तालवाद्यादीनि यस्मिन्, [ केचित्तु गीतपक्ष एव व्याख्यानयन्ति—"वंशेन—वेणुना, अनुगमः ययोः तौ, विवादिनौ स्वरौ—विकृतस्वरौ गान्धारनिषादौ स्वरौ यत्र तत्। करणम्—अपदं, सतालं आविद्धं स्वरस्थानम्, उच्चारणस्थानं वा ] अन्यत्र,—स्फुटानि—प्रसिद्धानि, करणानि—अधिकारस्थानानि, विचारपरीक्षास्थानानि वा यस्मिन् तत्। भरतेति।—भरतः,—भरतो नाम सङ्गीतशास्त्रसूत्रकारो मुनिविशेषः, आदिराजविशेषश्च, तस्य मार्गः,—पन्थाः, गीतिरीतिः यावत् तस्य भजनेन—अनुसरणेन गुरु—महदित्यर्थः। श्रीकण्ठेति।—श्रीयुक्तः,—मधुर इत्यर्थः, वैस्वर्यादिदोषविरहादिति भावः, कण्ठः श्रीकण्ठः, यद्वा,—श्रीकण्ठः,— हरः, सर्वविद्याऽऽधारत्वादिति भावः, अन्यत्र,—देशभेदः, तस्मात् विनिर्यातं—विशेषेण निःसृतम् इदं गीतं हर्षस्य—राज्ञः श्रीहर्षस्य च, राज्यमिव, प्रतिभाति इति शेषः। अत्र श्लिष्टविशेषणबलेन गीतस्य हर्षराज्येन सह सादृश्यप्रत्यायनात् उपमानामालङ्कारः स च श्लेषेणानुप्राणित इति बोध्यम्। आर्या वृत्तम् ॥ ३ ॥

(५१) तदित्यादि।—"तत्" इत्यस्य "मुखानि व्यलोकयन्" इत्युत्तरेणान्वयः। पितामहमुखपद्मा इव—पितामहः,—ब्रह्मा, तस्य मुखानि, चत्वारीति भावः, पद्मा इव पितामहमुखपद्मा त इव। ("वा पुंसि पद्मम्" इत्यभिधानात् पुंलिङ्गता)।

(५२) वेदेति।—वेदानाम् अभ्यासेन—पुनः पुनः अनुशीलनेन, पवित्रिता मूर्तिः येषां तथोक्ताः।

(५३) उपाया इव—सामाद्या इव, ("सामदानभेददण्डमित्युपायचतुष्टयम्"

(६०) महाभारतभावितात्मानः, विदितसकलेतिहासाः, महाविद्वांसः, महाकवयः, (६१) महापुरुषवृत्तान्तकुतूहलिनः, सुभाषितश्रवणरसरसायनाः, वितृष्णाः, (६२) वयसि वचसि यशसि तपसि सदसि महसि वपुषि यजुषि च प्रथमाः, पूर्व्वमेव कृतसङ्गराः, विवक्षवः, (६३) स्मितसुधाधवलितकपोलोदराः परस्परस्य मुखानि व्यलोकयन्।

(६४) अथ तेषां कनीयान् कमलदलदीर्घलोचनः श्यामलो नाम बाणस्य प्रेयान् प्राणानामपि वशयिता दत्तसंज्ञः ततः

---

(६०) महेति।—महाभारते—महाव्यासप्रणीतलक्षश्लोकात्मके ग्रन्थभेदे, भावितः,—अनुशीलितः, आत्मा यैः तथोक्ताः, महाभारतसारविद इति यावत्, विपुलभारतवर्षविख्यातचरिता वा।

(६१) महापुरुषेति।—महान् पुरुषः,—नारायणः हर्षराजो वा तस्य वृत्तान्ते—विवरणे चरितश्रवणे इत्यर्थः, कुतूहलिनः—कौतुकशालिनः। सुभाषितेति।—सुभाषितानाम्—शोभनानां काव्यानाम् आलापानाञ्च, श्रवणे—आकर्णने, यो रसः,—रागः, तस्य रसायनाः—औषधविशेषाः, सुभाषितश्रावणेन लोकानां श्रुतिसुखदायका इति भावः। "सुभाषित" इत्यनेन स्वगतकाव्यस्य प्रशंसा व्यज्यते। वितृष्णाः,—विगतविषयानुरागा इत्यर्थः।

(६२) वयसि—यौवने। वचसि—वाक्यविन्यासे। सदसि—सभायाम्। महसि—तेजसि। वपुषि—शरीरे। यजुषि—यजुर्वेदे। प्रथमाः—अग्रगण्याः। कृतसङ्गराः,—वयं सर्वे ऐकमत्येन हर्षचरितं वक्तुं बाणमनुरुन्ध्म इति अन्योऽन्य कृताङ्गीकाराः अहम्पूर्विकया हर्षचरितकथनाय बाणमनुरोद्धुं कृतविवादा वा, ("सङ्गरो युधि चापदि। क्रियाकारे विषे चाङ्गीकारे" इति मेदिनी)।

(६३) स्मितेति।—स्मितम्—मृदुहसितमेव सुधा—अमृतम्, तया धवलितम्—विशदीकृतम्, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरभागः येषां तादृशाः। व्यलोकयन्—अपश्यन्।

(६४) अथेत्यादि।—तेषाम्—भ्रातॄणामित्यर्थः कनीयान्—कनिष्ठः, ["द्विवचन—" (५।३।५७ पा०) इति ईयसुनि "युवाल्पयो—" (५।३।६४ पा०) इति अल्पस्य कनादेशे रूपम्]। "कनीयान्" इत्यनेनास्य प्रियवादित्वं प्रकटीकृतम्। प्रेयान्—

(९५) सप्रणयं दशनज्योत्स्नास्नपितककुभा मुदेन्दुना बभाषे,— (९६) "तात। बाण! द्विजानां राजा गुरुदारग्रहणम् अकार्षीत्। (९७) पुरूरवा ब्राह्मणधनतृष्णया दयितेन आयुषा व्ययुज्यत। (९८) नहुषः परकलत्राभिलाषी महाभुजङ्ग आसीत्।

---

वर्तिमध्येन प्रिय। वशयिता—लोकवशीकरणक्षम इति यावत्। दत्तसंज्ञ,—कृतसंकेत इत्यर्थ। तै,—शापभि।

(९५) सप्रणय—सप्रणयं, सस्नेहभाषणपूर्वकम् इत्यर्थ। दशनेति।—दशनानां—दन्तानां ज्योत्स्नया—प्रभया, स्नपिता,—अभिषिक्ता, ककुभ,—दिशो येन तादृशेन।

(९६) तात।—वत्स।। प्रथम तावत् पूर्वेषां राजर्षीणां दोषानुद्भाव्य हर्षदेवस्य नितरां निर्दोषतां ख्यापयति—द्विजानामित्यादिना। तथा दोषाश्च कश्चित् प्रश्नेन कश्चित् वा श्रवणं यथायोग्यमुद्भावनीया। द्विजानां राजा—चन्द्र, ("द्विजराजः शशधरो नक्षत्रेशः क्षपाकर" इति चन्द्रपर्यायेष्वमर)। चन्द्रादिशब्दकथनेन राजत्वप्रतीतेरभावात् "द्विजानां राजा" इत्युक्तम्। गुर्विति।—गुरो,—बृहस्पते, ("बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरु" इत्यमर) आचार्यस्य च दाराणां—पत्न्या, ताराया इत्यर्थ, ग्रहणं—धर्षणमित्यर्थ। पुरा ताराख्या गुरुभार्या पूर्णचन्द्रसमं परमसुन्दरं समुदितं कामयमाना गर्भवती आसीत्। तद्ग्रहणनिमित्तं बृहस्पतिचन्द्रयो विरोध आसीत्। तेन यदा बृहस्पति ताराग्रहणाय इन्द्रादीन् देवान् प्रोत्साहितवान् तदा चन्द्र शर्वं शरणमगात्। तत्र गुरुपक्षीया देवा शक्रप्रेरिता चन्द्रपक्षीया असुराश्च चन्द्रोऽस्य महासमराय आहूय, दिष्टमानेन सर्वसुरसत्त्व युद्धमकार्षु, तत् दृष्ट्वा भगवान् नारद प्रशममात्मप्रबोधितां तारां गुरवे तद्गर्भजं पुत्रं बुधनामानं चन्द्राय च समर्प्य तयोर्विरोधं प्रशमयति पौराणिकी वार्ता अत्रानुसन्धेया।

(९७) ब्राह्मणेति।—ब्राह्मणस्य धनानि तेषु तृष्णा—लोभ तया। दयितेन—प्रियेण, आयुषा—जीवितेन आयुर्नाम्ना पुत्रेण च व्ययुज्यत—वियुक्त विप्रशापात् विगतजीवन परं पुत्रजननात् चिरं पुत्रवियुक्त इत्यर्थ। पुरा राजर्षि पुरूरवा दिव्यो जिगीषुरेकदा धनिकेनापि प्रभूतधनप्रार्थिना विप्रेण यज्ञे निमन्त्रित लोभात् तद्धनं जिहीर्षु, तच्छापात् विनाशं गत। किं तत्क्रतुके नरेन्द्रमन्त्रा आज्ञा निवर्तने इति आयुर्नामानं राजर्षिं वशायुषा व्यदापयत इति पौराणिकी कथा अत्र अनुसन्धेया।

(९८) नहुष,—आयुस्तनय, परस्य कलत्रं—भार्या तदभिलाषी महाभुजङ्ग,—अजगर, अतिकामुकश्च इत्यर्थ। पुरा दधीचस्य शापात् इन्द्रे पदभ्रंशं गते त्रिलोकी

(८१) कार्त्तवीर्य्यो गोब्राह्मणातिपीडनेन निधनमयासीत्।
(८२) मरुत्तः इष्टबहुसुवर्णकोऽपि देवद्विजबहुमतो न बभूव।
(८३) शन्तनुरपि व्यसनात् एकाकी वियुक्तो वाहिन्या विपिने

---

प्रापद्यामास। तत्पितृवाक्येन शल्यमुद्धरति राजनि बालो मृतः। ततश्च तत्पिता शापम् "त्वमप्यहमिव पुत्रशोकेन प्राप्स्यसि विनाशम्" इति दशरथं शप्त्वा पत्नी प्राणान् तत्याज। एवं असौ राजा दशरथः स्त्रीवाक्येन प्रियं पुत्रं रामं वनं प्रेषयन् मुनिशापात् पुत्रशोकेन ममारेति रामायणी वार्त्ता।

(८१) गोब्राह्मणेति।—गवे—गोनिमित्तमित्यर्थः, ब्राह्मणस्य—जमदग्नेरिति भावः, तयोः ब्राह्मणयोश्च, अतिपीडनेन—वधेन। पुरा कार्त्तवीर्य्यः कदाचित् गवां कोटिरक्षी-बाधितो जमदग्नेः धेनुम् अहरत्, तञ्च व्यापादितवान्, ततश्च क्रोधाभिभूतेन तत्पुत्रेण परशुरामेण परशुच्छिन्नभुजसहस्रः ससैन्यबान्धवः निहत इति वार्त्ता।

(८२) इष्टेति।—इष्टः,—अनुष्ठितः बहूनि सुवर्णानि—सौवर्णद्रव्याणि यस्मिन् तथाभूतः यज्ञः बहुसुवर्णकः येन तथाभूतः। इष्टं,—प्रियं, अभिमतं इत्यर्थः, बहु—अतिशयेन, सु—शोभनं, वर्णं,—गौरत्वम् यस्य तथाभूतोऽपि इति च। यद्वा,—इष्टानि—दत्तानि, बहूनि—प्रभूतानि, सुवर्णकानि येन तथाभूतः। देवेति।—देवद्विजः,—बृहस्पतिः, देवानां द्विजः—विप्रः, तेषां बहुमतः,—समादृतश्च। पुरा बहुसुवर्णकाख्येन यागेन यियक्षुः मरुत्तः बृहस्पतिं याज्यकार्य्ये अनुरुरोध। "मनुष्यस्य तव यज्ञं न कारयिष्यामि" इति तेनावमतश्च नारदवचनात् तद्भ्रातरं वाराणसीषु भस्मगृहीतनग्नोन्मत्तवेशेन स्थितं संवर्त्तं विविदिषुः गत्वा तेनैवोक्तविधेः भगवन्तं गत्वा प्रयाणं च विज्ञाय बहुशन्निरस्तमप्यनमपि अविरज्यमानं कथमपि पौरोहित्ये न्ययोजयत्। ततश्च बृहस्पतिसदृशद्वं धातुं सद्यहि दृष्ट्वा विद्वेषमकरोदिति वार्त्ताऽनुसन्धेया।

(८३) व्यसनात्—अत्यासङ्गात्। ["शन्तनुरपि व्यसनात्" इत्यत्र 'शन्तनुरतिव्यसनात्' इति पाठे,—अतिव्यसनात्—अत्यासक्तेरित्यर्थः] वाहिन्या—नद्या, गङ्गादेव्या इत्यर्थः, सेनया च, ("वाहिनी स्यात् तरङ्गिण्यां सेना-सैन्यप्रभेदयोः" इति मेदिनी)। पुरा महाभिषो नाम राजा ब्रह्मसभायां गङ्गां चामरधारिणीं कदाचित् अङ्गविम्बात् चलितवाससं दृष्ट्वा भृशं कामार्त्ततया प्रेमवशया जल्पन् ब्रह्मणा "पतित्वा क्षत्रियगृहे शन्तनुर्नाम भव" इति शप्तः सद्य एव मां गतः शन्तनुः नाम राजा बभूव। गङ्गाऽपि मन्युतेऽस्खेदमी दशा इति सखेदं भुवम् अवतरति स्म। तदानीञ्च धेनुहरणकुपितेन वशिष्ठेन "भुवं गच्छत" इति शप्तैः वसुभिः विदिततद्वृत्तान्तैः, गङ्गा

विललाप। (८४) पाण्डुः वनमध्यगतो मत्स्य इव मदनरसाविष्टः प्राणान् मुमोच। (८५) युधिष्ठिरो गुरुभयविपन्नहृदयः समरशिरसि सत्यम् उत्सृष्टवान्। (८६) इत्थं नास्ति राजत्वम् अपकलङ्कम् ऋते देवदेवात् अमुतः सर्वद्वीपभुजो हर्षात्। अस्य हि बहूनि आश्चर्याणि श्रूयन्ते; तथा हि,—

---

अभ्यधायि—"यदि तव दुर्व्यवहृतिम् समालोक्य जाता, तदा वक्ष्यमपि तव गर्भं उत्पत्स्यमानं, जातमात्रमेव त्वया स्वसन्निधौ भोक्तव्या" इति। सा तु तथा अङ्गीकृत्य मृगयायां विहरन्तं शन्तनुं प्रार्थयमानम् अवोचत—"राजन्! यदहं करोमि, तत् त्वया न निरोद्धव्यं, न च मदीयं जन्म प्रष्टव्यम्" इति। राजाऽपि नितरां तदासक्तः तथेत्यङ्गीकृत्य बहूनब्दान् तया अरमत। कालक्रमेण य कश्चित् सुत उत्पद्यते स्म, स तया जले क्षिप्तः, एवं सप्तसु सुतेषु जले क्षिप्तेषु गङ्गा शेषमात्रं निःसन्तानोऽयं मा भूत्, इति वसुभिर्वसुभिः कृताग्रहः भीष्मो भूत्, ततः तमपि क्षिपन्तीं, तां राजा नितरां पुत्रशोकार्त्तः "नेदानीं त्वया मत्पुत्रः क्षेप्तव्य" इति सतिरस्कारम् अभिहितवान्। साऽपि "अप्रतिज्ञो भवान्" इत्युक्त्वा अष्टमं पुत्रं राज्ञे दत्त्वा पुनः ब्रह्मलोकम् अगात्। राजा च तद्वियोगार्त्तो बहुधा विललाप इति वार्त्ता अत्र अनुसन्धेया।

(८४) वनम्—अरण्यं जलञ्च, ("वने सलिलकानने" इत्यमरः)। मदन,—काम, मदनः—तदाख्यवृक्षविशेषः, तस्य फलमिति यावत्, ("मदनः स्मरवसन्तद्रुमेदधुस्तूर सिक्थकेषु" इति मेदिनी), सलिलान्तरालचारी मत्स्यो यथा मदनाख्यफलरसकषायित सलिलसम्पर्कात् प्राणान् विजहाति, तथा अरण्यविहारी पाण्डुः शृङ्गाररसाविष्टमानसः प्राणानत्यजदिति निष्कर्षार्थः। एकदा पाण्डुः मृगयार्थं वनविहारी किन्दमाख्यं मृगरूपिणं कञ्चिन्मुनितनयं मृगीरूपया ब्राह्मण्या सह रममाणमालोक्य अकृतार्थता-दशायामेव तं बाणेनैकेन जघान, तेन च मरणार्त्तेन प्राणान् मुमुक्षता "त्वमपि अहमिव स्त्रिया विहरन् अकृतार्थ एव प्राणांस्त्यक्ष्यसि" इति शप्तः असौ कदाचित् कामार्त्तः माद्र्या सह विजने विहरन् मृत्युवशं नीत इति भारती वार्त्ता।

(८५) गुर्विति।—गुरुभय—गुरोः,—द्रोणात्, भयं, मरणभयञ्च, तेन विपन्नं हृदयं यस्य तथोक्तः। कुरुपाण्डवसमरे स्वबलानि विनाशयन्तं भारद्वाजात्, धनुर्धरं द्रोणम् "अश्वत्थामा हत" इति अलीकवचसा शोकाकुलं कृत्वा युधिष्ठिरः कृतसत्यत्यागः तं घातितवान् इति भारती वार्त्ता।

(८६) इत्थम्—एवम्प्रकारं, सत्ययुगमारभ्य कलियुगं यावदित्यर्थः। अप-

(८७) अत्र बलजिता निश्चलीकृताः चलन्तः कृतपक्षाः क्षितिभृतः। (८८) अत्र प्रजापतिना शेषभोगिमण्डलस्य उपरि क्षमा कृता। अत्र (८९) पुरुषोत्तमेन सिन्धुराजं प्रमथ्य लक्ष्मीः आत्मीकृता। (९०) अत्र बलिना मोचितभूभृद्वेष्टनो मुक्तो महानागः। (९१) अत्र देवेन अभिषिक्तः कुमारः।

---

कलङ्क—निर्दोषम्। देवदेवात्—राजाधिराजात्। आचर्याणि—विस्मयकराणि, अरितानीति शेषः।

(८७) अत्रेत्यादि।—अत्र "बलजिता" इत्यादयः अष्टौ श्रीहर्षे अन्वयो ज्ञातव्याः। अत्र—जगति। बल—शत्रुसैन्य, बलाख्यम् असुरच, जितवान् इति बलजित् तेन श्रीहर्षेणेति शेषः। चलन्तः,—विरोधितया व्यवहरन्त इत्यर्थः, पक्षाश्रितया उड्डीयमानाश्च, कृता,—अवलम्बिता, पक्षाः,—सहाया, अन्यत्र,—कृताः,—धृता इत्यर्थः, पक्षाः,—पतत्राणि यैः तथोक्ताः, क्षितिभृतः,—राजानः, पर्वताश्च, निश्चलीकृताः,—निर्जितत्वात् अधीनता, पक्षच्छेदनात् स्थावरतां नीताश्च।

(८८) प्रजापतिना—नरपतिना, ब्रह्मणा च। शेषेति।—शेषस्य—निहतावशिष्टस्य, भोगिनां—सुखभोगवतानां, राज्ञामिति भावः, मण्डलस्य—चक्रस्य, अन्यत्र,—शेषस्य—अनन्तस्य, भोगिनः,—नागस्य, मण्डलस्य—फणस्य, उपरि क्षमा—क्षान्ति, पृथिवी च, कृता—विहिता निहिता च।

(८९) पुरुषोत्तमेन।—पुरुषेषु उत्तम—श्रेष्ठ तेन, नरनाथेन नारायणेन च, सिन्धुराज—सिन्धुदेशाधिपतिं क्षीरनिधिञ्च प्रमथ्य—निर्जित्य विलोड्य च, लक्ष्मीः,—राजश्री कमला च, आत्मीकृता—स्वीकृता।

(९०) बलिना—बलवता असुरराजेन च, महानागः,—महान् गजहस्ती, शौर्यदर्पशालाख्य इति भावः, वासुकिश्च। मोचितेति।—मोचितम्—अपनीत, भूभृद्भिः,—शत्रुराजभिः इत्यर्थः, वेष्टनम्—अवरोधनम्, यद्वा,—मोचित भूभृत —श्रीकुमाराख्यस्य राज्ञ, वष्टन—शुण्डेन रोधन यस्य तथाभूत, श्रीकुमाराख्य नृपति किल महागजेन दर्पशालिन उपजातमदनावबद्ध दृष्ट्वा च तत हर्षेण राज्ञा स्वयं गृहीत्वा मोचित स, दुष्टहस्ती धार्मिकेति ख्यापयन् परित्यक्त विदिते इति वार्ता, अन्यत्र,—भूधरः,—मन्दरस्य वेष्टन यस्य तथाभूत, मुक्त—परित्यक्त, सागरमन्थनात् पर परित्यक्तश्च।

(९१) देवेन—राज्ञा, देवराजेन च, कुमारः,—निजतनय गुहश्च, अभिषिक्त,

(८२) अत्र स्वामिना एकप्रहारपातितारातिना प्रख्यापिता शक्तिः। अत्र (८३) नरसिंहेन स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः। अत्र (८४) परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः। अत्र (८५) लोकनाथेन दिशां मुखेषु परिकल्पिता लोकपालाः सकलभुवनकोशश्चाग्रजन्मनां विभक्तः। (८६) इत्येवमादयः प्रथमकृतयुगस्येव इहासन् महासमारम्भाः। अतोऽस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुष-वंशानुक्रमेण आदितः प्रभृति चरितमिच्छामः श्रोतुम्।

—प्रतिष्ठापित, यौवराज्ये सैनापत्ये च इति शेषः। यद्यप्यत्र देवपदं देवतासामान्यवाचकं, तथाऽप्यत्र लक्षणया देवराजपरत्वमवगन्तव्यम्, तेनैव कुमारस्य सैनापत्येन ग्रहणादिति।

(८२) स्वामिना—प्रभुणा, सेनापतिना कार्त्तिकेयेन च। एकेति।—एकेन—एकमात्रेण, उभयत्रापि तुल्यम्, प्रहारेण—शराघातेन, उभयत्र तुल्यम्, पातिता अरातयः,—शत्रु-भूता राजानः, तारकादयोऽसुराश्च येन तथाभूतेन। शक्तिः,—सामर्थ्यं, तदाख्यमस्त्रञ्च।

(८३) नरसिंहेन—नरः सिंह इव तेन, नरश्चासौ सिंहश्चेति तथोक्तेन च, नृसिंहेनेत्यर्थः। स्वहस्तेति।—स्वहस्तेन, न तु सैन्यसहायेन, चक्रादिनिजास्त्रेण च, विशसिता,—निहता, विदारिताश्च, अरातयः,—शत्रवः, विरोधिनो नृपा, हिरण्य-कशिपुप्रभृतयश्च इति यावत् येन तथोक्तेन।

(८४) परमेश्वरेण—परमश्चासौ ईश्वरश्चेति परमेश्वरः,—सार्वभौमः, हरश्च तेन, तुषारशैलभुवः,—हिमालयप्रदेशभूमेः, हिमगिरिजातायाश्च, दुर्गायाः,—दुर्गमायाः, गौर्याश्च करः,—बलिः, पाणिश्च।

(८५) लोकनाथेन—नरपतिना, विधात्रा च, दिशां मुखेषु—निःसरणमार्गेषु, सीमान्तप्रदेशेषु इति यावत्, अन्यत्र,—दिशां मुखेषु—दिशि दिशि इति यावत्, परि-कल्पिताः,—नियोजिताः, लोकपालाः,—प्रजापालाः, इन्द्रादयश्च। सकलभुवनकोशः,—सर्वजगतां धनं, सकलभुवनमेव कोशः,—धनभाण्डारश्च, अग्रजन्मनां—ब्राह्मणानाम् आदिसृष्टानां प्रथमानाञ्च, विभक्तः,—विभज्य दत्तः।

(८६) इत्येवमादय इति।—अत्र आदिपदेन न एतावन्त एव, अन्येऽपि एवं-विधा बहव इति व्यज्यते। प्रथमकृतयुगस्येव—प्रथमं सृष्टस्य सत्ययुगस्येव, महासमारम्भाः,—महान्ति कार्याणि, यज्ञतपश्चर्यादयो व्यापारा इति यावत्।

(९७) सुमहान् कालो न शुश्रूषमाणानाम्। (९८) अयस्कान्तमणय इव लोहानि नीरसनिठुराणि क्षुद्रकाणामपि आकर्षन्ति मनांसि महतां गुणाः, किमुत स्वभावसरसमृदूनि इतरेषाम्? कस्य न (९९) द्वितीयमहाभारते भवेत् अस्य चरिते कुतूहलम्? आचष्टां भवान्। (१००) भवतु भार्गवोऽयं यथा शुचिना अनेन राजर्षिचरितश्रवणेन सुतरां शुचितरः" इत्येवम् अभिधाय तूष्णीम् अभूत्।

बाणस्तु विहस्य अब्रवीत्—(१०१)"आर्य! न युक्तमनुरूपम् अभिहितम्। (१०२) अघटमानमनोरथमिव भवता कुतूहलम् अवकल्पयामि। (१०३)शक्याशक्यपरिसङ्ख्यानशून्याः प्रायेण स्वार्थस्पृहः। परगुणानुरागिणो (१०४) प्रियजनकथाश्रवणरसरभसमोहिता च मन्ये महतामपि मतिः अपहरति अविवेकम्।

---

(९७) सुमहान् कालः, गत इति शेषः। शुश्रूषमाणानां—श्रोतुमिच्छताम्।

(९८) अयस्कान्तमणय इवेति।—मणिसम्बन्धेन उपमेयानां गुणानामपि रत्नत्वं प्रदर्शितम्। नीरसनिठुराणि—नीरसानि—आर्द्रभावरहितानि, निठुराणि—कठिनानि। क्षुद्रकाणां,—नीचानां क्षुद्राणां वा, ("क्षुद्रकस्त्रिषु नीचःस्त्री" इति मेदिनी) महतां गुणाः मनांसि आकर्षन्ति इति अन्वयः। इतरेषां—साधूनां, महतां वा।

(९९) द्वितीयमहाभारते—द्वितीयमहाभारतसदृशे, अस्य—हर्षस्य, चरिते—वृत्ते, कुतूहलम्—कौतुकम्। आचष्टां—कथयतु।

(१००) भार्गवः,—भृगुवंशोद्भूतः। सुतराम्—अतिशयेन, शुचितरः,—पूततरः।

(१०१) आर्य।—पूज्य। युक्तमनुरूपम्—युक्तियुक्तम्।

(१०२) अघटमानेति।—अघटमानः,—असम्भवतां गच्छन्, मनोरथः यस्य तथाभूतम् अदृष्टिकरमिति भावः। अवकल्पयामि—अवधारयामि।

(१०३) शक्येति।—शक्यं—साध्यम् अशक्यम्—असाध्यं, तयोः परिसङ्ख्यानं—परिगणनं तेन शून्याः,—रहिताः। स्वार्थस्पृहः,—स्वकार्यवशाः, स्वार्थसाधनेच्छा शक्याशक्यविवेकं न गणयतीत्यर्थः।

(१०४) प्रियेति।—प्रियजनस्य कथाश्रवणे यो रसः,—रागः, तस्य रभसेन

पश्यतु आर्य्यः, क्व (१०५) परमाणुपरिमाणं बटुहृदयम् ? क्व (१०६) समस्तब्रह्मस्तम्बव्यापि देवस्य चरितम् ? (१०७) क्व परिमितवर्णवृत्तयः कतिपये शब्दाः ? क्व (१०८) सङ्ख्यातिगाः तद्गुणाः ? सर्व्वज्ञस्यापि (१०९) अयम् अविषयः, वाचस्पतेरपि अगोचरः, सरस्वत्या अप्यतिभारः, किमुत अस्मद्विधस्य ? कः खलु पुरुषायुषशतेनापि शक्नुयात् अविकलम् अस्य चरितं वर्णयितुम् ? एकदेशे तु यदि कुतूहलं वः, सज्जा वयम्। इयम् (११०) अधिगतकतिपयाक्षरलवलघीयसी जिह्वा क्व

---

—वेगेन अतिमध्येनेत्यर्थः, ("रभसो वेग हर्षयो" इत्यमरः) नीडिता—लज्जा इत्यर्थः। प्रविवेक—प्रकृष्ट विवेकम्।

(१०५) परमाणुपरिमाणम्—अतिक्षुद्रमिति भावः। बटुहृदय—द्विजशिशुमानसम्।

(१०६) समस्तेति।—समस्त,—सकल, ब्रह्मस्तम्ब,—ब्रह्माण्डं, तद्व्यापि। देवस्य—हर्षस्य।

(१०७) परिमितेति।—परिमितानाम्—परिगणितानाम्, अक्षरत्वात् नित्यम्, वर्णानाम्—अक्षराणाम् अकारादि हकारान्तानामिति यावत्, वृत्तय,—रचनानि यत्र तथाभूता। कतिपये—अल्पा इति भावः।

(१०८) सङ्ख्यातिगा,—सङ्ख्या,—एकादिपरार्द्धपर्य्यन्ता, ता अतिगच्छन्ति—अतिशेरते इति तथोक्ता। तद्गुणा,—तस्य—देवस्य हर्षस्य, गुणा।

(१०९) अयम्—हर्षचरितरूप, अविषय,—अगोचर। वाचस्पते,—बृहस्पते। पुरुषायुषशतेन—पुरुषस्य आयु,—जीवितकाल, ["अचतुर—" (५।४।७७ पा०) इत्यादि सूत्रेण अच्प्रत्ययान्तो निपात] तत् वर्षशतमित्यर्थ, "शतायुर्वै पुरुष" इति श्रुते, तेषा शत तेन। अविकलम्—सम्यक्। पुरुषेत्यादिना योग्येऽपि वर्णयितरि अपि वर्णनीयस्य बाहुल्यात् जीवनकालस्य चाल्पीयस्त्वात् कार्त्स्न्येन वर्णनं न सम्भवति इति व्यञ्जितम्, अत एवाह एकदेशे इति।—एकदेशे—कियदंशे इत्यर्थ। सज्जा,—प्रस्तुता, वर्णयितुमिति भाव।

(११०) अधिगतेति।—अधिगत,—ज्ञात, कतिपयानाम् अक्षराणा लव,—लेश यया तथाभूता, अत एव लघीयसी—अल्पा, यत्किञ्चित् वर्णयितु क्षमा इति भाव।

मुकुलितेऽह्नि कमलिनीमलनादिव लोहिततमे तमोलिहि रवौ लम्बमाने, रविरथतुरगमार्गानुसारेण यममहिष इव धावति (११४) नभसि तमसि, क्रमेण च (११५) गृहतापस-कुटीरकपटलावलम्बिषु रक्तातपच्छेदैः सह संहृतेषु वल्कलेषु, (११६) कलिकल्मषमुषि पुष्यति भगवन् अग्निहोत्रधामधूमे, (११७) सनियमे यजमानजने मौनव्रतिनि, (११८) विहारवेला-विलोले पर्य्यटति पल्लीजने, (११९) विकीर्य्यमाणहरितश्यामाक-शालिपूलिकासु दुग्धासु होमकपिलासु, दृश्यमाने वैतानतनू-

---

प्रभा यस्य तथाभूते। मुकुलिते—मुकुलभाव गते, निमीलितप्राये इत्यर्थः। कमलिनी-मलनादिव—पद्मिनीमालिन्यदर्शनादिव इत्यर्थं। ["कमलिनीमलनादिव" इत्यत्र "कमलिनी-मीलनादिव" इति पाठे,—पद्मिनीसङ्कोचादिवेत्यर्थ]। लोहिततमे—अतिलोहित, आगामिन तिमिरस्य रिपो कमलिनीं स्य प्रिया प्रति भर्त्सयन्त्रणनितक्रोधादिति भाव, तमोलिहि—तिमिरविध्वंसिनि, रवौ—सूर्य्ये लम्बमाने—पश्चिमायां पततीत्यर्थं।

(११४) नभसि—आकाशे। तमसि—अन्धकारे।

(११५) गृहति।—गृहतापसाना—गृहस्थतपस्विना, कुटीरकाणा—कुट-गृहभेदाना पटलानि—छदींषि गृहाच्छादनानि इत्यामीत्यर्थं। ("छद पटल छदि" इत्यमर) अवलम्बन्त इति तथोक्तेषु रक्तातपच्छेदैः,—रक्तवर्णसूर्य्यमयूखखण्डे, सह संहृतेषु—आहृत्य नीतेषु, वल्कलेषु—तरुत्वक्षु, तापसाना वस्त्रभूतेषु इति यावत।

(११६) कलिकल्मषमुषि—कलिकालजनितपापहारिणि पुष्यति—व्याप्नुवति। अग्निहोत्रधामधूमे—होमगृहाग्नि सूतधूमे।

(११७) सनियमे—सुसंयते, यजमानजने—याज्ञिकवर्गे, मौनव्रतिनि—मौन-व्रतधारिणि।

(११८) विहारति।—विहार—गोष्ठात् गवानयनेन तद्दोहनम्, अग्निहोत्रार्थं वह्नि-समुद्धरणमिति वा, तस्य वेला—समय, तेन विलोल—चञ्चले, व्यग्रे इति भाव। पर्य्यटति—परितो भ्रमति।

(११९) विकीर्य्यमाणेति।—विकीर्य्यमाणा,—प्रक्षिप्यमाणा प्रदीयमाना इत्यर्थ, हरिता,—श्यामला, श्यामाकशालीना—श्यामाकाख्यव्रीहिभेदाना, पूलिका —गुच्छा याभ्य तथाभूतासु दोहनकाले वाहनग्रासदानात् अनायासेन दोहन दुग्धवृद्धिश्च भवतीति

पाति, (१२०) पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि जपति वटुजने, (१२१) ब्रह्मासनाध्यासिनि ध्यायति योगिगणे (१२२) तालध्वनिधावमानानन्तान्तेवासिनि, अलसवृद्धश्रोत्रियानुमतेन गन्दद्ग्रन्थदण्डकोद्गारिणि सन्ध्यां समवधारयति वठरविटवटुसमाजे, (१२३) समुन्मज्जति च ज्योतिषि तारकाख्ये खे, प्राप्ते प्रदोषारम्भे भवनम् आगत्य उपविष्टः स्निग्धैः बन्धुभिः सार्द्धं तथैव गोष्ठ्या तस्थौ। (१२४) नीतप्रथमयामश्च गणपतेः

---

भाव। होमकपिलासु—होमधेनुषु। दुग्धासु—कृतदोहासु। हूयमाने—हविषा सन्तर्प्यमाणे। वैतानतनूनपाति—यज्ञीयाग्नौ। ("अग्निर्वैश्वानरो ०। ०जातवेदास्तनूनपात्" इत्यमरः)।

(१२०) पूतेति।—पूते—पवित्रे, विष्टरे—आसने, उपविष्टे तस्मिन्। कृष्णाजिनजटिले—कृष्णमृगचर्मावृते जटिनि—जटाधारिणि, जपति, इष्टमन्त्रमिति शेषः, वटुजने—द्विजजने।

(१२१) ब्रह्मेति।—ब्रह्मासनम्—आसनविशेषः, तत् अध्यास्ते इति तथोक्ते। ध्यायति—चिन्तयति, स्वेष्टदेवमिति शेषः।

(१२२) तालेति।—तालध्वनि,—सङ्केतार्थमङ्गुलिशब्दविशेषः, तेन धावमाना,—सत्वरमापतन्तः, अनन्ता—असंख्याः, बहव इत्यर्थः, अन्तेवासिनः,—छात्रा यस्य तथाभूते। अलसेति।—अलस,—मन्थर, वृद्ध,—स्थविर, श्रोत्रिय—छान्दस, वेदोपाध्याय इत्यर्थः, तस्य अनुमत—"तदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् अनुमति रित्यर्थः तेन, अनुज्ञया इत्यर्थः। गन्ददिति।—गन्दत,—स्खलत, विकसत इत्यर्थः, ग्रन्थदण्डकान्—अभिधानानि उद्गिरति—उच्चारयतीति तथोक्ते। सन्ध्या—सन्ध्याकालिकोपासनाविशेषः, समवधारयति—समालोचयति। वठरेति।—वठरा,—अज्ञोधा मूर्खा इत्यर्थः, विटा,—दुर्वृत्ताः, ये वटवः,—द्विजशिशवः, तेषां समाजः,—सङ्घः तस्मिन्, वृद्धश्रोत्रियैः मूर्खा दुर्वृत्ताश्च शिशवः सन्ध्योपासनार्थे नियुज्यन्ते इति समुदितार्थः।

(१२३) समुन्मज्जति—समुन्मीलति, तारकाख्ये—नक्षत्राख्ये, ज्योतिषि—तैजसपदार्थे। खे—आकाशे। प्राप्ते—उपस्थिते प्रदोषारम्भे—रजनीमुखे इत्यर्थः। गोष्ठ्या—सल्लापेन प्रकान्तविषयालोचनेनेत्यर्थः, ("गोष्ठी सभा सल्लापयोः स्त्रियाम्" इति मेदिनी) तस्थौ—स्थितः।

भवने परिकल्पित शयनीयम् असेवत; इतरेपान्तु सर्वदा निमीलितदृशामपि अनुपजातनिद्राणां कमलवनानामिव सूर्य्योदयं प्रतिपालयतां कुतूहलेन कथमपि सा क्षपा क्षयम् अगच्छत्।

अथ यामिन्याः (१२५) तुर्य्ये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयम् अगायत्,—

"पश्चादङ्घ्रिं प्रसार्य्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मा खुरेण ॥५॥

---

(१२४) नीतप्रथमयाम,—अतिक्रान्ते प्रथमप्रहरे इत्यर्थः, शय्यते,—शायुक्त-पिढ्यपुमस। परिकल्पित—रचितम्। कुतूहलेन—प्रभाते बाणवर्ण्यमानहर्षचरित-श्रवणौत्सुक्येन इत्यर्थः। क्षपा—रात्रि।

(१२५) तुर्य्यं—चतुर्थे, यामे—प्रहरे। वन्दी—स्तुतिपाठक।

अथाखौ चेष्टावर्णनमुखेन उषागमनं दार्थां सूचयमाह, पश्चादिति।—प्रबुद्धः,—उत्थित,—प्रबुद्ध इत्यर्थः, तुरङ्ग,—अश्व, पश्चादङ्घ्रिं—पश्चाद्भागस्थितपदद्वयमित्यर्थः, त्रिकस्य—पृष्ठवंशाधरस्य, ("पृष्ठवंशाधरे त्रिकम्" इत्यमर) नत्या विततं—विस्तृतं यथा तथा प्रसार्य्य—विस्तार्य्य अङ्गम्—अवयवम्, उच्चैः द्राघयित्वा दीर्घीकृत्य, आभुग्नकण्ठ,—नमितगलः सन् मुखम् उरसि वक्षसि, आसज्य—लग्नं कृत्वा, संयुज्य इत्यर्थः धूलिभि धूम्रा,—धूसरा इत्यर्थः सटा,—जटा, विधूय—कम्पयित्वा, घासग्रास—घासग्रासे, ग्रासे—कवलने, अभिलाष तस्मात् अनवरतं चलन—स्फुरन, प्रोथ—नासिका यस्य तादृश, ("प्रोथोऽस्त्री हयघोणायाम्" इति मेदिनी। "घोणा नासा च नासिका" इत्यमरं) तुण्ड—मुखं यस्य तथोक्त, ("तुण्डमाननं लपनं मुखम्" इत्यमर) मन्दं शब्दायमान,—शब्दं कुर्व्वन्, खुरेण क्ष्मा—भुवं, विलिखति—कुट्टयति। अत्र प्रातः शयनादचिरोत्थितस्य अश्वस्य कतिपयचेष्टितक्रियाया यथावद्वर्णनात् स्वभावोक्तिरलङ्कार। स्रग्धरा वृत्त,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणम् ॥ ५ ॥

कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण।
निद्राकण्डूकषायं कषति निबिडितश्रोत्रशुक्तिस्तुरङ्गः
त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥ ६ ॥

बाणस्तु तत् श्रुत्वा समुत्सृज्य निद्राम् उत्थाय प्रक्षाल्य वदनम् उपास्य भगवतीं सन्ध्याम् उदिते भगवति सवितरि गृहीतताम्बूलः तत्रैव अतिष्ठत्। अत्रान्तरे सर्वे अस्य ज्ञातयः समाजग्मुः परिवार्य च आसाञ्चक्रुः। असौ अपि (१२६) पूर्वोक्तेन विदिताभिप्रायः तेषां पुरो हर्षचरितं कथयितुम् आरेभे।

"श्रूयताम्,—

(१२७) अस्ति पुण्यकृताम् अधिवासो वासवावास इव

---

कुर्वन्निति।—तुरङ्गः,—अश्वः, निबिडिते—घनीभूते, सङ्कुचिते इत्यर्थः, श्रोत्रे—कर्णौ, शुक्ती इव—मुक्तास्फोटाविव यस्य तथोक्तः, तथा आभुग्नम्—आकुञ्चितं, पृष्ठं येन तथोक्तः, मुखस्य निकटे—सन्निधौ, कटिः,—मध्यभागः यस्य तथाभूतः, कन्धरां—ग्रीवाम्, आतिरश्चीम्—आभङ्गुरां, कुर्वन् कुटिलयन्, तुहिनकणमुचा—शिशिरबिन्दुवर्षिणा, चञ्चता—स्फुरता, केसरेण—सटाजालेन, आहन्यमानम्—सन्ताड्यमानं, निद्राकण्डू,—निद्राऽऽवेशजनितकण्डू, तया कषायं,—लोहितं तत् अक्ष्णः,—नेत्रस्य कोणं—प्रान्तं, त्वङ्गत्सु—स्फुरत्सु पक्ष्माग्रेषु—पक्ष्म एव लोमाग्रेषु, लग्नाः,—सक्ताः, प्रतनवः,—स्वल्पाः, बुसकणाः,—तुषकणाः, आरक्तीनकणास्तानि इत्यर्थं यत्र तत् यथा तथा, खुरेण कषति—घर्षयति। अश्वानामेतत् स्वभावः। स्रग्धरा वृत्तम् ॥ ६ ॥

(१२६) पूर्वोक्तेन—प्राक्सूचितार्थेन, पूर्वज्ञातवृत्तान्तेन इत्यर्थः, ("प्रक्रमः स्यादुपक्रमः। स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः) विदिताभिप्रायः,—विज्ञाताशयः।

(१२७) "अस्ति" इत्यस्य "श्रीकण्ठो नाम जनपदः" इत्यनेनान्वयः। तमेव विशिनष्टि, पुण्येत्यादिभिः।—पुण्यकृताम्—पुण्यशालिनाम्, ईशानाम्, अधिवासः,

वसुधाम् अवतीर्ण, सततम् (१२८) असङ्कीर्णवर्णव्यवहारस्थिति, (१२९) कृतयुगव्यवस्थ, (१३०) स्थलकमलबहलतया पीतोन्मूल्यमानमृणालै उद्गीतमदिनीभारगुणैरिव कृतमधुकरकोलाहलै हलै उल्लिख्यमानेव, (१३१) क्षीरोदपयःपायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततिभि निरन्तर, प्रतिदिशम् (१३२) अपूर्वपर्वतकैरिव खलधानधामभि

—आवासचैत्यम्। आसवासास इव—इन्द्रालय इव, स्वर्ग इव स्थितम्, वसुधा—पृथ्वीम्।

(१२८) असङ्कीर्णेति।—न सङ्कीर्णा,—सङ्करदोषेण असंसृष्टा इत्यर्थ वर्णाना—ब्राह्मणादीना व्यवहारा —आचारा स्थितय —मर्यादाश्च यत्र तयोक्त ।

(१२९) कृतेति।—कृतयुगस्येव—सत्ययुगस्येव व्यवस्था—नियम यत्र तथाभूत ।

(१३०) स्थलकमलबहलतया—स्थलपद्मप्राचुर्येण। पीतेति।—पीतम—मुखाग्रम् हलानामिति भाव ["हल मुखवती पुष" (२।२।१८३ पा०) इति पुधातो णत्व रूपम्। पीत्र चत्र मुखाग्रे च शूकरस्य हलस्य च" इति मेदिनी] उन्मूल्यमानानि—उत्खन्यमानानि मृणालानि च तयोक्तै अत एव उद्गीता —उच्चै कीर्तिता मादन्या सारा —उत्कृष्टा गुणा यै तथाभूतै। कृतेति।—कृता मधुकराणां कोलाहला च तानगै। हलै —लाङ्गल, उल्लिख्यमानानि—उत्खन्यमानानि क्षेत्राणि यस्य तयोक्त ।

(१३१) क्षीरोदेति।—क्षीरोदस्य—क्षीरसागरस्य पयांसि पिबन्ति इति तयोक्ता ये पयोदा —मेघा तै सिक्ता ताभिरिव माधुर्यातिशयात् क्षीरोदपयःपायिपुष्टता पुण्ड्रेक्षुवाटसन्ततिभि —पुण्ड्रेक्षूणाम—इक्षुविशेषाणा वाटसन्तय —इतिनिचया वेष्टनसमूहा इत्यर्थ ताभि ("वाटो मार्ग इतिस्थाने स्यात् कुटीवास्तुनो स्त्रियाम् इति मेदिनी) निरन्तर —अविच्छिन्न, नीरन्ध्र इत्यर्थ ।

(१३२) अपूर्वपर्वतकैरिव—अभिनवक्षुद्रगिरिभिरिव अपूर्वत्वन्तु सद्य एव तथा कल्पनादिति भाव्यम्। खलधानधामभि —खलेषु—शस्यमर्दनभूमिषु धानाय—स्थापनाय, रचनाय इत्यर्थं, धाम—स्थान येषा तै, यद्वा,—खलधान

विभज्यमानैः सस्यकूटैः सङ्कटसीमान्तः, समन्तात् (१३३) उद्घाटघटीसिच्यमानैः जीरकजूटैः जटिलितभूमिः, (१३४) उर्वरावरीयोभिः शालेयैः अलङ्कृतः, (१३५) पाकविशरारुराजमाषनिकरकिर्मीरितैश्च (१३६) स्फुटितमुद्गफलकोशीकपिशितैः गोधूमधामभिः स्थलीपृष्ठैः अधिष्ठितः, (१३७) महिषपृष्ठप्रतिष्ठितगायद्गोपालपालितैश्च (१३८) कीटपटललम्पटचटकानुसृतैः (१३९) अवटुघटितघण्टाघटीरटितरमणीयैः

—सस्यमर्दनस्थानमेव, खाम वेषा मे खलरचकैरित्यर्थः। विभज्यमानैः—विभागेन स्थाप्यमानैः, पृथक् पृथक् रक्ष्यमाणैः इत्यर्थः, सस्यकूटैः—धान्यादिसस्यराशिभिः, सङ्कटसीमान्तः,—व्याकीर्णसीमाभागः।

(१३३) उद्घाटेति।—उद्घाटघटीभिः,—घटयन्त्रैः इत्यर्थः, सिच्यमानानि—आर्द्रीक्रियमाणानि तैः। जीरकजूटैः,—जीरकसमूहैः, जटिलिता—समाकीर्णा, भूमिः यत्र तथोक्तः।

(१३४) उर्वरेति।—उर्वरा—सर्वसस्याढ्या भूः, तया वरीयांसि—श्रेष्ठानि, बहुफलानि इत्यर्थः तैः, शालेयैः,—धान्यविशेषसमूहैः शालिक्षेत्रैः वा, अलङ्कृतः,—परिशोभितः।

(१३५) पाकेति।—पाकेन विशरारवः—स्फुटनाः, विशरारुत्वं युगपत्पाकस्वभावात्, राजमाषाणां—तदाख्यकलायविशेषाणां, निकरैः,—वृन्दैः, किर्मीरितानि—शबलानि तैः।

(१३६) स्फुटितेति।—स्फुटितानां—पाकेन विदीर्णानां, मुद्गफलानां—तदाख्यकलायभेदानां, कोशीभिः,—शिम्बिकाभिः, कपिशितानि—पिङ्गलानि तैः। गोधूमधामभिः,—गोधूमशालिभिः इत्यर्थः, स्थलीपृष्ठैः,—अकृत्रिमभूतलैः, अधिष्ठितः,—समन्वितः।

(१३७) महिषेति।—महिषाणां पृष्ठेषु प्रतिष्ठिताः,—आरूढाः इत्यर्थः, गायन्तः गोपालाः, तैः पालितानि—रक्षितानि तैः।

(१३८) कीटेति।—कीटानां—क्षुद्रप्राणिभेदानां, पटलेषु—वृन्देषु, भोजनार्थम् अन्वेषणेषु इति भावः, लम्पटाः,—लुब्धाः, ये चटकाः,—क्षुद्रपक्षिभेदाः, तैः अनुसृतानि—अनुगतानि तैः।

(१३९) अवटेति।—अवटुः,—घाटा, ग्रीवापश्चाद्भाग इत्यर्थः, ("अवटु-

अटद्भिः अटवीं (१४०) हरहृषभपीतम् आमयशङ्कया बहुविभक्तं चौरोदमिव चीरं चरद्भिः (१४१) वाष्पच्छेद्यतृणवनैः गोधनैः धवलितविपिनैः, (१४२) विविधमखहोमधूमान्धप्रतमन्युमुक्तैः लोचनैरिव सहस्रसङ्ख्यैः कृष्णसारैः शारीकृतोद्देशैः, (१४३) धवलधूलीमुचां केतकीवनानां रजोभिः पाण्डुरीकृतैः प्रमथोद्धूलनधूसरैः शिवपुरस्येव प्रवेशैः प्रदेशैः उपशोभितः,

---

घोटा कुचाटिका" इत्यमरः) तत्र घटिता—योजिता, या घण्टाघटी—घण्टाकपः घट्टघटः, [ "तादर्थ्याख्यायाम्" (४।१।४१ पा०) इति अन्यार्थे ङीपि रूपम् ] तस्या रटितेन—निनादेन, रमणीयानि—चारूणि, मनोज्ञानि इत्यर्थः तैः। अटद्भिः,—चरद्भिः।

(१४०) हरेति।—हरस्य—शिवस्य, हृषभेण पीतम्, आमयशङ्कया—अजीर्णरोगसम्भावनया, बहुतरदुग्धपानेन अजीर्णं सम्भवति इति भावः। [ "आमयशङ्कया" इत्यत्र "आमयाशङ्कया" इति पाठान्तरम् ]। चौरोदमिव—चीरसागरं समग्रमिव, बहुविभक्तं—बहुधा विभज्य स्थापितम् इत्यर्थः।

(१४१) वाष्पेति।—वाष्पेण—लौहनिर्मितेन अस्त्रविशेषेण, "बाणे" इति बङ्गभाषाप्रसिद्धेन, छेद्यानि, यद्वा,—वाष्पेण—ऊष्मणा, ईषदातपेनेत्यर्थः, छेद्यानि—नाश्यानि इत्याशयः, अतिकोमलतया ईषदातपेनापि म्लानतां गन्तुमर्हाणि इति भावः, यानि तृणानि, तैः हृतानि—लुण्ठितानि तैः। गोधनैः,—गाव एव धनानि तैः। धवलितानि—श्वेतीकृतानि, विपिनानि—वनानि यस्य तथोक्तः।

(१४२) विविधेति।—विविधानां—बहुप्रकाराणां, मखानां—यज्ञानां, होमधूमैः अन्धानि—दर्शनव्यापाररहितानि, अत एव प्रतमन्युना—इन्द्रेण, मखाहृतेन इति भावः, मुक्तानि—परित्यक्तानि तैः, लोचनैः,—नयनैरिव, सहस्रसङ्ख्यैः कृष्णसारैरेव इति भावः; अन्यत्र,—सहस्रसङ्ख्यैः,—प्रभूतैरित्यर्थः, कृष्णसारैः,—मृगाख्यैः मृगैः, शारीकृतोद्देशैः,—चित्रितप्रदेशैः।

(१४३) धवलधूलीमुचां—श्वेतरजोमुचां, केतकीवनानां रजोभिः,—परागैः, पाण्डुरीकृतैः,—पाण्डुतां नीतैः, अत एव प्रमथानां—शिवपारिषदानां भूतवर्गाणाम्, उद्धूलनेन—लुण्ठनेन, धूसराः,—ईषत्पाण्डुवर्णाः, उद्धूतरजस्त्वादिति भावः तैः, ("ईषत्पाण्डुस्तु धूसरः" इत्यमरः)। शिवपुरस्येव—शिवालयस्येव, प्रविश्यते एभिरिति प्रवेशाः,—मार्गाः तैः।

(१४४) शाककन्दलश्यामलितग्रामोपकण्ठकाश्यपीपृष्ठैः, पदे पदे (१४५) करभपालीभिः पीलुपल्लवप्रस्फोटितैः करपुटपीडितमातुलुङ्गीदलरसोपलिप्तैः (१४६) स्वेच्छाविचितकुङ्कुमकेसररचितपुष्पप्रकरैः (१४७) प्रत्यग्रफलरसपानसुखसुप्तपथिकैः (१४८) वनदेवतादीयमानामृतरसप्रपागृहैरिव द्राक्षामण्डपैः, (१४९) स्फुरत्फलानाञ्च बीजलग्नशुकचञ्चुरागाणामिव (१५०) समारूढकपिकुलकपोलसन्दिह्यमानकुसुमानां दाडि-

(१४४) शाकेति।—शाकानाम्—"सेगुन" इत्याख्यवृक्षविशेषाणाम्, कन्दलेन—अभिनवेन अङ्कुरेण, ("कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनी) श्यामलिता श्यामायिता उपकण्ठाः,—प्रान्तभागा यस्य तथोक्तम्, काश्यपीपृष्ठम्—भूतलं यस्य तथाभूतम्। ("भूर्भूमि ।·काश्यपी क्षितिः" इत्यमरः)।

(१४५) करभपालीभिः,—करभाः,—उष्ट्रशिशवः, तेषां पाल्यः,—रक्षयित्र्यः ताभिः। ["इत्थंभूतलक्षणे" (२।३।२१ पा०) इति तृतीया] पीलुपल्लवानाम्—पीलूनाम्—"झाड़बेर" इति प्रसिद्धानां वृक्षभेदानाम्, पल्लवाः,—किसलयाः, करभभक्ष्या इति भावः, तेषां प्रस्फोटितैः—प्रस्फोटनैः, भञ्जनमित्यर्थः यत्र तादृशैः। करपुटेति।—करपुटे पीडितानाम्—मर्दितानाम् इत्यर्थः, मातुलुङ्गीदलानाम्—मातुलुङ्गी नाम जम्बीरवृक्षभेदः, "मधुकुक्कुटी" वा "कोलङ्ग" इति वङ्गभाषया प्रसिद्धा, तस्याः दलानि—पल्लवाः, तेषां रसैः—द्रवैः, उपलिप्तानि—प्रलिप्तानि तैः।

(१४६) स्वेच्छेति।—स्वेच्छया विचिताः,—चयिताः, कुङ्कुमानां केसराः,—किञ्जल्काः, तैः कृतः,—रचितः, पुष्पाणां प्रकरः,—राशिः येषु तथोक्तैः।

(१४७) प्रत्यग्रेति।—प्रत्यग्राणि—अभिनवानि, फलानि, तेषां रसपानेन सुखसुप्ताः पथिकाः,—अध्वगाः येषु तथाभूतैः।

(१४८) वनेति।—वनदेवताभिः दीयमानानि अमृतरसानाम् प्रपागृहाणि—पानीयशालाः तैरिव, ("प्रपा पानीयशालिका" इत्यमरः)। द्राक्षामण्डपैः,—द्राक्षालतावेष्टितगृहैः।

(१४९) स्फुरन्ति—विकसन्ति, फलानि यासां तासाम्। बीजेति।—बीजेषु लग्नाः,—सक्ताः, शुकानाम्—तदाख्यपक्षिभेदानाम्, चञ्चुरागाः,—चञ्चुलौहित्यानि येषां तथाभूतानामिव।

(१५०) समारूढेति।—समारूढानाम् कपिकुलानाम्—वानरवृन्दानाम्, कपोलैः,

मीनां वने विलोभनीयोपनिर्गमः, (१५१) वनपालपीयमान-नारिकेलरसासवैः (१५२) पथिकलोकलुप्यमानपिण्डखर्जूरैः (१५३) गोलाङ्गूललिह्यमानमधुरामोदपिण्डीरसैः (१५४) चकोर-चञ्चुजर्जरितारुष्कैः उपवनैः अभिरामः, (१५५) तुङ्गार्जुनपाली-परिवृतैः (१५६) गोकुलावतारकलुषितकूलकीलालैः अध्वग-शतशरण्यैः अरण्यधरावन्धैः अवन्ध्यवनरम्यः, (१५७) करभीय-

---

—मकरन्दैः, [ "कपिलादि—" ( उ० १ पा० ६७ सू० ) इत्यादिना षोत्वं कथम् ] सन्दिह्यमानानि—संशय्यमानानि उह्यमानीति भाव, कुसुमानि यासां तासां तथोक्तानाम्। विलोभनीयोपनिर्गमः —विलोभनीयाः,—विशेषेण दर्शनीयाः, उपनिर्गमाः,—निर्गमन-मार्गाः, "उद्यानानि" इति केचित् यस्य तथाभूतः।

(१५१) वनेति।—वनपालैः,—उद्यानरक्षिभिः, पीयमानाः,—आस्वाद्यमानाः, नारिकेलानां रसाः —जलान्येव, आसवाः —मद्यानि येषु तथोक्तैः।

(१५२) पथिकेति।—पथिकलोकैः,—पान्थनिवहैः, लुप्यमानानि—गृह्यमाणानि, अपचयेन अदृश्यता नीयमानानीत्यर्थः, पिण्डखर्जूराणि येषु तथोक्तैः।

(१५३) गोलाङ्गूलेति।—गोलाङ्गूलैः,—कृष्णमुखकपिभेदैः, लिह्यमानः,—आस्वाद्यमानः, मधुरः,—स्वादुः, आमोदपिण्डीरसः,—सुरभिपिण्डखर्जूरविशेषरसः येषु तैः।

(१५४) चकोरेति।—चकोराणां—पक्षिभेदानां, चञ्चुभिः जर्जरितानि आरुष्काणि—"भालुकीखारा" इत्याख्यफलविशेषाणि येषु तथोक्तैः, उपवनैः,—उद्यानैः, अभिरामः —मनोहरः।

(१५५) तुङ्गेति।—तुङ्गाभिः,—उन्नताभिः, अर्जुनपालीभिः,—ककुभाख्यवृक्ष-श्रेणीभिः, परिवृताः —वेष्टिताः तैः।

(१५६) गोकुलेति।—गोकुलानां—गोवृन्दानाम्, अवतारेण—अवतरणेन, कलुषितानि—आविलीभूतानि, कूलकीलालानि—तीरस्थितजलानि येषां तैः। ( "सलिलं कमलं जलम्। पयः कीलालम् ··" इत्यमरः )। अध्वगशतशरण्यैः,—पथिकशतपरित्रायिभिः, अरण्यधरावन्धैः,—वन्यजलाशयैः। अवन्ध्यानि—सफलानि, अपव्यीभूतानीति यावत्, वनरम्याणि—वनाभ्यन्तरभागाः यस्य तथाभूतः।

(१५७) करभीयेति।—करभेभ्यः,—उष्ट्रशावकेभ्यः हिताः करभीयाः, ई

कुमारकपाल्यमानैः घोट्टकैः घौरभ्रैश्च कृतसम्बाधं, दिशि दिशि (१५८) रविरथतुरगविलोभनायेव (१५९) विलोडनमृदितकुङ्कुमस्थलीरससमालब्धानाम् उत्प्रोथपुटैः उन्मुखैः (१६०) उदरशायिकिशोरकजवजननाय प्रभञ्जनमिव च आपिबन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां वडवानां वृन्दैः विचरद्भिः आचितं, (१६१) अनवरतक्रतुधूमान्धकारप्रहतैः हंसयूथैरिव वाष्पैः धवलितभुवनं,

---

कुमारकाः,—पशुपालकशिशव इत्यर्थः, तैः पाल्यमानाः,—रक्ष्यमाणा ते। घोट्टकैः,—घोटकानां समूहैः। घौरभ्रैः,—मेषनिचयैः, [ "गोत्रोक्षोष्ट्रोरभ्र—" (४।२।३९ पा०) इत्यादिना वुञि रूपम्। "मेण्ढोरभ्रोरणोर्णायुमेषवृष्णय एडके" इत्यमरः। "घौरभ्रैः" इत्यत्र "घौरभ्रकैः" इति पाठोऽपि स एवार्थः ]। कृतसम्बाधं,—समाकीर्णम्।

(१५८) रवीति।—रवेः—सूर्यस्य, रथे ये तुरगाः—अश्वाः तेषां विलोभनम्—अनुरागप्रकटनेन लोभप्रदर्शनं तस्मै इव।

(१५९) विलोडनेति।—विलोडनेन—विदलनेन, [ "विलोडन—" इत्यत्र "विलोठन—" इति पाठे,—विलोठनेन—भूमौ इतस्ततः शरीरपरिचालनेन इत्यर्थः ] मृदिता—मर्द्दनं नीता, या कुङ्कुमस्थली—कुङ्कुमोत्पत्तिभूमिः तस्याः रसेन—द्रवेण, समालब्धाः,—अनुलिप्ताः तासाम्। उत्प्रोथपुटैः,—उत्—उन्नतानि, प्रोथपुटानि—नासापुटानि येषां तादृशानि तैः। उन्मुखैः—ऊर्द्ध्वमुखैः।

(१६०) उदरशायीति।—उदरशायिनाम्—गर्भस्थितानाम्, किशोरकाणां—शावकानाम्, [ "बाल किशोर" इति अश्वप्रकरणे अमरः। बालः,—अश्वशिशुरित्यर्थः ] जवजननाय—वेगवर्द्धनाय इत्यर्थः, प्रभञ्जनमिव—वायुमिव। आपिबन्तीनां—आदधतीनाम्, कुक्षौ धारयन्तीनामिति यावत् वातहरिणीनामिव—वातमृगीणामिव समीरणाभिमुखं धाविनीनां मृगीणामिवेति यावत्, स्वच्छन्दचारिणीनां—स्वेच्छया चरन्तीनां वडवानाम्—अश्वानाम्। ("वाम्यश्वा वडवा" इत्यमरः) आचितं—व्याप्तम्, [ आङ्पूर्वक चिञः "निष्ठा" (३।२।१०२ पा०) इति कर्मणि क्तः ]।

(१६१) अनवरतेति।—अनवरताः,—अविरताः, क्रतूनां—यज्ञानां, धूमा एव अन्धकाराः, तेषु प्रहताः,—जाताः तैः, धूमपदैः—धूमेन अन्धकारः, तस्मात् प्रहतैः,—पलायितैः, इतस्ततः धावमानैरित्यर्थः, वाष्पैः,—प्रश्वासजन्यधूमैः,

(१६२) सङ्गीतगतमुरजरवमत्तैः मयूरैरिव विभवैः मुखरितजीवलोकः, शशिकरावदातवृत्तैः मुक्ताफलैरिव गुणिभिः प्रसाधितः, (१६३) पथिकशतविलुप्यमानस्फीतफलैः महातरुभिरिव सर्व्वातिथिभिः अभिगमनीयः, (१६४) मृगमदपरिमलवाहिमृगरोमाच्छादितैः हिमवत्पादैरिव महत्तरैः स्थिरीकृतः, (१६५) प्रोद्दण्ड-

---

धवलितेति।—धवलितानि—श्वेतीकृतानि, भुवनानि—महिमा यस्य तथोक्तः। [ "भुवन" इत्यत्र "भवन" इति पाठे,—भवनानि—गृहाणि इत्यर्थः ] "भूतान्धकारग्रस्ते चास्मिन् धवलितभुवन" इति विरोधप्रतीतिः। इत्यासामन्धकारग्रस्तत्वन्तु तमसि प्रभावात् ज्ञेयम्।

(१६२) सङ्गीतेति।—सङ्गीतेषु—विलम्बनिषादादिसप्तस्वरान्वितेषु इत्यर्थः, गतानां—स्थितानां, मुरजानां—मृदङ्गानां, रवैः—ध्वनिना, मत्ताः,—मादकजनकाः; इति यावत्, उल्लासिताश्च तैः। विभवैः,—सम्पद्भिः। मुखरितः—सततशब्दित इति भावः, नादितश्च, जीवलोकः,—प्राणिवर्गः, जनलोकावकाशश्च यस्य तथोक्तः। ( "लोकस्तु भुवने जने"इत्यमरः ) शशिकरेति।—शशिनः,—चन्द्रस्य, कराः,—किरणाः, तद्वत् अवदातानि—विशदानि, निर्म्मलानि इति यावत् वृत्तानि—चरितानि येषाम्, अन्यत्र,—शशिकरवत् अवदातानि—स्वच्छानि, वृत्तानि—वर्त्तुलानि तैः। गुणिभिः,—विद्याविनयशालिभिः, सूत्रवद्भिश्च। प्रसाधितः,—अलङ्कृतः।

(१६३) पथिकेति।—पथिकशतैः,—पान्थैः, तस्करशतैः इत्यर्थः, विलुप्यमानानि—चौर्य्यमाणानि, स्फीतानि—प्रभूतानि, फलानि—धनानि येषां तथाभूतैः, अन्यत्र,—पथिकानाम्—अध्वगानां, शतैः विलुप्यमानानि—गृह्यमाणानि, भक्षणेन अङ्गुष्ठतां नीयमानानि इत्यर्थः, स्फीतानि—प्रभूतानि, फलानि येषां तैः। अभिगमनीयः,—आश्रयणीयः।

(१६४) मृगेति।—मृगमदस्य—कस्तूरिकायाः, परिमलवाहिभिः,—सौरभशालिभिः, मृगरोमभिः,—राङ्कवेति ख्यातान्तरे कस्तूरीमृगरोमनिर्म्मितैः वस्त्रैः इति यावत्, ( "राङ्कवं मृगरोमजम्" इत्यमरोक्तेः ) आच्छादितैः,—कृतगात्रावरणैः, अन्यत्र,—तथाविधमृगरोमावृतैः, हिमवत्पादैरिव—हिमाद्रेः प्रत्यन्तपर्वतैरिव, ( "पादाः प्रत्यन्तपर्वताः" इत्यमरः ) महत्तरैः,—अतिमहद्भिः लोकैः, वृद्धैर्वा, अन्यत्र,—प्रकाण्डैः, स्थिरीकृतः—आश्वासितः।

(१६५ ... ) ...ेति।—प्रकर्षेण उद्गताः दण्डाः,—नाला येषां तानि,

सहस्रपत्त्रोपविष्टद्विजोत्तमैः नारायणनाभिमण्डलैरिव तोयाशयैः मण्डितः, (१६६) मथितपयःप्रवाहप्रक्षालितक्षितिभिः क्षीरोदमथनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः।

(१६७) यत्र त्रेताग्निधूमाश्रुपातजलक्षालिता इव क्षयीयन्त कुदृष्टयः। (१६८) पच्यमानचयनेष्टकादहनदग्धानीव न प्रदृश्यन्त दुरितानि। (१६९) छिद्यमानयूपदारु-

---

सहस्रपत्त्राणि—कमलानि, पत्राणि कमलपत्त्राणि च, तेषु उपविष्टा द्विजोत्तमाः—हंसकुला पक्षिणः, ब्राह्मणाश्च येषु तथाभूतैः, तोयाशयैः—जलाशयैः, सरोभिरित्यर्थः; अन्यत्र,—तोयमेव आशयः,—आधारः, स्थानमित्यर्थः येषां तैः, नारायणस्य समुद्रशायित्वात्, मण्डितः,—सुशोभितः।

(१६६) मथितेति।—मथितानाम्—निर्जलतक्राणाम् ("मथितं पुंसि। क्षीरे निर्जलघोले स्यात् विघालोडितदृष्टयोः" इति मेदिनी) पयसाम्—दुग्धानाम्, प्रवाहेण—धारया, अथवा,—मथितेन—विलोडितेन, पयसा—दुग्धेन, प्रवाहेण—स्रोतसा, प्रक्षालिता—धौता, क्षितिः,—भूभागो यैः तथोक्तैः। महाघोषैः,—महद्भिः घोषैः,—आभीरपल्लीभिः, ("घोष आभीरपल्ली स्यात्" इत्यमरः) अन्यत्र,—महाघोषैः—महाशब्दैश्च, पूरिताः—व्याप्ताः, आशाः—आकाशाः, आशाः,—दिशश्च यत्र तथोक्तः, ("आशा तृष्णा दिशी स्त्रियाम्" इति मेदिनी)।

(१६७) यत्रेत्यादि।—त्रेता—"दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता" इत्युक्तलक्षणम् अग्नि त्रेताग्नि, अत्र प्रत्यक्षाधिगम्यत्वात् त्रेतेति पदे बोद्धव्यं, त्रेताग्निस्त्रयोऽग्निरित्यर्थः, तस्य धूमेन योऽश्रुपातः,—पतितम् अश्रु इत्यर्थः, स एव जलम्—सलिलं, तेन क्षालिता इव—धौता इव, क्षयिता इव इति भावः, कुदृष्टयः,—कुत्सिता दृष्टयः,—वेदविरुद्धानि शास्त्राणि, दृष्टिदोषाश्च, क्षयीयन्त—क्षयम् अगच्छन्।

(१६८) पच्यमानेति।—पच्यमान—दह्यमान, चयन—चित्या, "पाँजा" इति बङ्गभाषा, तस्या चयाभूतानाम्, इष्टकानाम्—दह्यमानानामिति भावः, दहनेन—सन्तापेन दग्धानि इव—भस्मीकृतानि इव। दुरितानि—पापानि। एतेन पक्वेष्टकानिर्मितहर्म्यवासिविलासिसङ्घावेऽपि न पापे प्रवृत्तिरिति भावः।

(१६९) छिद्यमानेति।—छिद्यमानानि—कल्प्यमानानि, यूपाय दारूणि यैः

परशुपाटित इव व्यदीर्यत अधर्मः। (१७०) मखशिखिधूमजलधरधाराधौत इव ननाश वर्णसङ्करः। (१७१) दीयमानानेकगोसहस्रशृङ्गखण्ड्यमान इव अपलायत कलिः। (१७२) सुरालयशिलाघट्टनटङ्कनिकरनिकृत्ता इव व्यशीर्यन्त विपदः। (१७३) महादानविधानकलकलाभिद्रुता इव प्राद्रवन् उपद्रवाः। (१७४) दीप्यमानसत्रमहानससहस्रसन्तापिता इव व्यलीयन्त व्याधयः।

---

तथाभूतैः, परशुभिः,—कुठारैः, पाटित इव—कर्त्तित इव, अधर्मः,—पापं व्यदीर्यत—विदीर्णं अभूत्।

(१७०) मखेति।—मखानां—यज्ञानां, शिखिनः,—अग्नयः, तेषां धूमाः, त एव ये जलधराः,—मेघाः, उत्पन्ना इति भावः, तदुक्तं महाकविना कालिदासेन,—"धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः" इति, तेषां धाराभिः—वृष्टिभिः, धौत इव—क्षालित इव। वर्णसङ्करः,—वर्णानां—ब्राह्मणक्षत्रियवैश्यशूद्राणां, सङ्करः,—प्रातिलोम्येन सन्तानोत्पादनम्, ननाश,—तिरोहितवान्, ब्राह्मणादीनां मिश्रणेनोत्पन्न-चण्डालादिवर्ण इति भावः, तादृशो हि वर्णो मेघधाराधौत अवश्यमेव नश्यति।

(१७१) दीयमानेति।—दीयमानानाम् अनेकेषां—प्रभूतानां, गोसहस्राणां शृङ्गैः खण्ड्यमान इव—छिद्यमान इव, ताड्यमान इवेति यावत्, कलिः,—चतुर्थं युगम्, अपलायत—अदृश्यं गतवान्।

(१७२) सुरेति।—सुरालयेषु—देवमन्दिरेषु, याः शिलाः,—प्रस्तराः, तासां घट्टने—योजने, ये टङ्कनिकराः—पाषाणदारणास्त्रनिवहाः, ("टङ्कः पाषाणदारणः" इत्यमरः) तैः निकृत्ता इव—खण्डिता इव व्यशीर्यन्त—व्यचूर्णन्त।

(१७३) महादानेति।—महादानानां—भूम्यादिदानानामित्यर्थः, विधाने—अनुष्ठाने, यः कलकलः—कोलाहलः, तेन अभिद्रुता इव—ताडिता इव। उपद्रवाः,—अनिष्टपाताः, प्राद्रवन्—अपलायन्त, दानेन च महोपद्रवशान्तिः भवति इति भावः।

(१७४) दीप्यमानेति।—दीप्यमानानां—प्रज्वलतां, सत्राणां—सदा दानानां, तदर्थं निकेतनानामिति भावः, सत्रेषु वा ("सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च" इत्यमरः) महानसानां—रन्धनशालानां, महानससहस्रचुल्लीनामिति यावत् ('रसवत्यां

(१७५) वृषविवाहप्रहतपुष्पपटहपटुरवत्रासिता इव न उपासर्पन् अपमृत्यवः। (१७६) सन्ततब्रह्मघोषबधिरीकृता इव अपजग्मुः ईतयः। (१७७) धर्म्माधिकारपरिभूतमिव न प्राभवत् दुर्दैवम्।

(१७८) तत्र चैवंविधे नानारामाभिरामकुसुमगन्धपरिमला-भोगसुभगो यौवनारम्भ इव भुवनस्य, कुङ्कुममलनपिञ्जरितवक्षु-

---

पाकस्थान-महानसे" इत्यमरः) सहर्षं,—प्रचुरसङ्गार्कं इति यावत्, समापिता इव—दग्धा इव, अभिभूता इव इत्यर्थं, व्याधयः,—रोगाः।

(१७५) वृषेति।—वृषस्य विवाहः,—वृषोत्सर्गः, यत्र चतसृभिः वत्सतरीभिः समुत्सृष्टो वृषः स्वैरविहारी भवति, तत्र प्रहतस्य—ताडितस्य, पुष्पपटहस्य—चम्पोप-कस्य, पटुना—तारेण रवेण—नादेन, त्रासिता इव—भीषिता इव। न उपासर्पन् —नापतन्। केचित्तु "वृषोऽत्र नीलवृषः, 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥' इत्युक्तलक्षणः, तस्य विवाहः,—उत्सर्ग इत्यर्थः।" तादृशवृषोत्सर्गेऽपि अपमृत्युनिवारकत्वम् अपि इति व्याचक्षते।

(१७६) सन्ततेति।—सन्ततेन—अविरतेन ब्रह्मघोषेण—वेदध्वनिना, बधिरीकृता इव—श्रवणशक्तिरहितीकृता इव, ईतयः,—शस्योपघातकाः, "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥" इत्युक्ताः षट्। ब्रह्मघोषेणासां तथा बधिरत्वं जायते, यथा प्रस्तोऽपसरणवार्ताम् अपि न श्रोतुं शक्नुवन्तीति भावः।

(१७७) धर्म्मेति।—धर्म्माधिकारः,—विचारालयः, तेन परिभूतम् इव—तिरस्कृतम् इव, दुर्दैवस्य विपद्धेतुत्वेऽपि धर्म्माधिकारविचारेण लोकानां तदपनयनादिति भावः।

(१७८) "तत्र" इत्यस्य "स्थाण्वीश्वराख्यो जनपदः" इत्युत्तरेणान्वयः। तत्र—जनपदे। नानेति।—नानाऽऽरामाणां—बहूनाम् उपवनानाम् अभिरामाणि—मनोहराणि, कुसुमानि, अन्यत्,—नाना रामा,—बह्व्यो वनिताः, अभिराम-कुसुमानि इव, तेषां गन्धस्य—सौरभस्य परिमलः,—सम्मर्दनामोदः, तस्य आभोगः,—अनुभवः, तेन सुभगः,—रम्यः, यद्वा,—नानारामाभिरामकुसुमानां गन्धानां—कृष्टचन्दनकुङ्कुमादीनाञ्च, परिमलेन—जनमनोहरेण सौरभेण, य आभोगः,—सत्कारः, तेन सुभगः,—रमणीयः। कुङ्कुमेति।—कुङ्कुमानां मलनेन—कर्दमेन, पिञ्ज-

महिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य, (१७९) मरुदुद्धूयमानचमरीबालव्यजनधवलितप्रान्तः एकदेश इव सुरराज्यस्य, (१८०) ज्वलनमखशिखिसहस्रदीप्यमानदशदिगन्तः शिबिरसन्निवेश इव कृतयुगस्य, (१८१) पद्मासनस्थितब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमः प्रथमोऽवतार इव ब्रह्मलोकस्य, (१८२) कलकलमुखरमहावाहिनीशतसङ्कुलो विक्षेप इव उत्तरकुरूणाम्, (१८३) ईश्वरमार्गणसन्तापानभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य,

---

कुङ्कुमानुलेपनेन इत्यर्थः, ("मण्डनं पट्टवासे ना कर्दमे तु नपुंसकम्" इति मेदिनी) विलसिता,—विलसिता, रञ्जिता इत्यर्थः, यद्वा महिष्यः,—कृताभिषेकाः राजभार्याः, उतथा महिषाय तासां सहस्रेण शोभितः —अलङ्कृतः ।

(१७९) मरुदिति।—मरुता —वायुना, देवैश्च, ("मरुतौ पवनामरौ" इत्यमरः) तैः उद्धूयमानाः —सञ्चाल्यमानाः, चमरीणां बालाः,—पुच्छलोमान्येव, व्यजनानि, तैः धवलिताः —श्वेतीकृताः प्रान्ताः —पर्यन्तभागाः यस्य तथोक्तः ।

(१८०) ज्वलदिति।—ज्वलतां मखशिखिनां—यज्ञाग्नीनां, सहस्रैः दीप्यमानाः दश दिगन्ताः यस्य तथाभूतः । शिबिरसन्निवेश इव—कटकदेश इव। कृतयुगस्य—सत्ययुगस्य ।

(१८१) पद्मेति।—पद्मासनेषु स्थिता ये ब्रह्मर्षयः, यद्वा—पद्मम् एव आसनं पद्मासनं, तत्र स्थितो ब्रह्मा एव ऋषिः, यद्वा—ब्रह्मा च ऋषयश्च तैः ध्यानेन—समाधिना आधीयमानः,—क्रियमाणः सकलानां—समस्तानाम्, अकुशलानाम्—अमङ्गलानां, प्रशमः —शान्तिः येन तथाभूतः ।

(१८२) कलकलेति।—कलकलैः —शब्दविशेषैः, मुखराः,—नदन्त्यः, महत्यः वाहिन्यः —नद्यः, सेनाश्च, तासां शतेन सङ्कुलः,—आकीर्णः, उत्तरकुरूणाम्—उत्तराः कुरवः,—मेरुसन्निहितदेशवासिनः तेषां, विक्षेप इव—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायेन विक्षिप्तोत्तरकुरुप्रदेश इवेत्यर्थः । ["विक्षेप इव" इत्यत्र "विपक्ष इव" इति पाठः,—प्रतिद्वन्द्वी इव, उत्तरकुरुप्रदेशानामिति भावः ।

(१८३) ईश्वरेति।—ईश्वरस्य—हरस्य, राज्ञश्च, मार्गणैः,—शरैः, याच्ञया दर्शनार्थप्रार्थनैश्च, यः सन्तापः,—क्लेशः, तस्य अनभिज्ञाः सकलाः जनाः यस्मिन् तथा

(१८४) सुधारसमिश्रधवलशटङ्कपङ्क्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य, (१८५) मधुमत्तमत्तकाशिनीभूषणरवभरितभुवनो नामाभिहार इव कुबेरनगरस्य स्थाण्वीश्वराख्यो जननिवेशः।

(१८६) यः तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, सङ्गीतशालेति लासकैः, यमनगरमिति शत्रुभिः, (१८७) चिन्तामणिभूमिरिति अर्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिः, गुरुकुलमिति विद्यार्थिभिः, (१८८) गन्धर्वनगरमिति गायनैः, विश्वकर्ममन्दिरमिति विज्ञानिभिः,

---

मत। त्रिपुरस्य—त्रयाणां पुरां समाहारः त्रिपुरं—मयदानवनिर्मितम् अन्तरीक्ष-स्थितं पुरत्रयमित्यर्थः तस्य। पुरा ईश्वरेण सलीलमेव त्रिपुरमस्य ज्वालया दग्धमिति पुराणम्।

(१८४) सुधेति।—सुधारसैः—लेपनद्रवैः चूर्णद्रवैरित्यर्थः अवसेकैः, ("सुधा लेपोऽमृतं स्नुही" इत्यमरः) मिश्राणां—मिश्रणानामित्यर्थः धवलशटङ्कानां पङ्क्तिभिः—राजिभिः पाण्डुरः—धवलः। प्रतिनिधिरिव—प्रतिकृतिरिव।

(१८५) मधुमत्तेति।—मधुना—मद्यपानेन, मत्ताः—हृष्टाः याः मत्तकाशिन्यः,—उत्तमाङ्गनाः यद्वाश्च तासां भूषणरवैः,—अलङ्कारशब्दैः, भरितम्—आपूरितं, भुवनं यत्र तथाभूतः। नामाभिहार इव—पर्यायान्तरमिव इत्यर्थः। स्थाण्वीश्वराख्यः—स्थाण्वीश्वरस्य आख्या यत्र तथाभूतः स्थाण्वीश्वर इति आख्या यस्य तथाभूत इति वा। [ 'जनाश्रयः' इत्यत्र "जनपदविशेषः" इति पाठान्तरम् ]।

(१८६) य इत्यादि।—तपोवनम्—निरन्तरधर्मानुशीलनादिति भावः। कामायतनम्—विलासप्राचुर्यादिति भावः। सङ्गीतशाला—गान्धर्वविद्याऽनुशीलनातिशय्यादिति भावः। लासकैः—नटैः। यमनगरम्—भयजनकत्वादिति भावः।

(१८७) चिन्तामणिभूमिः,—वाञ्छितार्थप्राप्तिदेशम् अनवरतदानधर्मप्रचारात् इति भावः, [ "भुवः क्षितः" (उ० ४ पा० ४५ सू०) इति भिप्रत्यये रूपम् ]। वीरक्षेत्रम्—वीरोत्पत्तिभूमिरित्यर्थः, साहसिपुरुषभूयस्त्वात् इति भावः। गुरुकुलम्—आचार्यगृहं सततविद्याऽनुशीलनात् इति भावः।

(१८८) गन्धर्वनगरम्—सततसङ्गीतप्रचारादिति भावः। गायनैः—गायकैः। विश्वकर्ममन्दिरम्—शिल्पविद्याप्राचुर्यात् इति भावः।

(१८९) लाभभूमिरिति वैदेहकैः, द्यूतस्थानमिति भागार्थिभिः, साधुसमागम इति सद्भिः, (१९०) वज्रपञ्जरमिति शरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, (१९१) असुरविवरमिति वातिकैः, शाक्याश्रम इति श्रमिभिः, (१९२) अप्सरःपुरमिति कामिभिः, महोत्सवसमाज इति चारणैः, वसुधारेति विप्रैः अदृश्यत।

(१९३) यत्र च मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो

---

(१८९) लाभभूमिः,—उपार्जनस्थानम्, बहुविधवस्तूनां व्यवहारात् इति भावः। वैदेहकैः,—वणिग्भिः, ("वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः)। द्यूतस्थानम्—द्यूतं—देवनम्, पाशकक्रीडेति यावत्, तस्य स्थानम्। भागार्थिभिः—भागः,—भाग्यं तदर्थिभिः—तदभिलाषिभिः, भाग्यदैवेन सौभाग्यलिप्सुभिः इति यावत्। ["भागार्थिभिः" इत्यत्र "वन्दिभिः" इति पाठं परिकल्प्य केचित् "द्यूतस्थानमिति साधुभागो दीयते तत्र वन्दिभ्यः" इति व्याचख्युः]।

(१९०) वज्रपञ्जरः—वज्रनिर्मितं पञ्जरम्, तत्र स्थितानां भयदुःखाभावादिति भावः। विटगोष्ठी—विलासिसमाजः। विदग्धैः,—विलासिभिः। सुकृतपरिणामः,—पुण्यपरिणतिः, सुखेन स्थानलाभादिति भावः। पथिकैः,—पान्थैः, ["पथः ष्कन्" (५।१।७५ पा०) इति ष्कनि रूपम्]।

(१९१) असुरविवरम्—पातालम्। वातिकैः—वायुरोगिभिः, भीमाकारयोद्धृपुरुषाणां सततसञ्चारादिति भावः, यद्वा,—वातिकैः,—खनिविवरान्वेषणाभिरताद्यैः, विविधविवरवतां सन्निवेशादिति भावः। शाक्याश्रमः,—बौद्धसंन्यासिमठः। श्रमिभिः,—शाक्यश्रमणकैः, बौद्धधर्माणामपि प्रचारादिति भावः।

(१९२) अप्सरःपुरम्—अप्सरसां नगरम्, सुन्दरीणां बाहुल्यादिति भावः। चारणैः,—कुशीलवैः। ("चारणास्तु कुशीलवाः" इत्यमरः)। चारणा हि उत्सवसमये राज्ञां गुणादिकं कीर्तयित्वा अभिलषितं प्राप्नुवन्ति। वसुधारा—धनप्रवाहः, दातृभ्यो बहुधनलाभादिति भावः। सर्वत्रोक्तेषु उल्लेखालङ्कारः।

(१९३) यत्रेत्यादि।—मातङ्गगामिन्यः,—श्वपचगामिन्यः, चाण्डालगामिन्यः इति यावत्, ("मातङ्गः श्वपचे गजे" इति मेदिनी) अथ च शीलवत्यः,—सुचरिताः,

विभवरताश्च, (१८४) श्यामाः पद्मरागिण्यश्च, (१८५) धवलद्विजशुचिवदनाः मदिरामोदिश्वसनाश्च, (१८६) चन्द्रकान्तवपुषः शिरीषकोमलाङ्गयश्च, (१८७) अभुजङ्गगम्याः कञ्चुकिन्यश्च,

---

या चाण्डालानपि उपगच्छन्ति, ता कथं कौलवत्यः भवन्ति ? इति विरोधः, गजगामिन्य इति तत्परिहारः, एवमुत्तरत्र। गौर्य्यः,—पार्वत्यः, अथ च विभवरताः,—वि—विगतः, भवे—हरे, रतः—रागो यासां ताः, या गौरी, सा कथं भवादन्यत्र अनुरागिणी ? इति विरोधः, गौर्य्यः,—गौराङ्ग्यः, विभवेषु—सम्पत्सु रता इति परिहारः।

(१८४) श्यामाः,—रजन्यः, अथ च पद्मरागिण्यः,—पद्मेषु रागो विद्यते यासां ताः, पद्मविकासिन्य इति यावत्, रात्रौ पद्मानां निमीलनात् तस्याः पद्मरागित्वं न सम्भवति इति विरोधः, श्यामाः,—श्यामलाङ्ग्यः, यथा,—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता॥" इत्युक्तलक्षणा नाथ, पद्मरागिण्यः,—पद्मरागरत्नालङ्कृता इति परिहारः।

(१८५) धवलेति।—धवलानि—निर्मलानि द्विजस्येव शुचीनि—पवित्राणि, वदनानि यासां ताः, अथ च, मदिरेति।—मदिरया—सुरया, तत्पानेन इत्यर्थः, आमोदिनः—सौरभवन्तः श्वसनाः,—निश्वासमरुतः श्वासा यासां ताः, या हि पवित्रब्राह्मणवत् पवित्रवदना तासां मद्यपाने कथं मुखस्य पवित्रता ? इति विरोधः, धवलः—शुभ्रे, द्विजे,—दन्ते, शुचीनि—उज्ज्वलानि धवलानीत्यर्थः, वदनानि यासां ता इति परिहारः, ("शुचिर्ग्रीष्माग्नि । धवलो श्वेतेऽनुपहते त्रिषु॥" इति मेदिनी)।

(१८६) चन्द्रकान्तेति।—चन्द्रकान्तः,—मणिशिलाविशेषः, तद्वत् वपुः—शरीरं यासां ताः, अथ च शिरीषकोमलाङ्ग्यः, शिरीषपुष्पवत् कोमलं—सुकुमारम् अङ्गं यासां ताः, चन्द्रकान्तस्य प्रस्तरविशेषत्वेन काठिन्यात् या तद्वत् कठिनाङ्ग्यः ता कथं शिरीषकोमलाः ? इति विरोधः, चन्द्रवत् कान्तं—रमणीयं, वपुर्यासामिति तत्परिहारः।

(१८७) अभुजङ्गेति।—अभुजङ्गगम्याः —भुजङ्गैः,—सर्पैः, न गम्याः, अथ च कञ्चुकिन्यः—भुजङ्गाः, या स्वयं भुजङ्गाः, ता कथं भुजङ्गैरनभिगमनीयाः ? इति विरोधः, भुजङ्गैः,—विटैः, ("भुजङ्गो विटसर्पयोः" इति हलायुधः) न गम्याः, कञ्चुकिन्यः,—कञ्चुकः—चोलः स्तनावरणवस्त्रविशेषः, तद्वत्यः इति परिहारः, ('कञ्चुको

( १९८ ) पृथुकलत्रश्रियः दरिद्रमध्यकलिताश्च, ( १९९ ) लावण्यवत्यो मधुरभाषिण्यश्च, ( २०० ) अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च, ( २०१ ) अकौतुकाः प्रौढाश्च प्रमदाः ।

हारभरणे स्यात्त्रिस्वौर्वे कार्मण्यपि च । ... चौल्के ॥" इति मेदिनी । चौल्क,— "कौसुमी" इति ख्यात कुर्पासकापरपर्याय कौषा समावरणवस्त्रभेद )।

( १९८ ) पृथ्विति ।—पृथु —चादिराजो वैण्यतनय तस्य कलत्रस्य—महिषीणां, [गजधातो इति "घड़ेरादेश वा" ( उ० ३ पा० १०६ सू० ) इत्यादि कत्रादेशे रूपम् ] श्रिय इव—सम्पद इव, श्रियो यासां ता, अथ च दरिद्रमध्यकलिता,—दरिद्राणां—निर्धनानां, मध्ये कलिता,—सङ्गता गणिता इत्यर्थ, या खलु राजमहिष्य इव सम्पच्छालिन्य, ता कथं दरिद्रमध्ये गणिता ? इति सहसम्भवाद्विरोध, पृथ्वी—महती कलत्रस्य—श्रोणेः अधनस्य इत्यर्थ., ( 'कलत्रं श्रोणि भार्ययो' इत्यमर ) श्री —शोभा यासां ता, दरिद्र.—क्षीण, मध्य,—कटिदेश, तेन कलिता —शोभिता इति यावत्, इति परिहार ।

( १९९ ) लावण्यवत्य —लवणरसशालिन्य अथ च मधुरभाषिण्य,—मधुरा—स्वादी इति भाषा—उक्ति विद्यते यासां ता, या हि लवणरसवत्य ता मधुरामुक्ति न सम्भाषन्ते इति विरोध, लावण्यवत्य —"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तसौन्दर्यविशेषवत्य इत्यर्थ मधुरभाषिण्य —मधुर—प्रिय, भाषित शीलमासाम् इति तथाभूता., प्रियवादिन्य इति परिहार ( "स्वादु प्रियौ तु मधुरौ" इत्यमर )।

( २०० ) प्रसन्ना—सुराभेद तया उज्ज्वल,—शृङ्गाररसाद्यनुगुण इति यावत ( "शृङ्गार शुचिरुज्ज्वल" इत्यमर ) राग —अनुराग मुखरागो वा यासां ता, अथ च अप्रमत्ता,—अक्षीबा, या मद्यपायिन्य ता कथमप्रमत्ता ? इति विरोध, अप्रमत्ता,—प्रमादशून्या, प्रसन्न,—स्वच्छ, नैर्मल्येन इत्यर्थ उज्ज्वल —विशद, राग,—वर्णो यासां ता इति परिहार ( "प्रसन्ना स्त्री सुरायां स्यात् स्वच्छे सन्तुष्टयोस्त्रिषु" इति मेदिनी )।

( २०१ ) अकौतुका,—कौतुक—विवाहकालिकहस्तसूत्र, तद्रहिता विवाहकालपरिहितस्य कौतुकस्य समनन्तरमेव मुक्तत्वादिति भाव विवाहितानां हि करसूत्र बध्यते एव तदाहित्यात् अविवाहिता इति भाव, अथ च प्रौढा.,—पूर्णयौवना इत्यर्थ, या. हि पूर्णयौवना, ता. कथम् अविवाहिता ? इति विरोध,

(२०२) यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं, भारः कुवलयदलदामानि। (२०३) अलकप्रतिबिम्बान्येव कपोलतलगतानि अक्लिष्टाः श्रवणावतंसाः, पुनरुक्तानि तमालकिसलयानि। (२०४) प्रियजनकथा एव सुभगाः कर्णालङ्काराः, आडम्बरः कुण्डलादिः। कपोला एव सततम् आलोककारकाः, विभवो निशासु मणिप्रदीपाः। (२०५) निश्वासामोदाकृष्टमधुकरकुलान्येव रमणीयं मुखावरणं, कुलस्त्रीजनाचारो जालिका। वाणी एव मधुरा वीणा, वाद्य-

---

कौतुकम्—अभिलाषः, प्रियसमागमाय औत्सुक्यमिति यावत्, कान्दर्प्यमादिति भावः, तद्रहिता, स्वाधीनभर्तृकत्वादिति भावः, इति परिहारः। ("कौतुकमभिलाषे ...। विवाहसूत्रगीतादिभोगयोरपि न द्वयोः" इति मेदिनी)।

(२०२) यत्रेत्यादि।—सहजम्—अकृत्रिमम्। मुण्डमालामण्डनम्—मुण्डमाला—नीलोत्पलमाला एव मण्डनम्—भूषणम्। कुवलयदलदामानि—नीलोत्पलदलमालिका, भारः,—भारभूतः, अनावश्यकवस्तुमात्रम् इत्यर्थः, चक्षुषामेव नीलानां नीलोत्पलरूपत्वादिति भावः।

(२०३) अलकेति।—अलकानाम्—चूर्णकुन्तलानाम्, प्रतिबिम्बानि—छाया एव। अक्लिष्टाः,—इन्द्रावचयजनितक्लेशरहिता इत्यर्थः, श्रवणावतंसाः—कर्णभूषणानि। तमालकिसलयानि—तदाख्यवृक्षविशेषस्य पल्लवानि, पुनरुक्तानि—अधिकानि, निरर्थकानि इति भावः।

(२०४) प्रियजनकथाः,—कान्तसम्बन्धालापाः, ["प्रियजनकथा" इत्यत्र "प्रियकथा" इति पाठेऽपि—अभिप्रायार्थ एव] सुभगाः,—रमणीयाः श्रुतिसुखा इत्यर्थः, आडम्बरः,—संरम्भः, आधिक्यम् इत्यर्थः ["आडम्बरस्तूर्यरवे संरम्भे गजगर्जिते" इति मेदिनी]। आलोककारकाः,—प्रकाशकाः, स्फटिकवत् स्वच्छत्वात् इति भावः। विभवः,—ऐश्वर्यं, सम्पदिति यावत्।

(२०५) निश्वासेत्यादि।—निश्वासेन—अतिसुरभिणा इति भावः, आकृष्टानाम्—आकर्षितानाम्, मधुकराणाम्—भ्रमराणाम्, कमलधिया आपततामिति भावः, कुलानि—सङ्घाः। मुखावरणम्—वदनाच्छादनम्। जालिका—अवगुण्ठनवसनम्, ("..... स्त्रियास्तु वदनाम्बरे। भटानामस्तपर्याप्तवामद्विरथाच जालिका" इति

विज्ञानं तन्त्रीताडनम्। छाया एव अतिशयसुरभयः (२०६) पट-वासाः, निरर्थका कर्पूरपरागाः। (२०७) अधरकान्तिविसर एवो-ज्ज्वलतरोऽङ्गरागः, निर्गुणो लावण्यकलङ्कः कुङ्कुमपङ्कः। बाहव एव कोमलतमाः परिहासप्रहारवेत्रलताः, निष्प्रयोजनानि मृणा-लानि। (२०८) यौवनोष्मस्वेदबिन्दव एव विदग्धाः कुचालङ्काराः, हारास्तु भाराः। (२०९) श्रोण्य एव विशालस्फाटिकशिलातल-चतुरस्राः रागिणां विश्रामकारणम्, अनिमित्तं भवनमणिवेदिकाः।

---

मेदिनी) तन्त्रीताडन—तन्त्री—वीणायाः तस्याः ताडनम्—आघातः, वीणावादन-मित्यर्थः वाह्यविज्ञानं—बाह्यं—बहिर्गतं विज्ञानं—विशिष्टं वादित्रवादनबोधः।

(२०६) पटवासाः—सुगन्धचूर्णविशेषाः। निरर्थकाः,—निष्प्रयोजनाः। कर्पूर-परागाः—कर्पूररजांसि।

(२०७) अधरकान्तिविसरः—अधरस्य लावण्यविस्तारः। निर्गुणः—निष्फलः, लावण्यकलङ्कः,—लावण्यस्य मालिन्यापादकः इत्यर्थः कुङ्कुमपङ्कः,—पिष्टकुङ्कुमद्रवः। कोमलतमाः—अतिकोमलाः। परिहासेति।—परिहासे—क्रीडाकाले, यः प्रहारः,—ताडनं तदर्थं वेत्रलताः,—वेत्राणि वंशयष्टयः इत्यर्थः।

(२०८) यौवनेति। यौवनेन—तारुण्येन, यः उष्मा—उत्तापः तेन ये स्वेद-बिन्दवः,—घर्मजलकणाः। विदग्धाः—मनोज्ञाः।

(२०९) श्रोण्यः—नितम्बाः। विशालेति।—विशालं—वृहत् यत् स्फाटिक-शिलातलं—स्फटिकमणिमयशिलापट्टः (नितम्बानाम् अतिशुभ्रत्वात् शुभ्रत्वात् विशालत्वाच्च तथात्वबोध्यम्) तद्वत् चतुरस्राः—चतुष्कोणाः रागिणाम्—विलासिनां, विश्रामकारणं—विश्रान्तिस्थानं नितम्बानां विश्रामस्थानत्वादिति भावः। [विश्राम इति स्वपाणिनीये विपूर्वकस्य श्राम्यतेः घञि "नोदात्तोपदेशस्य—" (७।३।३४ पा०) इत्युपधावृद्धिनिषेधात् "विश्रामकारणम्" इत्यत्र "विश्रमकारणम्" इति पाठो मनोरमः। तत्त्वबोधिनीकारास्तु—"यदि तु 'श्यान विश्रामः' इत्यादिवत्क्वचित् वृद्धिमाश्रित्य विजन्तादरच क्रियते, तदा रूपं सिद्ध्यति" इत्याहुः। "विश्रामशब्दस्तु भावेऽधोपदेशी मत्वापूर्वको विश्वस्य इति वृद्ध्यभावात्" इति तु कैयटः। "मूर्धाविश्रामो भूमिरित्येवमादिकं प्रयोगमत्रायमेव मनन्ते" इति तु काशिका] अनिमित्तम्—अकारणम्।

(२१०) कमललोभनिलीनानि अलिकुलानि इव मुखराणि पदाभरणकानि, निष्पन्नानि इन्द्रनीलनूपुराणि। नूपुररवाहूता भवनकलहंसा इव समुचिताः सञ्चरणसहायाः, ऐश्वर्यप्रपञ्चाः परिजनाः।

(२११) तत्र च साक्षात् सहस्राक्ष इव सर्ववर्णधरं धनुर्दधानः, मेरुमय इव कल्याणप्रकृतित्वे, (२१२) मन्दरमय इव लक्ष्मीसमाकर्षणे, जलनिधिमय इव मर्यादायाम्, आकाशमय इव (२१३) शब्दप्रादुर्भावे, (२१४) शशिमय इव कलासङ्ग्रहे, वेदमय इव चक्रविमानापत्ते, धरणिमय इव

---

(२१०) कमलेति।—कमललोभेन—पद्मं कमलमिति धिया यो लोभः—आसङ्गाभिलाषः, तेन निलीनानि—संलग्नानि। मुखराणि—शिञ्जानानि। इन्द्रनीलनूपुराणि—नीलकान्तमणिविनिर्मितानि मञ्जीराणि। सञ्चरणसहायाः,—भ्रमणसङ्गिनः। ऐश्वर्यप्रपञ्चाः,—विभवविस्ताराः। ऐश्वर्यप्रदर्शनार्थमिति भावः।

(२११) तत्रेति।—"तत्र" इत्यस्य "पुष्पभूतिरिति नाम्ना बभूव" इत्युत्तरेणान्वयः। सर्वेति।—सर्वे वर्णाः,—ब्राह्मणादयः, शुक्लादयश्च तान् धरति—धारयति पालयति वा इति तथाभूतं धनुः—कार्मुकं, दधानः,—धारयन्; शक्रधनुः विविधवर्णरञ्जितं दृश्यते इति सादृश्योपमा। कल्याणप्रकृतित्वे—कल्याणं—मङ्गलं, हेम च सुवर्णं श्रेयश्च, ("कल्याणं कनके मङ्गले" इति हैमः) प्रकृतिः यस्य तद्भावे।

(२१२) मन्दरमयः,—तदात्मकपर्वतात्मक। क्षीरोदमन्थने मन्दराचलस्य मन्थदण्डरूपतया तेनैव तत्र स्थिताया लक्ष्म्याः समुद्धारणम्, अस्यापि तद्वल्लक्ष्मीसमाकर्षकत्वमिति भावः। मर्यादायां—स्थितौ सदाचाररक्षणे इत्यर्थः सीमायां च सीमाऽनतिक्रमणे इत्यर्थः, ("मर्यादा सीमनि स्थितौ" इति मेदिनी), जलनिधिः यथा स्वीयतटसीमालङ्घनं न करोति, तथा अयमपि अविचलितसदाचार इति भावः।

(२१३) शब्दप्रादुर्भावे—शब्दानां—यशोविजयादिकथानां धर्मेषाञ्च प्रादुर्भावे,—प्रकाशने तस्मिन्, आकाशात् यथा शब्दानां प्रादुर्भावः "शब्दगुणकमाकाशम्" इति सूत्रे, तथा अस्मात् यशोविजयादीनां समुद्भूतिः इति भावः।

(२१४) शशिमयः,—चन्द्रमयः। कलासङ्ग्रहे—कला—चतुःषष्टिप्रकाराः विद्याः, चान्द्रमस्यश्च, तासां सङ्ग्रहे संचये। चक्रविमानापत्ते—चक्रविमः,—चक्ररथः,

(२१५) लोकधृतिकरणे, पवनमय इव (२१६) सर्वपार्थिवरजोविकारहरणे, गुरुर्वचसि, (२१७) पृथुरुरसि, विशालो मनसि, जनकः तपसि, (२१८) सुयात्रः तेजसि, सुमन्त्रो रहसि, (२१९) बुधः सदसि, अर्जुनो यशसि, भीष्मो धनुषि, निषधो वपुषि, शत्रुघ्नः समरे, (२२०) शूरः शूरसेनाऽऽक्रमणे,

---

सर्वाभिमतं, अपौरुषेयस्य, आम्नायस्य,—वचनं यस्य तथाभूते, वेदवाक्यमिव यस्य वाक्यं सर्वमान्यमिति भावः ।

(२१५) लोकधृतिकरणे—लोकानां—प्रजानां, जनतायाः, धृतिः,—धैर्यं, धारणञ्च, तस्याः करणे—सम्पादने तस्मिन् ।

(२१६) सर्वेति ।—सर्वेषां पार्थिवानां—राज्ञां, रजोविकारस्य—रजोगुणजन्यविकृतेः, दम्भाहङ्कारादेः इत्यर्थः, अन्यत्र,—पार्थिवानां—पृथिवीसम्बन्धिनां, रजसां—धूलीनां, विकारस्य हरणे—अपनयने । वचसि गुरुः,—महान् अतिसुवक्ता इति भावः, बृहस्पतिश्च ।

(२१७) उरसि—वक्षसि, पृथुः,—विशालः, आदिराजविशेषश्च । मनसि विशालः,—विस्तीर्णः, उदारमना इत्यर्थः, तदाख्यो राजा च, यद्वा,—विशालो नाम बोधिसत्त्वः स इव शान्तमनाः । जनकः—उत्पादकः, तदाख्यो राजा च; यथा राजा जनकस्तपसि निरतः, तथाऽयम् इति भावः ।

(२१८) सुयात्रः—सु—शोभना, यात्रा—युद्धार्थप्रयाणं यस्य तथोक्तः, तदाख्यो नृपश्च । सुमन्त्रः—सु—शोभनः, मन्त्रः—कर्त्तव्यावधारणपरामर्शः यस्य तथोक्तः, तदाख्यो दशरथमन्त्री च । रहसि—निर्जने ।

(२१९) बुधः,—पण्डितः, चन्द्रपुत्रश्च । सदसि—सभायाम् । अर्जुनः—धवलः, कार्त्तवीर्य्यश्च, यद्वा,—पार्थश्च । भीष्मः,—भयङ्करः, शान्तनवश्च । ["भीमादयोऽपादाने" (३।४।७४ पा०) इति निपाते भवति सुसाधमेतद्रूपम्] धनुषि—धनुर्वेदे इत्यर्थः । निषधः,—कठिनः तदाख्यदेशविशेषस्य राजा च, नल इत्यर्थः, तदाख्यः पर्वतो वा, नल इव रूपवान् पर्वत इव स्थिरशरीरो वा इति भावः, ("निषधः कठिने देशे तद्राज्ञि पर्वतान्तरे" इति मेदिनी) । शत्रुघ्नः,—शत्रुघाती, रामानुजश्च ।

(२२०) शूरः,—वीरः, यदुवंशीयराजविशेषश्च । शूरेति ।—शूराणां—शौर्य्यशालिनीनां, सेनानां—वाहिनीनां, शूरसेनस्य—देशविशेषस्य च, आक्रमणे तस्मिन् ।

दक्षः प्रजाकर्मणि, सर्वादिराजतेजःपुञ्जनिर्मित इव राजा पुष्पभूतिरिति नाम्ना बभूव।

(२२१) पृथुना गौरियं कृतेति यः स्पर्धमान इव महीं महिषीं चकार। (२२२) निसर्गवैरिणी स्वच्छन्दानुरोधिनी च भवति हि महतां मतिः; यतः तस्य केनचित् अनुपदिष्टा सहजैव शैशवादारभ्य अन्यदेवताविमुखी भगवति, भक्तिसुलभे, भुवनभर्तरि, भूतभावने, भवच्छिदि भवे भूयसी भक्तिः अभूत्। अकृतवृषभध्वजपूजाविधिः न स्वप्नेऽपि आहारम् अकरोत्। अजम्, अजरम्, अमरगुरुम्, असुरपुररिपुम्, अपरिमितगणपतिम्, अचलदुहितृपतिम्, अखिलभुवनकृतचरणनतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यम् अमन्यत त्रैलोक्यम्। भर्तृ-

चित्तानुवर्त्तिन्यश्च अनुजीविनां प्रकृतयः। तथा हि,—गृहे गृहे भगवान् अपूज्यत खण्डपरशुः। (२२३) ववुः अस्य क्षौमानलज्वालाविलीयमानबहलगुग्गुलुगन्धगर्भाः स्नपनक्षीरशीकरक्षोदक्षारिणः (२२४) बिल्वपल्लवदामदलोद्दाहिनः पुण्यालयेषु वायवः। (२२५) शिवसपर्य्यासमुचितैः उपायनैः प्राभृतकैश्च पौराः, पादोपजीविनः सचिवाः, भुजबलनिर्जिताश्च करदीकृता महासामन्ताः तं सिषेविरे। तथा हि,—

---

भाव, ("पशुशृङ्गादिदिवाभे नाऽन्यय पद्य दर्शने" इति मेदिनी) तेषां पति म, हरमित्यर्थः। प्रपन्न —आश्रित। खण्डपरशु,—शिव। ("शम्भुरीश पशुपतिः शिव शूली महेश्वर। ·· भूतेश खण्डपरशु ॥" इत्यमर)।

(२२३) ववु,—वहन्ति स्म। क्षौमेति।—क्षौमानलज्वालाया—होमकुण्डाग्निशिखाया, ["क्षौमानलज्वाला—" इत्यत्र "क्षौमानलवाल—" इति पाठ,—क्षौमाय्म् आलवालम—आलवालाकृतिकुण्डमित्यर्थं लक्षिम] विलीयमाना—द्रवता, बहलाना—प्रचुरा, गुग्गुलूना गन्धो गर्भे—मध्ये येषा तथाभूता, होमार्थं प्रज्वलदग्नौ निक्षिप्यमाणाना नानाविधाना गन्धद्रव्याणा सौरभोद्भासिता इत्यर्थ, एतेन वायौ सौरभ्य वर्णितम्। स्नपनेति।—स्नपन—स्नानोपकरण, यत क्षीर—दुग्ध तस्य शीकरक्षोदान्—कणचूर्णानि क्षरा,—शीकरा,—बिन्दव एव, क्षोदा,—चूर्णसदृशा इति यावत्, तान् क्षरन्तीति तथोक्ता, एतेन वायौ शैत्य वर्णितम्।

(२२४) बिल्वेति।—बिल्वपल्लवाना—बिल्वपत्राणामित्यर्थं दामानि—माल्यानि, तेषां दलानि—निचयान्, उद्वहन्तीति तथाविधा, एतेन वायौ मान्द्य दर्शितम्। पुण्यालयेषु—पुण्यस्थानेषु, पूजास्थानेषु इति यावत्। ["पुण्यालयेषु" इत्यत्र "पुण्यविषयेषु" इति पाठे,—पवित्रजनपदेषु इत्यर्थ, "विषयो गोचरे दृष्टे तथा जनपदेऽपि च" इति मेदिनी]।

(२२५) शिवेति।—शिवस्य सपर्य्या—पूजा, ("पूजा नमस्याऽपचिति सपर्य्या ··" इत्यमर) तत्समुचितानि—तत्पर्य्याप्तानि इत्यर्थं तै, उपायनै,—उपढौकनै, यानि स्वयमानीयन्ते प्रभुप्रीतिकराणि द्रव्याणि तै इत्यर्थं। प्राभृतकै,—सुहृत्प्रेषितैर्द्रव्यै इत्यर्थ। ["प्राभृतकै" इत्यत्र "प्राभृतै" इति पाठेऽपि अभिन्नार्थं एव]। करदीकृता,—करप्रदानार्थम् अधीनीकृता। महासामन्ता,—श्रेष्ठनृपाश्च।

(२२६) कैलासकूटधवलैः (२२७) कनकपत्रलताऽलङ्कृतविषाणकोटिभिः (२२८) महाप्रमाणैः, सन्ध्यावलिवृषैः, सौवर्णैश्च स्नपनकलशैः, अर्घ्यभाजनैश्च, धूपपात्रैश्च, पुष्पपटैश्च, (२२९) मणियष्टिप्रदीपैश्च, ब्रह्मसूत्रैश्च, महार्हमाणिक्यखण्डखचितैश्च मुखकोशैः परितोषम् अस्य मनसि चक्रुः। (२३०) अन्तःपुराणि अपि स्वयम् आरब्धबालेयतण्डुलकण्डनानि, (२३१) देवगृहोपलेपनलोहिततरकरकिसलयानि, (२३२) कुसुमग्रथनव्यग्रसमस्तपरिजनानि तस्य अभिलषितम् अन्ववर्तन्त।

---

(२२६) कैलासेति।—कैलासस्य—रजतगिरेः [केलीनां समूह इति "तस्य समूहः" (४।२।३७ पा०) इति अणि कैल तेनास्यतेऽत्र इत्यासधातोः 'अकर्तरि च—' (३।३।१९ पा०) इति घञि रूपम] कूटानि—शृङ्गाणि तद्वत् धवला ये।

(२२७) कनकेति।—कनकपत्रलताभिः,—स्वर्णनिर्मितपत्रभङ्गैः, अलङ्कृता विषाणकोटयः—शृङ्गाग्राणि येषां तैः।

(२२८) महाप्रमाणैः,—महदाकारैः, सन्ध्यावलिवृषैः,—सन्ध्याकालिकपूजार्थवृषभैः। सौवर्णैः,—काञ्चननिर्मितैः, स्नपनकलशैः,—स्नानसाधनकुम्भैः। अर्घ्यभाजनैः,—अर्घ्यपात्रैः। पुष्पपटैः—येषु वसनेषु सूत्रैः पुष्पाण्याकारतया विरच्यन्ते ते पुष्पपटा तैः। ['पुष्पपटैः' इत्यत्र "पुष्पपट्टैः" इति पाठोऽपि अविरुद्ध एव]।

(२२९ मणियष्टिप्रदीपाः—अनन्यविशिखा सौवर्णयष्ट्यः तैः। ब्रह्मसूत्रैः,—यज्ञोपवीतैः। महार्हेति।—महार्हेण—महामूल्येन माणिक्यखण्डेन—रत्नशकलेन खचितैः,—निबद्धैः, मुखकोशैः,—मुखगुप्ता कोशा तैः, शिवलिङ्गाच्छादनैः। अस्य—पुष्पभूतेः।

(२३०) अन्तःपुराणि—अवरोधवर्गाः। आरब्धेति।—आरब्धानि बालेयानि—बलिं—पूजां लक्ष्यीकृतानि, ["छदिरुपधिबलेर्ढञ्" (५।१।१३ पा०) इति ढञि रूपम्] तण्डुलानां कण्डनानि—शोधनविशेषा यैः तथाभूतानि, यद्वा,—बालेयानां तण्डुलानां कण्डनानि यैः तथाभूतानि।

(२३१) देवेति।—देवगृहस्य—शिवमन्दिरस्य, उपलेपनेन—गोमयादिना मार्जनेन, लोहिततराः,—अतिलोहिताः करकिसलयाः येषां तथोक्तानि।

(२३२) कुसुमेति।—कुसुमानां ग्रथने—गुम्फने, व्यग्रः ग्रथनकर्मप्रयोगक्लिन्नः,

तथा च,—(२३३) परममाहेश्वरः स भूपालो लोकतः शुश्राव, भुवि भगवन्तम् अपरमिव साक्षात् दक्षमखमथनं दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातं गुणैः शिष्यैरिव अनेकसहस्रसंख्यैः व्याप्तमर्त्यलोकं भैरवाचार्यनामानं महाशैवम्। (२३४) उपनयन्ति हि हृदयम् अदृष्टमपि जनं शीलसंवादाः; यतः स राजा श्रवणसमकालमेव तस्मिन् भैरवाचार्ये भगवति द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं बबन्ध भक्तिम्, आचकाङ्क्ष च मनोरथैरपि अस्य सर्वदा दर्शनम्।

(२३५) अथ कदाचित् पर्यस्ते अस्ताचलचुम्बिनि वासरे अन्तःपुरवर्तिनं राजानम् उपसृत्य प्रतीहारी विज्ञापितवती,—"देव! द्वारि परिव्राट् आस्ते, कथयति च भैरवाचार्यवचनात् देवम् अनुप्राप्तोऽस्मि" इति। राजा तु तत् श्रुत्वा सादरं—"क्व असौ? आनय अत्रैव, प्रवेशय एनम्" इति च अब्रवीत्। तथा च अकरोत् प्रतीहारी। (२३६) न चिरात् च प्रविशन्तं, प्रांशुम्, आजानुलम्बभुजं, भैक्षक्षाममपि स्नाय्वस्थिभिः अवयवैः पीवान-

---

धन्यमन्यस्येव प्रहृत्वात् । आशा,—आसक्ता। ममता परिजना,—परिवारा येषां तानि। अन्वयता—आश्रमसरः। 'अभिलषितमन्ववर्तत' इत्यनेन अस्य पुरिकाया मस्य चित्तानुवर्तनं प्रदर्शितम्।

(२३३) परममाहेश्वरः—महेश्वरस्य परमभक्त इत्यर्थः। भुवि—वसुधायाम्, एतेनास्य पृथिवीस्थस्यापि दुर्लभदर्शनत्वमुक्तम्। दक्षमखमथन—दक्षप्रजापतेः यज्ञविध्वंसिनमित्यर्थः। दाक्षिणात्य—दक्षिणदेशभवम्।

(२३४) उपनयन्ति—उपस्थापयन्ति। शीलसंवादाः,—चारित्रसाम्यानि चरित्रालोचनं वा। कपर्दिनि—शिवे। गरीयसीं—गुरुतराम्। मनोरथैरपि किं पुनश्चक्षुषा इति भावः। ["सर्वदा" इत्यत्र 'सर्वथा' इति पाठान्तरम्]।

(२३५) अथेत्यादि।—पर्यस्ते—अवसिते। वासरे—दिवसे दिवसनाशे इति भावः। परिव्राट्—सन्न्यासी। अनुप्राप्तः,—समागत इत्यर्थः।

(२३६) "न चिरात्" इत्यस्य "प्रत्यागमदाचीत" इत्युत्तरेण सम्बन्धः।

मिव उपलक्ष्यमाणं, पृथुतमोत्तमाङ्गम्, (२३७) उत्तुङ्गवलिभङ्गस्फुटललाटं, (२३८) निर्मांसगण्डकूपं, (२३९) मधुबिन्दुपिङ्गलपरिमण्डलाक्षम्, (२४०) ईषदावक्रघोणम्, (२४१) अतिप्रलम्बैककर्णपाशम्, (२४२) अलाबूबीज-

---

प्रांशुम—उन्नतकायमित्यर्थः। आजानुलम्बभुजम्—आजानु—जानुपर्यन्तं लम्बौ—लम्बायमानौ, भुजौ—बाहू यस्य स, ['जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः। "आजानुलम्बभुजम्" इत्यत्र "आजानुभुजम्" इति पाठान्तरम्]। भैक्षक्षाम—भिक्षा एव भैक्षं तेन क्षाम—क्षीणम्। पीवानमिव—स्थूलम् इव। ["ह्वः सम्प्रसारणम्" (६० ४ पा० ११४ सू०) इति प्यैधातोः क्वनिपि सम्प्रसारणे रूपम्। "पीवानम्" इत्यत्र "पीवरम्" इति पाठोऽपि स एवार्थः। "पीनपीव्नी तु स्थूलपीवरे" इत्यमरः]। पृथुतमोत्तमाङ्ग—अत्यन्तमस्तकम्। ["पृथुतमोत्तमाङ्गम्" इत्यत्र 'पृथूत्तमाङ्गम्' इति पाठोऽपि स एवार्थः]।

(२३७) उत्तुङ्गेति।—उत्तुङ्गा—दीर्घा, वलिभङ्गा यत्र तादृशं स्फुट—निम्नोन्नत, ललाट—भालदेशः यस्य तथोक्तम्।

(२३८) निर्मांसेति।—निर्मांसौ—मांसशून्यौ, अस्थिमयाविमौ, गण्डौ—कपोलौ, कूपाविव यस्य तथोक्तम्। ["निर्मांसगण्डकूपम्" इत्यत्र "निर्मांसगण्डकूपकम्" इति पाठोऽपि स एवार्थः। कूप एवेति कूपकम्]।

(२३९) मध्विति।—मधुबिन्दुवत् पिङ्गल परिमण्डल—गोलक ययो तथाभूते, अक्षिणी—नेत्रे यस्य स, वृत्तपिङ्गलचक्षुरित्यर्थः। ["बहुव्रीहौ—" (५।४।११३ पा०) इत्यादिना षचि रूपसिद्धिः]।

(२४०) ईषदिति।—ईषत् आवक्रा घोणा—नासिका यस्य तम्। ("घोणा नासा च नासिका" इत्यमरः)।

(२४१) अतीति।—अति—अतिशयेन, प्रलम्ब—लम्बमान एक कर्णपाश—कुत्सितकर्णः इत्यर्थः यस्य तथोक्तम्, अतिशयेन लम्बमानत्वादशोभनदर्शन इति भावः। "पाशः केशादिपूर्वः स्यात् वृन्दे कर्णपूर्वकः। सुकर्णे च •॥" इति मेदिनीवचनमनुसृत्य 'कर्णपाशः शोभनकर्णः' इति केषाञ्चिद्व्याख्यानं न मनोरमम्, अतिलम्बमानस्यैकस्यैव कर्णस्य शोभनदर्शनत्वासम्भवात्।

(२४२) अलाब्विति।—अलाबूबीजवत्—तुम्बीबीज इव, ("तुम्ब्यलाबूरुभे"

विकटोन्नतदन्तपङ्क्ति, (२४३) तुरगानुकश्लथाधरलेख, (२४४) लम्बचिबुकायततरलपनम (२४५) असावलम्बिना कापायेण योमपट्टकेन विरचितवैकक्षक, (२४६) हृदयमध्यनिबद्धग्रन्थिना च रागेणेव खण्डश कृतेन धातुरसारुणेन कर्पटेन कृतोत्तरासङ्ग, (२४७) पुनरुक्तबालग्रहवेष्टननिश्चलमूलेन (२४८) बद्धस्थपरिशोधनवल्कलतितउना (२४९) कौपीन

---

हसे" इत्यमर ) विकटा—कराला उन्नता च दन्तपङ्क्ति,—दशनावली यस्य तम् ।

(२४३) तुरगेति ।—तुरगानुका—अश्वानुकारिणी इत्यर्थ, श्लथा—शिथिला लम्बमाना इत्यर्थ अधरलेखा यस्य तम् ।

(२४४) लम्बेति ।—लम्बन चिबुकेन—अधरावोभागेन आयततरम् यद्वा—लम्ब चिबुक यस्य तथाभूतम् आयततरम्—अतिदीर्घं लपन—मुख यस्य तथोक्तम

(२४५) असावलम्बिना—स्कन्धविलम्बिना काषायेण—कषायरञ्जितेन योगपट्टकेन—उपवीतकाकारेण योगसाधनेन पट्टवस्त्रखण्डेन इत्यर्थ विरचित वैकक्षक—तिर्यक् वक्षोलम्बी हारविशेषो येन तम् । ("वैकक्षकन्तु तत् । यत् तिर्यक् क्षिप्तमुरसि इत्यमर )।

(२४६) हृदयेति ।—हृदयस्य—उरस मध्ये निबद्ध —रचित ग्रन्थि —बन्धनविशेष यस्य तथाभूतेन । रागेणेव—विषयानुरागेणेव । धातुरसारुणेन—गैरिकारक्तेन इत्यर्थ कर्पटेन—नक्तकेन छिन्नवस्त्रेणेत्यर्थ ("समौ नक्तककर्पटौ" इत्यमर ) कृतोत्तरासङ्ग —कृत —विहित धृत इत्यर्थ उत्तरासङ्ग —उपरीय येन तथोक्तम् ।

(२४७) पुनरुक्तेति ।—पुनरुक्तेन—पुन पुन आवर्त्तितेन इत्यर्थ बालक—मूलेन अश्वबालग्रथितेन वा इत्यर्थ ग्रहवेष्टनेन—रज्ज्वा वेष्टनेन तेन निश्चल—स्थिर मूल यस्य तेन ।

(२४८) बद्धेति ।—बद्ध —रचित इत्यर्थ, स्थदा—मृत्तिकाना शिलानिङ्गानि(?) निर्मार्जनसाधनानाम् इति भाव, परिशोधनाय—परिमार्जनाय वल्कत्वचा—वल्कलेन कृत इति शेष तितउ —चालनी यस्य तेन ("चालनी तितउ पुमान्" इत्यमर )।

(२४९) कौपीनेति ।—कौपीनेन—चीरवस्त्रेण गुह्यप्रदेशावरणेनेत्यर्थ,

मनाथशिखरेण (२५०) खर्जूरपुटसमुद्गकगर्भीकृतभिक्षाकपालकेन (२५१) दारवफलकत्रयविकोणविष्टनिविष्टकमण्डलुना (२५२) वह्निरूपपादितपादुकाऽवस्थानेन (२५३) स्थूलदशासूत्रनियन्त्रितपुस्तिकापूलकेन (२५४) वामकरधृतेन योगभारकेण अध्यासितस्कन्धम्, (२५५) इतरकरगृहीतवेत्रासनं मस्करिणम् अद्राक्षीत्।

("कौपीनं स्यादकार्येऽपि चीरे गुह्यप्रदेशयोः" इति मेदिनी) तस्य—गुह्यं, शिखरम् —अग्रभागः यस्य तेन।

(२५०) खर्जूरेति।—खर्जूरस्य—वृक्षभेदस्य, पुटैः—छिद्रैः पत्रैरित्यर्थः, रचितः इति भावः, समुद्गकः—सम्पुटकः, पात्रविशेष इत्यर्थः, ('समुद्गकः सम्पुटकः' इत्यमरः) तस्य गर्भीकृतः—गर्भे स्थापितम् इत्यर्थः, भिक्षाकपालकं—भिक्षापात्रमित्यर्थं यस्य तथोक्तेन।

(२५१) दारवेति।—दारुणः इदं दारवं—काष्ठसम्बन्धीत्यर्थः, यत् फलकत्रयं—पट्टकत्रयं तस्मिन् ये त्रयः कोणाः —कोणत्रयं, तेषु या विष्टिः यष्टयः,—दण्डाः, तासु निविष्टः कमण्डलुर्यस्य तेन।

(२५२) वह्निरिति।—वह्निः,—वाह्यदेशे, उपपादितम्—सम्पादितम्, पादुकयोः,—उपानहोः अवस्थानम्—स्थापनमित्यर्थः यस्य तेन।

(२५३) स्थूलेति।—स्थूलैः —दृढैः, पीवरैर्वा दशासूत्रैः —वस्त्राञ्चलतन्तुभिः नियन्त्रितः—निबद्धः, पुस्तिकापूलकः—क्षुद्रपुस्तकसमूहः यत्र तेन। ["पुस्तिकापूलकेन" इत्यत्र "पुस्तिकापुलिकेन" इति पाठोऽपि स एवार्थः]।

(२५४) वामकरधृतेन—वामहस्तगृहीतेन योगभारकेण—योगसाधनद्रव्यसञ्चयस्थल्या, भारभारिकया वा अध्यासितः,—सन्निवेशितः स्कन्धः —अंसः यस्य तम्।

(२५५) इतरेति।—इतरेण—दक्षिणेनेत्यर्थः, करेण गृहीतं वेत्रासनं येन तम्; स्थाने स्थाने विश्रामार्थम् इति भावः। मस्करिणं—परिव्राजकम्। ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी" इत्यमरः। "मस्कर-मस्करिणौ—" (६।१।१५४ पा०) इति मस्करशब्दस्य सुडिनौ निपात्येते इति दीक्षितः। "मस्करिग्रहणं शक्यमकर्तुम् इति मत्वर्थीयेन इनिना एतत् सिद्धम्", "अथ मा कृत कर्म मा कृत इत्युपक्रम्य शान्तिः काम्यकर्मपरिहारिण्युपाकृतं श्रेयसीत्युपदेष्टा मस्करीत्युच्यते" इति भाष्य-कैयटयोर्विरोधे, मस्करी ज्ञानमस्यास्तीति, मा कर्तुं शीलमस्य इति वा विग्रहः])

क्षितिपतिरपि (२५६) उपगतम् उचितेन च एनम् आदरेण अन्वग्रहीत्; आसीनञ्च पप्रच्छ,—"क्व भैरवाचार्य्य?" इति। सादरमरपतिवचनमुदितमनास्तु परिव्राट् तम् (२५७) उपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितम् आचचक्षे। भूयश्च आबभाषे,—"अर्घयति हि (२५८) महाभागं भगवान् आशीर्वचसा" इत्युक्त्वा च उपनिन्ये योगभारकात् आकृष्य भैरवाचार्य्यप्रहितानि रत्नवन्ति बहलालोकलिप्तान्तःपुराणि पञ्च राजतानि पुण्डरीकाणि।

(२५९) नरपतिस्तु प्रियजनप्रणयभङ्गकातरो दाक्षिण्यम् अनुरुध्यमानो ग्रहणलाघवञ्च लङ्घयितुम् असमर्थो दोलायमानेन मनसा स्थित्वा कथंकथमपि अतिसौजन्यनिघ्न तानि जग्राह; जगाद च,—"सर्वफलप्रसवहेतु स्थिरभक्तिरियं नः,

(२५६) उपगतम्—उपस्थितम्। उचितेन—अनुरूपेण। एनम्—मस्करिणम्। तम्—भैरवाचार्य्यम्।

(२५७) उपनगरं—नगरसमीपे। सरस्वतीति।—सरस्वत्याः,—तदाख्यायाः नद्याः तटे—तीरदेशे यत् वनं तदवलम्बिनि इति तथोक्ते सरस्वतीतीरस्थवनमध्ये इति भावः। शून्यायतने—शून्यदेवालये इत्यर्थः।

(२५८) महाभागं—भाग्यवन्तं महाप्रभावं वा। उपनिन्ये—अर्पितवान्। बहलेति।—बहलेन—प्रभूतेन आलोकेन—उद्योतेन, लिप्तम्—उद्भासितम्, अन्तःपुरं—मध्यभागः यैः येषां वा तानि रत्नवन्ति—मणिखचितानि, राजतानि—रौप्यमयानि पुण्डरीकाणि—पद्मानि।

(२५९) नरपतिरित्यादि। प्रियेति।—प्रियजनस्य—प्रीतिभाजनस्य, भैरवाचार्य्यस्येत्यर्थः प्रणयभङ्गः—अग्रहणे प्रार्थनाभङ्गः तेन कातरः,—कथं तादृशस्य प्रणयभङ्गं करोमि? इति व्याकुल इत्यर्थः। दाक्षिण्यम्—औदार्यम् अनुरुध्यमानः,—अनुसरन् ग्रहणलाघवं—ग्रहणे लाघवं—लघुताम्, दत्तवस्तुग्रहणे स्वस्य ऊनता जिघृक्षुता प्रत्याख्या सत्याकरत्वादिति भावः, लङ्घयितुम्—अतिक्रमितुं स्वीकर्तुमिति भावः। दोलायमानेन—किंकर्तव्यविमूढतया गृह्णामि न वेति संशयितेनेत्यर्थः। कथं कथमपि—अतिक्लेशेनेत्यर्थः। अतिसौजन्यनिघ्न,—अतिसौजन्यवशंवदः। नः,—

यया मनोरथदुर्लभानि फलन्ति फलानि, यया च अस्मासु प्रीयते भगवान् भुवनगुरुर्भैरवाचार्य्यः। श्वो द्रष्टास्मि भगवन्तम्" इत्युक्त्वा च मस्करिणं व्यसर्जयत्; अनया च वार्त्तया परां मुदम् अवाप।

(२६०) अपरेद्युश्च प्रातरेव उत्थाय वाजिनम् अधिरुह्य, (२६१) समुच्छ्रितश्वेतातपत्रः (२६२) समुद्धूयमानधवलचामरयुगलः कतिपयैरेव राजपुत्रैः परिवृतो भैरवाचार्य्यं सवितारमिव शशी द्रष्टुं प्रतस्थे। गत्वा च किञ्चित् अन्तरं (२६३) तदीयमेव अभिमुखम् आपतन्तम् अन्यतमं शिष्यम् अद्राक्षीत्; अप्राक्षीच्च,—"क्व भगवान् आस्ते?" इति।

---

अभ्यासम्। यया—शिवभक्त्या इत्यर्थः। ["न, यया मनोरथ—" इत्यत्र "न मनोरथ—" इति पाठान्तरम्]। मनोरथदुर्लभानि—मनोरथेनापि दुर्लभानि—दुष्प्रापाणि। फलन्ति—प्रसवन्ति, भवन्ति इत्यर्थः। यया—शिवभक्त्या इत्यर्थः। ["यया च" इत्यत्र "येनैव च" इति पाठे,—येन—धर्मेणेत्यर्थः] श्वः—परदिने। द्रष्टास्मि—अवलोकिताहे, [दृशधातोर्लुटि उत्तमपुरुषैकवचनस्य रूपमिदम्]। वार्त्तया—वृत्तान्तेन, भैरवाचार्य्यप्रसादरूपयेति भावः।

(२६०) अपरेद्युरित्यादि।—अपरेद्युः,—अपरस्मिन् दिवसे, ["सद्यःपरुत्-परार्य्यैषमः—" (५।३।२२ पा०) इति निपातनात् सिद्धम्] वाजिनम्—अश्वम्।

(२६१) समुच्छ्रितेति।—समुच्छ्रित—समुन्नत, समुन्नत वा, श्वेत—शुभ्रम्, आतपत्र—छत्रं यस्य तथाभूतः।

(२६२) समुद्धूयमानेति।—समुद्धूयमान—सवीज्यमान, धवलं—श्वेत, चामरयुगलं यस्य तथोक्तः। सवितारमिव—सूर्य्यमिव। शशी—चन्द्रः। "सवितारमिव शशी" इत्यनेन भैरवाचार्य्यस्य अतीव तेजस्वित्वं राज्ञश्च लोकरञ्जकत्वं ख्यापितम्। किञ्च, शशी यथा सूर्य्यप्रभयैव पुष्टः प्रभावान्वितो जायते, राजाऽपि तथा भैरवाचार्य्यप्रसादेन अद्भुतं लब्ध्वा प्रभावशाली सञ्जातः।

(२६३) तदीयमेव—भैरवाचार्य्यसम्बन्धिनमेवेत्यर्थः। अभिमुखं—सम्मुखम्। आपतन्तम्—आगच्छन्तम्। अन्यतमम्—एकतमम्। शिष्यम्—अन्तेवासिनम्। अद्राक्षीत्—ददर्श, [दृशेर्लुङि प्रथमपुरुषैकवचनरूपम्]।

सोऽकथयत्,—"अस्य (२६४) जीर्णमातृगृहस्य उत्तरेण बिल्ववाटिकाम् अध्यास्ते" इति। गत्वा च तं प्रदेशम् (२६५) अवततार तुरङ्गमात्, प्रविवेश च बिल्ववाटिकाम्।

(२६६) अथ महतः कार्पटिकवृन्दस्य मध्ये प्रातरेव स्नातं, (२६७) दत्ताष्टपुष्पिकम्, अनुष्ठिताग्निकार्यं, (२६८) क्षतभस्मचय-परिहारपरिकरे (२६९) हरितगोमयोपलिप्तस्थलिनिलविनते

(२६४) जीर्णमातृगृहस्य—पुरातनदेवीमन्दिरस्येत्यर्थः, ["एनपा द्वितीया" (२।३।३१ पा०) इति एनपेति योगविभागात् षष्ठी] उत्तरेण—उत्तरस्यां दिशि। बिल्ववाटिका—बिल्वद्रुमशोभितवाटीत्यर्थः।

(२६५) अवततार—अवरुरोह। ["अवततार तुरङ्गमात्" इत्यत्र "अवततार" इति मात्रपाठो दृश्यते क्वचित्]।

(२६६) अथेत्यादि।—"अथ" इत्यस्य "भैरवाचार्यं ददर्श" इत्युत्तरेणान्वयः। कार्पटिकवृन्दस्य—कर्पटं—चीरवस्त्रं परिदधति इति कार्पटिकाः,—कौपीनधारिणः, तेषां वृन्दस्य—समूहस्य, अतिमहतः समूहस्य इत्यर्थः।

(२६७) दत्ताष्टपुष्पिकम्—दत्ता, इष्टदेवायेति भावः, अष्टौ पुष्पिकाः,—पञ्चादयः येन तम्, यद्वा,—अष्टौ पुष्पाख्येन अष्टपुष्पिका, अष्टानां पुष्पिकाणां समाहारः इति अष्टपुष्पिकं समाहारद्विगुसमासाश्रयणादप्यवसेयम्, तत्र पुष्पप्रभृति गन्धप्रधानं पार्थिवम्, अर्घ्यस्नानादिकं रसप्रधानमाप्यम्, प्रदीपाभरणप्रभादिकप्रधानं तैजसम्, अनुलेपनप्रभृति-स्पर्शप्रधानं वायवीयम्, सुषिरातोद्यगीतादिकं शब्दप्रधान-माकाशीयम्, अनुध्यानं मानसम्, अस्ति सर्वेश्वर इति निश्चयो बौद्धम्, अहमेवेश्वर इत्याहङ्कारिकम्, अथवा,—आसनवर्गप्रभृतिषु अष्टसु अष्टैकमष्टपुष्पिका। अनुष्ठिताग्निकार्यं—कृतहोमविधानम्।

(२६८) क्षतेति।—क्षत भस्मचयपरिहारस्य—भूतिसमूहसम्मार्जनस्य, परिकरः,—प्रक्रिया यस्य तस्मिन् भस्मराशिरहिते इति भावः। ["क्षतभस्मचय—" इत्यत्र "क्षतभस्मरेखा—" इति पाठे—क्षतं भस्मरेखायाः,—भस्मबिन्दोरपि, परिहारस्य परिकरो यस्य, यद्वा,—क्षतं भस्मना रेखायाः,—दण्डाकारचित्रविशेषस्य, परिहारः,—त्यागः, विन्यासः इत्यर्थः, व्याघ्रचर्मस्थापनस्य सीमानिर्देशार्थमिति भावः, तस्य परिकरः यस्य तस्मिन्]।

(२६९) हरितेति।—हरितेन—श्यामलेन, सरसेनेति भावः, गोमयेन

व्याघ्रचर्मणि उपविष्टं, (२७०) कृष्णकम्बलप्रावरणनिभेन (२७१) असुरविवरप्रवेशाशङ्कया पातालान्धकारावासमिव अभ्यस्यन्तम्, उन्मिषता विद्युत्कपिलेन आत्मतेजसा (२७२) महामांसविक्रयक्रीतेन मनःशिलापङ्केनेव शिष्यलोकं लिम्पन्तं, (२७३) जटीकृतैकदेशलम्बमानरुद्राक्षशङ्खगुटिकेन ऊर्ध्वचूडेन शिखापाशेन बध्नन्तमिव (२७४) विद्यावलेपदुर्विदग्धान् उपरि

---

उपविष्टं—स्थितं, शोभितम् इति भावः, क्षितितले—भूतले, तस्मिन् वितते—विस्तृते सति ।

(२७०) कृष्णकम्बलेति ।—कृष्णवर्णं कम्बलम् एव प्रावरणं—गात्राच्छादनं, तस्य निभः,—छलं तदेव निभः,—छद्म वा तेन । ("निभस्तु कथितो व्याजे पत्निभ सदृशे त्रिषु" इति मेदिनी )।

(२७१) असुरेति ।—असुरविवरं—पातालं, तस्मिन् प्रवेशः, तस्य आशङ्का—वितर्कः, सम्भावना इत्यर्थः तया । पातालेति ।—पाताले यः अन्धकारः, तस्य आवासं—स्थितिनिलयं । अभ्यस्यन्तम्—शिक्षमाणम् । उन्मिषता—स्फुरता, विद्युत्कपिलेन—तडित्पिङ्गलेन, आत्मतेजसा—निजदीप्तिना ।

(२७२) महामांसेति ।—महामांसं—नरमांसं, तस्य विक्रयः,—विक्रयलब्धं धनम् इत्यर्थः, तेन क्रीतेन तेन, यद्वा—विक्रयः,—विनिमयः, तेन क्रीतेन तेन । मनःशिलापङ्केन—मनःशिला—उपधातुविशेषः, तस्याः पङ्कः,—कर्दमः, तेन इव । शिष्यलोकम्—अन्तेवासिजनम् ।

(२७३) जटीति ।—अजटा जटा सम्पद्यमाना कृता जटीकृतः, एकदेशः—एकांशः, तस्मिन् लम्बमानाः रुद्राक्षाः,—जपमाल्यवर्तिन्यः, शङ्खगुटिकाः—शङ्खनिर्मितगुटिकाश्च, जपसाधना इति भावः, यस्य,—रुद्राक्षसहित शङ्खगुटिका यस्मिन् तथोक्तेन, यद्वा,—शङ्खगुटिका,—शङ्खः,—ललाटास्थि, ("शङ्खो निधौ ललाटास्थ्नि" इत्यमरः) तत्कृता गुटिका, एषा ललाटास्थ्ना जपमालां कुर्वन्ति इति व्यवहारः । ऊर्ध्वचूडेन—उन्नतं संयमितेन शिखापाशेन—शिखाबन्धनेन । ["प्रदक्षा शिखा शिखापाश" इति केनचिद् व्याख्यातं तन्न समीचीनम्, "पाश कुन्तलायाम्" इति श्रीमद्देवीप्रसादेन कृतार्थे एव प्रयोगस्य विधानात् ]।

(२७४) विद्येति ।—विद्यया अवलेपः,—अहङ्कारः, तेन दुर्विदग्धाः,

सत्वरतः सिद्धान्, (२७५) धवलकतिपयशिरोरुहेण शिरसा पञ्च-पञ्चाशतं वर्षाण्यतिक्रामन्तं, (२७६) खालित्यचीयमानशङ्ख-लोमलेखं, (२७७) लोमशकर्णशष्कुलीप्रदेशं, पृथुललाटतटं, तिरश्चा भस्मललाटिकया बहुशः (२७८) शिरोद्धूततदग्ध-गुग्गुलुसन्तापस्फुटितकपालास्थिपाण्डुरराजिशङ्कामिव जनयन्तं, (२७९) सहजललाटवलिभङ्गसङ्कोचितकूर्चभागं, बभ्रुभासं,

---

—दुर्विनीता नाम। उपरि—आकाशे इत्यथ। सत्वरत,—ऐश्वर्यमत, सिद्धान—दिव्ययोनिविशेषान।

(२७५) धवलेति।—धवला,—श्वेता, कतिपये शिरोरुहा,—केशा यस्मिन् तथोक्तेन, शिरसा—मस्तकेन, [ "शिरसा" इत्यत्र "वयसा" इति पाठे,—वयसा—जीवनकालेन, जरयेति भाव।

(२७६) खालित्येति।—खलति,—खल्वाट, तस्य भाव खालित्यम्—इन्द्रलुप्तमित्यर्थ, तेन चीयमाना शङ्खस्य—ललाटास्थ्न, लोमलेखा—केशनिचय यस्य तथोक्तम्।

(२७७) लोमशेति।—लोमश,—लोमाकीर्ण, [ "लोमादि—" (५।२।१०० पा०) इत्यादिना शप्रत्यये रूपम् ] कर्णशष्कुली—कर्णकुहर, तस्या प्रदेश,—पार्श्व यस्य तम्। पृथुललाटतटं—प्रशस्तभालदेशम्। तिरश्चा—तिर्यग्वर्त्तिन्या, भस्म-ललाटिकया—भस्मकल्पित ललाटभूषणेन, भस्मत्रिपुण्ड्रकेण इत्यर्थ।

(२७८) शिर इति।—शिरस ऊर्द्ध्व शिरोर्द्ध, [ निपातनात समासलोप ] तस्मिन् धृतेन दग्धेन गुग्गुलुना—गन्धद्रव्यभेदेन सन्तापेन—उत्तापेन, स्फुटितानि—विदीर्णानि, यानि कपालास्थीनि—कपालान्येव अस्थीनि, मस्तकास्थीनि इत्यथ, ( "कपालोऽस्त्री शिरोऽस्थि स्यात घटादे शकल व्रजे" इति मेदिनी ) तेषा पाण्डुरा—धवला, राजि,—आवलि, तस्या शङ्का त्रास इव।

(२७९) सहजेति।—सहज —स्वाभाविक, ललाटे य वलिभङ्ग,—तरङ्गित-चर्मरेखाविशेष, तेन सङ्कोचित,—ह्रस्वता प्रापित इत्यर्थ, कूर्चभाग,—भ्रूमध्य देश यस्य तथोक्तम। [ "कूर्चमस्त्री भ्रुवोर्मध्यम" इत्यमर। "कूर्चभागम्" इत्यत्र "कूर्चभागाम्" इति पाठे,—सङ्कोचित कूर्चभाग यया तथा वा तादृश, अक्षिस्तु पदं,—"भ्रूलताम्" इत्यस्य विशेषणमेवत् ]। बभ्रुभास—पिङ्गलकान्तिम्।

(२८०) भ्रूसङ्गत्या निरन्तराम् आयामिनीम् एकामिव भ्रूलेखां बिभ्राणम्, ईषत्काचरकनीनिकेन (२८१) रक्तापाङ्गेन निर्गतांशुप्रतानेन मध्यधवलभासा इन्द्रायुधेनेव अतिदीर्घेण लोचनयुगलेन परितो महामण्डलमिव अनेकवर्णरागम् आलिखन्तं, (२८२) सितपीतलोहितपताकावलीशबलं, शिवबलिमिव दिक्षु विक्षिपन्तं, (२८३) तार्क्ष्यतुण्डकोटिकुब्जाग्रघोणं, (२८४) दूरविदीर्णसृक्कसङ्क्षिप्तकपोलं, किञ्चित् दन्तुरतया सदा हृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्ता-

---

(२८०) भ्रूसङ्गत्येति।—भ्रुवोः सङ्गतिः,—सम्मेलनं तया, निरन्तराम्—अविच्छिन्नाम्, आयामिनीम्—आयताम्। भ्रूलेखा—भ्रुवोः रेखाम्। ईषदिति।—ईषत् काचरा—पीतवर्णा, कनीनिका—मध्यतारा यस्य तेन। ["ईषत्काचर—" इत्यत्र "ईषत्काचकाचर—" इति पाठे,—ईषत् काचेन—नेत्ररोगविशेषेण काचरा इत्यर्थः]।

(२८१) रक्तापाङ्गेन—लोहितप्रान्तदेशेन। निर्गतेति।—निर्गता अंशवः—किरणाः, प्रतानाः,—प्रसरा यस्मात् तेन। ["रक्तापाङ्गेन निर्गतांशुप्रतानेन" इत्यत्र "रक्तापाङ्गनिर्गतांशुप्रतानेन" इति समस्तपाठे,—रक्तात्—रक्तवर्णात् अपाङ्गात्—प्रान्तदेशात्, निर्गता अंशुप्रताना यस्य तेन]। मध्येति।—मध्ये धवला भा—प्रभा यस्य तेन। इन्द्रायुधेनेव—शक्रधनुषा इव। अतिदीर्घेण—आकर्णविस्तृतेनेति भावः। परितः,—समन्तात् महामण्डलं—सर्वतोभद्रादिरूपं यन्त्रमित्यर्थः। अनेकेति।—अनेके,—विविधे, वर्णे रागः,—रञ्जनं यत्र तम्।

(२८२) सितेति।—सिता,—श्वेता, पीता,—हरिद्राभा, लोहिता,—रक्ता च या पताका,—वैजयन्त्यः, तासाम् आवल्या,—श्रेण्या, ताभिः शबलं—विविधवर्णरञ्जितमित्यर्थः, नेत्रयुगलस्य प्रागुक्तविविधवर्णशालित्वात् इति भावः। शिवबलिं—शिवपूजाविधिम्।

(२८३) तार्क्ष्येति।—तार्क्ष्यः,—गरुडः, ("गरुत्मान् गरुडस्तार्क्ष्यः" इत्यमरः) तस्य तुण्डकोटिः,—मुखाग्रम्, चञ्चुयम् इत्यर्थः, तद्वत् कुब्जम्—उन्नतपृष्ठमित्यर्थः, अग्रघोणं—घोणा—नासिका, तस्याः अग्रं यस्य तथोक्तम्।

(२८४) दूरेति।—दूरम्—अत्यन्तं, विदीर्णाभ्याम्—विस्तृताभ्याम् सृक्कभ्याम्—ओष्ठप्रान्ताभ्याम्, ("प्रान्तावोष्ठस्य सृक्कणी" इत्यमरः) संक्षिप्तौ—सङ्कोचितौ, कपोलौ

लोकेन धवलयन्तं दिशां चक्रवालं, (२८५) जिह्वाग्रस्थितसर्वशैव-संहितातिभारेणेव मनाक् प्रलम्बितौष्ठं, (२८६) प्रलम्बश्रवण-पालिप्रेङ्खिताभ्यां स्फाटिककुण्डलाभ्यां शुक्र-बृहस्पतिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धया अनुबध्यमानं, (२८७) बद्ध-विविधौषधिमन्त्रसूत्रपङ्क्तिना सलोहवलयेन एकप्रकोष्ठेन शङ्खखण्डं (२८८) पूष्णो दन्तमिव भगवता भवेन भग्नं भक्त्या

---

—गण्डौ यस्य तम्। किञ्चिदुन्नततया—ईषदुन्नतदन्तत्वेन सदा हृदयी संनिहितस्य—अवस्थितस्य, हरस्य मौलौ—शिरसि, यः चन्द्रः, तस्य आतपः,—आलोकः तेन इव। निर्गच्छता—बहिर्निःसरता, दन्तालोकेन—दशनप्रभया, दिशां चक्रवालं—मण्डलम्, ["चक्रवालम्" इत्यत्र "जालकम्" इति पाठे,—समूहमित्यर्थः] धवलयन्तम्—श्वेतयन्तम्।

(२८५) जिह्वेति।—जिह्वाया,—रसनायाः, ["शेवयह्वजिह्वाग्रीवाऽऽप्वामीवाः" (उ० १ पा० १५४ सू०) इति लिहधातोः वन्प्रत्यये निपातनात् सिद्धम्] अग्रे स्थिता या सर्वाः शैवसंहिता—शिवचरितग्रन्थाः, तासाम् अतिभारेणेव मनाक्—ईषत्, प्रलम्बितः ओष्ठः यस्य तथोक्तम्।

(२८६) प्रलम्बेति।—प्रलम्बयोः,—प्रकर्षेण लम्बमानयोः, श्रवणपाल्योः,—कर्णलतयोः, प्रेङ्खिते—आन्दोलिते ताभ्याम्। स्फाटिककुण्डलाभ्याम्—स्फटिकमणि-निर्मितकर्णभूषणाभ्याम्। शुक्र-बृहस्पतिभ्याम्—भार्गवाङ्गिरसाभ्याम् इव सुरेति।—सुराणां—देवानां शक्रेणेति भावः असुराणां—दैत्यानां, बृहस्पतिनेति भावः, विजयाय—पराजयार्थं विजयसाधनीभूता या विद्या—मन्त्रादिरूपा इत्यर्थः, तस्याः सिद्धिः,—साधनं, प्राप्तीच्छा इति यावत् तस्यां या श्रद्धा—आदरः तया। अनुबध्य-मानम्—अनुगम्यमानम्।

(२८७) बद्धेति।—बद्धा विविधानाम् औषधीनां मन्त्राणां च सूत्रपङ्क्तिः यस्मिन् तथोक्तेन सलोहवलयेन—लौहवलयालङ्कृतेन, एकप्रकोष्ठेन—एकेन कूर्पर-मणिबन्धयोः अन्तरदेशेन, ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी)। शङ्खखण्ड—कम्बुशकलम्।

(२८८) पूष्ण,—पूषानामदेवविशेषस्य। दन्तमिव—रदम् इव। भवेन—हरेण। भग्न—खण्डितम्। भक्त्या—श्रद्धाविशेषेणेत्यर्थ, हरकरस्पर्शेन दन्तस्य पवित्रतया तत्र भक्तिर्मन्तव्या। पुरा दक्षस्य प्रजापतेः यज्ञे हरनिन्दाप्रसङ्गे पूषा जहास, तत

भूषणीकृतं कलयन्तम्, (२८९) अखिलरसकूपोदञ्चनघटीयन्त्रमालाम् इव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम्, उरसि दोलायमानेन आपिङ्गलाग्रेण कूर्चकलापेन सम्मार्जयन्तमिव अन्तर्गतं निजरजोनिकरम्, (२९०) अतिनिबिडनीललोममण्डलनिचितस्य ध्यानलब्धेन ज्योतिषा दग्धमिव हृदयदेशं दधानम्, (२९१) ईषदशिथिलवलिवलयबध्यमानतुन्दम्, (२९२) उपचीयमानस्फिग्मांसपिण्डकं, (२९३) पाण्डुरपवित्रक्षौमावृतकौपीनं, (२९४) सावष्टम्भपर्यङ्कबन्ध-

---

अतिकुपिता इव तस्य दन्तपाटी चपेटप्रहारेण अभञ्जीति पुराणवार्ता। कलयन्तम्—धारयन्तम्।

(२८९) अखिलेति।—अखिलस्य—समस्तस्य, रसस्य—जलस्य, अनुरागस्य [redacted] इव प्रीति इति भावः, कूपात्—जलाधारविशेषात् संसारकूपादिति भावः, उदञ्चनाय—उद्धरणाय, घटीयन्त्रमालाम् इव—घटीयन्त्रपङ्क्तिम् इव, कूपात् जलोद्धरणार्थं घटीयन्त्रं भ्राम्यते इति लोकव्यवहारः। उरसि—वक्षसि। आपिङ्गलाग्रेण—ईषत्कपिलाग्रेण, कूर्चकलापेन—श्मश्रुनिचयेन इत्यर्थः, कलाप ग्रहणं सम्मार्जनोपायार्थम्। सम्मार्जयन्तम्—शोधयन्तम्। अन्तर्गतं—हृदिस्थितम्। निजरजोनिकरम्—स्वरजोगुणविकारम्, धूलिसञ्चयञ्च।

(२९०) अतीति।—अतिनिबिडेन—अतिघनेन, नीलेन—कृष्णेन, लोममण्डलेन—रोमनिवहेन, निचितम्—व्याप्तम्। ["निचितम्" इत्यत्र "चितम्" इति पाठेऽपि स एवार्थः]। ज्योतिषा—अन्तर्ज्योतिषा, ज्ञानरूपेणेति भावः।

(२९१) ईषदिति।—ईषत् अशिथिलेन—प्रगाढेन, वलिवलयेन—वलिविशेषेण इत्यर्थः, बध्यमानम्—वेष्ट्यमानम्, तुन्दम्—उदरं यस्य तथोक्तम्। ("पिचिण्डकुक्षी जठरोदरं तुन्दम्" इत्यमरः)।

(२९२) उपचीयमानेति।—उपचीयमानम्—आप्याय्यमानम्, स्फिचौ,—नितम्बौ, ("स्त्रियां स्फिचौ कटिप्रोथौ" इत्यमरः। कटिप्रोथौ—कट्यां नितम्बस्थमांसपिण्डद्वयौ) मांसपिण्डकं यस्य तम्।

(२९३) पाण्डुरेति।—पाण्डुरेण—धवलेन, पवित्रेण—विशुद्धेन क्षौमेण—पट्टवस्त्रेण, आवृतम्—आच्छादितम्, कौपीनम्—अन्तर्वस्त्रं यस्य तथाभूतम्।

(२९४) सावष्टम्भेति।—सावष्टम्भ—सगर्वं सवेगम् इत्यर्थः, सुदृढम् इति

मण्डलितेन अमृतफेनश्वेतरुचा योगपट्टकेन वासुकिना इव (२९५) अप्रतिहतानेकमन्त्रप्रभावाविर्भूतेन प्रदक्षिणीक्रियमाणम्, (२९६) अरुणतामरससुकुमारतलस्य पादयुगलस्य निर्मलैः नखमयूखजालकैः जर्जरयन्तमिव (२९७) महानिधानोद्धरणरसेन रसातलं, (२९८) तोयक्षालितशुचिना धौतपादुकायुगलेन हंसमिथुनेन इव (२९९) भागीरथीतीर्थयात्रापरिचयागतेन (३००) आसुष्यमानचरणान्तिकं, (३०१) शिखरनिखातकुब्जकालायसकण्टकेन वैणवेन

---

यावत्, च पर्य्यङ्कबन्धः,—आसनविशेषः, तेन मण्डलितं—वलयीकृतं तेन। अमृतेति।—अमृतस्य फेनवत्, अथवा —अमृतस्य—समुद्रमन्थनोद्भूतस्य इति भावः, फेनं, श्वेता—शुभ्रा, रुक्—कान्तिः यस्य तेन, योगपट्टकेन—प्रागुक्तेन योगिधार्य्यमहाभूषणविशेषेण।

(२९५) अप्रतिहतेति।—अप्रतिहतानां—प्रतिरोद्धुम् अशक्यानाम्, अमोघानामित्यर्थः अनेकेषां मन्त्राणां प्रभावेण - सामर्थ्येन आविर्भूतं —उपस्थितं, वशीकृतम् इति भावः तेन। प्रदक्षिणीक्रियमाणं—समन्तात् वेष्ट्यमानम् इत्यर्थः।

(२९६) अरुणेति।—अरुणं—रक्तं, यत् तामरसं - पद्मं, तद्वत् सुकुमारं—सुकोमलं तलं यस्य तथाभूतस्य। जर्जरयन्तम् इव—विदारयन्तमिव।

(२९७) महानिधानेति।—महानिधानस्य—महतो निधेः, महार्घरत्नविशेषस्य इत्यर्थः उद्धरणम्—उत्तोलनं, तस्मिन् यो रसः,—रागः तेन। रसातलं—पातालम्।

(२९८) तोयेति।—तोयेन—जलेन क्षालितं—धौतम् अत एव शुचि—पवित्रं तेन, अथवा,—तोये क्षालितं—सर्वदा जलेऽवस्थानात् धौतमित्यर्थः, अत एव शुचि—शुभ्रं तेन।

(२९९) भागीरथीति।—भागीरथी—गङ्गा एव, [ "तेन निर्वृत्तम्" (४।२।६८ पा०) इत्यणि "टिड्ढाणञ्—" (४।१।१५ पा०) इत्यादिना ङीपि रूपम् ] तीर्थं—पुण्यक्षेत्रं, तस्मिन् यात्रा—गमनं, तत्र च परिचयः,—सङ्गतिः, तेन आगतः तेन।

(३००) आसुष्यमानेति।—आसुष्यमानं - सेव्यमानं, चरणान्तिकं—चरणसन्निधिः यस्य तथोक्तम्।

(३०१) शिखरेति।—शिखरे—शृङ्गे अग्रे वा, निखातः,—प्रोथितः, कुब्जः,—कुञ्चित इत्यर्थः, कालायसकण्टकः,—कृष्णलौहकण्टकः यस्य तेन, [ एतेन विशाखिका-

विशाखिकादण्डेन (२०२) सर्वविद्यासिद्धिविघ्नविनायकाय नयनाङ्कुशेन इव सततपार्श्ववर्तिना विराजमानम्, अबहुभाषिणं, मन्दहासिनं, सर्वोपकारिणं, कुमारब्रह्मचारिणम्, अतितपस्विनं, महामनस्विनं, (२०३) क्षमक्रोधम्, अक्रमानुरोधं, महानगरमिव (२०४) अदीनप्रकृतिशोभितं, मेरुमिव (२०५) कल्पतरुपल्लवराशिसुकुमारच्छायं, कैलासमिव (२०६) पशुपतिचरणरजःपवित्रितशिरसं, शिवलोकमिव (२०७) माहेश्वरगणानुयातं, जलनिधिमिव

---

ङ्कुशस्य अङ्कुशसाम्य प्रदर्शितम्] वैणवेन—वेणु—वंशस्तस्य, तस्यायं वैणव, —वेणुनिर्मित इत्यर्थं तेन विशाखिकादण्डेन—स्वभिवल्गुडेनेत्यर्थ।

(२०२) सर्वेति।—सर्वासां विद्यानां सिद्धौ विघ्न—अन्तरायः यो विनायक, —विघ्नराज, तस्य अपनयनाय—अपसारणाय अङ्कुश—अस्त्रविशेष तेन इव। सर्वोपकारिणं—सर्वेषाम् उपकारकारिणम्। कुमारब्रह्मचारिणं—नैष्ठिकब्रह्मचारिणम् इत्यर्थं। महामनस्विनं—प्रशस्तचित्तम्।

(२०३) क्षमक्रोधम्—अल्पक्रोधं प्रायेण क्रोधवर्जितम् इत्यर्थं। अक्रमानुरोधम्—अक्रम,—क्रमस्य अनुरोध—अनुवर्त्तनं, विचारणम् इत्यर्थं यस्य तथोक्त, सहसासमाहृतमिति यावत्।

(२०४) अदीनेति।—अदीना—दैन्यवर्जिता या प्रकृति,—स्वभाव तया शोभित तम उदारप्रकृतिमित्यर्थं, अन्यत्र—अदीनाभि—दारिद्र्यविहीनाभि, प्रकृतिभि—प्रजाभि प्रधानपुरुषै वा शोभितम्।

(२०५) कल्पेति।—कल्पतरवा—कल्पवृक्षाणां पल्लवराशय—किसलयनिचया तद्वत् सैव सुकुमारा—सुकोमला सुखप्रदा च छाया—कान्ति अनातपश्च यस्य तथोक्त तम्। ("छाया सूर्यप्रिया कान्ति प्रतिबिम्बमनातप" इत्यमर)।

(२०६) पशुपतीति।—पशुपते—हरस्य चरणरजोभि पवित्रित—पावित, शिर—मस्तकम्, अन्यत्र—पवित्रितानि शिरांसि—शृङ्गाणि यस्य तथोक्त तम्।

(२०७) माहेश्वरेति।—महेश्वरो देवता येषां ते माहेश्वरा—" इत "

(३०८) अनेकनदनदीसहस्रप्रक्षालितशरीरं, जाह्नवीप्रवाहमिव (३०९) बहुपुण्यतीर्थस्नानशुचिं, धाम धर्मस्य, तीर्थं तथ्यस्य, कोशं कुशलस्य पत्तनं पूततायाः, (३१०) शालां शीलस्य, क्षेत्रं क्षमायाः, शालेयं शालीनतायाः, स्थानं स्थितेः, आधारं धृतेः, आकरं करुणायाः, निकेतनं कौतुकस्य, आरामं रामणीयकस्य, प्रासादं प्रसादस्य, आगारं गौरवस्य, समाजं सौजन्यस्य, सम्भवं सद्भावस्य, कालं कलेः, भगवन्तं साक्षात् इव विरूपाक्षं भैरवाचार्यं ददर्श।

---

[ "शाङ्ग –" (४।२।४४ पा०) इत्यादिना अपि रूपम्] तेषां यथा —समूहाः, अथवा,—महेश्वरस्य इमे माहेश्वराः, [ "तस्येदम्" (४।३।१२० पा०) इत्यपि रूपम्] ते यथा,—प्रमथवर्गाः, ("गणाः प्रमथवल्लरीर्षे" इति मेदिनी) तैः अनुयातः,—अनुगत तम्।

(३०८) अनेकेति।—अनेकेषु नदनदीनां सहस्रेषु प्रक्षालितं—स्नातम् इत्यर्थः, शरीरं यस्य, अथवा,—अनेकैर्नदनदीसहस्रैः प्रक्षालितं शरीरं यस्य तथोक्तं तम्, सर्वासामेव नदनदीनां सागरे सङ्गतत्वादिति भावः।

(३०९) बह्विति।—बहुषु पुण्येषु तीर्थेषु—हरिद्वारादिपविन्त्रस्थलेषु इत्यर्थः, स्नानेन—स्थित्या, शुचि,—पवित्रं तम्। विशेषणमिदम् उभयत्रापि तुल्यार्थकम्। धाम—आश्रयम्। तीर्थं—क्षेत्रम्। तथ्यस्य—सत्यस्य। कोशं—भाण्डागारम्। कुशलस्य—मङ्गलस्य। पत्तनं—नगरम्। पूततायाः,—पवित्रतायाः।

(३१०) शालां—गृहम्। शीलस्य—सुचरितस्य। क्षेत्रं—भूमिम्। क्षमायाः,—क्षान्तेः। शालेयं—शाला शालेयं—गृहम् इत्यर्थः। शालीनतायाः,—विनयितायाः। स्थितेः,—मर्यादायाः शिष्टाचारस्य इत्यर्थः। स्थानम्—आवासं। धृतेः,—धैर्यस्य। आधारम्—आश्रयं। आकरम्—उत्पत्तिस्थलम्। निकेतनम्—आलयम्। कौतुकस्य—कौतूहलस्य, तद्दर्शनाय सर्वेषामेव कौतूहलान्युत्पद्यन्ते इति भावः। आरामम्—उपवनम्। रामणीयकस्य—रमणीयतायाः। प्रासादं—हर्म्यम्। प्रसादस्य—प्रसन्नतायाः। समाजं—गोष्ठीम्। सौजन्यस्य—सुजनतायाः, सद्व्यवहारस्य वा। सम्भवम्—उत्पत्तिस्थानम्। सद्भावस्य—साध्वभिप्रायस्य। कालम्—अन्तकम्। कलेः,—कलियुगस्य। विरूपाक्षं—त्रिलोचनम्।

(३११) भैरवाचार्य्यस्तु दूरात् एव राजानं दृष्ट्वा शशिनमिव जलनिधिः चचाल। प्रथमतरोत्थितशिष्यलोकश्च उत्थाय प्रत्युज्जगाम; समर्पितश्रीफलोपायनश्च (३१२) जह्नुकर्णसमुदीर्य्यमाणगङ्गाप्रवाहह्रादगम्भीरया गिरा स्वस्तिशब्दम् अकरोत्।

नरपतिरपि (३१३) प्रीतिविस्तार्य्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीककाननानि,

(३१४) ललाटपट्टपर्यस्तेन च उदंशुना शिखामणिना महेश्वरप्रसादमिव तृतीयनयनोद्गमेन प्रकाशयन्, (३१५) आवर्जितकर्णपल्लवपलायमानमधुकरः शिवमेवासमुन्मूलिताशेषपापलवमुच्यमान इव दूरावनत' प्रणामम् अभिनवं चकार। आचार्य्योऽपि,—"आगच्छ, अत्रोपविश" इति शार्दूलचर्म्म आत्मीयम् अदर्शयत्। (३१६) उपदर्शितप्रश्रयस्तु राजा मत्तहंसकलगद्गदस्वरसुभगां मधुरसमयीं महानदीमिव प्रवर्त्तयन् वाचं व्याजहार,—"भगवन्! न अर्हसि माम् (३१७) अन्यनृपस्खलितैः खलीकर्त्तुम्। (३१८) अशेषराजकोपेक्षिताया राजलक्ष्म्याः खलु अयं

---

(३१४) ललाटेति।—ललाटपट्टे—भालफलके, पर्यस्त,—पतित तेन, उदंशुना—उद्गतकिरणेन, शिखामणिना—चूडारत्नेन। महेश्वरप्रसादमिव—शङ्करानुग्रहम् इव, तृतीयनयनोद्गमेन—उद्गतेन तृतीयनयनेन इत्यर्थ।

(३१५) आवर्जितेति।—आवर्जितेन—आन्दोलितेन, प्रणामव्यापारे इति भाव, कर्णपल्लवेन—कर्णरूपकिसलयेन इति यावत्, पलायमाना मधुकरा,—भ्रमरा यस्मात् स, अत एव शिवमिति।—शिवस्य सेवया समुन्मूलिताना—समुत्पाटितानाम्, अशेषाणा—समस्ताना पापाना—दुष्कृताना, लवै,—बिन्दुभि, मुच्यमान इव—हीयमान इव। दूरावनत,—दूरादेव आनत सन्। अभिनव—नव एवेत्यर्थ, दर्शनक्षणमेवेति यावत्। शार्दूलचर्म्म—व्याघ्रचर्म्म। आत्मीय—स्वकीयम्।

(३१६) उपदर्शितप्रश्रय —प्रदर्शितविनय। मत्तेति।—मत्तस्य—हृष्टस्य, हंसस्य कल,—मधुरास्फुट, गद्गदस्वर,—अर्द्धोच्चारितस्वरविशेष, स इव स्वर इति भाव, तेन सुभगा—मनोज्ञा, मधुरसमयीम्—इक्षुरसात्मिकाम्, अतीव सुमधुरां स्निग्धां च।

(३१७) अन्येति।—अन्येषा नृपाणा स्खलितानि—दोषा, भवता सह एकासने उपवेशनस्पर्द्धा इति भाव तै, खलीकर्त्तुम्—अखल खल कर्त्तुं, सदोष सम्भावयितुम् इत्यर्थ, अन्ये गर्वान्धा नृपतय बहुभि दोषै कलुषीक्रियन्ते, न अहं तथेति भाव।

(३१८) अशेषेति।—अशेषाणा राज्ञा कोपेन ईक्षिताया,—दृष्टाया, बहवो राजानो निर्ज्जिता, तेषा विजितलक्ष्म्या कोपदृष्टि सम्भवति एवेति भाव, यद्वा, —अशेषै,—समस्तै, राजभि, कोपन—क्रोधेन, तान् विजित्य तथा लब्धाद

(३१९) शीलापराधो द्रविणदौरात्म्यं वा, यदेवम् आचरति मयि गुरुः। अभूमिरयम उपचाराणाम्। अलम् (३२०) अतियन्त्रणया ; दूरस्थितोऽपि मनोरथसिध्यः अयं जनो भवताम्। (३२१) माननीयश्च गुरुवत् न उल्लङ्घनम् अर्हति गुरोः आसनम्। आसताञ्च भवन्त एव अत्र" इति व्याहृत्य परिजनोपनीते वासभि निषसाद। भैरवाचार्योऽपि प्रीत्या अनतिक्रमणीयं नृपवचनम् अनुवर्त्तमानः पूर्ववत् तदेव व्याघ्राजिनम् अभजत।

---

ख्यायनीकरणादिति भाव ईर्ष्यितायाः,—दृष्टायाः, राजलक्ष्म्याः,—राजश्रियाः, मदीयाया इति भाव, यद्वा,—अभिनवराजके—समग्रराजसमृद्धे उपेक्षितायाः,—परित्यक्तायाः, रक्षितुमसामर्थ्यादिति भाव, राजलक्ष्म्याः, विजितशत्रूणामिति भाव, लक्ष्मीर्हि चञ्चला, बहुभोग्या च, अन्यानि राज्ञो विजित्य तल्लक्ष्म्याः एकभोग्यत्व सम्पादनात् चञ्चलायास्तस्या अचञ्चलविधानाच्च लक्ष्म्याः मां प्रति कोप इति मन्तव्यम्। ["राजलक्ष्म्याः" इत्यत्र "हतलक्ष्म्याः" इति पाठे—दुर्भगाया लक्ष्म्या इत्यर्थः]।

(३१९) शीलापराध—चरित्रदोष। द्रविणदौरात्म्य—धनदुर्मनस्ता धनमत्तता इति यावत्। गुरु,—पूज्य भवान मयि विषये एवम्—इत्थं राजा अयमिति कृत्वा विशिष्टसम्मानादिकमित्यर्थ, आचरति व्यवहरति अत्र राज लक्ष्म्याः शीलापराध द्रविणदौरात्म्य वा इति अन्वय। अभूमि,—अस्थानम् अपात्र मित्यर्थ, अयोग्य इति भाव। अयमिति आत्मनिर्देश। उपचाराणा—सेवाना विशिष्टसमादराणामित्यर्थ, राजोचितव्यवहाराणामिति भाव।

(३२०) अतियन्त्रणया—अतिक्लेशेन, अभ्युत्थानादिक्लेशस्वीकारेण इति यावत्, ["गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका" इति न्यायात् अलंयोगे तृतीया] सदयमिति भाव। मनोरथसिध्य—मनोरथेनैव सिध्यता अत्र इत्यर्थ, कदाचिदहष्टस्यापि न प्रभावादिकं श्रुत्वा मनसैव सिध्यतं स्वीकृतवानिति भाव, यद्वा—अहं भवता मनसा भृत्य समुपस्थास्ये आज्ञाकर इति भाव।

(३२१) माननीय—सम्मानार्हम्। उल्लङ्घन—पादेनाक्रमण, मर्यादातिक्रमश्च। आसतां—तिष्ठन्तु। अनुवर्त्तमान,—अनुमोदमान,।

आसीने च सराजके (३२२) परिजने भिषज्जने च समुचितम् अर्घ्यादिकं चक्रे। क्रमेण च रूपमाधुर्यहृतान्तःकरणः (३२३) शशिकरनिकरविमला दशनदीधितीः स्फुरन्तीः शिवभक्तीरिव साक्षात् दर्शयन् उवाच,—"तात। अतिनम्रता एव ते कथयति गुणानां गौरवम्। (३२४) सकलसम्पत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। अद्यतः प्रभृति अदत्तदृष्टिः अस्मि स्वापतेयेषु, यतः (३२५) सकलदीपकलापानलेन्धनैः धनैः अविक्रीतं क्वचित् शरीरकमस्ति।

---

(३२२) परिजने—राजानुयायिनि जने इत्यर्थः। अर्घ्यादिकं—पूजाविधानं, चक्रे—कृतवान्, भैरवाचार्य इति शेषः। रूपेति।—रूपस्य माधुर्येण—रमणीयता-गुणेन, "सर्वावस्थाविशेषेषु माधुर्यं रमणीयता" इति दर्पणः हृतम्—आकृष्टम्, अन्तःकरणम्—मनः यस्य तथाभूतः।

(३२३) शशीति।—शशिनः,—चन्द्रस्य, कराणां—मयूखानां, निकरवत्—समूह इव, विमलाः,—विशदाः। दशनदीधितीः,—दन्तमयूखान्। स्फुरन्तीः,—द्योतमानाः। गुणान् —विद्याविनयादीनां, रत्नमाह। गौरवम्—उत्कर्षं, भारवत्त्वञ्च, अत एव भारातिशयवशात् नम्र एव भवतीति ध्वन्यते।

(३२४) सकलेति।—सकलानां सम्पदाम्—ऐश्वर्याणां, पात्रं—भाजनम्, असि—भवसि। प्रतिपत्तयः—प्रज्ञाः चित्तवृत्तय इति यावत्, विभवानां—सम्पदाम्, अनुरूपाः—सदृश्य एव, यथा त्वं सर्वसम्पन्नः, तथा सर्वसत्त्वपूर्णोऽपि इति भावः। स्वापतेयेषु—धनेषु, [ "पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना स्वपतेर्ढञ् वचनम् ] ("द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः) अदत्तदृष्टिरस्मि—धनेषु मम दृष्टिः नास्तीत्यर्थः नाहं धनलोलुप इति भावः।

(३२५) सकलेति।—सकलाः—समस्ताः दीपकलापाः,—दीपनिवहाः एव, अनलाः,—अग्नयः, तेषाम् इन्धनानि—काष्ठानि तैः, यथा काष्ठैः एव अग्नयः उद्दीप्यन्ते तथा धनैरेव दीपाः प्रवर्द्धन्ते इति भावः। शरीरकं—तुच्छदेहमित्यर्थः, क्वचित्—कुत्रापि अविक्रीतमस्ति—विक्रीतं नास्ति, यद्वा,—धनैः अविक्रीतं—न विक्रीतम् ईदृक शरीरकं क्वचित्—कुत्रापि अस्ति?—नैवास्तीत्यर्थः, अत एव अदत्तदृष्टिरस्मि इति योजना।

( ३२६ ) भैक्षरचिताः सन्ति प्राणाः। दुर्गृहीतानि कतिचित् विद्यन्ते विद्याऽक्षराणि। ( ३२७ ) भगवच्छिवभट्टारकपादसेवया समुपार्ज्जिता कियत्यपि सन्निहिता पुस्तकणिका। स्वीक्रियतां यत् अत्र उपयोगार्हम्। ( ३२८ ) प्रतनुगुणग्राह्याणि कुसुमानि इव हि भवन्ति सतां मनांसि। अपि च, ( ३२९ ) विद्वत्सम्मताः श्रूयमाणा अपि साधवः शब्दा इव सुधीरेऽपि हि मनसि यशांसि कुर्वन्ति। विवरं विशतः कुतूहलस्य फेनधवलैः स्रोतोभिरिव आपद्मियमाणो गुणगणैः आनीतोऽस्मि कल्याणिना" इति।

---

( ३२६ ) भैक्षेति।—भिक्षया लब्धं भैक्षं—भिक्षालब्धम् अन्नादि इत्यर्थः, तेन रचिताः,—पालिताः। "रचिताः" इत्यनेन एभिः प्राणैः यदि कस्यचित् कदाचित् कोऽप्युपकारी भवेत्, तदा प्राणत्यागेनापि स कर्त्तव्य इति सूचितम्। दुर्गृहीतानि —दुःखेन गृहीतानि।

( ३२७ ) भगवदिति।—भगवत,—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥" इत्युक्तषड्गुणशालिनः, शिवभट्टारकस्य—प्रभोः शिवस्य पादसेवया—चरणशुश्रूषया। पुस्तकणिका—पुस्तलेशः। तत्र पुस्तकणिकायां वस्तु, अत्र—जगति, यद्वा—अत्र—विद्याक्षरपुस्तकणिकयोर्मध्ये इत्यर्थः, यत्—वस्तु उपयोगार्हम्—उपयोगम् अर्हतीति तथोक्तं, कस्मिन् कदाचित् उपकारितां व्रजतीति यावत्, तत् स्वीक्रियताम्—आत्मीक्रियतां गृह्यतामित्यर्थः।

(३२८) प्रतन्विति।—प्रतनुना—सूक्ष्मेणाल्पेन सूत्रेण च, गुणेन—उपकारादिना, तन्तुना च, ग्राह्याणि—ग्रहीतुं शक्यानि। कुसुमानि इव इत्यनेन सतां मनसामतीव कोमलत्वं सूचितम्।

( ३२९ ) विद्वदिति।—विद्वद्भिः सम्मताः,—अभिमताः, स्वीकृताश्च। साधवः,—शुद्धाः, विशुद्धाश्च, शब्दा इव, यशांसि कुर्वन्ति—प्रतिपत्तिं विस्तारयन्तीत्यर्थः, विशुद्धाः शब्दा यथा प्रतिपत्तिं विस्तारयन्ति, सन्तोऽपि तथा इति भावः। विवरं—छिद्रं, गह्वरम् इत्यर्थः, अन्तःकरणमिति भावः, पातालं वा, विशतः,—गच्छतः। फेनधवलैः, —फेनवत् धवलैः,—निर्मलैः, फेनेन धवलैः,—शुभ्रैश्च। कल्याणिना—कल्याणभाजनेन, भवता इति शेषः।

राजा [illegible] तं प्रत्यवादीत्,—"भगवन्। ( ३३० ) अनुरक्तेष्वपि शरीरादिषु इव साधूनां स्वामिन एव प्रणयिनः। युष्मद्दर्शनात् उपार्जितमेव च अपरिमित ( ३३१ ) कुशलजातम्। अनेनैव आगमनेन स्पृहणीयं पदम् आरोपितोऽस्मि गुरुणा" इति विविधाभिश्च कथाभि: चिरं स्थित्वा गृहम् अगात्।

अन्यस्मिन् दिवसे भैरवाचार्य्योऽपि राजानं द्रष्टुं ययौ। तस्मै च राजा साम्तःपुरं सपरिजनं ( ३३२ ) सकोषम् आत्मानं निवेदितवान्। स च विहस्य उवाच,—"तात। क्व विभवा ? क्व च वयं वनवर्हिता ? धनोष्मणा म्लायति चलं लता इव मनस्विता। खद्योतानामिव अस्माकमियम् अपरोपतापिनी राजते तेजस्विता। भवादृश्या एव भाजनं भूते." इति स्थित्वा च कञ्चित् कालं जगाम।

( ३३३ ) परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाणि उपायनीचकार। एकदा तु श्वेतकर्पटाहृत किमपि

(३३०) अनुरक्तेषु—अनुरागभाजनेषु शरीरादिषु इव साधूनां ["शरीरादिषु इव साधूनाम्" इत्यस्य "शरीरादिषु साधूनाम्" इति पाठान्तरम्] स्वामिन,—प्रभव, भवादृशा इति शेष, प्रणयिन,—प्रणयवन्त, अनुरागिणो भवन्तीत्यर्थ, प्रभव स्वेषु शरीरेषु इव अनुरक्ता भवन्तीति भाव।

(३३१) कुशलजातं—मङ्गलसमूह। स्पृहणीयम्—अभिलषणीयम्। पद—स्थानम्। गुरुणा—पूज्येन, भवता इति भाव।

(३३२) सकोषं—सधनभाण्डारम्। निवेदितवान्—समर्पयामास। धनोष्मणा—धनदर्पेणेति यावत्। म्लायति—म्लानिं प्राप्नोति। चलम्—अस्थिरम्। मनस्विता—प्रशस्तमनस्कता। खद्योतानामिव—ज्योतिरिङ्गणानामिव, कीटमणिविशेषाणामिव इत्यर्थ। अपरोपतापिनी—न परान् उपतापयतीति तथोक्ता, अस्मिन्नर्थे तेजस्विता परोपतापिनी इति भाव। भूते,—सम्पद। एवम्भूतोऽर्थोऽस्माकं न च इदं, तथा च न मादृशा इति भाव।

(३३३) परिव्राट—भैरवाचार्य्यस्य प्राक् प्रेषित स भिक्षु। तेनैव क्रमेण—प्राक् प्रदर्शितप्रकारेण। उपायनीचकार—उपहारीकृतवान्। श्वेतकर्पटाहृत—श्वेत

आदाय प्राविशत्। उपविश्य च पूर्ववत् स्थित्वा मुहूर्त्तम् अब्रवीत्,—"महाभाग। भवन्तम् आह भगवान्, यथा अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः। तेन ब्रह्मराक्षसहस्तात् अपहृतो महाऽसिः अट्टहासनामा। सोऽयं भवद्भुजयोग्यो गृह्यताम्" इत्यभिधाय अपहृतकर्पटाच्छादनात् परिजनात् आचकर्ष शरद्गगनमिव पिण्डतां नीतं, (२२४) कालिन्दीप्रवाहमिव स्तम्भितजलं, नन्दकजिगीषया कृष्णकोपितं कालियमिव कृपाणतां गतं, लोकविनाशाय प्रकाशितधारासारं प्रलयकालमेघ-

---

वस्त्राच्छादित, किमपि वर्त्तते इति शेषः। "महाभाग" इति सम्बोधनं प्रकृतोपयोगि इति मन्तव्यं, भाग्यवशात् प्रसादलाभस्य आगमभावित्वात्। भगवान्—भैरवाचार्यः, भवन्तमाह किमिति? तदेवाह, यथेति—अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः, कश्चिदस्तीति शेषः। तेन—पातालस्वामिनेत्यर्थः। महाऽसिः,—महान् तरवारिः। अपहृतेति।—अपहृतम्—अपनीतं कर्पटाच्छादनं—वस्त्रावरणं येन तथोक्तात्, परिजनात्—अनुचरजनादित्यर्थः, ["कर्पटाच्छादनात् परिजनात्" इत्यत्र "कर्पटाच्छादनात् परिवारात्" इति पाठे,—वस्त्रावृतात् खड्गकोषात् इत्यर्थः। "आचकर्ष" इत्यस्य "कृपाणम्" इत्युत्तरेण सम्बन्धः। प्राक्—"श्वेतकर्पटावृतं किमपि आदाय प्राविशत्" इत्यनेन स्वयमेव आदाय प्राविशत् इति गम्यते, न तु अन्यस्य कस्यचित् प्रवेशः, अत्र तु "परिजनादाचकर्ष" इत्युक्तं, विरुद्धमेतत् पूर्वोक्तवाक्यविरोधस्य स्यात्। "परिवारात्" इति पाठे न काऽप्यनुपपत्तिः, तत आकर्षणे विरोधासम्भवात्]। शरद्गगनमिव—शरत्कालिकाकाशमिव, पिण्डतां नीतं—घनत्वं प्रापितं, नैर्मल्यादिति भावः, न तु नीलत्वात्, असौ कृष्णतायाः वक्ष्यमाणत्वात्, असिः,—पिण्डतां नीतम्—लौहत्वं गमितं, ("लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी" इत्यमरः)।

(२२४) कालिन्दीप्रवाहमिव—यमुनास्रोत इव, स्तम्भितजलं—स्थिरीकृततोयम्, कृष्णवर्णत्वात् कालिन्दीप्रवाहमिव इत्युक्तं, तथा सूर्यकिरणप्रतिबिम्बितं प्रवाहो यथा चाकचक्यमयो दृश्यते, असिरपि उज्ज्वल-भास्वरत्वात् तथात्वे द्रष्टव्यम्। नन्दकजिगीषया—नन्दकस्य—विष्णोः खड्गविशेषस्य जिगीषया—विजयेच्छया, कृष्णकोपितं—कृष्णेन कोपितं, दमनादिति भावः, कालियमिव—तदाख्यं यमुनावासिनं नागविशेषम [illegible]। लोकविनाशाय—जगत्संहाराय, प्रकाशितं, व्यक्तीकृतं, धारासारः,—धाराः

खण्डमिव नभस्तलात् पतितं, (२२५) दृश्यमानविकटदन्तमण्डलं हासमिव हिंसायाः, हरिबाहुदण्डमिव कृतदृढमुष्टिग्रहं, सकलभुवनजीवितापहरणधर्मेण कालकूटेन इव निर्मितं, (२२६) कृतान्तकोपानलतप्तेन इव अयसा घटितम्, अतितीक्ष्णतया पवनस्पर्शेन अपि रुषेव क्वणन्तं, (२२७) मणिसभाकुट्टिमपतत्प्रतिबिम्बच्छद्मना आत्मानम् अपि द्विधेव पाटयन्तम्, (२२८) अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं, मुहुर्मुहुः (२२९) तडिदुन्मेषतरलैः प्रभाचक्रस्फुरितैः जर्जरितातपं

---

सम्पात, धारायाः,—निशितायस्य, सार—औत्सुक्यं यस्य तथोक्तम्। प्रलयकाल मेघखण्डमिव—सम्पातकालिकजलदखण्डमिव, महानीलोऽस्य आभासत्वात्।

(२२५) दृश्यमानेति।—दृश्यमानानि विकटानि—करालानि, दन्तमण्डलानि —दशनराजयः यस्मिन् तथाभूतम्, कृष्णवर्णस्य असेरतीवोज्ज्वलत्वात् कृष्णवर्णाया हिंसायाः शुभ्र हासमिवेत्युत्प्रेक्षा। कृतेति।—कृत,—रचित, दृढ—कठिन, मुष्टिग्रह—मुष्टिबन्धः यस्मिन् तम्, अथवा,—कृत दृढ यथा तथा मुष्टे,—मुष्टिकनामास्त्रस्य ग्रहः—ग्रहणं येन तथाभूतम्।

(२२६) कृतान्तेति।—कृतान्तस्य—यमस्य, कोपानल,—क्रोधाग्नि, तेन तप्तम्—उष्णम्, अत एव गलितमिति भाव तेन अयसा—लोहेन। अतितीक्ष्णतया—अतिनिशितत्वेन तैक्ष्ण्यस्य तनुत्वात् जायते तनु च अन्योऽन्यसङ्घर्षेण क्वणति इति हृदयम्। रुषेव—कोपेनेव क्वणन्त—रणन्तम्, अतितीक्ष्णप्रकृतिकोऽपि स्वल्पेनापि कोपकारणेन क्रुध्यतीति इति लोकः।

(२२७) मणीति।—मणिसभाकुट्टिमेषु—मणिमयसभातलेषु, पतत् यत् प्रतिबिम्ब तस्य छद्म—छलम्, तदेव छद्म ना तेन। पाटयन्त—विदारयन्तम्, अतितीक्ष्णत्वादिति भाव।

(२२८) अरीति।—अरीणां—शत्रूणां, शिरांसि, तेषां छेदेन लग्नाः,—सक्ता तै, कचैरिव—केशैरिव, कृष्णवर्णस्य तस्य किरणानामपि कृष्णत्वात् कचैरिवेत्युत्प्रेक्षा, करालितधार—करालिता—व्याप्ता, धारा यस्य तथोक्तम्।

(२२९) तडिदिति।—तडितां—विद्युताम्, उन्मेषा,—विकासा, तद्वत् तरलानि—चपलानि तै। प्रभाचक्राणां—किरणमण्डलानां, स्फुरितैः,—स्फुरणैः,

खण्डशश्छिन्दन्तमिव दिवसं, कटाक्षमिव कालरात्रेः, कर्णोत्पलमिव कालस्य, (२४०) ओङ्कारमिव क्रौर्यस्य, अलङ्कारम् अहङ्कारस्य, कुलमिव कोपस्य, देहं दर्पस्य, सुसहायं साहसस्य, अपत्यं मृत्योः, आगमनमार्गं लक्ष्म्याः, निर्गमनमार्गं कीर्त्तेः कृपाणम्।

अवनिपतिस्तु तं गृहीत्वा करेण (२४१) आयुधप्रीत्या प्रतिमानिभेन आलिङ्गन्निव सुचिरं ददर्श; सन्दिदेश च,— "वक्तव्यो भगवान्, (२४२) परद्रव्यग्रहणावज्ञादुर्विदग्धम् अपि हि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचारमाचरितुम्" इति। परिव्राट् तु गृहीते तस्मिन् परितुष्टः "स्वस्ति भवते, साधयामि" इत्युक्त्वा निरयासीत्। नृपश्च प्रकृत्या वीररसानुरागी तेन कृपाणेन अमन्यत करतलवर्त्तिनीं मेदिनीम्।

---

उन्मेषैरित्यर्थः, जन्मान्त,—खण्डखण्डीकृत, मन्दीकृत इति यावत्, आतप,—सूर्यालोक येन तथोक्तम्, अत एव दिवसं खण्डशः,—खण्डखण्डं कृत्वा इत्यर्थः, छिन्दन्तमिव—पाटयन्तमिव।

(२४०) ओङ्कारमिव—उपक्रममिव, प्रारम्भमिवेति भावः, यद्वा—अभ्युपगममिव, स्वीकारमिवेत्यर्थः ("ओमुपक्रमे। प्रणवे चाभ्युपगमे" इति मेदिनी)। क्रौर्यस्य—निष्ठुरतायाः। कुलमिव—कुलेन—वंशपरम्परया, मित्र—सुहृदम्। अपत्यं मृत्योरिति।—अरिमरणसाधनत्वात् पैतृकगुणस्य पुत्रे सद्भावसम्भावनत्वाच्च मृत्योरपत्यत्वं तस्य बोद्धव्यम्। कृपाणम्—असिम्।

(२४१) आयुधप्रीत्या—आयुधे—अस्त्रे, या प्रीतिः,—अनुरागः, वीरजनभाग्भक्तिरिति भावः तया। प्रतिमानिभेन—प्रतिबिम्बच्छलेन स्वस्येति शेषः, दर्पणस्वच्छे तत्र आत्मप्रतिबिम्बसङ्क्रमणादिति भावः। सन्दिदेश—वाचिकं वादयामास। भगवान्—भैरवाचार्य इति भावः।

(२४२) परेति।—परेषां द्रव्याणि—धनानि, तेषां ग्रहणं, तस्मिन् अवज्ञा—अनादरः, तया दुर्विदग्धं—दुर्विनीतं दृप्तम् इति यावत्। वचनेति।—वचनस्य—आज्ञावाक्यस्य व्यतिक्रमः,—लङ्घनमेव, व्यभिचारः,—दोषः तम्। साधयामि—गच्छामि, 'प्रायेण अन्तकं साधि गमे स्थाने प्रयुज्यते' इति दर्पणात्। ["साधयामि" इत्यत्र "साधयाम" इति पाठे,—गच्छाम इत्यर्थः]।

अथ व्रजत्सु दिवसेषु एकदा भैरवाचार्य्यो राजानम् (२४३) उपह्वरे सोपग्रहम् अवादीत्,—"तात। स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम्। भवादृशाश्च अर्थिदर्शनं महोत्सवः, प्रयाचनम् आराधनम्, अर्थग्रहणम् उपकारः। भूमिरसि सर्व्वलोकमनोरथानाम्; येन अभिधीयसे, श्रूयताम्;—(२४४) भगवतो महाकालहृदयनाम्नो महामन्त्रस्य कृष्णस्रगम्बरानुलेपेन आकल्पेन कल्पकथितेन महाश्मशाने जपकोट्या (२४५) कृतपूर्व्वसेवोऽस्मि।

(२४३) उपह्वरे—एकान्ते, रहसि इति यावत्, ("उपह्वरं समीपे स्यादेकान्ते च नपुंसकम्" इति मेदिनी) सोपग्रह—सानुकूल्य साध्यर्थनमिति भाव, ("उपग्रहः पुमान् बन्द्यामनुग्रहेऽनुकूलने" इति मेदिनी)। स्वार्थालसा,—स्वकार्य्यपराङ्मुखा इत्यर्थः। भव्याना—सज्जनानाम्। अर्थिदर्शन—याचकदर्शन, महोत्सव,—आनन्दजनकम्; भवादृशा अर्थिनो दृष्टा महान्तम् आनन्दम् अनुभवन्ति इत्यर्थः। प्रयाचन—याञ्चा, आराधनं—पूजनम्, अर्थिषु याचमानेषु आत्मानम् आराधित मन्यन्ते इति भाव। ["प्रयाचनम्" इत्यत्र "प्रणयनम्" इति पाठोऽपि स एवार्थ] अर्थग्रहणम् उपकार,—अर्थिषु अर्थान् गृह्णत्सु आत्मानम् उपकृत मन्यन्ते इत्याशय। भूमि,—पात्रम्। सर्व्वेति।—सर्व्वलोकाना—सर्व्वेषां प्राणिना, मनोरथानाम्—अभिलाषाणाम, सर्व्वे एव त्वा सदैव मनसा स्मरन्ति इति भाव, यद्वा,—मनोरथाना—मनोऽभीष्टपूरणानामित्यर्थः; यथा अपि भूमौ शस्यानि इत्यपि व्याख्यात। अभिधीयसे—कथ्यसे, त्वम् एवमिति शेष।

(२४४) भगवत,—ईश्वरस्य हरस्य इत्यर्थः। महाकालेति।—महाकालस्य—हरस्य, हृदय—हृदयनिहित वस्त्विति महाकालहृदय, तत् नाम यस्य तथोक्तस्य। "जपकोट्या" इत्युत्तरेणान्वय, जपकोट्या—कोटिसङ्ख्यकजपेन इत्यर्थः। कृष्णेति।—कृष्णा,—कृष्णवर्णाः, स्रज,—माल्यानि, अम्बराणि—वसनानि, अनुलेपा,—अनुलेपनानि, गन्धद्रव्याणि इत्यर्थः यस्मिन् तथाभूतेन, आकल्पेन—वेशेन परिच्छदेनेत्यर्थः, ("आकल्पवेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनम्" इत्यमर)। कल्पकथितेन—कल्प,—शास्त्रम्, इतिकर्त्तव्यतासमूहोपदेशक ग्रन्थ इत्यर्थः, ("कल्पः शास्त्रे विधौ न्याये—" इति मेदिनी) तत्कथितेन—एतन्महामन्त्रविधानग्रन्थोक्तेन।

(२४५) कृतेति।—कृता पूर्व्वे सेवा येन तथाभूत।

(३४६) तस्य वेतालसाधनावसाना सिद्धिः। असहायैश्च सा दुरवापा, त्वञ्च अलम् अस्मै कर्मणे। त्वयि च गृहीतभरे भविष्यन्ति अपरे सहायाः त्रयः। एकः स एव अस्माकं टीटिभनामा (३४७) बालमित्रं मस्करी, यो भवन्तम् उपतिष्ठते, द्वितीयः स पातालस्वामी, अपरो मच्छिष्य एव कर्णतालनामा द्राविडः। यदि साधु मन्यसे, ततो नीयताम् अयं दिङ्नागहस्तदीर्घो गृहीताट्टहासो निशामेकाम् एकदिङ्मुखार्गलतां बाहुः"।

इति कृतवचसि च तस्मिन्, (३४८) अन्धकारं प्रविष्ट इव दृष्टदीपप्रकाशः (३४९) प्राप्तोपकारावकाशः प्रमुदितेन अन्तरात्मना नरेन्द्रः समभाषत,—"भगवन्! परम् अनुगृहीतोऽस्मि, अनेन शिष्यजनसामान्येन निर्देशेन कृतपरिग्रहमिव

(३४६) तस्य—साहशमन्त्रजपस्येत्यर्थः। वेतालेति।—वेतालस्य—शिवानुचरभेदस्य, भूताधिष्ठितशवविशेषस्य वा, साधन—वशीकरणम्, अवसानं यस्याः तथाभूता, सिद्धिः,—साफल्यम्, वेतालसाधनमृते सा सिद्धिः न लभ्यते इति भावः। सा—सिद्धिः असहायैः,—सहायशून्यैः, दुरवापा—दुर्लभा। अलं—समर्थः, ("अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः)। अस्मै कर्मणे—मत्साहाय्यायेत्यर्थः, ["नमः स्वस्ति—" (२।३।१६ पा०) इति अलशब्दयोगे चतुर्थी]। गृहीतभरे—भारं गृह्णतीत्यर्थः।

(३४७) बालमित्रं—शैशवसुहृत्। मस्करी—परिव्राट्। उपतिष्ठते—उपास्ते, ["उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" (वा०) इति सङ्गतिकरणार्थे तङ्]। द्राविडः,—द्राविडदेशीयः। साधु—समीचीनम्। दिङ्नागहस्तदीर्घः—ऐरावतशुण्डवदायतः। एकदिङ्मुखार्गलताम्—एका दिक्, तस्याः मुखस्य अर्गलताम्—अवरोधकदण्डताम्। बाहुः, तवेति शेषः, कस्यस्य सन् एकस्यां रात्रौ मम वेतालसाधनविषये साहाय्यं कुरु इति भावः।

(३४८) अन्धकारं प्रविष्ट इव—तिमिरं गत इवेत्यर्थः। दृष्टदीपप्रकाशः,—अवलोकितदीपालोकः। ["दृष्टदीपप्रकाश" इत्यत्र "दृष्टप्रकाश" इति पाठे,—दृष्टः प्रकाशः,—आलोको येन तथाभूतः]।

(३४९) प्राप्तेति।—प्राप्तः उपकाराय—प्रत्युपकाराय इत्यर्थः, अवकाशः,—समयः,

"आत्मानम् अवैमि" इति। ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्य्यः; चकार च सङ्केतम्—"आगामिन्याम् एव असितपक्षचतुर्दशीक्षपायाम् इयन्त्या वेलायाम् अमुष्मिन् महाश्मशानसमीपभाजि शून्यायतने शस्त्रद्वितीयेन आयुष्मता द्रष्टव्या वयम्" इति।

(३५०) अथ अतिक्रान्तेषु अहःसु, प्राप्तायाञ्च कृष्णपक्षचतुर्दश्यां, शैवेन विधिना दीक्षितः क्षितिपालो नियमवान् अभूत्। (३५१) कृताधिवासश्च सम्पादितगन्धपुष्पधूपमाल्यादिपूजं खड्गम् अट्टहासं सहायम् अकरोत्। ततः परि-

---

भैरवाचार्य्यमनोदकारपरितोषाय इति भावः तेन तथाभूतः। प्रमुदितेन—प्रहृष्टेन। अन्तरात्मना—मनसा। स्मितेति।—स्मितशबलेन—ईषद्धासमिश्रितेन मन्द आननेन—मन्दहासस्य भावः, शुभ्रता इत्यर्थः तेन, सितजनीचितमेव अर्थः। निर्देशेन—आज्ञया। करोमि।—कृत परिग्रहः—ग्रहणम् आत्मदासम इति भावः यस्य तथोक्तमिव, भवत्परिजनमात्मानम् इत्यर्थः। अवैमि—अहं मन्ये इत्यर्थः। नरेन्द्रव्याहृतेन—राजवचनेन। सङ्केतम्—इङ्गितम्। [ "आगामिन्यामेव" इत्यत्र "अस्यामेवागामिन्याम्" इति पाठान्तरम् ]। असितपक्षचतुर्दशीक्षपायाम्—कृष्णपक्षीयचतुर्दशीरात्रौ। इयन्त्या वेलायाम्—एतत्परिमिते समये। महाश्मशानसमीपभाजि—महाश्मशानस्य समीपं भजते इति तथोक्ते महाश्मशानसन्निकटवर्त्तिनि इत्यर्थः। शून्यायतने—निर्जने स्थाने शून्यदेवालये वा।

(३५०) अथेति।—अतिक्रान्तेषु—अतीतेषु अहःसु—दिवसेषु। [ "प्राप्तायाञ्च कृष्णपक्षचतुर्दश्याम्" इत्यत्र "प्राप्तायाञ्च तस्यामेव कृष्णचतुर्दश्याम्" इति पाठान्तरम् ]। शैवेन विधिना—शिवोपासनाविधानेन दीक्षितः—संस्कृतः कृतनियम इत्यर्थः। [ "दीक्षधातोः निष्ठा" (१।२।१०२ पा०) इति कर्त्तरि निष्ठाया रूपम्। "क्षितिपाल" इत्यत्र "क्षितिप" इति पाठान्तरम् ]। नियमवान्—व्रतनिष्ठः।

(३५१) कृताधिवासः—कृतः अधिवासः,—व्रतदिनात् पूर्व्वदिने गन्धादिना संस्कारः यस्य सः, ("संस्कारो गन्धमाल्याद्यैः यः स्यात् तत् अधिवासनम्" इत्यमरः)। सम्पादितेति।—सम्पादिता—कारिता, गन्धपुष्पधूपमाल्यादिभिः पूजा यस्य तथोक्तम्। [ "गन्धपुष्पधूप—" इत्यत्र "गन्धधूप—" इति पाठान्तरम्। "अट्टहासं सहायमकरोत्" इत्यत्र "अट्टहासमकरोत्" इति पाठान्तरम् ]। "ततः" इत्यस्य

गते दिवसे केनापि कर्मसाधनाय कृतरुधिरबलिविधानासु इव लोहितायमानासु दिक्षु, रुधिरबलिलम्पटासु च वेतालजिह्वासु इव लम्बमानासु च रविदीधितिषु (३५२) नरेन्द्रानुरागेण इव गृहीतापरदिशि स्वयमेव दिक्पालतां चिकीर्षति सवितरि, यातुधानीषु इव वर्द्धमानासु तरुच्छायासु, पातालतलवासिषु विघ्नाय दानवेषु इव उत्तिष्ठत्सु तमोमण्डलेषु, नभसि पुञ्जीभवति रौद्रं कर्म दिदृक्षमाणे इव नक्षत्रगणे, विगाढायां शर्व्वर्यां, (३५३) सुप्तजननिःशब्दे स्तिमिते

---

"राजा नगरात् निरगात्" इत्युत्तरेणान्वयः। परिणते—अवसानं गते। [अत्र "परिणते दिवसे" इत्यादिषु सर्वत्र "यस्य च भावेन—" (२।३।३७ पा०) इत्यादिना भावे सप्तमी ज्ञेया]। केनापि जनेनेति शेषः। कृतेति।—कृतम्—अनुष्ठितं, रुधिरेण—रक्तेन, बलिविधानं—पूजाविधिः यासां तथोक्तासु इव लोहितायमानासु—सन्ध्यारागरञ्जितासु इति भावः। रुधिरेति।—रुधिरबलिषु—रक्तोपहारप्राप्तिषु इत्यर्थः, लम्पटाः,—लुब्धाः तासु वेतालजिह्वासु इव—भूतरसनासु इव, रविदीधितिषु—सूर्य्यकिरणेषु।

(३५२) नरेन्द्रानुरागेण—राजानुरक्त्या। ["नरेन्द्रानुरागेण इव" इत्यत्र "नरेन्द्रानुरागेण" इति पाठान्तरम्]। गृहीतेति।—गृहीता अपरा—पश्चिमा, दिक् येन तथोक्ते। ["स्वयमेव" इत्यत्र "स्वयमिव" इति पाठान्तरम्]। सवितरि—सूर्ये। यातुधानीषु—राक्षसीषु इव, ("राक्षसः कौणपः क्रव्यात् ..... । यातुधानः पुण्यजनः ॥" इत्यमरः) वर्द्धमानासु—वृद्धिं गच्छन्तीषु लम्बमानासु इत्यर्थः। पातालतलवासिषु—रसातलाभ्यन्तरस्थितेषु। ["पातालतलवासिषु" इत्यत्र "पातालवासिषु" इति पाठान्तरम्]। विघ्नाय—कार्य्यव्याघाताय राज्ञ इति भावः। तमोमण्डलेषु—तिमिरनिचयेषु। नभसि—आकाशे पुञ्जीभवति—बहुलीभवति, अत्र यच्चरजन्यां नक्षत्राणि बहुलानि दृश्यन्ते इति भावः। रौद्रं—दारुणम्। दिदृक्षमाणे इव—द्रष्टुमिच्छति इव ["ज्ञाश्रु—" (१।३।५७ पा०) इत्यादिना सन्नन्तस्य दृशेः तङि "लट —" (३।२।१२४ पा०) इत्यादिना शानचि रूपम्]। दिदृक्षवोऽपि एकत्र पुञ्जीभवन्ति इति दृश्यते लोके। विगाढायां—घनीभूतायां शर्व्वर्य्यां—रजन्याम्।

(३५३) सुप्तेति।—सुप्ताः,—निद्रिताः, जनाः यस्मिन् तथोक्ते, अत एव।

निशीथे राजा (२५४) सान्तःपुरं परिजनं वञ्चयित्वा, (२५५) वामकरस्फुरत्त्सरुः दक्षिणकरेण उत्खातं खड्गम् अट्टहासम् आदाय, विसर्पता च खड्गप्रभापटलेन नीलांशुकपटेन इव दर्शनभयात् (२५६) अवगुण्ठितनिखिलगात्रयष्टिः, अनादिष्टयाऽपि अनुगम्यमानो राजलक्ष्म्या छूतः, (२५७) परिमललग्नमधुकरवेणिश्यामेन केशेषु इव कर्म्मसिद्धिम् आकर्षन्, एकाकी नगरात् निरगात्, अगाच्च तं देशम्।

---

निःशब्द,—शब्दरहित नक्तम्। स्तिमिते—सुप्तीभूते इति भाव। [ "निःशब्द-स्तिमिते" इत्यत्र "निःशब्दस्तिमिते" इति समस्तपाठान्तरम् ]। निशीथे—अर्द्धरात्रे, ('अर्द्धरात्र निशीथौ द्वौ' इत्यमरः)।

(२५४) सान्तःपुरम्—अन्तःपुरम्—अन्तःपुरवर्त्तिन्य स्त्रिय इत्यर्थ, तत्सहितं, परिजन—स्वजनम् इत्यर्थ, वञ्चयित्वा—प्रतार्य, गोपायित्वा इत्यर्थ।

(२५५) वामेति।—वामे—सव्ये, करे—हस्ते, स्फुरन्—दीप्यमान, रत्नखचित-त्वादिति भाव, त्सरु,—खड्गमुष्टि यस्य तथाभूत, ("त्सरु खड्गादिमुष्टौ स्यात्" इत्यमरः)। उत्खात—निष्कोषितम् इत्यर्थ। विसर्पता—प्रसरता, खड्गप्रभापटलेन—असिच्छटासमूहेन, नीलांशुकपटेन इव—नीलांशुक—श्यामवसनमेव, पट,—तिरस्करिणी तेन इव। अत्र उपमेयोपमानयो खड्गप्रभापटल नीलांशुकपटयो अवैधर्म्य-बाध्यबाधकनिबन्धनोपमाऽलङ्कार। सहोपमा इति केचित।

(२५६) अवगुण्ठितेति।—अवगुण्ठिता—आच्छादिता, निखिला—समग्रा, गात्रयष्टि,—शरीरदण्ड येन यस्य वा तथोक्त, खड्गस्य नीलवर्णप्रभया रञ्जितसर्व्व देह इत्यर्थ, आकाशमुत्खातात् खड्गात निःसृतनीलप्रभया विस्फुरितविग्रहतया नीलांशुकावृतवत् परिलक्ष्यते इति भाव। अनादिष्टयाऽपि—अनाहूतयाऽपि, राजलक्ष्म्या—राजश्रिया, अनुगम्यमान,—अनुस्रियमाण, एतेन भूतकार्यसौनाम सूचित।

(२५७) परिमलेति।—परिमलेन—अतिमनोहरगन्धसौरभेण, ("स्यात् परि-मलोऽतिमर्द्दातिमनोहरगन्धयोरपि" इति मेदिनी) लग्नाना—आसक्ताना, मधुकराणा—भ्रमराणा, वेणि—राजि, तद्वत् सैव वा श्याम,—कृष्ण तेन। कर्म्मसिद्धि—कार्यसाफल्यम्। एकाकी—असहाय। देशं—स्थानम्। [ "तं देशम्" इत्यत्र "तमु-द्देशम्" इति पाठेऽपि स एवार्थ ]।

( ३५८ ) अथ प्रत्युज्जग्मुः ते वयोऽपि ( ३५९ ) द्रौणि-कृप कृतवर्माण इव सौप्तिके ( ३६० ) सन्नद्धाः, स्नाताः, स्रग्विणः, गृहीतविकटवेषाः, ( ३६१ ) कुसुमशेखरसञ्चारिभिः क्रियमाणमन्त्रशिखाबन्धा इव गुञ्जद्भिः षट्चरणैः, ( ३६२ ) उष्णीषपट्टकान् ललाटमध्यघटितविकटस्वस्तिकाग्रन्थीन् महामुद्राबन्धान् इव धारयन्तः मूर्द्धभिः, ( ३६३ ) एक-श्रवण विवर-विततविमलदन्तपत्रप्रभालेपधवलितकपोलैः मुखैः आपिबन्त

---

( ३५८ ) अथेत्यादि।—प्रत्युज्जग्मुः,—प्रत्युद्गतवन्तः, राजानं द्रष्टुं तदभ्यागमं श्रुत्वा इत्यर्थः। वयः,—दौर्हित्र कर्णतालपातालस्वामिन इत्यर्थः। [ "वयोऽपि" इत्यत्र "त्रय" इति पाठान्तरम् ]।

( ३५९ ) द्रौणीति।—द्रोणस्यापत्यं द्रौणिः,—अश्वत्थामा, कृपः,—कृपाचार्यः, कृतवर्मा—यादववीरविशेषः ते इव। सौप्तिके—सुप्तेषु भव सौप्तिकं तस्मिन् महाभारतीय सौप्तिकाख्ये पर्वणि इत्यर्थः। [ "तत्र त्त्र" ( ४।३।५३ पा० ) इति ठञि रूपम् ] पुरा दुर्योधने भग्नोरौ समरपतिते अश्वत्थामादयस्त्रयः प्रभौ प्रीतिसम्पादनाय पाण्डव शिविरे धृष्टद्युम्नाधिष्ठिते सुप्तेषु सर्वेषु अवशिष्टेषु सैनिकवीरेषु अयमपि प्रविश्य सर्वाणि सैनिकानि व्यनाशयन्निति भारती वार्त्ता।

( ३६० ) सन्नद्धाः,—वर्मिताः परिहितवर्माण इत्यर्थः, ( "सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः" इत्यमरः )। स्नाताः,—कृतस्नानाः। स्रग्विणः,—मालाधारिणः।

( ३६१ ) कुसुमेति।—कुसुमशेखरेषु—शिरोभूषणभूतपुष्पमालासु इत्यर्थः, सञ्चरन्तीति ते। षट्चरणैः,—मधुकरैः, क्रियमाणा मन्त्रेण शिखाबन्धाः,—कायबन्धाः, मस्तिष्का येषां ते इव।

( ३६२ ) उष्णीषपट्टकान्—शीर्षावरणकर्पटान्। ललाटेति।—ललाटस्य—भालस्य मध्ये घटितः,—रचितः, विकटः,—दृढः, स्वस्तिकाग्रन्थिः,—स्वस्ति—शुभं, तदर्थं हिता स्वस्तिका—स्वस्तिकाकारः इत्यर्थः, ग्रन्थिः,—बन्धविशेषः येषु तान्। महामुद्राबन्धानिव—महान्तः मुद्राबन्धाः,—वीराचारानुष्ठेयबन्धनविशेषाः तानिव। मूर्द्धभिः,—शिरोभिः।

( ३६३ ) एकेति।—एकस्मिन् श्रवणविवरे—श्रोत्ररन्ध्रे, विततः—विस्तृतः, विमलस्य—विशदस्य, दन्तपत्रस्य—गजदन्तनिर्मितपत्राकारस्य कर्णभूषणविशेषस्य इत्यर्थः, या प्रभा—दीप्तिः, तस्याः लेपः,—आलेपनम्, यद्वा,—प्रभा—दीप्तिः,

इव (२६४) निशाचरापचयचिकीर्षया शार्वरम् अन्धकारम्, (२६५) इतरकर्णावलम्बिनां रत्नकुण्डलानाम् अच्छाच्छया रुचा गोरोचनयेव मन्त्रपरिजप्तया समालब्धाः, स्वप्रतिबिम्बगर्भान् कर्मसिद्धये (२६६) दत्तपुरुषोपहारान् इव उल्लासयन्तः निशितान् निस्त्रिंशान्, (२६७) निशितनिस्त्रिंशांशुसन्तानसीमन्तिततिमिराम् (२६८) आत्मीयदिग्भागसंरक्षणाय त्रिधेव त्रियामां

---

सा एव लेप,—आलेपनद्रव्यं तेन, [ "प्रभालेप—" इत्यत्र "प्रभाऽऽलोकलेप—" इति पाठे,—प्रभा, तस्या आलोक,—उद्योत, तेन लेप, प्रभाया आलोक एव लेप इति वा तेन ] धवलिता,—सितीकृता, कपोला,—गण्डदेशा येषां ते। आपिबन्त इव—ग्रसन्त इव।

(२६४) निशाचरेति।—निशाचराणां—राक्षसानाम्, अपचयचिकीर्षा—अपकारेच्छा, हानिकरणेच्छा इत्यर्थः तया। शार्वरं—शर्वरी—रात्रि, तत्र भव शार्वरः स—रात्रिकालिकम्, निशाचरा निशासु अन्धकारे एव प्रभवन्ति, अन्धकारापगमे तेषां प्रभावाभावेन अपकारसाधनस्य सौकर्यादिति भाव।

(२६५) इतरकर्णावलम्बिनाम्—अपरकर्णलम्बमानानाम्। अच्छाच्छया—अतिनिर्मलया, रुचा—प्रभया, गोरोचनयेव—गोरोचना—माङ्गलिकद्रव्यभेद तया, पीतप्रभयेति भाव। मन्त्रपरिजप्तया—मन्त्रेण परिजप्ता—विशोधिता तया। समालब्धा,—अनुलिप्ता। स्वप्रतिबिम्बगर्भान्—स्वस्य प्रतिबिम्ब—प्रतिच्छाया, गर्भे—अभ्यन्तरे येषां तान्। कर्मसिद्धये—कार्यसिद्ध्यर्थम्।

(२६६) दत्तेति।—दत्त,—अनुष्ठित, पुरुषोपहार,—नरबलि येभ्य तानिव, निशितान्—तीक्ष्णान्, निस्त्रिंशान्—खड्गान्, ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय" इत्यमर) उल्लासयन्त,—संचालयन्त।

(२६७) निशितनिस्त्रिंशेति।—निशितनिस्त्रिंशानां—शाणितखड्गानां ["निशितनिस्त्रिंशांशु—" इत्यत्र "निस्त्रिंशांशु—" इति पाठान्तरम्] अंशुसन्ताने,—प्रभानिवहै, सीमन्तितानि—विभक्तानि इति यावत्, तिमिराणि—तमांसि यस्या ताम्, त्रयाणां तेषां खड्गत्रयप्रभया तत्तदंशान्धकारनिरसनात् अन्यत्र चान्धकारव्याप्तत्वात् सीमन्तिततिमिरामिव प्रतीयमानामिति भाव।

(२६८) आत्मीयेति।—आत्मीय,—स्वीय, ["आत्मीय—" इत्यत्र "आत्मीयात्मीय—" इति पाठे,—स्वीयस्वीय इत्यर्थ] दिशां भाग,—दिगंश, रक्षणीया दिक् इत्यर्थः,

(३७६) रक्तचन्दनानुलेपिनी (३७७) रक्तस्रगम्बराभरणस्य उत्तानशयस्य शवस्य उरसि उपविश्य (३७८) जाते जातवेदसि मुखकुहरे (३७९) प्रारब्धाग्निकार्यं, (३८०) कृष्णोष्णीषं, कृष्णाङ्गरागं, कृष्णप्रतिसरं, कृष्णवाससं, (३८१) कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णया (३८२) मानुषनिर्माणकारणकालुष्यपरमाणूनिव क्षयम् उपनयन्तम्, आहुतिदानपर्यस्ताभि प्रेतमुखस्पर्शदूषित प्रक्षालयन्तमिव आशुशुक्षणिं करनखदीधितिभि,

(३७६) रक्तेति।—रक्तचन्दनम् एव अनुलेपः रक्तचन्दनानुलेपः, स विद्यते इत्यस्मिन् तयोक्तस्य, रक्तचन्दनानुलिप्तस्येत्यर्थः।

(३७७) रक्तेति।—रक्तं—रक्तवर्णं, स्रगम्बरे—माल्यवसने, आभरणं यस्य तथाभूतस्य। उत्तानशयस्य—उत्तानशायिनः, ऊर्ध्वमुखशायिन इत्यर्थः। [ "उत्तानादिषु कर्तृषु" (वा०) इति शीङ्धातोः अचि रूपम् ] शवस्य—मृतदेहस्य।

(३७८) जातेति।—जाते,—उत्पन्ने, ज्वलिते इत्यर्थः, प्रज्वलितेनेति भावः, जातवेदसि,—वह्नौ तथाभूते, ("अग्निर्वैश्वानरो वह्निः . . . जातवेदास्तनूनपात्॥" इत्यमरः) मुखकुहरे—वदनगह्वरे।

(३७९) प्रारब्धेति।—प्रारब्धं—प्रक्रान्तम्, अग्निकार्यं—होमः येन तथोक्तम्।

(३८०) कृष्णेति।—कृष्णं—कृष्णवर्णम्, उष्णीषं—शिरोवेष्टनवसनं यस्य तथाभूतम्। कृष्णाङ्गरागं—कृष्णवर्णविलेपनम्। कृष्णप्रतिसरं—कृष्णवर्णहस्तसूत्रम्, ("ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्" इत्यमरः)। कृष्णवाससं—कृष्णवसनपरिधायिनम्।

(३८१) कृष्णेति।—कृष्णतिलानाम् आहुतिनिभेन—आहुतिच्छलेन, विद्याधरत्वतृष्णया—विद्यां धरतीति विद्याधरः—देवयोनिविशेषः, तस्य भावः तत्त्वं, तस्य तृष्णा—स्पृहा तया, आत्मनो विद्याधरत्वलाभेच्छया इत्यर्थः।

(३८२) मानुषेति।—मानुषस्य—मानवस्य, तस्येति भावः, निर्माणं—सृष्टिः, तस्य कारणानि—उपादानसामग्र्यः, कालुष्यपरमाणव—मालिन्यपरमाणवः मानिव, तिलानां कृष्णत्वादत्र परमाणूनामपि कालुष्योत्प्रेक्षा, क्षयं—नाशम्, उपनयन्तं—प्रापयन्तम्। आहुतीति।—आहुतिदाने—अग्नौ हवनीयद्रव्यनिक्षेपकाले, पर्यस्ता,—पतिता ताभिः, करनखदीधितिभिः,—हस्तनखमयूखैः। प्रेतेति।—प्रेतस्य—शवस्य, मुखस्पर्शेन—वदनसंयोगेन, तन्मुखे ज्वलनादिति भावः, दूषितम्—अपवित्रम्, आशुशुक्षणिम्

अत्रान्तरे पातालस्वामी (३८७) शातक्रतवीम् आशाम् अङ्गीचकार, कर्णतालः कौवेरीं, परिव्राट् (३८८) प्राचेतसीम्। राजा तु (३८९) त्रैशङ्कवेन ज्योतिषा अङ्कितां ककुभम् अलङ्कृतवान्।

(३९०) एवञ्च यथास्थितेषु प्रतिदिशं दिक्पालेषु, दिक्

---

अतिभयङ्कर वा। अभिनन्दित,—अभ्यर्चित। तेन—भैरवाचार्य्येण। [ "परिगृहीत, महाभैरव भैरवाचार्य्यम्" इत्यत्र "परिगृहीत भैरवाचार्य्यम्" इति पाठान्तरम् ]। सव्यापार—सकार्य्यं, भैरवाचार्य्योक्तमिति शेष। अन्वतिष्ठत्—अन्वपालयत्।

(३८७) शातक्रतवीं—शतक्रतु,—इन्द्र, तस्य इय शातक्रतवी तां, प्राचीमित्यर्थ आशा—दिश ("दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता" इत्यमर) अङ्गीचकार—अधितष्ठौ। "अङ्गीचकार" इत्यनेन सर्वेषामेषां स्वेच्छापरिग्रहत्वं प्रकटितमिति। कौवेरीं—कुवेरसम्बन्धिनीं, कुवेरपालिता वा उदीचीमित्यर्थ।

(३८८) प्राचेतसीं—प्रचेतसा—वरुणेन अधिष्ठिता प्राचेतसी तां, प्रतीचीमित्यर्थ। [ "तस्य निवास" (४।२।६९ पा०) इत्यपि ङीपि रूपसिद्धि ]।

(३८९) त्रैशङ्कवेन—त्रिशङ्कुर्नाम सूर्य्यवंश्य राजा, तस्य इद त्रैशङ्कवं तेन, ज्योतिषा—तेजसा, अङ्कितां—चिह्निता तां, दक्षिणामिति यावत्। ककुभ—दिशम्। दक्षिणस्याम् इत्यक्षिरमसन्निवेशकत्वात् त्रैशङ्कवेनेत्युक्तम्। पुरा त्रिशङ्कुर्नाम राजा सशरीरो दिव जिगमिषु स्वस्य गुरु वशिष्ठमन्वरुधत्। स तु नैतत् तदा अधिक्रियते इत्यवज्ञातवान्। ततो गुरुपुत्रैरपि अवज्ञात गुरुद्वेषिणं विश्वामित्रं शरणमगात्। तेन च तपसा सशरीरो दिवं गच्छन् देवराजेन गुरुद्वेषी इति स्वर्गात् निराकृत पतन् विश्वामित्रम् उच्चै उवाद,—"मुने! त्रायस्व मा नरके पतन्तम्" इति। आत्मत्राणाय प्रार्थित विश्वामित्रस्तवैव अन्तरीक्ष दक्षिणदिग्भागवर्त्तिनि "तिष्ठ" इति जगाद, ततश्च असौ तदैव अद्यापि स्थित। तत्र स्थान त्रिशङ्कुस्वर्ग इति ख्यायते, एव पुराणकथा अत्रानुसन्धेया।

(३९०) यथास्थितादि।—प्रतिदिश—सर्वासु दिक्षु, दिशि दिशि इत्यर्थे आभीक्ष्ण्येऽव्ययीभाव। [ "प्रतिदिशम्" इति पाठ पुस्तकान्तरे न दृश्यते ]। दिक्पालेषु—दिशां रक्षकेषु, पातालस्वामिप्रभृतिषु चतुर्षु इत्यर्थ। दिक्पालेति।—दिक्

पातालभुजपञ्जरप्रविष्टे (२८१) साधयति विस्रब्धं कर्म भैरवं भैरवाचार्ये, (२८२) अतिचिरं क्षतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु शान्तेषु कौणपेषु, गलति अर्धरात्रसमये (२८३) मण्डलस्य नातिदवीयसि उत्तरेण अकस्मात् (२८४) प्रलयमहावराहदंष्ट्राविवरमिव दर्शयन्ती मही अदीर्यत। सहसैव च तस्मात् विवरात् आशावारणोत्क्षिप्त इव आलानलोहस्तम्भः (२८५) महावराहपीवरस्कन्धपीठः,

---

पालानाम्—तथा पातालस्वामिप्रभृतीनां दिगपालानां, भुजाः,—बाहव एव, "अर्तिहृधि—" (उ० १ पा० १८ सू०) इत्यादिना पाधातौ कुप्रत्यये इकारादेशे रूपम्] पञ्जराणि, तेषु प्रविष्टे तस्मिन्, अकुतोभये इति भावः ।

(२८१) विस्रब्धं—निःशङ्कं विश्वस्तं वा यथा तथा, एतन्निमित्तमेव राजादीनां साहाय्यग्रहणं बोद्धव्यम् । साधयति—अनुतिष्ठति ।

(२८२) अतिचिरं—दीर्घकालं व्याप्य । प्रत्यूहकारिषु—विघ्नकारिषु । शान्तेषु—शान्तिं प्राप्तेषु, निवृत्तेषु इत्यर्थः । कौणपेषु—राक्षसेषु ("राक्षसः कौणपः क्रव्याद्" इत्यमरः)। गलति—अतिक्रामति ।

(२८३) मण्डलस्य—प्रागुक्तभस्मालिखितमण्डलाकाररेखायाः । नातिदवीयसि—नातिदूरवर्तिनी इत्यर्थः । उत्तरेण—उत्तरस्यां दिशि । ["एनबन्यतरस्याम्—" (५।३।३५ पा०) इत्यादिना सप्तम्यर्थे एनप् तद्योगात् "एनपा—" (२।३।३१ पा०) इत्यादिना "मण्डलस्य" इति षष्ठी]।

(२८४) प्रलयेति।—प्रलये—प्रलयकाले महावराहः,—आदिवराहः, जलमग्नायाः पृथिव्याः उद्धारकः नारायणावतारविशेष इति यावत्, तस्य दंष्ट्रा—दशनः, तस्याः विवरं—तत्कृतरन्ध्रम् इव इत्यर्थः, दर्शयन्ती—प्रकटयन्ती। ["मही" इत्यत्र "क्षितिः" इति पाठान्तरम्]। अदीर्यत—स्वयमेव द्विधा अभवत् इत्यर्थः । विवरात्—रन्ध्रात्, "पुरुषः उदगात्" इति उत्तरेण सम्बन्धः । तमेव विशिनष्टि, आशेत्यादिभिः । —आशावारणः,—दिग्गजः, पातालस्थ इति भावः, तेन उत्क्षिप्तः इव—उपरि क्षिप्त इव, आलानलोहस्तम्भः,—आलानं—गजबन्धनं ("आलानं बन्धस्तम्भे" इति हस्तिप्रकरणे अमरः) तदर्थं लोहस्तम्भः—लौहनिर्मितः विपुलः स्थूणाविशेष इत्यर्थः । लौहपदेन पुरुषस्य दृढशरीरत्वं कृष्णवर्णत्वञ्चोक्तम् ।

(२८५) महावराहेति।—महावराहस्य इव पीवरः—स्थूलः, मांसलमित्यर्थः,

नरकासुर इव भुवो गर्भात् उद्धृत:, बलिदानव इव भित्त्वोत्थित: पातालम्, इन्द्रनीलप्रासाद इव (३८६) उपरिज्वलितरत्नप्रदीप:, (३८७) स्निग्धनीलघननिविडकुटिलकुन्तलकान्तमौलि:, (३८८) उन्मीलन्मालतीमुण्डमाल:, गद्गदतया स्वरस्य स्वभावपाटलतया च चक्षुष: क्षीब इव यौवनमदेन, (३८९) वल्गद्गलदामक:, (४००) करसम्पुटदलितया मृदा (४०१) दिङ्नागकुम्भाभौ अंसकूटौ पुन: पुन: पङ्कयन्, (४०२) सान्द्रचन्दनपङ्क

स्कन्धपीठम्—अंसफलकं, फलकवत् विस्तृतं स्कन्ध इत्यर्थ: यस्य तथोक्त:। नरकासुर इव—भूमिसुत असुरविशेष इव। गर्भात्—कुक्षे:, उदरादित्यर्थ:, अभ्यन्तरादिति यावत्, ("कुक्षिभ्रूणार्भका गर्भा" इत्यमर:) इन्द्रनीलप्रासाद इव—नीलकान्तमणिनिर्मितहर्म्यम् इव।

(३८६) उपरीति।—उपरि—ऊर्ध्वभागे, ज्वलितौ—प्रदीप्तौ, रत्नप्रदीपौ—मणिमयप्रदीपौ, नेत्रे इति भाव: यस्य तथाभूत:।

(३८७) स्निग्धेति।—स्निग्धै:—मसृणै:, नीलै:,—कृष्णवर्णै:, घनै:,—अविरलै:, निविडै:,—सङ्कीर्णै:, दृढैरिति वा दृढमूलैरित्यर्थ:, कुटिलै:,—भङ्गिमद्भि:, कुञ्चितैरित्यर्थ:, कुन्तलै:,—केशै:, कान्त:,—मनोज्ञ:, मौलि:,—किरीटं यस्य तथोक्त:। ("मौलि: किरीटे धम्मिल्ले चूडायामनपुंसकम्" इति मेदिनी)।

(३८८) उन्मीलदिति।—उन्मीलन्ती—स्फुरन्ती मालतीमुण्डमाला—मालतीपुष्पैश्शिरोहार: यस्य तथोक्त:। गद्गदतया—अर्धस्फुटतया। स्वभावपाटलतया—सहजरक्ततया। क्षीब इव—मत्त इव।

(३८९) वल्गदिति।—वल्गत्—चलत्, गले—कण्ठे, दाम—माल्यं यस्य तथाभूत:, धार्यमाणग्रीवाप्रहारयष्टिक इत्यर्थ:।

(४००) करेति।—करयो: सम्पुटेन—योगेन, समुद्गकाकार-रचितकरद्वयेन इत्यर्थ:, दलिता—दलिता तया। मृदा—मृत्तिकया।

(४०१) दिङ्नागकुम्भाभौ—ऐरावतकुम्भनिभौ, अंसकूटौ—स्कन्धशिखरे, स्कन्धौ परिभागौ इत्यर्थ: पर्वतश्रृङ्गवत् समुन्नतस्कन्धौ इत्यर्थ: वा, पङ्कयन्—कर्दमयन्, मल्लयोधाना रीत्यनुसारेण कर्दमेन लिम्पन् इत्यर्थ:।

(४०२) सान्द्रेति।—सान्द्रेण—घनेन, चन्दनपङ्केन—कर्दमितचन्दनेनेत्यर्थ:,

इव गात्रम् उद्वहन्, (४०८) दर्पेण स्वेन मुहुर्मुहुः उरसि द्विगु
णिते दोष्णि वामे तिर्यक् उत्क्षिप्ते च दक्षिणे लगुडाकाण्डे
(४०९) कुण्डलिते चण्डास्फोटनटाङ्कारैः (४१०) कर्मविघ्न
निर्घातानिव पातयन्, षडिन्द्रियविकलमिव जीवलोकं कुर्वन्,
(४११) कुवलयदलश्यामलः पुरुषः उज्जगाम, जगाद च
विहस्य (४१२) नरसिंहनादनिर्घोषघोरया भारत्या,—

दम्भः, (४२१) परिकरबन्धविभ्रमभ्रमितकरनखकिरणचक्रवालेन व्यपगमनाशङ्कया नागदमनमन्त्रमण्डलबन्धेनेव रुन्धन् दशदिशः, नरनाथः सावज्ञम् अवादीत्,—"अरे (४२२) काकोदर! काक। मयि स्थिते राजहंसे न जिह्रेषि बलिं याचितुम्? अमीभिः किं वा परुषभाषितैः? भुजे वीर्यं निवसति, न वाचि, प्रतिपद्यस्व शस्त्रम्। अयं न भवसि। (४२३) अगृहीतहेतिषु अभिचितो मे भुजः प्रहर्तुम्" इति। नागस्तु (४२४) अनादृततरम्,—"एहि, किं शस्त्रेण? भुजाभ्यामेव भनज्मि

---

मात्रा—दम्भनर्थयो यस तद्यथा तथा, हसनेव—हास कुर्वन्निव। बध्यमानेति।—बध्यमान—प्रतिबध्यमान, प्रताड्यमान इति यावत् अयस्त्वरूपैरवयवैः सद्घातैन च इति भाव, सत्वस्य—उत्साहस्य, बलस्य वा, अवष्टम्भ,—वेग यस्य तथाभूत।

(४२१) परिकरेति।—परिकरबन्ध,—कटिबन्ध, तस्य विभ्रमेण—चेष्टया, व्यापारेणेत्यर्थ, भ्रमितयो,—चालितयो, करयो,—हस्तयो, नखकिरणानां चक्रवालं—मण्डलं तेन। व्यपगमनाशङ्कया—अस्य पलायनसम्भावनयेत्यर्थ। नागेति।—नागाना—सर्पाणां, दमनमन्त्र,—शासनमन्त्र, गारुडादि इत्यर्थ, तेन यो मण्डलबन्ध,—मण्डलाकारेण अभिमन्त्रित, गारुडतन्त्रप्रसिद्ध दिग्बन्धादिकम् इत्यर्थ, यत्र स्थितो नाग न पलायित प्रभवतीति भाव तनेव, रुन्धन्—आवृण्वन्। सावज्ञ—सावहेलम्।

(४२२) काकोदर।—काकस्य—वायसस्येव, उदर यस्य, यद्वा,—काकम्—ईषत् कुण्डलितमित्युदरं यस्य, तत्सम्बुद्धौ काकोदर।—रे भुजङ्ग! ("भुजङ्गोऽहिभुजङ्गम। ... पन्नगा काकोदर फणी॥" इत्यमर) काक!—इति साधिक्षेपोक्ति, काकवत् निर्लज्ज इति भाव। राजहंसे—नृपश्रेष्ठे, कलहंसे च, ("राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी)। जिह्रेषि—लज्जसे। बलि—पूजा, पूजाविधौ देयं तण्डुलादिकञ्च, ("बलि पूजोपहारयो" इत्यमर)। काकानां बलिभोजनं प्रसिद्धम्। परुषभाषितै,—कटूक्तिभि। प्रतिपद्यस्व—गृहाण। अयम्—ईदृश इत्यर्थ, न भवसि—न तिष्ठसीत्यर्थ, लब्धमिति शेष, न जीवसि इति भाव।

(४२३) अगृहीतहेतिषु—अगृहीतशस्त्रेषु, ("रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतय" इत्यमर) अभिचित,—अभ्यस्त, अभ्यस्त इत्यर्थ।

(४२४) अनादृततर—सावज्ञातिशयमित्यर्थ। एहि—आगच्छ। किं शस्त्रेण?

भवतो दर्पम्" इति अभिधाय आस्फोटयामास। नरपतिरपि (४२५) निरायुधम् आयुधेन युधि लज्जमानो जेतुम् उत्सृज्य सचर्मफलकम् अट्टहासम् असिम् अर्धोरुकस्य उपरि बबन्ध बाहुयुद्धाय कक्ष्याम्। युयुधाते च (४२६) निर्दयास्फोटन-स्फुटितभुजरुधिरसीकरसिच्यमानौ शिलास्तम्भाविव पतद्भिः बाहुदण्डैः शब्दमयमिव कुर्वाणौ भुवनं तौ। न चिराच्च पातयामास भूतले भुजङ्गं भूपतिः। जग्राह च केशेषु, (४२७) उच्चखान च शिरश्छेत्तुम् अट्टहासम्, अपश्यच्च वैकक्षकमालाऽन्तरेण अस्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्च अवादीत्,— "दुर्विनीत! अस्ति ते (४२८) दुर्नयनिर्वाहबीजम् इदं, यतो विप्रश्रमेव आचरसि चापलानि" इत्युक्त्वा उत्ससर्ज तम्।

---

—प्रश्नस्य किमपि प्रयोजनं नास्तीत्यर्थः। मर्दयिष्यामि—नाशयामीत्यर्थः। आस्फोटयामास—आस्फालयामास, बाहौ कराघातम् अकार्षीदित्यर्थः।

(४२५) निरायुधम्—अशस्त्रम्। आयुधेन—शस्त्रेण। उत्सृज्य—परित्यज्य। अट्टहास—तदाख्यं भैरवाचार्यदत्तं खड्गम्, अट्टहासपदेनैव असौ गम्यमाने पुनरसि पदप्रयोगस्य प्रयासार्थं, "प्रयासार्थं सामान्यशब्दप्रयोग" इति अष्टटानुशासनादत्रान्वयम्। अर्धोरुकस्य—अर्धोरुपर्यन्तमाच्छादकवस्त्रविशेषस्य। कक्ष्याम्—वस्त्ररज्जुम्।

(४२६) निर्दयेति।—निर्दय—निष्ठुरं, यत् आस्फोटन—प्रहरणं, परस्परं बाह्वोरास्फालनप्रहारैः शब्दकरणमित्यर्थः, तेन स्फुटितस्य—विदलितस्य, भुजस्य रुधिरस्य—रक्तस्य सीकरैः,—बिन्दुभिः, सिच्यमानौ—आप्लूयमानौ इत्यर्थः। पतद्भिः परस्परदण्ड इति भावः। न चिरात्—अचिरादित्यर्थः।

(४२७) उच्चखान—उत्तोलयामास इत्यर्थः। वैकक्षकमाला—तिर्यग्वक्षो-विलम्बिहारविशेषम् अन्तरेण—मध्ये ["अन्तराऽन्तरेण युक्ते" (२।३।४ पा०) इति अन्तरेणेति योगे द्वितीया]। मालाऽन्तरितत्वात् प्रथममदृष्टम् इदानीमनावृतत्वात् तद्दर्शनं बोध्यम्।

(४२८) दुर्नयेति।—दुर्नयस्य—दुश्चरितस्य, निर्वाह—सम्पादनं तस्य बीजं—कारणम् इदं—यज्ञोपवीतमित्यर्थः, एतद्धारणेन ब्राह्मणोऽयमिति मत्वा दुरा

अनन्तरञ्च सहसैव (४२९) अतिबहला ज्योत्स्ना ददर्श, शरदि विकसतां कमलवनानामिव च घ्राणावलेपिनम् आमोदम् अजिघ्रत्, झटिति च नूपुरशब्दम् अशृणोत्, व्यापारयामास च शब्दानुसारेण दृष्टिम्।

(४३०) अथ करतलस्थितस्य अट्टहासस्य मध्ये तडितमिव नीलजलधरोदरे स्फुरन्तीं, प्रभया पिबन्तीमिव त्रियामां, तामरसहस्ता, (४३१) कोमलाङ्गुलिरागशोणजालकानि च चरणलग्नानि (४३२) वेलावालविद्रुमलतावनानि इव आकर्षन्ती, (४३३) करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं निर्मलचरणनखनिवहनिभेन बिभ्रती,

---

भारोऽपि त्वं न केनापि दत्तासि ब्रह्महत्याभयादिति भावः। विस्रब्धम्—निःशङ्कम्। आपन्नानि—श्रीतुल्यानि। उत्ससर्ज—मुमोच।

(४२९) अतिबहलाम्—अतिप्रभूताम्। घ्राणावलेपिनम्—नासारन्ध्रपूरकमिति भावः। आमोदम्—अतिमनोहरगन्धम्। व्यापारयामास—प्रेरयामास, निक्षेपयामासेत्यर्थः। दृष्टिम्—नेत्रम्।

(४३०) अथेत्यादि।—"अथ" इत्यस्य "स्त्रियमपश्यत्" इत्युपरितनेनान्वयः। अट्टहासस्य—तन्नामकस्य मणेः। तडितमिव—सौदामनीमिव, स्फुरन्तीम्—राजमानाम्। पिबन्तीमिव—ग्रसन्तीमिव। त्रियामा—रात्रिम्, अतिप्रभावत्वेन तामस्यापगममुपेक्षितम्। तामरसहस्ता—पद्मकराम् ("अथ तामरसं पद्मं ताम्रं काञ्चनयोरपि". इति मेदिनी)।

(४३१) कोमलेति।—कोमलानाम् अङ्गुलीनां रागराजि—लोहितधारा, सैव जालकानि—प्रवाहान्।

(४३२) वेलेति।—वेला—तटभूमी, बालानि—नवानि, यानि विद्रुमलता वनानि—प्रवालवल्लीकाननानि तानि इव।

(४३३) करेति।—कर एव पङ्कजं—पद्मं तस्य सङ्कोच—निमीलनं चन्द्रोदयादिति भावः तस्य आशङ्का—भयं तया, शशाङ्कमण्डलमिव—चन्द्रबिम्बम् इव। खण्डशः कृतं—खण्डखण्डीकृतम्। निर्मलेति।—निर्मलानां—विशदानां, चरणनखानां निवहः—समूहः, तन्निभेन—तच्छलेन।

( ४३४ ) गुल्फावलम्बिनूपुरपुटतया स्थितनिविडकटकावलिबन्धनादिव परिभ्रम्य आगतां, ( ४३५ ) बहुविधकुसुमशकुनिशतशोभितात् पवनचलिततनुतरङ्गात् अतिस्वच्छात् अम्बुकात् उदधिसलिलादिव उत्तरन्तीम्, ( ४३६ ) उदधिजन्मप्रभुणा विवलिच्छलेन विपथगयेव परिष्वक्तमध्याम्, अत्युन्नतस्तनमण्डलां दृश्यमानदिङ्नागकुम्भामिव ककुभं, ( ४३७ ) मदजलैरावतकरशीकरनिकरम् इव शरत्सारागणतारं हारम् उरसा दधानां, ( ४३८ ) धवलचामरैरिव च मन्दमन्द-

( ४३४ ) गुल्फेति।—गुल्फ—पादग्रन्थिम् अवलम्बते इति गुल्फावलम्बि—गुल्फस्थ, नूपुरपुट—नूपुरसन्धि यस्या तद्भाव तत्ता तया हेतुना। स्थितेति।—स्थित निविड—दृढ, कटकावल्या—शैलकटके, बन्धन तस्मादिव, परिभ्रम्य—विद्युत्य, मज्जाय इत्यर्थ, आगताम—उपस्थिताम।

( ४३५ ) बहुविधेति।—बहुविधे,—विविधे, कुसुमाना—पुष्पाणा, शकुनीना—पक्षिणाञ्च, शतै, शकल—समुल्लिखिते अम्बुन,—उपरिपतिते इति भाव, शोभित तस्मात्। पवनेति।—पवनेन—वायुना, चलिता,—विचलिता, तनव,—अल्पाल्पा, तरङ्गा,—शोभावर्द्धनार्थं हर्षेण कृतजनिता भङ्गय, ऊर्मयश्च यस्य तस्मात्, अतिस्वच्छात—अतिविशदात, अम्बुकात—वसनात्। उत्तरन्तीम—उत्तिष्ठन्तीम्, वस्त्राच्छादिततया दूरात स्पष्ट नालक्ष्यत, ततो यथा यथा समीपवर्तिनी अजायत, तथा तथा स्फुट दृश्यमानत्वात वसनाभ्यन्तरात् उत्तरन्तीवाभाति। अथवा पवनेन आच्छादनवसनस्य अन्तराऽन्तरा उद्घाटनात् वस्त्राभ्यन्तरादुत्तरन्तीव इति भाव।

( ४३६ ) उदधिजन्मप्रभुणा—समुद्रोत्पत्तिकेन विवलिच्छलेन—विवलिमिषेण, विपथगयेव—त्रिधारया गङ्गयेव, परिष्वक्तमध्याम्—आलिङ्गितमध्यभागाम्। दृश्यमानेति।—दृश्यमानौ दिङ्नागस्य—ऐरावतस्य, कुम्भौ यस्या तथाभूताम् इव। ककुभ—दिश ("दिशस्तु ककुभ काष्ठा ·" इत्यमर)।

( ४३७ ) मदेति।—मदे—दानवारिणि, जल,—समस्त मदजलं, समद इत्यर्थ, ऐरावत, तस्य कर,—शुण्डा, तस्य शीकराणा—जलबिन्दूना निकर,—सङ्घ तमिव। शरदिति।—शरदि य तारागण,—नक्षत्रवृन्द तद्वत् तार,—महान्, उज्ज्वल इत्यर्थं तम्। उरसा—वक्षसा।

(४३८) धवलचामरैरिव—श्वेतबालव्यजनैरिव। मन्देति।—मन्दमन्देन—ईषन्मन्देन,

शिखामदोलायितैः हारकिरणैः उपवीज्यमानां, (४३९) स्वभाव-लोहितेन मदान्धगन्धेभकुम्भास्फालनसङ्क्रान्तसिन्दूरेणेव करद्वयेन द्योतमानां, (४४०) हरशिखण्डेन्दुद्वितीयखण्डेनेव कुण्डली-कृतेन ज्योत्स्नामुचा दन्तपत्रेण विभ्राजमानां, (४४१) कौस्तुभ-गभस्तिस्तबकेन इव च श्रवणलग्नेन अशोककिसलयेन अलङ्कृतां, सहसा मातङ्गमदमयेन तिलकेन अट्टहासच्छद्म-च्छायामण्डलेनेव अविरहितललाटाम्, आ पादतलात् आ-सीमन्तात् चन्द्रातपधवलेन चन्दनेन आदिराजयशसेव धवली-

---

चञ्चलेन इत्यर्थः, [ "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्वित्वम् ] निश्वासेन दोलायिता,—चञ्चलिता तैः। उपवीज्यमाना—सवीज्यमाना ताम्।

(४३९) स्वभावलोहितेन—प्रकृतरक्तेन। मदान्धेति।—मदान्ध,—मदमत्त, य गन्धेभ,—गन्धप्रधानो हस्ती, "स्वेद मूत्र पुरीषञ्च गन्धाद्येव मतङ्गजाः। यस्यामाण दिशाश्वग्नि स विद्याद्गन्धहस्तिनम्॥" इत्युक्तलक्षणो हस्ती वा, तस्य कुम्भास्फालन—कुम्भताडनं तेन सङ्क्रान्त—उपगत, सिन्दूर यस्मिन् तेनेव, स्वभावतः गजारोहणशीलत्वात् तत्कुम्भसिन्दूरसङ्क्रमणसम्भवनत्वम्, करद्वयेन—हस्तयुगलेन, द्योतमाना—शोभमानाम्।

(४४०) हरेति।—हरस्य शिखण्ड—चूडा, शेखरमित्यर्थः, ("शिखण्डो बर्हचूडयो" इति मेदिनी) तत्र य इन्दुद्वितीयखण्ड,—अर्द्धचन्द्र इत्यर्थ तेन इव। कुण्डलीकृतेन—कुण्डलरूपतां नीतेन, ज्योत्स्नामुचा—प्रभावर्षिणा, दन्तपत्रेण—हस्तिदन्तनिर्म्मितकर्णभूषणेन विभ्राजमाना—विराजमानाम्।

(४४१) कौस्तुभेति।—कौस्तुभस्य—नारायणोरःस्थस्य मणिविशेषस्य गभस्तीना—किरणाना, स्तबक,—गुच्छ तेन इव, श्रवणलग्नेन—श्रोत्रगतेन। मातङ्गमदमयेन—गजदानरचितेन इत्यर्थः। अट्टहासेति।—अट्टहासस्य—तिरोहितस्य छद्मस्य छायामण्डल तेन इव, अविरहित —अशून्य, ललाटो यस्या ताम्। आ-पादतलात्—पादतलमारभ्य, आ-सीमन्तात्—सीमन्तपर्य्यन्तम्, [ अत्र "पञ्चम्यपाङ्परिभि" (२।३।१० पा०) इति सूत्रेण पञ्चमी, तत "आङ् मर्य्यादाऽभिविध्यो" (२।१।१३ पा०) इति पञ्चम्यन्तेन पदेन पाक्षिक समासाभाव ]। चन्द्रातपधवलेन—कौमुदीवत् शुभ्रेण, चन्द्रातप इव—उल्लोच इव, धवलेन—शुभ्रावदातेन वा।

क्षता, (४४२) धरणितलचुम्बिनीभिः कण्ठकुसुममालाभिः सरिद्भिरिव सागराहृष्टाभिः अधिष्ठितां, मृणालकोमलैः अवयवैः (४४३) कमलसम्भवत्वम् अनवरम् आचक्षाणां स्त्रियम् अपश्यत्, असम्भ्रान्तश्च पप्रच्छ,—"भद्रे! कासि? किमर्थं वा दर्शनपथम् आगतासि?" इति। सा तु स्त्रीजनविरुद्धेन (४४४) अवष्टम्भेन अभिभवन्तीव अभाषत तं,—"वीर। विद्धि मां (४४५) नारायणोरःस्थली-लीलाविहारहरिणीं, (४४६) पृथुभरतभगीरथादिराजवंश-

---

आदिराजयशसा इव—आदिराजस्य—मनो वैवस्वतस्य, पृथुनृपतेर्वा, यश तेन इव।

(४४२) धरणितलेति।—धरणितलम्—भूतलम्, चुम्बन्ति—स्पृशन्ति इति तथोक्ताभिः। बिम्बविशेषणमिदं सरित्पक्षेऽपि योजनीयम्। सागराहृष्टाभिः,—सागरेण आहृष्टा ताभिः, अथ सागरगामिनीभिः इत्यर्थः, सुगमत्वादिति भावः। ["सागराहृष्टाभिः" इत्यत्र "सागराधिष्ठाभिः" इति पाठे,—सागरम् अधि—अधिकृत्य, तिष्ठन्ति या ताभिः, सागराधिष्ठिताभिरित्यर्थः]।

(४४३) कमलसम्भव—कमलात् उत्पत्तिम्, यद्वा—सम्भूयते—अधीयते अधिक्रियते [अधिकरणे अप्] सम्भवः, कमलमेव सम्भवः,—अधिष्ठानस्थानं यस्याः तस्याः भावः तत्त्वम्, कमलवासस्थत्वमित्यर्थः, लक्ष्म्याः पद्मालयत्वात्, अथवा,—कमलसम्भवत्वम्—सलिलात् उद्भवम्, क्षीरोदधेः तदुत्पत्तेः, ("सलिलं कमलं जलम्" इत्यमरः) अनवरम्—अवररहितम्, तुच्छं न इत्यर्थः, वाक्यापारं विनैवेति यावत्, आचक्षाणा—कथयन्तीम्। असम्भ्रान्तः,—अचकितः, अत्वरः चेत्यर्थः।

(४४४) अवष्टम्भेन—गर्वेण। अभिभवन्तीव—तिरस्कुर्वतीव, तद्वाक्यं प्रति हसन्तीवेत्यर्थः।

(४४५) नारायणेति।—नारायणस्य—विष्णोः, उरः,—वक्षःस्थलम् एव स्थली—अकृत्रिमभूमिः, उरःस्थली, तस्याम् लीलया,—स्वच्छन्देन, यो विहारः—क्रीडा, विचरणञ्च, तत्र हरिणी—मृगी ताम्, हरिणी अपि स्वेच्छया अरण्यस्थल्यां विहरति।

(४४६) पृथ्विति।—पृथुप्रभृतीनां राज्ञां, वंशस्य—कुलस्य, वैकुण्ठस्य च

पताका, (४४७) सुभटभुजजयस्तम्भविन्यासशालभञ्जिका, (४४८) रणरुधिरतरङ्गिणीतरङ्गक्रीडादोहददुर्ललितराजहंसी, (४४९) सितनृपच्छत्रषण्डशिखण्डिनीम्, (४५०) अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम्, असिधाराजलकमलिनीं श्रियम्। (४५१) अपहृताऽस्मि तव अमुना शौर्यरसेन। याचस्व, ददामि ते वरम् अभिलषितम्" इति।

---

("वरा भमि कुनी वैषी" इति मेदिनी) पताका—वैजयन्ती, प्रशस्तत्वापर्यायमिन्यय, एतेन श्रीसारबलाराह्, सम्मम,—वैकुण्ठप्रभोपरि चरस्थानाम् इति भाव।

(४४७) सुभटेति।—सुभटानां—वीरश्रेष्ठानां, भुजा,—बाहव एव, जयस्तम्भाः,—विजयज्ञापकस्तम्भा, तेषु विन्यासशालभञ्जिका—शोभार्थीविन्यस्तपुत्तलिका ताम्। दृश्यते हि लोके नभावानुसार शालभञ्जिकाभ्यास क्रियते इति एव हि या सतत वीराणां भुजेषु अभिरमते सा इति। सुभटपदेन अस्या वीरानुरागित्वं प्रकटीकृतम्, "श्रीभ वण्ड इव वीरभ ञ्ज्वलत परिभूयते" इत्युक्त।

(४४८) रणेति।—रणेषु—संग्रामेषु या रुधिरतरङ्गिण्य,—रक्तनद्य, तासां तरङ्गेषु—जलमेंगु, क्रीडा—केलि तत्र दोहदेन—अभिलाषेण, दुर्ललिता—दर्पिता, राजहंसी ताम्।

(४४९) सितेति।—सितानि—धवलानि नृपाणां—राज्ञां, छत्रषण्डानि—आतपत्रमण्डलानि आतपत्रवनानि इत्यर्थः तत्र शिखण्डिनी—मयूरी ताम्, अनन्तरं प्रायश मयूरीणां मुच्चरणशीलत्वात्।

(४५०) अतीति।—अतिनिशितानां—सुतीक्ष्णानां शस्त्राणां धारा एव वनानि, तेषु भ्रमणम् एव विभ्रम —विलास, तत्र सिंही ताम् [सिंहे पयाद्यपि "पृषोदरादीनि—" (६।३।१०९ पा०) इत्यादिना हकार सकारयो व्यत्ययस्थान सिंह, तत "जाते—" (४।१।६३ पा०) इत्यादिना ङीष् रूपम्]। असीति।—असीनां—तरवारीणां, धारा एव—निशिताग्राणि, जलानि, तत्तुल्यानि वैषद्यादिति भाव तत्र कमलिनी—पद्मिनी ताम्।

(४५१) अपहृता—आकृष्टा। शौर्यरसेन—शौर्यानुरागेण, सिद्धाना चिरप्रार्थनयाऽपि दर्शनमददत्या शौर्यगुणपक्षपातिन्या लिप्सुजाता तव सर्वेन स्वदर्शिभाव, नरनारायणाश्रयशौर्यानुरागात इति बोध्यम्।

वीराणान्तु (४५२) अपुनरुक्ताः परोपकाराः; यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्य्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी (४५३) प्रीततरहृदया विस्तीर्य्यमाणेन वपुषा क्षीरोदेनेव उपरि पर्य्यस्तेन अभिषिञ्चन्ती भूपालम्—"एवमस्तु" इति अब्रवीत्; अवादीच्च पुनः,—"अनेन (४५४) सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या च असाधारणया भवान् भुवि सूर्य्याचन्द्रमसोः तृतीय इव अविच्छिन्नस्य प्रतिदिनम् उपचीयमानवृद्धेः शुचिसुभगसत्यत्यागधैर्य्यशौण्डपुरुषप्रकाण्डप्रायस्य

---

(४५२) अपुनरुक्ताः,—पुनरुक्तिदोषरहिताः, परोपकाराः,—परेषामुपकाराः, वीराः परोपकारं करिष्याम इति प्रतिज्ञाय तथा एव आचरन्ति, कार्य्यस्यान्ते न तत्तेषां काऽपि अन्यथोक्तिरिति भावः, यद्वा,—अपुनरुक्ताः,—अनधिकाः, परोपकारा न तेषाम् अधिका मताः, अवश्यकर्त्तव्यत्वात् स्वतःसिद्धा इति भावः, परोपकारप्रतिनिधौ प्रत्युपकारं कदाऽपि न वाचा व्याहरन्तीति तात्पर्य्यम्। ता—लक्ष्मीम्। स्वार्थविमुखः,—निःस्वार्थः, स्वोपकारार्थं वरमप्रार्थयमानः इत्यर्थः। सिद्धिम्—अभीष्टस्य फलस्य विद्याधरत्वलाभरूपामित्यर्थः, आश्रितेष्टसाधने एव महापुरुषाः अवहिता भवन्तीति निष्कर्षः।

(४५३) प्रीततरेति।—प्रीततरम्—अतिशयेन प्रीतं, राज्ञः स्वार्थनिःस्पृहत्वेन इति भावः, हृदयं यस्याः सा। विस्तीर्य्यमाणेन—विस्फार्य्यमाणेन, राज्ञः निःस्पृहत्वदर्शनेन विस्मयोदयादिति भावः। क्षीरोदेनेव—दुग्धसागरेणेव, अतीव शुक्लत्वादिति भावः। उपरि पर्य्यस्तेन—उपरि पतितेन। एवम् अस्तु—त्वत्प्रार्थनं पूर्णं भवतु इत्यर्थः।

(४५४) सत्त्वोत्कर्षेण—चित्तस्य स्वभावस्य वा औदार्य्येण, मनस्वितया उदारस्वभावतया वा इत्यर्थः। असाधारणया—निरुपमया। सूर्य्याचन्द्रमसोः,—आदित्यनिशाकरयोः, तृतीय [illegible]—सूर्य्याचन्द्रमसमपेक्ष्य तेजस्वितया तृतीयस्थानमधिकृत इत्यर्थः। अविच्छिन्नस्य—विच्छेदमप्राप्तस्य। उपचीयमानवृद्धेः—सततवर्द्धमानाभ्युदयस्य। कालवशात् स्वतेजसः कदाचित् अपचयतः कदाचित् वृद्धिमतश्च सूर्य्यात्, प्रतिमासमपवृद्धिमतः चन्द्रमसश्चापि उपमानभूतात् अहरहः उपचीयमानवृद्धिमत्त्वस्य उपमेयभूतस्य नरेन्द्रस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारः। शुचीति।—शुचि,—बाह्याभ्यन्तरपूतत्वम् शुद्धाचरणं वा, सुभगं—सु—शोभनं, भगः—वीर्य्यं कीर्त्तिं वा, सत्यं—यथार्थभाषणं,

महतो राजवंशस्य कर्त्ता भविष्यति। (४५५) यस्मिन् उत्पत्स्यते सर्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषुः द्वितीयो मान्धातेव ; यस्य अयं करः स्वयमेव ग्रहीष्यति चामरम्" इति वचसोऽन्ते तिरोबभूव।

भूमिपालस्तु तदाकर्ण्य हृदयेन अतिमात्रम् अप्रीयत। भैरवाचार्य्योऽपि तस्या देव्याः तेन वचसा, (४५६) कर्म्मणा च सम्यक् उपपादितेन सद्य एव कुन्तली, किरीटी, कुण्डली, हारी, केयूरी, मेखली, मुद्गरी, खड्गी च भूत्वा अवाप विद्याधरत्वम् ; प्रोवाच च,—"राजन्! (४५७) अदूरव्यापिनः फल्गुचेतसाम् अलसानां मनोरथाः। सतान्तु भुवि

---

त्यागः,—दानम्, धैर्य्यं—धीरत्वम्, तस्य भोक्ता,—प्रसवकः, दया वा, धर्म्मः—तै शौर्य्य,—विक्रमः, सदाचारपरायणतया धर्म्मस्य सत्यवादिन सदा धीरात्र इत्यर्थः, पुरुषप्रकाण्डः—पुरुषश्रेष्ठः, [प्रशंसा वाचक प्रकाण्ड "प्रशंसा वचनैश्च" (वा०) इति समासः। अत्र प्रकाण्डशब्द श्रेष्ठार्थबोधकमव्ययम्] प्रायेण—बाहुल्येन यत्र तादृशस्य। कर्त्ता—उत्पादकः।

(४५५) यस्मिन्—राजवंशे। द्वितीयः,—अपरः, मान्धातेव—सूर्य्यवंश्य नृपविशेष इव। अयं—मदीयः इत्यर्थः। ["स्वयमेव ग्रहीष्यति" इत्यत्र "स्वयमेव कमलमपहाय ग्रहीष्यति" इत्यधिकः पाठः]।

(४५६) कर्म्मणा—मन्त्रसाधनरूपकार्य्येण। सम्यक् उपपादितेन—सम्यगनुष्ठितेन। सद्य एव—तत्क्षणमेव। कुन्तली—कुन्तलवान् सुकेश इति यावत्। किरीटी—मुकुटधारी। कुण्डली—कर्णान्दोलितकुण्डलः। हारी—हारवान्। केयूरी—अङ्गदी। मेखली—काञ्चीदामालङ्कृतकटिः। मुद्गरी—मुद्गर —दण्डविशेष तद्वान्, [अत्र सर्वत्र इनन्तु "अत इनिठनौ" (५।२।११५ पा०) इति इनिप्रत्यये, मेखली इत्यत्र च "व्रीह्यादिभ्यश्च" (५।२।११६ पा०) इति इनिप्रत्यये रूपम्]। विद्याधरत्वं—विद्याधरभावम्।

(४५७) अदूरव्यापिनः,—अदूरविस्ताराः, न दूरप्रसारिण इत्यर्थः। फल्गुचेतसाम्—असारचित्तानाम्, ("असारं फल्गु" इत्यमरः) अलसानां—मन्दानां, कार्य्यपराङ्मुखानाम् इत्यर्थः, मनोरथाः,—कामाः।

(४५८) विस्तारवत्यः स्वभावेनैव उपकृतयः ; स्वप्नेऽपि असम्भाविता दातुमिमां दक्षिणां क्षमः कोऽन्यो भवन्तम् अपहाय ? (४५९) सम्पत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिः उन्नतिम् आयाति। (४६०) त्वदीयैः गुणैः उपकरणीकृतस्य त्वत्त एव च लब्धात्मलाभस्य निर्लज्जता इयम् अस्य मूढहृदयस्य। तदिच्छामि येन केनचित् (४६१) कार्यलवोपपादनोपयोगेन स्मारयितुम् आत्मानम्" इति। (४६२) प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः ; अतः तं राजा—"भवच्चित्तैरेव परिसमाप्तकृत्योऽस्मि ; साधयतु मान्यो यथासमीहितं स्थानम्" इति प्रत्याचचक्षे।

---

(४५८) विस्तारवत्यः,—प्रसरणशीला दूरव्यापिन्य इत्यर्थः। उपकृतयः,—उपकाराः। इमां दक्षिणां—विद्याधरत्वदानरूपाम्। क्षमः,—शक्तः। अपहाय—त्यक्त्वा, विनेत्यर्थः।

(४५९) सम्पदिति।—सम्पदः,—विभवस्य, कणिकां—कणमात्रम्, विभवलेशमित्यर्थः। लघुप्रकृतिः,—क्षुद्रस्वभावः। उन्नतिम्—ऊर्द्ध्वगमनम्, उन्मार्गगमनञ्च, विषयशालित्वमित्यर्थः।

(४६०) उपकरणीकृतस्य—उपकृतस्य इत्यर्थः। लब्धेति।—लब्धः आत्मनो लाभः,—अभीष्टरूपः येन तथाभूतस्य। अस्य—मदीयस्य इति भावः।

(४६१) कार्येति।—कार्यस्य लवः,—लेशः, किञ्चित् इत्यर्थः, यत्किञ्चित्कार्यम् इति निष्कर्षः, तस्य उपपादनं—सम्पादनम्, तेन य उपयोगः,—उपकारः तेन। स्मारयितुं—स्मृतिपथं नेतुम्।

(४६२) प्रत्युपकारेति।—प्रत्युपकारेण—उपकारप्रतिदानेन अप्रकृतत्वम् इति भावः, दुष्प्रवेशाः,—प्रवेष्टुमशक्या इत्यर्थः। हृदयावष्टम्भाः—हृदयगाम्भीर्याणि, धीराणां हृदयानि परप्रत्युपकारं नार्थयन्ते इति भावः। [ "अतः" इत्यत्र "इतः" इति पाठान्तरम् ]। भवच्चित्तैः—भवतः चित्तैः—अभीष्टपूरणेनेत्यर्थः। परिसमाप्तम्—अवसितम्, कृत्यं—प्रयोजनं यस्य तथाभूतः, लब्धप्रत्युपकार इति भावः। साधयतु—गच्छतु। "आदेश्य व्यञ्जक साधिर्गमने स्थाने प्रयुज्यते" इति साहित्यदर्पणः। मान्यः, भवानिति शेषः। यथासमीहितं—चेष्टितानुरूपम्, यथाऽभिलषितमित्यर्थः, स्थानं—

तथोक्तश्च ( ४६३ ) भूभुजा जिगमिषुः सुहृदं समालिङ्ग्य टीटिभादीन् कुवलयवनेनेव अवश्यायशीकरसाविणा सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनः उवाच,—"तात। ब्रवीमि यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। गृह्यताम् इदं शरीरकमिति ( ४६४ ) व्यतिरेकेण अर्थकरणम्। तिलशः क्रीता वयमिति न उपकारानुरूपम्। बान्धवोऽसीति ( ४६५ ) दूरीकरणमिव। त्वयि स्थितं हृदयमिति अप्रत्यक्षम्।

---

विद्याधरश्रीकामित्यर्थः। इति छन्ना इति भावः। प्रत्याचचक्षे—प्रत्याख्यानं कृतवान् इत्यर्थः, प्रत्युपकृतिवचनैः पराङ्मुखोऽभून् इति भावः।

( ४६३ ) भूभुजा—राज्ञा। जिगमिषुः,—गन्तुमिच्छुः [ इच्छासन्नन्तस्य गमेः "समाप्त—" ( १।२।१६८ पा० ) इति उभयथा रूपम् ] भैरवाचार्यं इति शेषः। कुवलयवनेनेव उत्पलकाननेन इव। अवश्यायेति।—अवश्यायस्य—तुषारस्य, ( "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः ) शीकरान्—बिन्दून्, स्रवति इति तथोक्तेन। सास्रेण—सजलेन, अत्र अस्रशब्देनैव नयनसलिलार्थबोधात् पुनः चक्षुःशब्दोपादानं निरर्थकमेव तेन सास्रेणेव नयनेनेति वक्तुमुचितम्। "यामि" इत्यादिना सर्वं स्वाभिप्रायं प्रकाशयतीति बोद्धव्यम्। स्नेहसदृशम्—स्नेहानुरूपम्। अत्र स्नेहानुरूपनिर्देशेन स्नेह एव सुतरामाविष्कृत एव, तत्र हि,—प्रतिपत्त इवेष्टस्य प्रतिपत्तिविधित्सया। "याहि इति तं सुताः प्रगन्तिं क्वचिद् भदाः" इति। एवमुत्तरत्रापि। प्राणा मदीया इति यद् त्वदीयाः,—त्वदधीनाः, त्वं मम प्राणा इति भावः। पुनरुक्तम्—कार्येण प्राक् प्रदर्शितप्रायत्वात् तत् पुनः वाचा समाधानम् अधिकम् इति भावः।

( ४६४ ) व्यतिरेकेण—पृथग्भावेन, अर्थकरणम्—अर्थसाधनम्, भावा ननु अभिन्नावेव तथा कथने तु तस्य विपर्ययः स्यादिति भावः। तिलशः,—खण्डशः, यावन्त उपकाराः कृताः, मदीयेषु अवयवेषु तिलशः खण्डयित्वा प्रत्येकं ममापि मया न परिशोध्यन्ते इति भावः।

( ४६५ ) दूरीकरणम् इव—दूरे निक्षेप इव, बान्धवस्य सतो बन्धुः भिन्नतया दूरवर्तित्वात् इति भावः। अप्रत्यक्षं—वचनमात्रम् एतत्, हृदयस्य तथास्थितस्य दृष्टिविषयत्वाभावात् इति भावः।

(४६६) त्वद्विरहकारिणी कारणा इयं नः सिद्धिरिति अश्रद्धेयम्। (४६७) निष्कारणः तव उपकार इति अनुवादः। स्मर्त्तव्या वयमिति (४६८) आज्ञा। सर्वथा (४६९) कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्त्तव्योऽयं स्वार्थनिष्ठुरो जनः" इत्यभिधाय वेगच्छिन्नहारोच्छलितमुक्ताफलनिकरताडिततारागणं गगनतलम् उत्पपात; ययौ च सीमन्तितग्रहग्रामः सिद्धाचितं धाम। (४७०) श्रीकण्ठोऽपि,—राजन्! पराक्रमक्रीत"

(४६६) त्वद्विरहकारिणी—तव विच्छेदजननी इयं एषा नः—अस्माकम्, सिद्धिः,—विद्याधरत्वलाभः, कारणा—यातना, क्लेश एव इत्यर्थः ["कारणा तु यातना तीव्रवेदना" इत्यमरः। "न सिद्धि" इत्यत्र "न सिद्धिः" इति पाठे—भवद्विरहजननात् इयं यातनाफलत्वेन परिणता, न हि एषा सात्त्विकी सिद्धिरिति, यतो हि, मित्रसङ्गमादिना सिद्धिलाभस्यापि तथाविधसुखाभावादायकत्वेनात्रिसिद्धिकरत्वादित्याशयः] अश्रद्धेयम्—अविश्वास्यम्, एतस्मिन् भवद्विरहेण कारणादौ कथम् एव सुखमिति? इति एतद्वाक्यस्य अश्रद्धेयत्वम् इति भावः।

(४६७) निष्कारणः,—निरर्थकः, अहेतुः वा, कस्यापि प्रत्युपकारस्यानपेक्षात्वादिति भावः। इति—एतत्कथनम् अनुवादः—उक्तार्थस्य प्रकारान्तरेण कथनम्।

(४६८) आज्ञा—आदेशः, अनुजीविभिः राजा न हि आदिश्यते, अपि तु राज्ञा त आदिश्यन्ते इति भावः।

(४६९) कृतघ्नालापेषु—कृतं घ्नन्तीति कृतघ्नाः,—उपकारविस्मारकाः, तेषाम् आलापाः,—भाषणानि तेषु अकृतज्ञजनविषयकालापावसरेषु इत्यर्थः, असज्जनकथासु—दुर्जनविषयकालापप्रस्तावेषु इत्यर्थः, भवदुपकाराकरणात् अहमपि कृतघ्नः—तेषु अन्यतम इति भावः। स्वार्थनिष्ठुरः,—स्वकार्यमात्रनिर्वाहपरायणत्वेन निर्दयः। ययौति।—वेगेन—उत्पतनरंहसा, छिन्नात्—त्रुटितात् हारात् उच्छलिताः—स्खलिताः मुक्ताफलानां—मौक्तिकानां, निकरैः,—समूहैः, ताडितः—आहतः, तारागणः,—नक्षत्रसमूहः यस्य तत् यथा तथा तत्। अत्र विघटिता छिन्नहारस्य मौक्तिकानां निगदितेन असम्भूततारागणताडनमध्यवसीयते इत्यसम्बन्धे सम्बन्धरूपा अतिशयोक्तिः। सीमन्तित इति।—सीमन्तितः—द्विधाकृतः, ग्रहग्रामः—नक्षत्रौघधारिणां सूर्यादीनां ग्रामः,—समूहः येन तदाभूतः। सिद्धाचितम्—विद्याधरत्वानुरूपमित्यर्थं धाम—स्थानम्।

(४७०) श्रीकण्ठोऽपि—तदाख्य नागोऽपि। पराक्रमक्रीत,—वीर्यक्रीत।

कर्त्तव्येषु नियोगेन अनुग्राह्यो याहितविनयोऽयं जनः" इत्यभिधाय राज्ञा अनुमोदितः तदैव भूयो भूविवरं विवेश।

(४७१) नरपतिस्तु क्षीणभूयिष्ठायां क्षपायां, प्रवातुम् आरब्धे (४७२) प्रबुध्यमानकमलिनीनिश्वाससुरभौ, (४७३) वनदेवताकुचांशुकापहरणपरिहासखेदिनि इव सावश्यायशीकरे, (४७४) परिमलाकृष्टमधुव्रति, (४७५) कुमुदनिद्राकारिणि,

---

[ "कर्तृकरणे कृता बहुलम्" (२।१।३२ पा०) इति सूत्रेण तृतीयासमासः ]। कर्त्तव्येषु—कार्य्येषु, भवत इति भावः, नियोगेन—आदेशेन। याहितविनयः,—शिक्षितविनयः, पराधीन इति भावः। [ "राज्ञा अनुमोदितः" इत्यत्र "राजानुमोदितः" इति पाठान्तरम्। एतदेव समीचीनं मन्यामहे, "सनिवृद्धि—" (२।२।११८ पा०) इति षष्ठीसमासविहितस्य अस्य "क्तेन च—" (२।२।१२ पा०) इत्यादिना षष्ठ्या एव समासनिषेधात्, अतीतविहितेन क्तेन तृतीयया समासो भवत्येव इति समन्वयः भवेत्। "राज्ञा अनुमोदितः" इति पाठे—"कर्तृकरणे—" (२।१।३२ पा०) इति बहुलग्रहणात् समासेऽपि समासाभाव इति दिक् ]। भूविवरं—पातालम्।

(४७१) "नरपतिः" इत्यस्य "नगरं विवेश" इत्युत्तरेणान्वयः। क्षीणभूयिष्ठायां—प्रायेण क्षीणायाम् इत्यर्थः। क्षपायां—रजन्याम्। प्रवातुम्—प्रवहनेन सञ्चरितुम्।

(४७२) प्रबुध्यमानेति।—प्रबुध्यमानानां—सूर्य्योदयप्रारम्भात् विकासं लभमानानां, कमलिनीनां—पद्मिनीनां, निश्वासेन—तदामोदवायुनेत्यर्थः, सुरभिः,—सुगन्धिः तस्मिन्।

(४७३) वनेति।—वनदेवतानां कुचयोः,—स्तनयोः, अंशुकस्य—वसनस्य, अपहरणमेव परिहासः,—क्रीडाविशेषः, तेन यः खेदः—घर्म्मोदकं, स्वेदोदयात् इति भावः, तद्वति इव, सावश्यायशीकरे—तुषारबिन्दुयुक्ते इत्यर्थः। एतेन वायौ भुजङ्गव्यवहारसमारोपात् समासोक्तिरलङ्कारः।

(४७४) परिमलेति।—परिमलः,—पुष्पादिविमर्द्दजनितो गन्धः, सुरतसम्भोगजसन्निभ इति तु अप्रकृतसम्भव तदहत्वादिति भावः, ("विमर्दोत्थे परिमलः" इत्यमरः) तेन आकृष्टाः,—आचिताः, मधुव्रताः,—भ्रमराः, यस्य,—तदाघ्राणोन्मादिताः स्थिता इति फलितं येन तथोक्ते।

(४७५) कुमुदेति।—कुमुदानां निद्रा—सङ्कोच इत्यर्थः, तां कारयति—

(४७६) निशापरिणतिजडे, तुषारलेशिनि वनानिले, (४७७) विरहविधुरचक्रवाकचक्रनिश्वसितसन्तापितायामिव अपरजलनिधिमवतरन्त्यां त्रियामायां, (४७८) साक्षादागतलक्ष्मीविलोकनकुतूहलिनीषु इव समुन्मीलन्तीषु नलिनीषु, (४७९) उन्निद्रपक्षिणि, (४८०) क्षरति कुसुमनिकरमिव तुहिनकणनिकरं, मृदुपवन

---

जनयति इति ध्वनिः, अत्र नायिकान्तरसमागमसमये प्रभातकालसमागमात्मा भागम भुक्तायाः अन्यस्याः कुमुदिन्याः प्रेमगर्भव्यवहारेण निद्रासमुत्पादनात् अत्र नायिकान्तरानुरागदर्शनात् दक्षिणनायकत्वं ध्वन्यते ।

(४७६) निशेति ।—निशायाः—रात्रेः, परिणतिः,—परिणामः, अवसानम् इत्यर्थः, तया जडः,—मन्थरः, एतेन—शिशिरभारेण अथवा—सकला निशा व्याप्य निधुवनक्रियाजात श्रमापनोदक इति भावः सूचितः । तुषारलेशिनि—शिशिरबिन्दुवाहिनि ईषत् शीतल इति भावः, अथवा—रतिश्रमस्वेदवति इत्यर्थः ।

(४७७) विरहेति ।—विरहेण—विच्छेदेन, विधुराणां—व्याकुलानां, चक्रवाकानां—रथाङ्गनामकानां पक्षिणां, चक्रस्य—समूहस्य, निश्वसितेन—निश्वासवायुना, उष्णेन इति भावः, सन्तापितायाम् इव, अत्र प्रभातस्य आदित्यस्पर्शेन सुखावगाहनेच्छयावतार । अपरजलनिधिः—पश्चिमसागरम्, प्राचि तपनस्योदयात् अस्तेन्दुना क्रमात् तमसा प्रतीचि अपसरणात् इति तात्पर्यम् । सन्तापित शीतल अवगाहने इति लोकप्रसिद्धं । त्रियामायां—रजन्याम् ।

(४७८) साक्षादिति ।—साक्षादागतायाः—नेत्रसमीपे समुपस्थितायाः, प्रत्यक्ष दृश्यमानायाः इत्यर्थः, लक्ष्म्याः,—श्रियः, (नवदिवसस्य प्रभाकरस्य शोभायाः इत्यपि व्याख्या) विलोकने—दर्शने, दर्शनाभिलाषः, कुतूहलिन्यः,—कौतुकवत्यः तासु इव । समुन्मीलन्तीषु—विकसन्तीषु, नलिनीषु—पद्मिनीषु, एतेन नलिनीनां मुग्धनायिकाकल्पत्वं ध्वनितम् ।

(४७९) उन्निद्रेति ।—उन्निद्राः,—विगतनिद्राः, प्रबुद्धाः इत्यर्थः, (प्रत्यूषे पतत्रिवर्गोऽपि जागरणस्वभावत्वादिति भावः) पक्षिणो यत्र तस्मिन्, एतेन पक्षिणां मङ्गलसूचकानां विटादीनामिव रथ्याकुलसहायत्वं प्रतीयते ।

(४८०) क्षरति—वर्षति । कुसुमनिकरमिव—पुष्पनिकरमिव, अन्यत्र—विरहतापोपशमाय रतिसुखोपसुकरं वा पुष्पविकीर्णत्वं दृश्यते । मृद्विति ।—मृदुना

लासितलते कानने, (४८१) कमललक्ष्मीप्रबोधमङ्गलशङ्खेषु इव रसत्सु (४८२) अन्तर्बद्धध्वनन्मधुकरेषु, मुकुलायमानेषु कुमुदेषु, (४८३) उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्यमाणासु इव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलिकासु तारकासु (४८४) मन्दरशिखराश्रयिणि मन्दानिललुलितकल्पलतावनकुसुमधूलिविच्छुरिते इव धूसरीभवति सप्तर्षिमण्डले,

—मन्देन, पवनेन—वायुना, लासिता—नर्तिता कम्पिता इत्यर्थ, लता,—व्रतत्य यत्र तादृशे, एतेन वायोः कलापक्षोभललितनायकत्वं गम्यते।

(४८१) कमलेति।—कमलानां—पद्मानां लक्ष्मीः,—श्रीः तस्याः प्रबोधाय—जागरणाय विकसनाय इति भावः मङ्गलशङ्खाः तेषु इव, इत्युत्प्रेक्षा। रसत्सु—ध्वनत्सु।

(४८२) अन्तरिति।—अन्तः—अभ्यन्तरे, बद्धा—रुद्धा अतएव पर्याप्तमीन मार्गदिति भावः साध्यन्तु पूर्वदिवसीयमवगमाव्यम्, अधुना प्रभातवर्णनादर्शनात कमलाना विकासप्रसङ्गात, रतिश्रान्ताः कमलानां मधुरस्वनेन जागरणार्थं तत्र व्यासक्ता वा, ध्वनन्तः—गुञ्जन्तः, मधुकराः—भ्रमराः तेषु, एतेन भ्रमराणां रत्यनुकूलसङ्गमस्य प्रतीयते। मुकुलायमानेषु—मुकुलभावं गच्छत्सु।

(४८३) उज्जिहानेति।—उज्जिहाने—उद्गच्छति, [उत्पूर्वकात् जिहीते इत्यस्य शानचि रूपम्] प्रबुद्धे वा रवौ—सूर्यस्य रथवाजिभिः,—रथाश्वैः, विसृष्टाः,—त्यक्ताः तैः। प्रोथपवनैः—नासामारुतैः। प्रोत्सार्यमाणासु इव—अपसार्यमाणासु इव इत्युत्प्रेक्षा। वारुण्यां ककुभि—पश्चिमायां दिशि। पुञ्जीभवन्तीषु—समूहीभवन्तीषु। श्यामेति।—श्यामा—निशा एव लता—व्रततिः, ("श्यामा स्यात् शारिवा निशा" इत्यमरः) यद्वा—श्यामालता—प्रियङ्गुलतिका मकरिका वा तस्याः कलिका—कोरका तासु समाहतीषु इत्यर्थः। तारकासु—नक्षत्रेषु, इति परम्परित (प्रियङ्गुलतिकापक्षे तु निरङ्ग) रूपकमलङ्कारः।

(४८४) मन्दरेति।—मन्दरस्य—पर्वतभेदस्य, शिखरं—शृङ्गम्, आश्रयतीति तथोक्ते। मन्दानिलेति।—मन्देन—अत्यल्पेन मृदु प्रवहता इत्यर्थः, अनिलेन—वायुना, लुलितम—दूषदान्दोलित यत् कल्पलतावनं—देवतरुविशेषकाननं, तस्य कुसुमानां—पुष्पाणां धूलिभिः—परागैः विच्छुरिते इव—लिप्ते इव (इति वाच्या क्रियोत्प्रेक्षा) धूसरीभवति—धूसरतां व्रजति, सप्तर्षिमण्डले—मरीच्यादिमहर्षिमण्डले, "एतेषां स्वर्गाश्रयित्वात् कल्पलतिकाप्रसूनपरागलिप्तत्वं साधु सङ्गच्छते।

(४८५) सुरवारणाङ्कुश इव च्युते गलति तारामये मृगे तानपि टीटिभादीन् गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्य अङ्गानि नगरं विवेश। अन्यस्मिन् अहनि तेषाम् आत्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिम् अकरोत्।

कतिपयदिवसापगमे च (४८६) परिव्राट् भूभुजा वार्यमाणोऽपि वनं ययौ। पातालस्वामि-कर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते। (४८७) सम्पादितमनोरथातिरिक्तविभवौ च सुभटमण्डलमध्ये निष्कृष्टमण्डलाग्रौ समरमुखेषु प्रथमम्

---

(४८५) सुरेति।—सुरवारणस्य—ऐरावतस्य, अङ्कुश इव, च्युते—स्वस्थानात् भ्रष्टे, गलति—क्षरति, अस्तं गच्छति इत्यर्थः तारामये—नक्षत्रमये मृगे—मृगशीर्षाख्ये नक्षत्रे, स हि त्रितारोऽङ्कुशाकार इति कीचकवधविवृतिष्टीकायाम् सहास्य गलदङ्कुशवत् मृगशिरस अवैधर्म्यसाम्यप्रतिपादनात् उपमाऽलङ्कारः। टीटिभादीन्—टीटिभ कर्णताल-पातालस्वामिन इत्यर्थः। नागेति।—नागेन—श्रीकण्ठाख्येन सह, यत् युद्धं तस्य व्यतिकरः,—सम्पर्कः, तेन मलीमसानि—मलिनानि। शुचिनि—पवित्रे, निर्मले वा, वनवापीपयसि—वनस्थसरसीजले। अन्यस्मिन् अहनि—अन्येद्युः, परदिने इत्यर्थः, निशाऽवसानात् परमिति भावः, तेषां—टीटिभादीनाम्। आत्मेति।—आत्मशरीरम्—आत्मदेहम्, अनन्तरम्—अव्यवहितोत्तरं भवति यस्मिन् कर्मणि तत् यथा स्यात् तथा, स्नानभोजनाच्छादनादिना—स्नानाहारवसनादिना, प्रथमं तेषां स्नानभोजनादि व्यापारं समाधाय तेषां शरीरं सन्तर्प्य पश्चात् स्वस्य शरीरसन्तर्पणाय स्नानभोजनादि व्यापारं विदधाविति भावः, यद्वा—आत्मशरीरेण सह, नास्ति अन्तरं—भेदः यस्मिन् कर्मणि तत् यथा तथा, आत्मतुल्यमित्यर्थः।

(४८६) परिव्राट्—परिव्राजकः, [परिव्रजतीत्यर्थे परिपूर्वकात् व्रजतेः कर्त्तरि क्विपि निपातः] टीटिभ इत्यर्थः। भूभुजा—राज्ञा, [भुवं भुनक्ति पालयतीत्यर्थे भूपपदात् भुजेः कर्त्तरि क्विपि रूपम्]। वार्यमाणः,—निषिध्यमानः। वनं ययौ—वानप्रस्थाश्रममवलम्ब्य इति भावः। शौर्येति।—शौर्येण—पराक्रमेण, राज्ञ इति भावः, अनुरक्तौ—जातानुरागौ, न भोगलोलुपतया इति भावः, धनिनौ तु तौ गुणलुब्धौ सदानैवाधिकस्थतुरिति फलितम्।

(४८७) सम्पादितेति।—सम्पादितः,—सम्पन्नितः, भूभुजेति शेषः, मनोरथस्य

उपयुज्यमानौ कथाऽन्तरेषु च अन्तराऽन्तरा समादिष्टौ विचित्राणि भैरवाचार्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ तेनैव सार्द्धं अरम् आजग्मतुः इति।

इति श्रीबाणभट्टकृते हर्षचरिते भैरवाचार्यसिद्धिसाधनं नाम

तृतीय उच्छ्वासः ॥ ३ ॥

—अभिरक्षितस्य, अतिरिक्त,—अधिक, विभव,—सम्पत् ययो तौ। सुभटमण्डलमध्ये—प्रवीरसमाजमध्ये। निकृष्टेति।—निकृष्टम्—अप्युत्कृष्टमित्यर्थः, मण्डलाग्र—खड्गः ययो तौ, ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः। कौक्षेयको मण्डलाग्रः" इत्यमरः) यद्वा,—निकृष्ट—प्रत्यासन्न, यत् मण्डल—वीरव्यूह तस्य अग्रौ—प्रधानभूतौ, वीरसमाजेषु प्रसिद्धाविवार्थः, अत एव समरमुखेषु—युद्धाग्रेषु सेनाव्यूहमुखेषु इति यावत्, प्रथमम्—अग्रे, प्राधान्येन सेनापतित्वेन वा इति भावः, उपयुज्यमानौ—नियुज्यमानौ, इतो इत्यर्थः। कथाऽन्तरेषु—आलापप्रसङ्गेषु। अन्तराऽन्तरा—मध्ये मध्ये। ["आनुपूर्व्ये द्वे वाच्ये" (वा०) इति द्वित्वम्] समादिष्टौ—आज्ञप्तौ, राज्ञा इति शेषः। शैशववृत्तान्तान्—बाल्यक्रीडादिव्यापारान्, भैरवाचार्यस्यैव इति भावः, कथयन्तौ इति श्लिष्टतोपायप्रापकपरं बोद्धव्यम्। तेनैव—राज्ञा, [अत्र "सहयुक्तेऽप्रधाने" (२।३।१९ पा०) इति सूत्रे, 'एवं साकं सार्द्धं समं योगेऽपि' इति वृत्तिः, तेन साद्ध योगे तृतीया ज्ञेया]। सार्द्धं—सह। अरम्—शीघ्रम्।

इत्यमरसिंहाख्याटवीकण्ठीरवपञ्चाननेन काव्यव्याकरणतीर्थेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायाम्,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीनित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चासमाख्यायां
श्रीहर्षचरितव्याख्यायां तृतीय उच्छ्वासः ॥ ३ ॥

# चतुर्थ उच्छ्वासः ।

---

योगं स्वप्नेऽपि नेच्छन्ति कुर्वते न करग्रहम् ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥ १ ॥
सकलमहीभृत्कम्पकृदुत्पद्यते एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥ २ ॥

---

अथेदानीं महता गुणकौशलच्छलेन प्रस्तुतस्य ग्रन्थनायकस्य नृपवंशं प्रख्यापयितुमाह, योगमिति ।—महान्तः,—महानुभावा जनाः, स्वप्नेऽपि—प्रसुप्तस्य विज्ञानेऽपि, निद्रावस्थाया मानसिकज्ञानविषयेऽपि इत्यर्थः, ("स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी) योगम्—विश्रब्धघातकं, विश्वासहन्तृत्वम् इत्यर्थः, पराभिसन्धानार्थमुपधि[illegible] यावत् ("योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । विश्रब्धघातके ॥" इति मेदिनी) नेच्छन्ति न इच्छन्ति—नाभिलषन्ति, करग्रहम्—करेषु—राजग्राह्यभागेषु ग्रहम्,—ग्रहणं च, पीडनम् इत्यर्थः, दण्डग्रहणमिति वा, पार्थिवत्वस्य चिह्नमित्यर्थः, न कुर्वते अथ च नाममात्रेण भुवः,—पृथिव्याः, पतयः—अधिपतयः परिपालकाश्च, भवन्ति, एतच्च—नाममात्रश्रवणेन एव कम्पमानाः सन्तः पतितं इच्छन्ति, अन्यत्र,—पार्थिवत्व महत्त्वादिकं विनाऽपि भूपतयः इति नामधारिणो भवन्तीति भावः, एतेन भाविनृपवंशस्य बलानुपत्य प्रजारञ्जकत्व प्रभावातिशयश्च सूचितम् । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

इदानीं पुष्पभूतिवंशे समुत्पद्यमानस्य हर्षनृपतेः सकलोत्कर्षेण पूर्वनृपतिभ्यः श्रेष्ठत्वमाह सकलेति ।—विपुले—महति, विशाले च अपि नृपवंशे—राजवंशे, गणाधिपस्य—गणपतेः, मुखे—वदने, अथ च —गणाः —सैन्यभेदाः, ("गणः प्रमथसङ्घौघे सङ्ख्यासैन्यप्रभेदयोः" इति मेदिनी) तेषाम् अधिपस्य—अधिपतेः, राज्ञ इत्यर्थः राजसमूहानामिति भावः, मुखे—प्रधाने इत्यर्थः, नृपवंशे इत्यस्य विशेषणत्वेन योजनीयम्, दन्त इव—रदन इव, पृथुः,—आदिराजः, तत्प्रतिमः,—तत्सदृशः, अन्यत्र—पृथ्वी—विशाला प्रतिमा—दन्तबन्धः, दन्तकोष इत्यर्थः यस्य तथाभूतः, ("प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" इति मेदिनी) एक एव—कश्चिदेव, यथा गणाधिपस्य मुखे दन्तोऽप्येक एव, तथा नरेन्द्रवंशे कश्चिदेक एव इति

(१) अथ तस्मात् पुष्पभूतेः द्विजवरस्वेच्छागृहीतकोपो नाभिपद्म इव पुण्डरीकेक्षणात्, लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकरात्, गुरुबुधकविकलाभृत्तेजस्विभूनन्दनप्रायो ग्रहगण इव उदयस्थानात्, (२) महाभारवाहनयोग्यः सागर इव

---

भाव, सकलानां महीभृतां—राज्ञां, पर्वतानाञ्च, कम्पकरः—भयप्रद इति भाव, एकत्र—नामश्रवणेनैव वेपथुजननात्, अन्यत्र—स्वस्थानादपसारणात्, उत्पद्यते—जायते। एतेन महाराजस्य हर्षस्य उत्पत्तिः सूचिता। आर्या वृत्तम्॥ २॥

(१) अथेत्यादि।—"अथ" इत्यस्य "निर्जगाम राजवंशः" इति उत्तरेण सम्बन्धः। तमेव विशिनष्टि, द्विजवरेत्यादिभिः।—द्विजवरैः—ब्राह्मणश्रेष्ठैः, अन्यत्र,—विप्रेषु वरः,—श्रेष्ठः, ब्रह्मेत्यर्थः, तेन स्वेच्छया—यथाकाममित्यर्थः, गृहीतः,—लब्धः, स्वीकृतश्च कोषः,—धनं कोशश्च, कर्णिका च इत्यर्थः यस्य तथाभूतः, पुण्डरीकेक्षणात्—कमललोचनात्, पुण्डरीकाक्षात् नारायणाच्च, नाभिपद्म इव—नाभिकमलमिव, यद्यपि "वा पंसि पद्मं नलिनम्" इत्युक्तममरेण, तथापि पद्मशब्दस्य अत्र प्रयोगस्तु भक्तविशुण्डोपद्धृष्ट एवेत्युक्तमालङ्कारिकैः। इत प्रभृति श्लेषमूलोपमालङ्कार विवेच सर्वभावेषर्यालाच्यमतिमादनादिति। लक्ष्मी,—श्रीः, पुरःसरी—प्रथमा यस्य तथाभूतः, लक्ष्मी,—नाम्नी तत्पुरःसरः। रत्नसञ्चय इव—रत्नानां—रत्नभूतानाम् उत्कृष्टानामित्यर्थः, पुत्राणामिति भावः, "जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तेः, सञ्चयः,—समूहः पुनः यस्मात् सः रत्नानां सञ्चयः यस्य तथाभूतो वा, रत्नानां—मणीनां, सञ्चयः,—समूहः। रत्नाकरात्—रत्नानाम् आकरः,—आश्रयः, उत्पत्तिस्थानञ्च तस्मात् समुद्राच्च। गुर्विति।—गुरवः,—उपदेष्टारः, बुधाः—पण्डिताः, कवयः,—काव्यकर्तारः, कलाभृतः,—गृहीतविद्याः, ["कलाभृत्" इत्यत्र "कलावत्" इति पाठेऽपि स एवार्थः] तेजस्विनः,—शूराः, भूनन्दनाः,—राजानः, अन्यत्र,—गुरुः,—बृहस्पतिः, बुधः,—सोमात्मजः, कविः,—शुक्रः, कलाभृत्—चन्द्रः, तेजस्वी—सूर्यः, भूनन्दनः,—मङ्गलः, एते प्रायेण यत्र तथाभूतः। उदयस्थानात्—उदयाचलादित्यर्थः; अन्यत्र—प्रभवस्थानादित्यर्थः।

(२) महाभारेति।—महान् भारः—गुरुभार इत्यर्थः, भूपालनरूप इति भावः, तस्य वाहनं—निर्वाहणं, तत्र योग्यः, अन्यत्र,—महती भारत्—भारवाहकः, वाहने—स्थानात् स्थानान्तरनयने, योग्यः,—समर्थः। [समुद्रपक्षे भारोत्पादनगानायकेऽपि भारशब्दे राजपक्षे गुरुत्वभारस्य न तथाऽर्थता इति "वाहन—"

निधिः, (५) विग्रहव्यासदिङ्मुखा गिरय इव भूभृत्प्रवरात्, (६) धरणिधारणक्षमा दिग्गजा इव ब्रह्मकरात्, उदधीन् पातुम् उद्यता जलधरा इव घनागमात्, (७) इच्छाफलदायिनः कल्पतरव इव नन्दनात्, (८) सर्वभूताश्रया विश्वरूपप्रकारा इव श्रीधरात् अजायन्त राजानः।

---

सुखात अन्धकारपूतवचस इति भावः, सत्ययुगप्रारम्भाय। प्रतापेति।—प्रतापेन—कोष-दण्डजया, ("स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः) तेजसा च, आतपेनेत्यर्थः, आक्रान्तम्—अधिष्ठितम्, भुवनं यैः तथोक्ताः। तेजोनिधेः,—प्रतापशालिनः सूर्यादिव।

(५) विग्रहेति।—विग्रहैः—रणैः, कायैश्च, ("विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी) व्याप्तानि दिङ्मुखानि यैः तथोक्ताः। भूभृत्प्रवरात्—भूभृत्सु—राजसु पर्वतेषु च, प्रवरः,—श्रेष्ठः तस्मात् [निर्द्धारे षष्ठीसमासनिषेधात् सप्तमी एव व्याख्यातेति]। "भूभृत्प्रवरात्" इत्यत्र "भूभृत्प्रभवात्" इति पाठे,—भूभृत्सु—भूपालेषु, प्रभवः,—पराक्रमः यस्य, अथवा,—भूभृताम्—पर्वतानाम्, प्रभवः,—प्रथमप्रकाशस्थानं तस्मात् इत्यर्थः, ("प्रभवो जन्महेतौ स्यात् पराक्रमे। ज्ञानस्य चादिमस्थाने" इति मेदिनी) केचित्तु "भूभृत्प्रभवो ब्रह्मा" इति व्याचख्युः]।

(६) धरणीति।—धरण्याः,—पृथिव्याः, धारणे—पालने, उद्वहने च, क्षमाः,—शक्ताः। ब्रह्मकरात्—ब्रह्म—वेदोक्तं धर्मम् इत्यर्थः, करोतीति तस्मात् विधातृहस्ताच्च, हस्तगतं कुर्वन् ब्रह्मणः करात् दिग्गजाः उत्पन्ना इति पौराणिकी वार्त्ता। उदधीन्—समुद्रान्, पातुम्—रक्षितुम्, पातुं च। घनागमात्—घनः,—सान्द्रः, दृढः इत्यर्थः, आगमः,—शास्त्रज्ञानं यस्य तथोक्तात्, मेघागमाच्च, वर्षाकालात् प्रावृषः इव।

(७) इच्छेति।—इच्छया—कामनया, अर्थिनामिति भावः, फलानि—अभिलषितानि ददति ये तीव्रमेघा तथोक्ताः, [अत्र इच्छाफलपूर्वकात् दाधातोः "सुयजोर्ङ्वनिप्"—(३।२।१०३ पा०) इत्यादिना णिनिप्रत्यये "आतो युक्—" (७।३।३३ पा०) इत्यादिना युगागमे रूपम्]। नन्दनात्—नन्दयतीति तथोक्तात्, तदाख्योद्यानाच्च।

(८) सर्वेति।—सर्वेषां भूतानाम्—प्राणिनां, जीवानाञ्च, पञ्चानां क्षित्यादिमहाभूतानां वा, आश्रयाः,—आधारभूताः, यद्वा,—सर्वेषु—समस्तेषु द्रव्येषु

(१२) प्रभाकरवर्द्धनो नाम राजाधिराजः। (१३) यो राज्याङ्गसङ्गीनि अभिषिच्यमान एव मलानीव मुमोच धनानि। यः परकीयेणापि कातरवल्लभेन रणमुखे तृणेनेव धृतेन अलज्जत जीवितेन। यः (१४) करधृतधौतासिप्रतिबिम्बितेन आत्मनाऽपि अदूयत समितिषु सहायेन। रिपूणां पुरः (१५) प्रधनेषु धनुषाऽपि नमता यो मानी मानसेन अखिद्यत। यस्य

विख्यातान्यनामधेय, यद्वा,—प्रथित इति अपरः,—प्रभाकरवर्द्धनादितरः, नाम—समाख्या यस्य तथाभूतः।

(१२) प्रभेति।—प्रभाकरः,—सूर्य्यः, तद्वत् वर्द्धते इति तथोक्तः, यद्वा,—प्रभाकरश्चासौ वर्द्धनश्च इति विग्रहः, यस्य प्रभावशालित्वात्।

(१३) राज्याङ्गसङ्गीनि—राज्याङ्गानि—अमात्याद्याः प्रकृतयः, तत्सङ्गीनि—सम्बद्धानि। अभिषिच्यमानः,—राज्ये प्रतिष्ठाप्यमानः, अथच,—अभितः—सर्व्वतः, सिच्यमानः,—प्रोक्ष्यमाणः, जलैरिति भावः, [अत्र "उपसर्गात्—" (८।३।६५ पा०) इत्यादिना षत्वम्] यस्य सर्व्वतोभावेन जलसिक्तो भवति, स अङ्गसङ्गीनि मलानि मुञ्चतीति लोकप्रसिद्धम्। मलानीव—दूषितानीव क्लेदानिव च, धनानि मुमोच—तत्याज, दीनानाथादिभ्यो दत्तवानित्यर्थः, अत्र मलैः सह धनानामवैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः। परकीयेणापि—परार्थप्रदत्तेनापि इत्यर्थः, कातरेषु, जनेषु इति शेषः, कातराणां—दुर्बलानां जनानां वा वल्लभेन—प्रियेण, त्रातुमसमर्थेनेति भावः, तृणेनेव—अतितुच्छेनेति भावः। कातरा अपि मुखे तृणानि धरन्ति इति प्रसिद्धिः। अलज्जत—अत्रपत नित्य परोपकाराय जीवनमुत्सृजन्नपि स नाहमेतावता कालेनापि कस्याप्यार्त्तस्य रक्षणाय जीवनमिदं व्ययाय मया उत्सृष्टं अकुर्यामिति मत्वा किं मया जगति कृतमिति कुण्ठितोऽभूदित्यर्थः।

(१४) करेति।—करे—करतले, धृतः,—गृहीतः, धौतः,—निर्मितः, उज्ज्वलो वा, अत्र धौतपदप्रयोगेण प्रतिबिम्बग्रहणसामर्थ्यं प्रतिपादितमिति बोध्यम्, यः असिः,—तरवारिः, तत्र प्रतिबिम्बितेन—प्रतिफलितेन। अदूयत—उपतप्तवान्। समितिषु—युद्धेषु, ("युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्। समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः" इत्यमरः) सहायः,—सहचरः तेन, असहाय एव सदा जिगीषुः स इति भावः।

(१५) प्रधनेषु—युद्धेषु। नमता—ज्यारोपणार्थमिति भावः। मानी—अभि-

(१६) अन्तर्गतापरिमितरिपुशल्यशङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीम्। यश्च सर्वासु दिक्षु (१७) समीकृततटावटविटपाटवीतरुतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपयोगाय व्यभजतेव वसुधाम्। यश्च (१८) अलब्धयुद्धदोहदः आत्मीयोऽपि सकलरिपुसमुत्सारकः परकीय इव तताप प्रतापः। यस्य च (१९) वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुत-

---

मानवान्। मानसेन—मनसा, अस्ति ननु च मया सहायत्वेन शौर्येण न संग्राम-प्रवेशेन केवलेन उपस्थितया वा अमरी जीयन्ते इति तु खिन्नेति भावः।

(१६) अन्तर्गतेति।—अन्तर्गतैः,—अभ्यन्तरस्थैः, अपरिमितैः,—अगणितैः, रिपुभिः—शत्रुभिः, रिपुभिश्चिह्नैरिति भावः, शल्यशङ्कुभिः,—बाणादिकशकीलैः, कीलिता—निखाता, संयमिता इत्यर्थः तामिव इत्युत्प्रेक्षा। निश्चलाम्—अनपायिनीम्।

(१७) समीकृतेति।—समीकृतानि—समतलतां नीतानि तटाः,—नदीतीराणि अवटाः,—गर्त्ताः ("गर्त्तावटौ भुवि श्वभ्रे" इत्यमरः) विटपाः—शाखाः, अटव्यः—विपिनानि, तरवः,—वृक्षाः, तृणानि गुल्माः,—स्तम्बाः, काण्डविरहित वृक्षा इत्यर्थः, ("अप्रकाण्डे स्तम्ब गुल्मौ" इत्यमरः) वल्मीकाः,—वामलूराः, "उयी" इति प्रसिद्धकीटविशेषसञ्चिता मृत्कूटा इत्यर्थः, गिरिगहनानि—पार्वतीयवनानि, यद्वा,—गिरयः,—पर्वताः, गहनानि—गह्वराणि पर्वतकन्दराणीत्यर्थः येषु ते, ("गहनं कलिले विषु। व्यसके गह्वरे स्यात् दुःखकाननयोरपि" इति मेदिनी) यद्वा,—समीकृता तटावटा यैः तादृशा ये विटपाऽटवीतरवः, तथा तृणगुल्मवल्मीकगिरयश्च तैः गहनैः,—दुर्गैः, दुष्प्रवेशैरित्यर्थः, दण्डयात्रापथैः,—दण्डः,—सैन्यः, ("सैन्ये काले मानभेदे दण्डोऽस्त्री लगुडे पुमान्" इति मेदिनी) तस्य यात्रापथैः,—गमनमार्गैः, युद्धप्रयाणमार्गैरित्यर्थः। पृथुभिः,—महद्भिः, प्रशस्तैरित्यर्थः। भृत्योपयोगाय—भृत्यानाम्—अनुजीविनाम्, उपयोगाय—व्यवहाराय, सुखेन गमनायेति भावः। व्यभजत—विभक्तवानित्यर्थः।

(१८) अलब्धेति।—न लब्धः,—प्राप्तः, युद्धदोहदः,—युद्धाभिलाषः येन तम्, अलब्धयुद्धाभिलाषमित्यर्थः। सकलेति।—सकलानाम्—समस्तानाम्, रिपूणाम्—शत्रूणाम्, समुत्सारकः,—निवारकः। परकीय इव—परसम्बन्धः इव, परकीयः प्रतापो यथा विजिगीषुं तपति तथा स्वप्रतापोऽपि सद्यःयुद्धव्यापाराप्राप्तेरिति भावः।

(१९) वह्निमयः,—अग्निरूपः, तेजोभूतमयः, [ अत्र "तत्प्रकृतवचने मयट्"

मयो निश्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमय शून्यतायां, पञ्च-महाभूतमयो मूर्त्त इव अदृश्यत (२०) निहतप्रतिसामन्तान्त-पुरेषु प्रताप । (२१) यस्य च आसन्नेषु भृत्यरत्नेषु प्रतिविम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मी , तथा च, यस्य (२२) प्रतापाग्निना भूति , शौर्योष्मणा सिद्धि , असिधाराजलेन

---

(५।४।२१ पा० ) इति प्राचुर्यार्थे मयट् एव जन्ममयादिषु ज्ञेयम् ] हृदयेषु—अन्त करणेषु सततप्रियावियोगानलोद्दीपकत्वेनानलमयत्वादिति भाव । अनलमय —वह्निमय इत्यर्थ । भूतमयश्च शोकातिशयादश्रुजलनेत्राम्बुपातादिति भाव । मारुतमय —उष्णदीर्घनिश्वासपवनरूप महाभूतमयश्च दुःखातिशयादविरतोच्छ्वासवायुसञ्चारादिति भाव । क्षमामय —शान्तिपूर्ण क्षितिभूतमयश्च विपक्षाणामपकारेष्वप्यसौ न पीडनीय इति शीलनाविनाशित्वादिति भाव , यद्वा—क्षमामय —भूमिस्वरूप भूलीठनादिना धूलिपूर्णत्वात् काठिन्याच्च । आकाशमय —गगनरूप, व्योमभूतमयश्च शून्यतायां—विरहितायामिति यावत् निष्प्रज्ञत्वात् वा चित्तस्य विच्छेददादिति भाव , अत एव पञ्च महाभूतमय —क्षित्यप्तेजोमरुद्व्योमानि महान्ति भूतानि तदात्मक, तत्स्वरूप परिणत इत्यर्थ मूर्त —मूर्तिमान् यथा महाभूतानां शब्दादय गुणा केवलं परार्थैक फला तथैवास्य दयादाक्षिण्यादिगुणगणाना परोपकृतये कार्मास्विति तात्पर्यम् ।

(२०) निहतेति ।—निहतानां—संग्रामे व्यापादितानां प्रतिसामन्तानां—विरोधिसराज्यानमत्कृतिदत्ताधिपानामित्यर्थ, अन्त पुरेषु—अन्त पुरवर्तिनीषु नारीषु इत्यर्थ । अत्र एकस्यापि प्रतापस्य तत्तद्गुणयोगादनेकधोल्लेखे प्रदर्शनात् यथायोग प्रयोजका उल्लेखालङ्कार ।

(२१) आसन्नेषु—सन्निहितेषु भृत्यरत्नेषु—श्रेष्ठा रत्नानीव, यद्वा—भृत्येषु रत्नानि तेषु भृत्यश्रेष्ठेषु प्रधानभृत्यप्रधानेषु इति यावत् ( "जातौ जातौ यदुत्कृष्ट तद्रत्न-मिति कथ्यते" इति शब्दमाला ) प्रतिविम्बितेव—प्रतिफलितेव, आदर्शानि रत्नानि प्रतिविम्ब गृह्णन्ति इति दृश्यते लोके , तुल्यरूपा—समभागेन विभक्ता ।

(२२) प्रतापाग्निना—प्रतापरूपेणानलेन, भूति —सम्पत् भस्म च ( भूति-र्भस्मनि सम्पदि" इत्यमर ), शौर्योष्मणा—शौर्योष्मतत्त्व अस्थानतिपवनायः अन्य-ष [ अत्र "सर्वधातुभ्यो मनिन्" ( उ० ४ पा० १४५ सू० ) इति उषधातो मनिन् प्रत्ययान्तत्र उष्मनशब्दस्य व्युत्पत्तेय । "इषि युध—" ( उ० १ पा० १४४ सू० ) इति सूत्रे बाहुलकग्रहणात उषधातो मकप्रत्यये सिद्धस्त्वात्रिविधमित्वात ] । सिद्धि —

वंशवृद्धिः, शस्त्रव्रणमुखे पुरुषकारोक्तिः, (२३) धनुर्गुणकिणेन करग्रहीतिः अभवत्। यत्र (२४) वैरमुपायनं, विग्रहमनुग्रहं, समरागमं महोत्सवं, शत्रुं निधिदर्शनम्, अरिबाहुल्यमभ्युदयम्, आहवाह्वानं वरप्रदानम्, अवस्कन्दपातं दिष्टवृद्धिं, शस्त्रप्रहारपतनं वसुधारारसम् अमन्यत।

---

राज्यादिलाभः, प्राकट्य। असिधाराजलेन—खड्गधाराजलेनैव जलेन। वंशवृद्धि,—वंशस्य—कुलस्य वैपरीत्ये वृद्धि—अभ्युदय, वर्द्धनम्। शस्त्रेति।—शस्त्राणां व्रणानि—क्षतानि एव, यद्वा—शस्त्रव्रणानां—शस्त्रप्रहारैः जातानां क्षतानां मुखानि—अग्राणि आननानि च तैः, पुरुषकारोक्तिः,—पौरुषप्रकटनमित्यर्थः, मुखैरेव प्रतिभातीति समासोऽपि।

(२३) धनुरिति।—धनुषो गुणः,—मौर्वी, तस्य किणः,—मांसग्रन्थिः, व्रणजं चिह्नमित्यर्थः, व्यायामहस्ततापकायी वा येन। करग्रहीति—राजग्राह्यभागप्रदर्थ, करस्य—हस्तस्य ग्रहणं च। [अत्र सम्बन्ध तृतीयान्तेषु "सहयुक्ते—" (२।३।१९ पा०) इत्यादिसूत्रे "विनाऽपि तद्योगं तृतीया, वृद्धो यूनेत्यादिवाक्यनिर्देशात्" इति वृत्त्या अतद्योगेऽपि सहार्थे तृतीया]।

(२४) वैरमित्यादि।—वैरं—विरोधः, शत्रुणा सह अनिष्टाचरणमित्यर्थः, उपायनम्—उपढौकनं सम्प्रतिसाधनं प्रीत्यातिशय्यादिति भावः। विग्रहं—युद्धं शत्रुभिः क्रियमाणमिति शेषः, अनुग्रहम्—अनुकम्पां तत्रातीव अनुरागादिति भावः। समरागमं—सङ्ग्रामोपस्थितिं, महोत्सवं बलपरीक्षणादिभिः आनन्दवर्द्धनत्वादिति भावः। निधिदर्शनं—निधेः,—महामूल्यवस्तु [अत्र निपूर्वस्य धाधातोः "उपसर्गे—" (३।३।९२ पा०) इति किप्रत्यये निपातनाद्रूपम्] दर्शनम्, यद्वा,—निधेरिव दर्शनं यस्य तथाभूतम्, युद्धकण्डूविनोदनोपायत्वादिति भावः। अरिबाहुल्यं—शत्रुबाहुल्यम्, अभ्युदयम्—उन्नतिजननमित्यर्थः, तन्निधने प्रतापविस्तारात् राज्यविस्ताराच्चेति भावः। आहवाह्वानं—युद्धे आकारणं, वरप्रदानम्—अभीष्टदानम्; चिरकालमभिलषितत्वादिति भावः। अवस्कन्दपातं—शत्रुणामभिगमोऽवस्कन्दः, [अत्र अवपूर्व्वकात् स्कन्दधातोः "अकर्त्तरि—" (३।३।१९ पा०) इत्यादिना अधिकरणे घञि रूपम्] तस्य पातः,—उपस्थितिं तं, दिष्टवृद्धिं—भाग्यवर्द्धनम्, आनन्दवर्द्धनं वा। शस्त्रप्रहारैः प्राप्तेरिति शेषः, पतनं—धरातले लुण्ठनमित्यर्थः, वसुधारारसं—वसुधा—पृथ्वी, तस्याः रा,—दानं, [रा दाने इत्यस्मात् क्विपि रूपम्] तस्य रसः,—रागः, स्वादो वा तम्, यथा भूमिदः स्वर्गे

(२५) यस्मिंश्च राजनि निरन्तरयूपनिकरैरङ्कुरितमिव कृतयुगेन, दिङ्मुखविसर्पिभिः अध्वरधूमैः पलायितमिव कलिना, ससुधैः सुरालयैः अवतीर्णमिव स्वर्गेण, (२६) सुरालयशिखरोद्धूयमानैः धवलध्वजैः पल्लवितमिव धर्मेण, (२७) बहिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतमिव ग्रामैः, काञ्चनमयसर्वोप-

---

गच्छेत, तथा वसुधामि अश्वप्रहारप्रतिघोऽपीति भावः, यद्वा,—यस्यान्तवसुधाराकर्षेषि हृदयपतनादसाधारणानन्दरसमित्याशयः ।

(२५) यस्मिंश्च राजनि सतीत्यर्थः [अत "यस्य च—" (२।३।३७ पा०) इत्यादिना भावे सप्तमी ज्ञेया] निरन्तरैः,—अविच्छिन्नैः, यूपनिकरैः—यूपाः—यज्ञीयपशुबन्धनदारुविशेषाः, तेषां निकराः,—समूहाः तैः, अङ्कुरितमिव—प्ररोहवदुद्भूतमिव इति क्रियोत्प्रेक्षा । कृतयुगेन—सत्ययुगेन । दिङ्मुखविसर्पिभिः,—दिगन्तरालविसृमरैः अध्वरधूमैः,—यज्ञधूमैः, पलायितमिव, सभाच्छन्नदृष्टत्वेनेति भावः कलिना—चतुर्थयुगेन, कलेः पापरूपत्वात् पापस्य च कृष्णवर्णतया कविसमय-प्रसिद्धत्वात् धूमैस्तुल्यत्वेन प्रेक्षा स्फुटीकृता । ससुधैः—सुधा—चुनक चूर्णद्रव्य, तेन सहित, सुरालयैः,—देवमन्दिरैः ।

(२६) सुरेति ।—सुरालयानां—देवागाराणां शिखरेषु—चूडासु शीर्षदेशेषु इत्यर्थः, उद्धूयमानाः—उड्डीयमानाः तैः, धवलध्वजैः,—श्वेतपताकाभिः, पल्लवित-मिव—समन्तात् प्रसृतमिव, धर्मस्य शुभ्रतया कविसमयप्रसिद्धत्वात् तथाविधोत्प्रेक्षा-बीजमेतत् ।

(२७) बहिरिति ।—बहिः,—ग्रामे देशे, उपरचितानि—निर्मितानि, विकटानि—ह्रस्वानि, विशालानीत्यर्थः, सभानां—संसदां, ("समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥" इत्यमरः) सत्राणां—सदादानानां, ("सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः) प्रपाणां—पानीयशालिकानां, जलदानार्थगृहाणामित्यर्थः, ("प्रपा पानीयशालिका" इत्यमरः) प्राग्वंशानां—प्राक्—पूर्वभागे वंशः,—सपत्नीकयजमानसमुदायः यत्र तेषां, यस्मिन् गृहे हविर्द्रव्यादिकं निहितं स्थाप्यते तस्मात् पूर्वं सावरोधयजमानसद्व्यापस्थानानामित्यर्थः, ("प्राग्वंशः प्राग्घविर्गेहात्" इत्यमरः) मण्डपानि—गृहाणि तैः, प्रसूतमिव—उत्पन्नमिव, सृष्ट-मित्यर्थः, ग्रामैः, बहुभिः गृहैः अपरः ग्राम इव दृश्यमान आसीदिति भावः ।

(३१) महाभूभृत्कुलोद्गता गङ्गेव वाहिनीनायकस्य, (३२) मानसानुवर्त्तनचतुरा हंसीव राजहंसस्य, (३३) सकललोकार्चितचरणा त्रयीव धर्म्मस्य, (३४) दिवानिशम् अमुक्तपार्श्वस्थितिः अरुन्धतीव महामुनेः, (३५) हंसमयीव गतिषु, परपुष्टमयीव

सर्वासां प्रजानां जननी—उत्पादनी, [ जनधातो "अर्त्तिसृ—" (उ० २ पा० १०३ सू० ) इत्यादिसूत्रे बाहुलकग्रहणात् अनिप्रत्यये ततो ङीपि रूपम ] माता च, "राजभार्य्या प्रसू पृथ्वी गुरुदारोपमातृका। स्वसृ पूर्व्वजपत्नी च सप्तैता मातरः स्मृता।" इत्युक्ते। प्रजापतेः,—ब्रह्मणः, प्रजापालस्य च।

(३१) महेति।—महत्—विशालम्, भूभृता—राज्ञा, कुल—वंश, महाभूभृतः,—हिमाद्रेः, कुल—तनु इति च, ( "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम" इति मेदिनी ) तस्मात् उद्गता—जाता, निर्गता च, [ अत्र "निरादय क्रान्ताद्यर्थे पञ्चम्या" (वा०) इति समास ]। वाहिनीनायकस्य—सेनापतेः, तरङ्गिणीपतेः समुद्रस्य च ( "वाहिनी स्यात्तरङ्गिण्यां सेना सैन्यप्रभेदयो" इति मेदिनी )।

(३२) मानसेति।—मानसस्य—चित्तस्य, तदाख्यस्य सरसश्च, अनुवर्त्तनम्—अनुसरणम्, तस्मिन् चतुरा—निपुणा। राजहंसस्य—कादम्बस्य, नृपोत्तमस्य च, ( "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी )।

(३३) सकलेति।—सकलैः,—समस्तैः, लोकैः,—जनैः, अर्च्चितौ—सेवितौ, चरणौ—पादौ, अर्च्चिता चरणाः,—बह्वृचादिशाखाश्च यस्याः सा, ( "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च" इति मेदिनी ) त्रयी—ऋग्यजुःसामाख्या वेदा इत्यर्थः, [ अत्र "सङ्ख्याया—" (५।२।४२ पा०) इत्यादिना विहितस्य तयप "द्वित्रिभ्यां—" (५।२।४३ पा०) इत्यादिना अयजादेशे स्थानिवद्भावात् "टिड्ढाणञ—" (४।१।१५ पा०) इत्यादिना ङीपि रूपम्। "स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमरः ]। धर्म्मस्य—विहितक्रियाकलापस्य, तज्जनिताऽदृष्टस्य वा, धर्म्मोऽस्यास्तीति धर्म्म तस्य, [ अर्श आदित्वादच्प्रत्ययः ] धर्म्मवत इत्यर्थः।

(३४) दिवानिशम्—अहोरात्रम्। [ अत्र "विप्रतिषिद्धञ्च—" (२।४।१३ पा०) इत्यादिना समाहारद्वन्द्व ]। अमुक्तेति।—अमुक्ता—न त्यक्ता, पार्श्वे स्थितिर्यया सा, सततपार्श्वचारिणीत्यर्थः। महामुनेः,—वसिष्ठस्य, राजर्षेश्च। अत्र "सती पार्व्वतीव शङ्करस्य" इत्यादिषु सर्व्वत्र श्लिष्टे पदे अनेकार्थप्रत्यायनात् श्लेषसङ्कीर्णोपमाऽलङ्कारः।

(३५) हंसमयीव—हंसरूपिणीव, मृदुमन्दगमनादिति भावः। परपुष्टमयीव

आलापेषु, चक्रवाकमयीव पतिप्रेक्षिषु, प्राहणमयीव पयोधरोन्नतौ, मदिरामयीव विलासेषु, निधिमयीव अर्थसञ्चयेषु, वसुधारामयीव प्रसादेषु, कमलमयीव कोषसङ्ग्रहेषु, (३६) कुसुममयीव फलदानेषु, सन्ध्यामयीव वन्द्यत्वे, (३७) चन्द्रमयीव निरुष्मत्वे, दर्पणमयीव प्रतिप्राणिग्रहणेषु, सामुद्रमयीव परचित्तज्ञानेषु, परमात्ममयीव व्याप्तिषु, स्मृतिमयीव पुण्यप्रवृत्तिषु,

—कोकिलरूपिणीव, मधुरस्वरत्वादिति भाव। पतिप्रेक्षिषु—भर्तृप्रेक्षायां विरहकालव्यतीतिप्रदादिति भाव। प्राहणमयीव—वर्षामयीव, पयोधरोन्नतौ—स्तनोन्नतौ, मेघोन्नतौ च। ("पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरु मेघयो" इति मेदिनी)। विलासेषु—विभ्रमचेष्टितेषु। अर्थसञ्चयेषु—अर्थाना—धनाना, सञ्चय,—सङ्ग्रह तेषु निधिमयीव—निधि,—गुप्त धन, तन्मयीव, धनसञ्चयकारिणी इति भाव। वसुधारामयीव—वसूना—धनाना, धारा—वर्षण, तन्मयीव, प्रसादेषु—अनुग्रहेषु, दयासु इत्यर्थ, एतादृशी दयावती यत सतत वसूनि अनुजीविभ्योऽर्थिभ्यश्च वितरतीति भाव। कमलमयीव—पद्मरूपिणीव, कोषसङ्ग्रहेषु—धनभाण्डागाररक्षणेषु इत्यर्थ, कर्णिकासम्पूरणेषु च, बीजकोषग्रहणेषु इत्यर्थ।

(३६) कुसुममयीव—पुष्परूपिणीव, फलदानेषु—सतत्य कर्मण पुरस्कारादिदानेषु इत्यादीना सस्यादिवितरणेषु वा इति भाव, पुष्पानन्तरमेव फलसम्पत्तेर् इत्याशय। सन्ध्यामयीव—सन्ध्यारूपिणीव, वन्द्यत्वे—पूज्यत्वे, सन्ध्या यथा लोकै पूज्यते, तथाऽसौ पूज्यते इति भाव।

(३७) चन्द्रमयीव—चन्द्ररूपिणीव, निरुष्मत्वे—अनुष्णत्वे, शान्तत्वे इत्यर्थ, अपरतापित्वे च शीतलप्रकृतित्वादिति भाव। दर्पणमयीव—आदर्शरूपिणीव, प्रतिप्राणिग्रहणेषु—प्राणिन प्राणिन प्रति इति प्रतिप्राणि, तत ग्रहणम—आवर्जन, सर्वलोकवशीकरणम इत्यर्थ, सर्वजनप्रतिबिम्बधारणञ्च च तेषु। सामुद्रमयीव—सामुद्र—परचित्तज्ञानसाधन समुद्रकृत शास्त्र, येन अन्यस्य चित्तवृत्ति ज्ञायते, तन्मयीव तद्रूपिणीव, परचित्तज्ञानेषु—परेषा चित्तस्य—मनस, ज्ञानेषु—बोधेषु, सर्वज्ञाननिपुण एव आश्रिताना परेषा मनोऽभिमतकार्यसमाचरणादिति भाव। परमात्ममयीव परमेश्वररूपिणीव व्याप्तिषु—व्यापनभावेषु, सर्वत्र कार्येषु अप्रतिघातात्, सर्वलोकान्तर्यामित्वाच्च। स्मृतिमयीव—धर्मशास्त्ररूपिणीव, पुण्यप्रवृत्तिषु

मधुमयीव सम्भाषणेषु, अमृतमयीव तृष्यत्सु, तृप्तिमयीव भृत्येषु, निर्वृतिमयीव सखीषु, चेतनमयीव गुरुषु, गीतवृत्तिरिव विलासानां, प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्य, आज्ञासिद्धिरिव मकरध्वजस्य, (३८) व्युत्थानवृद्धिरिव रूपस्य, दिष्टवृद्धिरिव रतेः, मनोरथसिद्धिरिव रामणीयकस्य, दैवसम्पत्तिरिव लावण्यस्य, वंशोत्पत्तिरिवानुरागस्य, वरप्राप्तिरिव कान्तेः, सर्गसमाप्तिरिव सौन्दर्यस्य, आयतिरिव यौवनस्य, अनभ्रवृष्टिरिव वैदग्ध्यस्य, अयत्नप्रसृष्टिरिव लक्ष्म्याः, धर्मपुष्टिरिव चारित्रस्य, हृदय-

---

—पुण्यकर्मानुष्ठानेषु, पुण्यानि कर्माणि न विरमयन्ते बहुशस्ततयाऽपीति भावः। मधुमयीव सम्भाषणेषु—सम्लापेषु, मधुरभाषित्वात् इति भावः। अमृतमयीव—सुधामयीव, जलमयीव च, तृष्यत्सु—सतीव अच्छत्सु सर्वथा तृप्तिसम्पादने पाटवादिति भावः। [ "तृष्यत्सु" इत्यत्र "तृष्यत्सु" इति पाठे,—तृषामनुभवत्सु पिपासुषु इत्यर्थ ]। तृप्तिमयीव—सन्तोषरूपिणीव भृत्येभ्यो याञ्चाऽतिरिक्तप्रदत्वादिति भावः। निर्वृतिमयीव—सुखमयीव सखीषु—वयस्यासु, तासां सततसुखविधानादिति भावः। चेतनमयीव चेतनरूपिणीव, निरन्तरनमनादिति भावः। अत्र सर्वत्र सप्तम्यन्तेषु "यस्य च भावेन भावलक्षणम्" (२।३।३७ पा०) इति विषयाधिकरणे सप्तमी ] गीतवृत्तिरिव—वंशी प्रवृत्तिरिव विलासानां—विभ्रमचेष्टितानां विभ्रमातिशयविस्तारादिति भावः। प्रायश्चित्तशुद्धि—प्रायश्चित्तेन—चान्द्रायणादितपसा शुद्धिः,—पूतत्वम्, स्त्रीत्वं हि पापमयं चापल्यादिदोषदूषितत्वात् तत्तु अनया निजगुणैः अन्यथाकृत्य पावितम् उज्ज्वलितं वा इति भावः। मकरध्वजस्य—कामस्य आज्ञासिद्धिः—अस्याः तथा कमनीयत्वं यथा एतद्दर्शने कस्यापि कामावेशो न शाम्यतीति कामस्य अव्याहताज्ञत्वमिति भावः।

(३८) व्युत्थानवृद्धिरिव—विशेषेण उत्थाने—अभ्युदये, वृद्धिरिव—प्रवृद्धिरिव। दिष्टवृद्धिरिव—भाग्योदय इव। रामणीयकस्य—रमणीयत्वस्य. [ अत्र रमणीयशब्दात् "योपधात्—" (५।१।१३२ पा०) इत्यादिना वुञि रूपम् ]। सर्गसमाप्तिरिव—सृष्टिशेष इव, नान्यदित सौन्दर्यमिति भावः। आयतिरिव—आभोग इव परिपूर्णतेत्यर्थः। अनभ्रवृष्टिरिव—विना मेघं वर्षणमिव आश्चर्यत्वात् इति भावः, वैदग्ध्यस्य—निपुणतायाः, यथा अनभ्रवृष्टिः विस्मयोत्पादिका, तथा अस्या वैदग्ध्यमपि आश्चर्य-

तुष्टिरिव धर्म्मस्य, सौभाग्यपरमाणुसृष्टिरिव प्रजापतेः, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, आभिजात्यस्यापि अभिजातिरिव, संयमस्यापि संयतिरिव, धैर्य्यस्यापि धृतिरिव, विभ्रमस्यापि विभ्रान्तिरिव, यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्म्मस्य सुखस्य च भूमिरभूत्, या अस्य वक्षसि नरकजितो लक्ष्मीरिव ललास ।

निसर्गत एव च स (३८) नृपतिः आदित्यभक्तो बभूव । प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पट-प्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानु-लिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्य्यानुरक्तेन रक्तकमलषण्डेन अर्घ्यं ददौ ; अजपच्च जप्यं

जननमिति भावः । अयशःप्रसृष्टिः,—अयशसः,—अकीर्त्तेः, अपवादजनितस्येति भावः, प्रसृष्टिः,—प्रमार्ज्जनम्, अयशःप्रमार्जनसमर्थं सा इव, अपवादविनाशिनी सच्चरित्रेयमिति भावः । यशःपुष्टिरिव—यशसः—कीर्त्तेः, पुष्टिः,—पोषणं सैव, चरित्रसुचरितत्वादिति भावः । अभिजातस्य—कौलीन्यस्य, अभिजातिः,—सत्कुलजातत्वं सैव । महादेवी—कृताभिषेका प्रधाना महिषी । भूमिः,—आश्रयम् । नरकजितः,—नरकासुरजेतुः, नारायणस्य इत्यर्थः, नरकं—निरयं, जितवानिति तथाभूतस्य च ।

(३८) निसर्गतः,—स्वभावतः, आदित्यस्य भक्तः आदित्यभक्तः,—सूर्य्यपरायणः इत्यर्थः, सूर्य्योपासक इति यावत्, [ अदितिशब्दादपत्यार्थे "दित्यदित्या—" (४।१।८५ पा०) इत्यादिना ण्यप्रत्यये रूपम् ] प्रकृतिस्वानुकूलभजने इति तेजस्विनः तेजस्विसमाराधनसमुचितम् । दिनकृतः,—सूर्य्यस्य । सितदुकूलधारी—परिहितशुभ्रपट्टवसनः । धवलेति ।—धवलेन—शुभ्रेन, कर्पटेन—वसनेन, प्रावृतम्—आच्छादितं, शिरो यस्य तथाभूतः, श्वेतोष्णीषधारीत्यर्थः । कुङ्कुमेति ।—कुङ्कुमस्य पङ्केन—घनद्रवेण, घृष्टकुङ्कुमेनेत्यर्थः, अनुलिप्ते—प्रदिग्धे, रञ्जितमिति यावत् तस्मिन् । मण्डलके—मण्डलाकारे चतुरादिरूपेणाङ्किते स्थाने सूर्य्योपासनाविधिविहिते इति भावः । पवित्रेति ।—पवित्रा—विशुद्धा, पद्मरागस्य पात्री—पद्मरागमणिनिर्म्मितं भाजनं, [ अत्र पाधातो "दाद्दिभ्यष्ट्रन्" (उ० ४ पा० १६८) इति ष्ट्रनप्रत्यये "वनो र च" (४।१।७ पा०) इति ङीपि रूपम् ] तस्याः निहितं—रचितं तेन । स्वहृदयेनेव—स्वस्य—आत्मनः, हृदयेनेव—मानसेनेव,

सुचरितः प्रत्युषसि मध्यन्दिने दिनान्ते च अपत्यहेतोः प्राध्वं प्रयतेन मनसा जप्यपूको मन्त्रमादित्यहृदयम् ।

( ४० ) भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि ; यतः स राजा कदाचित् ग्रीष्मसमये यदृच्छया सितकरकरसितसुधाधवलस्य हर्म्यस्य पृष्ठे सुष्वाप ; पार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये । ( ४१ ) परिणत-

---

भक्तिप्रयोगेण इति भावः । सूर्यांशुरक्तेन—आदित्यानुरागिणा । रक्तकमलखण्डेन—रक्तोत्पलनिचयेन, ( "पद्मादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः ) अर्घा—पूजाम् । जप्य—जपनीयम् । सुचरितः—सुशीलः, प्रभाकरवर्द्धन इति भावः । प्रत्युषसि—प्रभाते । मध्यन्दिने—मध्याह्ने । दिनान्ते—सायकाले । अपत्यहेतोः,—पुत्रार्थम् । प्राध्वं—प्रयतः सन्, [ अव्ययमेतत् । "प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने" इति मेदिनी ] । प्रयतेन—पवित्रेण । जप्यपूकः,—पुनःपुनर्जपपरायणः । [ "यजजपदशां यङः" ( ३।२।१६६ पा० ) इति ऊकप्रत्यये रूपम् ] । मन्त्रम्—"अर्कन्तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत्" इत्यादि न्यासपूर्वकम् "आदित्यो मन्मथपुत्र आदित्यो भुवनेश्वर । आदित्यात्परतरो देव आदित्य परमेश्वर ॥" इत्यादि भविष्यपुराणोक्तम्, आदित्यहृदयम्—आदित्यस्य—सूर्यस्य, हृत—चित्तम् अयते—गच्छति इति आदित्यहृदयं —सूर्यचित्तप्रियमित्यर्थः, आदित्यप्रीतिकरमिति यावत् ।

( ४० ) भक्तेति ।—भक्तजनाः—तदेकासक्तानां सेवकानामित्यर्थः, अनुरोधस्य—निर्बन्धस्य, विधेयानि—वश्यानि, भक्तजनाभिलाषमनुरुध्य देवप्रसादः इति भावः । यदृच्छया—स्वेच्छया, [ यत् या इच्छा इति विग्रहे "मयूरव्यंसकादयश्च" ( २।१।७२ पा० ) इति निपातनात् समासः ] सितेति ।—सितकरः,—चन्द्रः, तस्य कराः,—किरणाः, तद्वत् सिताभिः —शुभ्राभिः सुधाभिः,—चूर्णप्रलेपैरिति यावत् धवलः—शुभ्रस्य , यद्वा,—सितकरकरसितोऽसौ सुधाधवलश्च तथाभूतस्य विशदचन्द्रप्रभोद्भासितस्य सुधाधवलस्य च इति भावः । हर्म्यस्य—प्रासादस्य इति यावत्, ( "हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्" इत्यमरवचनात् ) । पृष्ठे—उपरिभागे । सुष्वाप—निदद्रौ । द्वितीयशयने—अपरशय्यायाम् । "द्वितीयशयने" इत्यनेनास्य धर्मित्वं प्रकटीकृतम्, "नाश्नीयात् भार्यया साकं न च सुप्यात् तया समम्" इति स्मरणात् । शिश्ये —शयितवती ।

( ४१ ) "परिणत—" इत्यादि "देवी यशोवती ·· ·चदतिष्ठत्" इत्युत्तरं

प्रायायान्तु श्यामायाम्, आसन्नप्रभातवेलाविलुप्यमानलावण्ये लिलम्बिषमाणे सीदत्तेजसि तारकेश्वरे, (४२) कराग्रस्पृष्टकुमुदिनीप्रमोदजन्मनि शशधरस्वेदे इव गलति अतिशीतले अवश्यायपयसि, (४३) मधुमदमत्तप्रसुप्तसीमन्तिनीनिश्वासहृतेषु सङ्क्रान्तमदेष्विव घूर्णमानेषु अन्तःपुरप्रदीपेषु, (४४) राजनि च विमलनखप्रतिबिम्बिताभिः संवाह्यमानचरणे इव तारकाभिः, विस्रब्धप्रसारितैः दिगङ्गनानामिवार्पितैरङ्गैर्मधुसुगन्धिभिः स्वहस्तकमलतामहस्तवातैरिव श्वसितैर्मुखश्रिया

---

भावः। अत्र "यशोऽनूर्ध्वकर्माणि" (१।३।२७ पा०) इति अनूर्ध्वकत्वात्, शयनात् उत्थानरूपार्थे आत्मनेपदप्राप्तिः] परिणतप्रायायां—प्रायेणावसितायां, श्यामायां—निशायाम्। ("श्यामा यामवती निशा" इत्यमरः)। आसन्नेति।—आसन्नया—आपतन्त्या, प्रभातवेलया—प्रत्यूषसमयेन, विलुप्यमानं—क्षीयमाणं, लावण्यं—कान्तिर्यस्य तथाभूते। लिलम्बिषमाणे—अवलम्बितुमिच्छति, अस्तं जिगमिषति इति यावत्, पश्चिमायां दिशीति शेषः। सीदत्तेजसि—क्षीयमाणरश्मौ। तारकेश्वरे—ताराराशि, चन्द्रमसि इत्यर्थः।

(४२) करेति।—कराग्रे—किरणाग्रे, हस्ताग्रे च, स्पृष्टायां—कृतस्पर्शायां, धृतायां च, कुमुदिन्यां—कैरविण्यां, यः प्रमोदः—चन्द्रोदयजनितप्रीतिः, तस्मात् जन्म—उत्पत्तिर्यस्य तथोक्ते। शशधरस्वेदे इव—चन्द्रघर्मे इवेत्युत्प्रेक्षा, गलति—पतति, क्षरतीत्यर्थः। अवश्यायपयसि—तुषारजले, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः)।

(४३) मधिवति।—मधुमदेन—मद्यपानजनितचित्तविकारेण, मत्तानां—क्षीबाणां, प्रसुप्तानां—निद्रितानां, सीमन्तिनीनां—नारीणां, निश्वासैः हृताः—समाश्लिष्टाः तेषु अत एव सङ्क्रान्तमदेष्विव—प्राप्तमद्यपानजनितावस्थाविशेषेष्विवेत्युत्प्रेक्षा, मत्तानां प्रमदानां निश्वाससङ्गादिति भावः। घूर्णमानेषु—भ्राम्यमाणेषु।

(४४) राजनि—नरेन्द्रे। विमलेति।—विमलेषु—निर्मलेषु, स्वच्छेषु इत्यर्थः, नखेषु पादयोरिति भावः, प्रतिबिम्बिताः—प्रतिफलिताः ताभिः। तारकाभिः—नक्षत्रैः। संवाह्यमानेति।—संवाह्यमानौ—मर्द्यमानौ, संमृज्यमानौ इत्यर्थः, चरणौ यस्य तथाभूते इवेत्युत्प्रेक्षा। विस्रब्धेति।—विस्रब्धं—विश्रब्धं यथा तथा, प्रसारितानि—विस्तारितानि तैः, अङ्गैः—अवयवैः, [अत्र "वचय—" (१।४।८० पा०) इत्या-

वीज्यमाने, विमलकपोलस्थलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहलग्नितेन प्रतिमाशशिबिम्बेन विराजिते, स्वपति देवी यशोवती सहसैव,—"आर्य्यपुत्र! परित्रायस्व परित्रायस्व" इति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनम् उत्कम्पमानाङ्गयष्टिः उदतिष्ठत्।

अथ तेन सर्व्वस्यामपि पृथिव्याम् (४५) अश्रुतपूर्व्वेण, किमुत देवीमुखे, "परित्रायस्व" इति ध्वनिना दग्ध इव श्रवणयो' एकपद एव निद्रां तत्याज राजा। शिरोभागाच्च कोप-

दिना इत्थम्भूतलक्षणे तृतीया ] मधुसुगन्धिभिः,—मधु—मकरन्दः, तेन सुगन्धिभिः,—सुरभिभि। मुखश्रिया—वदनशोभया। विमलेति।—विमल—स्वच्छ, यत् कपोलस्थल—गण्डदेश, तस्मिन् स्थित—प्रतिफलित तेन। सितकुसुमशेखरेणेव—श्वेतपुष्पशिरोमाल्येनेव। रतीति।—रतिकेलि,—सुरतक्रीडा, तत्र य कचग्रह',—केशाकर्षः, तेन लग्नितं तेन। प्रतिमाशशिबिम्बेन—शशिप्रतिबिम्बेन इत्यर्थ। स्वपति—निद्राति, राजनीति पूर्व्वेणान्वय। भूषणरवेण—अलङ्कारशिञ्जितेन, भीत्या अङ्गकम्पनेन भूषणरव समुदित इति भाव। व्याहरन्तीव—आह्वयन्तीव, स्वभयमिति शेष, यद्वा,—आश्वयन्तीव। परिजन—सखीजन, भृत्यजनं वा। उत्कम्पमानाङ्गयष्टिः,—उत्कै,—अतिशयेन, कम्पमाना—वेपमाना, अङ्गयष्टि',—लौहदेह इत्यर्थ यस्याः तथाभूता।

(४५) अश्रुतपूर्व्वेण—पूर्व्वमश्रुतेन, तादृशे राजन्वति देशे प्रजाना तथाभूतविपत्पातस्य असम्भवादिति भाव। [ अत्र "सुपी—" (२।१।३१ पा०) इत्यादिकतौ "भूतपूर्व्वे चरट्" (५।३।५३ पा०) इति निर्देशात् पूर्व्वनिपाते भूतपूर्व्ववत् सामान्यात् अश्रुतपूर्व्व इति सिद्धि ] यद्वा,—अश्रुत पूर्व्वं,—प्रागवस्थाविर्भाव यस्य तथाविधेन, प्राचीनैरप्यश्रुतोत्पत्तिकेन इत्याशय। किमुत—किं पुन, यस्य राज्ये साधारणप्रजानामपि किमपि भयकारणं नास्ति, तस्य अन्तःपुरे स्वमहिष्या भयकारणस्य अतीव असम्भाव्यत्वमेवेति भाव। दग्ध इव—ज्वलित इव।—एकपदे—तत्काल एव, सद्य इत्यर्थ, ("एकपद तत्काले अपसक्रम · ·" इति मेदिनी) अकस्मादेव वा। "शिरोभागाच्च" इत्यस्य "वेगेन उत्पपात" इति उत्तरेण सम्बन्ध, तमेव विशिनष्टि, शिरोभागादिति। —शिरोभागात्—शीर्षदेशात, शयनीयस्येति भाव। कोपेति।—कोपेन—क्रोधेन,

कम्पमानदक्षिणकराकृष्टेन कर्णोत्पलेनेव निर्गच्छता स्वच्छधारेण धौतासिना सीमन्तयन्निव निशाम्, (४६) अन्तरालव्यवधायकम् आकाशम् इव उत्तरीयांशुकं विक्षिपन् वामकरपल्लवेन, करविक्षेपवेगगलितेन हृदयेनेव भयनिमित्तान्वेषिणा भ्रमता दिक्षु कनकवलयेन विराजमानः, (४७) सत्वरावतारितवामचरणाक्रान्तिकम्पितप्रासादः, पुरः पतितेन असिधारागोचरगतेन शशिमयूखखण्डेनेव खण्डितेन हारेण राजमानः, लक्ष्मीचुम्बनलग्नताम्बूलरसरञ्जिताभ्यामिव निद्रया कोपेन च अतिलोहिताभ्यां लोचनाभ्यां पाटलयन् पर्यन्तान् आशानाम्,

---

कम्पमान,—वेपमान, दक्षिण,—अपसव्य, कर,—हस्त, तेन आकृष्ट,—आक्षिप्तेन। निर्गच्छता—निर्गत्वरा। स्वच्छधारेण—निर्मलधारेण। धौतासिना—निर्मलकरवालेन, सीमन्तयन्निव—द्विधा कुर्वन्निव, असिप्रभया निशाया मध्यतः प्रकाशीभूतत्वात्, समन्तादन्धकाराकुलत्वाच्च निशाया सीमन्तीकरणसम्भवत्वम्।

(४६) अन्तरालेति।—अन्तराल—मध्यस्थ, व्यवधायक—व्यवधानकारणमित्यर्थः, आच्छादकमिति यावत्। आकाशमिव—शून्यमिव शुभ्रत्वात् स्वच्छत्वाच्च उज्ज्वलनीलाकाशतया बोध्यम्। उत्तरीयांशुकम्—उत्तरासङ्ग, वामकरपल्लवेन विक्षिपन्—पर्यस्तम् अपसारयन् इत्यर्थः। करेति।—करस्य विक्षेप,—प्रसारणमित्यर्थः, तस्य वेग,—रय, तेन गलित—विच्युत तेन। भयेति।—भयस्य निमित्त—कारणम्, अन्विष्यतीति तथोक्तेन। कनकवलयेन—काञ्चनकटकेन।

(४७) सत्वरेति।—सत्वर—सवेगम्, अवतारितेन—अधःस्थापितेन वामचरणेन या आक्रान्ति,—आघात, तया कम्पित,—चालित, प्रासाद,—हर्म्यं येन तथाभूत। असिधारागोचरगतेन—असिधाराया गोचर—विषय, गत,—प्राप्त तेन, असिधाराप्रतिबिम्बितेन इत्यर्थः। शशिमयूखखण्डेनेव—चन्द्रकिरणशकलेनेव मौक्तिकानाम् औज्ज्वल्यादिति भाव, खण्डितेन—छिन्नेन। राजमान,—शोभमान। लक्ष्मीति।—लक्ष्म्या,—कर्तृभूताया राजलक्ष्म्या, चुम्बन, तेन लग्न—संसक्त, य ताम्बूलरस,—पत्रराग, तेन रञ्जिताभ्याम् इव—अनुरञ्जिताभ्यामिवेत्युत्प्रेक्षा। अतिलोहिताभ्याम्—अतिरक्ताभ्याम्। पाटलयन्—श्वेतरक्तीकुर्वन्। आशाना—दिशा, पर्यन्तान्—प्रान्तदेशान्।

(४८) आबद्धान्धकारया विपताकया भ्रूलतया पुनरपि त्रियामां परिवर्त्तयन्,—"देवि! न भेतव्यं, न भेतव्यम्" इत्यभिदधानो वेगेन उत्पपात; सर्व्वासु च दिक्षु विक्षिप्तचक्षुः यदा न अद्राक्षीत् किञ्चिदपि, तदा पप्रच्छ तां भयकारणम्।

अथ (४९) गृहदेवतास्विव प्रधावितासु यामिकविलासिनीषु, प्रबुद्धे च समीपशायिनि परिजने, शान्ते च हृदयोत्कम्पकारिणि साध्वसे, सा समभाषत,—"आर्यपुत्र! (५०) जानामि, स्वप्ने भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेव पूरयन्तौ दिग्भागान्, वैद्युतम् इव जीवलोकं कुर्व्वाणौ, मुकुटिनौ, कुण्डलिनौ, अङ्गदिनौ, कवचिनौ, गृहीतशस्त्रौ, इन्द्रगोपकरुचा रुधिरेण धाम्ना स्नातौ,

---

(४८) आबद्धान्धकारया—आपूर्णतिमिरया, भयाक्रान्तत्वादिति भावः। ["आबद्धान्धकारया" इत्यत्र "बद्धान्धकारया" इति पाठोऽपि—स एवार्थः]। विपताकया—रेखावधिया। त्रियामा—प्रहरत्रितयवतीं रजनीमित्यर्थः। परिवर्त्तयन्—प्रवर्त्तयन्, जनयन्नित्यर्थः। विक्षिप्तचक्षुः—प्रेरितनेत्रः पातितनयन इत्यर्थः।

(४९) गृहदेवतासु इव—गृहाधिष्ठातृदेवीषु इवेत्युत्प्रेक्षा, प्रधावितासु—सवेगम् आपतितासु आर्त्तनादश्रवणादिति भावः। यामिकविलासिनीषु—प्रहरपालिकासु, अन्तःपुररक्षिकासु नारीषु इति यावत्। ["यामिकविलासिनीषु" इत्यत्र "यामकिनीषु" इति पाठे—यामः—प्रहरः एव यामकः, तत्र तिष्ठन्ति या ता यामकिन्यः तासु, प्रहरिणीषु इत्यर्थः। [अत्र "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः॥" इति नित्ययोगेऽर्थे "अत—" (५।२।११५ पा०) इति इनि ङीपि रूपम्] प्रबुद्धे—जागरिते। साध्वसे—भये ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)।

(५०) जानामि—मन्ये। तेजोमयौ—तेजःपूर्णौ। बालातपेनेव—अभिनवसूर्यमयूखेनेव पूरयन्तौ—व्याप्नुवन्तौ। वैद्युतमिव—तडिन्मयमिव। जीवलोकं—जगत्। मुकुटिनौ—किरीटधारिणौ। कुण्डलिनौ—कुण्डलालङ्कृतौ। अङ्गदिनौ—केयूरशोभितौ। कवचिनौ—वर्म्मधरौ। इन्द्रगोपकरुचा—इन्द्रगोपकः—वर्षाकालिकरक्तवर्णकीटविशेषः, तद्वत् रुक्—प्रभा यस्य तथाभूतेन। धाम्ना—लौहतेजसा, प्रभया

सम्मुखेन उत्तमाङ्गघटमानाञ्जलिना जगता निखिलेन प्रणम्यमानौ, कन्यया चैकया च चन्द्रमूर्त्येव सुषुम्णारश्मिनिर्गतया अनुगम्यमानौ क्षितितलमवतीर्णौ; तौ च मे विलपन्त्याः शस्त्रेण उदरं विदार्य प्रविष्टुम् आरब्धौ; प्रतिबुद्धाऽस्मि च आर्यपुत्रं विक्रोशयन्ती वेपमानहृदया" इति।

एतस्मिन्नेव च कालक्रमे राजन्यस्याः प्रथमालापः (५१) प्रथयन्निव स्वप्नफलम् उपतोरणं रराण प्रभातशङ्खः। भाविनीं भूतिमिव अभिदधाना दध्वनुः अमन्दं दुन्दुभयः। आकाश

इति यावत्, उपवसितौ इति भाव, [ "वाचा" इति पाठ पुस्तकान्तरे न दृश्यते] अत एव बधिरेव—रक्तेन, बालौ—अलिखितौ, स्तः इति शेष, यद्वा,—रुधिरेव—रक्तवर्णेन, चन्द्रमीयकरया धाम्ना—स्वदेहकिरणेन, बालौ। सम्मुखेन—अग्रंमुखेन। उत्तमेति।—उत्तमाङ्गे—शिरसि, ("उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः) घटमान,—आबध्नन, अञ्जलि यस्य तेन, शिरोबद्धाञ्जलिनेति यावत्। जगता—जगद्वासिजनेनेत्यर्थ। निखिलेन—समस्तेन। प्रणम्यमानौ—अभिवन्द्यमानौ। चन्द्रमूर्त्येव—चन्द्रवत् रुचिरविग्रहयैव दृश्यमानया इत्यर्थ, चन्द्रिकासमुद्भासितकलेवरया इति भाव। सुषुम्णारश्मिनिर्गतया—सुषुम्णाख्योऽस्त्यतमो रविरश्मि, तस्मात् निर्गता—निःसृता तया। [सर्वेष्वेव मुद्रितपुस्तकेषु "सुषुम्णरश्मि" इति पाठो विद्यते, स तु लिपिकरप्रमादात प्रथममुद्रितपुस्तके स्थानमलभत, अनन्तरं तमेवादर्शं कृत्वा सर्वत्रैव गड्डलिकाप्रवाहन्यायेन तथैव अवर्त्तत इति मन्यामहे, वस्तुतस्तु "सुषुम्णारश्मि" इत्येव प्रकृत पाठ, शास्त्रेषु सर्वत्रैव सुषुम्णा इति आकारान्तस्यैव प्रयोगदर्शनात् "सुषु इति अव्ययं शब्दं आयति यत्र इति व्युत्पत्त्या आयाती कर्मण्येन निष्पन्नत्वात् आकारान्त एव युज्यते, न तु अकारान्त इति सुधीभिः विभाव्यम्]। तौ च—कुमारावित्यर्थः। प्रविष्टुम् उदरमेवेति शेष। प्रतिबुद्धा—जागरिता। विक्रोशयन्ती—आर्त्तस्वरेण आकारयन्ती।

(५१) प्रथयन्निव—विस्तारयन्निव। उपतोरणं—तोरणे इति उपतोरणम्, ["अव्ययं—" (२।१।६ पा॰) इत्यादिना विभक्त्यर्थेऽव्ययीभाव] तोरणसमीपे वा। । प्रभातशङ्ख—प्रातःकाले वाद्यमान शङ्ख। भाविनीम्—ौ, भूतिम् अभ्युदयम् अभिदधाना,—कथयन्त, सूचयन्त इत्यर्थ, अमन्दम्—

कोणाहता आनन्दादिव प्रत्यूषनान्दी ; जय जयेति प्रबोधमङ्गलपाठकानाम् उच्चैर्वाचोऽयूयन्त। पुरश्च वल्लभतुरङ्गमन्दुरामन्दिरे मन्दमन्दं समुत्थितः सखीनां कृतमधुरहेषारवाणां पुरश्शीततुषारसलिलशीकरं किरन् मरकतहरितं यवसं वक्त्रापरवक्त्रे पपाठ,—

"निधिस्तरुविकारेण सम्मणिः स्फुरता धाम्ना।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके ॥ ३ ॥

अनल्पम्, उच्चैरित्यर्थः। दुन्दुभयः,—भेर्यः। चकाणः—दध्वानः। [ कणते भौवादिकस्य लिटि रूपम् ]। कोणाहता—कोणः,—वीणादिवादनदण्डः, तेन आहता—ताडिता। प्रत्यूषनान्दी—प्राभातिकभेरीवाद्यविशेषः। प्रबोधेति।—प्रबोधे—जागरणकाले, राज्ञ इति शेषः, मङ्गलपाठकानाम्—माङ्गलिकस्तोत्रपाठिनाम्। पुरश्च—कथित चकपाल इति भावः। वल्लभेति।—वल्लभाना—प्रियाणां, तुरङ्गाणाम्—अश्वानां, मन्दुरा—वाजिशाला एव, [ मन्दिधातो "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्" ( उ० १ पा० ३९ सू० ) इति उरचि रूपम् ] "वाजिशाला तु मन्दुरा" इत्यमरः ]। मन्दिरं तस्मिन् मन्दिधातो "इषिमदि—" ( उ० १ पा० ५२ सू० ) इत्यादिना किरचि प्रत्यये रूपम्। मन्दमन्दं—शनैः शनैः। सखीनाम्—अश्वानाम्। ( "घोटके पीति तुरग · · । · ·हयसैन्धवसप्तयः" इत्यमरः )। कृतेति।—कृतः मधुरः,—मनोज्ञः, हेषारवः—हेषाध्वनिः यैः तथोक्तानाम्। ( "अश्वानां हेषा ह्रेषा च निःस्वनः" इत्यमरः ) पुरः,—अग्रतः। शीतदिति।—शीतलः,—स्वच्छः, तुषारसलिलानाम्—हिमजलानां, शीकराः—बिन्दवः यस्मात् तथोक्तम्। मरकतहरितं—मरकतवत् —"पान्ना" इत्याख्यहरिद्वर्णमणिविशेषवत् हरितं,—श्यामवर्णं तम्। [मरकतशब्दः मरकपूर्वकात् कृधातो डप्रत्यये सिद्धः, "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति सूत्रे "अपि शब्दः सर्वोपाधिव्यभिचारार्थः, तेन धातुन्तरादपि कारकान्तरेष्वपि क्वचित्" इति वृत्तेः ]। यवसं—घासं ( "घासो यवसम्" इत्यमरः ) किरन्—विक्षिपन्, ददन्नित्यर्थः। वक्त्रापरवक्त्रे—वक्त्रञ्च अपरवक्त्रञ्च ते, तदाख्ये मात्रावृत्ते।

अथ प्रभाते समुत्थितामपाल यदृच्छया पठिताभ्यां श्लोकाभ्यां राज्ञः भाविसुपुत्रलाभं सूचयति, निधिरिति।—लोके—जगति, तरुविकारेण— तरूणां—वृक्षाणां, विकारेण—विकृतभावेन, शाखानां परिणाहोन्नतानामधोमुखत्वादिरूपेण इत्यर्थः, ( भूम्यां यत्र निधि वर्तते, तदुपरि वृक्षा अधोमुखशाखाग्रलम्बभाजो भवन्ति इति

च यथाक्रियमाणाः क्रियाश्चकार; यशोवती अपि तुतोष तेन पत्युः भावितेन।

(५३) ततः समतिक्रान्ते कस्मिंश्चित् कालांशे देव्याश्च यशोवत्या देवो राज्यवर्द्धनः प्रथममेव सम्बभूव गर्भे। गर्भस्थितस्यैव च यस्य यशसेव पाण्डुतामादत्त जननी। (५४) गुणगौरवक्लान्तेव गात्रमुद्वोढुं न शशाक। कान्तिविसरामृतरसतृप्तेव आहारं प्रति पराङ्मुखी बभूव। शनैः शनैः उपचीयमानगर्भभरालसा च गुरुभिः वारिताऽपि वन्दनाय कथमपि सखीभिर्हस्तावलम्बेन अनीयत। विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भभित्तिषु अलक्ष्यत। (५५) कमललोभनिलीनैः

---

पुनरभिधाय इत्यनेनान्वय क्रियापुनरुक्तदोषापादक इति न सदाहृतम् इति ध्येयम्]। यथाक्रियमाणा —नित्य सम्पाद्यमाना इत्यर्थः।

(५३) समतिक्रान्ते—समतीते। कालांशे—समयविभागे। सम्बभूव—सम्भूत, सञ्जात इत्यर्थः। यस्य—राज्यवर्द्धनस्य, भाविन इति भाव। जननी—यशोवती, पाण्डुता—पाण्डुवर्णत्व, यशस शुभ्रत्वेन कविभिर्वर्ण्यमानत्वादिति भाव, आदत्त—जग्राह, पाण्डुवर्णा अभूदित्यर्थ।

(५४) गुणेति।—गुणानां—दयादाक्षिण्यादीनां गर्भस्थार्भकस्य इति भाव, गौरवेण—अतिशयगुरुत्वेन, क्लान्तेव—खिन्नेव इत्यर्थ। उद्वोढु—धारयितुमित्यर्थ, न शशाक—न शक्ता, कथञ्चिद्धारयामासेति भाव। कान्तीति।—कान्तीनां—लावण्यानां, विसर —प्रसर एव, अमृतरस —पीयूषास्वाद, सुधास्वादजन्यानन्दसन्दोह इति यावत्, तेन तृप्ता इव—लब्धतृप्ति इव। पराङ्मुखी—विमुखी बभूव—अरुचिमती जाता इत्यर्थ। उपचीयमानेति।—उपचीयमान,—वर्द्धमान, यो गर्भभर,—गर्भस्य भार, तेन अलसा —मन्थरा। वारिताऽपि—निषिद्धाऽपि। वन्दनाय—प्रणामादिरूपार्चनाय, गुरूणामिति शेष, [अत्र "क्रियार्थो—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। हस्तावलम्बन—हस्तधारणेन। विश्राम्यन्ती—विश्रामार्थं तिष्ठन्ती, शालभञ्जिकेव—पुत्तलिकेव, समीपगतस्तम्भभित्तिषु—सन्निहितस्थूणाकुड्येषु, अलक्ष्यत—अदृश्यत।

(५५) कमलेति।—कमलेषु लीन,—अरण्यो कमलकुड्मल लोलुपता इत्यत,

विनिहितकरकिसलयाऽपि गर्व्वादिव गर्भेण अधार्य्यत। (५८) प्रतिदिवसञ्च अधोमुखी स्तनपृष्ठसङ्क्रान्तेन अपत्यदर्शनौत्सुक्यात् अन्तःप्रविष्टेन इव मुखकमलेनैव प्रीयमाणा ददर्श गर्भम्। उदरे तनयेन हृदये च भर्त्रा निहिता द्विगुणितामिव लक्ष्मीमुवाह। पत्युरङ्कमुक्तशरीरा च शरीरपरिचारिकाणाम् अङ्केषु, सपत्नीनान्तु शिरःसु पादौ चकार। (५९) अवतीर्णे च दशमे मासि (६०) सर्व्वोर्व्वीश्वरपक्षपाताय वज्रपर-

---

भानि चकारेत्यर्थः ]। प्रत्युत्थानेषु—गुरुजनाद्यागमने प्रत्युद्गमनेषु, उभयीश्रोण्यौ —जघ-नयोः, कटोर्वा अभिदेशयोरित्यर्थः, शिखरयोः,—अग्रयो, विनिहित,—अर्पित, करकिसलय —हस्तपल्लव यया तथाभूता। अधार्य्यत—अवधार्य्यत इत्यर्थः, प्रत्युत्थातु-मुपक्रममाणाऽपि तेजोत्कर्षवत्त्वात् तत प्रत्यवध्यत इव इति भाव ।

(५८) [ "प्रतिदिवसञ्च" इत्यत्र "दिवसञ्च" इति पाठे,—प्रत्यह दिन व्याप्येत्यर्थः। अत्र पक्षे "कालाध्वनो —" (२।३।५ पा०) इत्यादिना अत्यन्तसंयोगे द्वितीया। प्रथमपक्षे —दिवस दिवस प्रति इत्यव्ययीभावे क्रियाविशेषणम् इति विवेक ]। स्तनेति। —स्तनपृष्ठे स्तनयोरुपरि, सङ्क्रान्त—प्रतिबिम्बित तेन, पाण्डुरतया स्वच्छत्वादिति भाव। अपत्येति।—अपत्यस्य—पुत्रस्य, गर्भस्थितस्येति भाव, दर्शने यत् औत्सुक्य—कुतूहल तस्मात्। द्विगुणिता—द्विरावृत्ता, लक्ष्मीं—श्रियम्। पत्युरङ्केत।—पत्यु, —स्वामिन, उत्सङ्गे—क्रोडे मुक्त—निहित शरीर यया तथाभूता। [ "पत्युरङ्क—" इत्यत्र "सव्युत्सङ्ग—" इति पाठान्तरम् ]। शरीरेति।—शरीर—देह, परिचरन्ति—सेवन्ते या ताता, पादादिसम्वाहिकाणामित्यर्थः, अङ्केषु—क्रोडेषु, तत्तदवयवेषु वा इत्यर्थः। सपत्नीना—समानभर्तृकाणा, दुर्भगानामिति भाव। भर्तुरादरातिशयात् सर्व्वा सपत्नीरतिक्रम्य अतिष्ठदिति भाव, न तु वास्तवन्येन तासा शिरःसु पादौ स्थापितवती। अत्र पादयो युगपदनेकत्र स्थापनमसम्भवम् इति आपातत विरोधस्य भिन्नसमयत्वेन समर्थनात् विरोधाभासोऽलङ्कार।

(५९) अवतीर्णे—उपस्थिते।

(६०) सर्व्वेति।—सर्व्वेषाम् उर्व्वीश्वरा—भूभृताम्,एकत्र—नृपाणाम्,अन्यत्र,—भूमिधराणां,पर्व्वतानामित्यर्थः, ("भूभृद्भूमिधरे नृपे"इत्यमर ) पक्षपाताय—सहायनिपातनाय, गरुच्छेदनाय च, ("पक्षो मासार्द्धके ··। सखिसहाययो । चुल्लीरन्ध्रे पतत्रे च ··"इति

माणुभिः इव निर्मितं, (६१) त्रिभुवनभारधारणसमर्थं शेषफणामण्डलोपकरणैः इव कल्पितं, सकलभूभृत्कम्पकारिणं दिग्गजावयवैः इव विहितम् असूत देवं राज्यवर्द्धनम्; (६२) यस्मिन् जाते जातप्रमोदा नृत्यमय्य इव अजायन्त प्रजाः। पूरिताशङ्खशब्दमुखरं प्रहतपटहशतपटुरवं गम्भीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमिव महोत्सवम् अकरोत् नरपतिः।

अथ अन्यस्मिन्नतिक्रान्ते कस्मिंश्चित् काले (६३) कन्दलिनि, कुड्मलितकदम्बतरौ, तोक्मदलस्तम्बे, स्तम्भिततामरसे,

---

मेदिनी ) वज्रपरमाणुभिरिव—वज्रस्य—कुलिशस्य, परमाणव,—अतिसूक्ष्मा अवयवविशेषा तैरिव। इन्द्र पुरा वज्रेण पर्वतानां पक्षच्छेदं कृतवान् इति पुराणवार्ता।

(६१) त्रिभुवनस्य—त्रिजगतः, भारस्य धारणे—धारणे, वहने च, समर्थम्—क्षमम्। शेषेति।—शेषस्य—अनन्तनागस्य, फणामण्डलानि—फटासमूहाः एव, उपकरणानि—उपादानकारणानि तैरिव, अन्यथा कथं ताहग्भारधारणे सामर्थ्यमस्येति भाव। सकलेति।—सकलानां भूभृतां—राज्ञां, पर्वतानाञ्च, कम्पकारिणम्—कम्पयितुं रिपूनाक्रमणतत्वादिति भाव, अत एव दिग्गजेति।—दिग्गजानाम्—ऐरावतादीनाम् अवयवैः,—अङ्गैरिव। असूत—प्रसूतवती। राज्यवर्द्धनं—राज्यं वर्द्धयतीति तथोक्तम्, अन्वर्थाभिधेयमिति भाव।

(६२) यस्मिन्—राज्यवर्द्धने। जातप्रमोदाः,—समुत्पन्नहर्षाः। नृत्यमय्य,—नृत्यबहुला, सदा नृत्यपरायणा इवेत्यर्थः। प्रजाः,—जनाः। पूरितेति।—पूरिताः—आशादिगन्ताम शङ्खानाम्—कम्बूनां, शब्दैः,—रवैः मुखरम्,—कोलाहलपूर्णं तम्। प्रहतेति।—प्रहतानाम्—ताडितानां, पटहशतानां—वाद्यविशेषसमूहानां, पटुः,—महान्, रवः ध्वनिः यत्र तथाविधम्। गम्भीरेति।—गम्भीरैः,—मन्द्रैः, भेरीणां—दुन्दुभीनां निनादैः,—निःस्वनैः, निर्भरम्—अत्यन्तं यथा तथा, भरितम्—आपूरितं, भुवनं यत्र तथाविधम्। प्रमोदेति।—प्रमोदेन—हर्षेण, उन्मत्तैः,—उद्भ्रान्तैः मर्त्यलोकैः,—मनुष्यैर्जनैः, मनोहरम्—रमणीयम्।

(६३) कन्दलिनि—कन्दलैर्नवाङ्कुरैः युक्ते, तथा—नवाङ्कुरशालिनि। कुड्मलितेति।—कुड्मलिता,—मुकुलिता, कदम्बतरवः यस्मिन् तस्मिन्। तोक्मदलस्तम्बे

(६८) दिवसम् अधिशयानायाः शयनीयम् अपाश्रयपत्रभङ्गपुत्रिकाप्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिव अलक्ष्यत। (६९) क्षपासु सौधशिखराग्रगताया गर्भोष्मायमुक्तांशुके स्तनमण्डले सङ्क्रान्तमुडुपतिमण्डलम् उपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्य्यमाणम् अदृश्यत। (७०) सुप्ताया वासभवने चित्रभित्तिचामरग्राहिण्योऽपि

---

अपि स्त्रियः परिचर्य्यां पृथिव्याः प्राक् कदाचिदपि नैव कृता, एतस्याः तत्कारणेन त्रिजगन्मङ्गलनाथ सौभाग्योत्कर्षवतीति इति व्यतिरेको व्यङ्ग्यः।

(६८) दिवसम्—वासरम्। शयनीयम्—शय्याम् ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य कर्मसंज्ञा] अधिशयानायाः,—अधितिष्ठन्त्याः इत्यर्थः। अपाश्रयस्य—शय्याश्रयमस्तकाधारपट्टस्य, "बालिश" इति ख्यातस्य उपधानस्य वा, या पत्रभङ्गपुत्रिका—पुत्तलिकाकारेण लिखिता, तस्याः प्रतिमा—प्रतिबिम्बम्। विमलं—स्वच्छं, गर्भजन्यपाण्डुवर्णत्वादिति भावः, यत् कपोलोदरं—गण्डाभ्यन्तरं, तद्गता—तत्र प्रतिफलिता इत्यर्थः। प्रतिपालयन्ती—प्रतीक्षमाणा, वितानेषु उपधानेषु वा चित्रितानां नारीणां मूर्तिषु राजश्रिया हृदयवरणार्थं प्रतीक्षमुद्रोचितम्। लक्ष्मीरिव—राजश्रीरिव, [लक्षधातोः "लक्षेर्मुट् च" (उ० ३ पा० १६० सू०) इति ई-प्रत्यये मुडागमे रूपम्, अदन्तत्वात् न सुलोपः]। अत्र "लक्ष्मीरिव" इति पदं गर्भस्थबालस्य भाविचक्रवर्तित्वसूचकं ज्ञातव्यम्, एवमुत्तरत्र "श्वेतातपत्रमिव" इत्यादिस्थलेऽपि।

(६९) क्षपासु—रजनीषु, सौधशिखरस्य—प्रासादचूडायाः, अग्रम्—उपरिभागं, तद्गतायाः,—तत्र स्थितायाः इत्यर्थः। गर्भेति।—गर्भस्य ऊष्मायेन—पीडनेन इत्यर्थः, गर्भभारवहनजनितक्लेशेन इति यावत्, मुक्तं—त्यक्तम्, अपसृतमित्यर्थः, अंशुकं—वसनं यस्मात् तथाभूते, स्तनमण्डले सङ्क्रान्तम्—प्रतिफलितम्, उडुपतिमण्डलम्—चन्द्रबिम्बम्। केनापि—अनिर्दिष्टेन जनेन सेवकेनेति भावः, यद्वा,—केन—ब्रह्मणा सूर्येण वा, उपनतगर्भस्थबालकादरात् स्वांशानुरागाद्वा इति ध्येयम्। एतेन लोकातीतप्रतापशालित्वम् गर्भस्थस्य सूच्यते इति।

(७०) सुप्तायाः—निद्रितायाः। चित्रेति।—चित्रभित्तिषु—आलेख्याङ्कितकुड्येषु इति यावत्, स्थिताः,—चित्रिताः इत्यर्थः या चामरग्राहिण्यः—बालव्यजनधारिण्यः, ताः। अत्र अपिशब्दः सम्भावनार्थकः इत्युक्तौ च, निश्चयार्थके तु न तथा।

लतागृहोदरपुलिनपरिसरेषु पर्यटितुं हृदयम् अभिललाष। (७५) आत्ययिकेषु अपि कार्येषु सविभ्रमं भ्रूलता चचाल। (७६) सन्निहितेषु अपि मणिदर्पणेषु मुखम् उत्खाते खड्गपट्टे वीक्षितु व्यसनमाप्नोत्। (७७) उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतौ असुखायन्त। (७८) पञ्जरकेसरिषु चक्षुः अरमत।

---

यति॥" इति। अनेन गर्भस्थस्यैव तस्य महावीरसार्वभौमसौभाग्याभिलाष प्रतीयते इति दोहदम्। वेलेति।—वेलासु—समुद्रतीरेषु यानि लतागृहाणि—कुञ्जभवनानि, तेषाम् उदरेषु—अभ्यन्तरेषु यानि पुलिनानि—सैकतभागा, तेषां परिसरा,—प्रान्तदेशा तेषु। एतेनास्य ससागरधराधीश्वरत्वलाभस्वभावत्वमनुमीयते।

(७५) आत्ययिकेषु—विपत्तिजनकेषु कार्येषु [ अत्ययं भव इत्यर्थे "तत्र भव" (४।३।५३ पा०) इति ठञ् रूपम् ] सविभ्रमं—सविलास भ्रूलता चचाल—जगामेत्यर्थ, तस्या इति शेष, आग्रहसूचिका भ्रूकुटिमकरोदिति भाव। गर्भे वीरपुरुषस्य अवस्थित्या विपज्जनककार्ये प्रवृत्ति आसीत अथवा,—आत्ययिकेषु—अवश्यकर्तव्येषु सविभ्रम—सविलास भ्रूलता चचाल—अस्पन्दे, भ्रूलतासञ्चालनेनैव अवश्यकर्तव्यानि कारयामास, न तु हस्तादिना गर्भभारालसत्वादिति भाव।

(७६) सन्निहितेषु अपि—निकटस्थितेषु अपि मणिदर्पणेषु ["षष्ठी चानादरे" (२।३।३८ पा०) इति अनादरे सप्तमी] तान् अनादृत्येत्यर्थ। उत्खाते—उद्धते परित्यागेन इति भाव, यद्वा—निष्कोषिते इत्यर्थ, महावीराश्रितगर्भत्वात्, मुखं वीक्षितु—द्रष्टु व्यसनम्—आसक्ति अभिलाष इत्यर्थ खड्गपट्टे—असिफलके, विजिगीषुभि वीरैरपि खड्गफलके एव मुखदर्शनस्य प्राकृतिकत्वादिति भाव।

(७७) उत्सारितवीणा —उत्सारिता—अपसारिता वीणा—वाद्यविशेष येभ्य तथाभूता तद्ध्वनिभि वीणादिमधुरशब्दा तिरस्क्रियन्ते इति भाव। धनुर्ध्वनय,—धनुर्निनादा श्रुतौ—श्रवणेन्द्रिये असुखायन्त—सुतिसुखा जाता इति यावत, पूर्ववत महावीराश्रितगर्भत्वात् प्रत्यर्थिमर्द्दनपरायणानां वीराणाम् धनुष्टङ्कारस्यैव श्रुतिसुखकरत्वादिति भाव।

(७८) पञ्जरकेसरिषु—पञ्जरं गतेषु सिंहेषु इत्यर्थ, चक्षु अरमत—अप्रीयत; महापराक्रमस्य गर्भस्य मृगयादिव्यापारेषु सिंहादपि भीत्यभावात् तेनैव च सह क्रीडादिकरणात इति भाव, अपि च पञ्जरस्थोदरशायिन दर्पस्य वैर्यादिप्रकटनेन तद्दर्शनजनितरुपि चक्षुः अजनीति ज्ञेयम्।

(७९) गुरुचरणेषु अपि स्तम्भितमिव शिरः कथमपि ननाम। (८०) सखीजनाश्च अस्याः प्रमोदविस्फारितैः लोचनपुटैः आसन्नप्रसवमहोत्सवधियेव धवलयन्तो भवनं विकच कुमुदकमलकुवलयपलाशदृष्टिमयं रक्षाबलिविधिमिवानवरतं विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वम्। (८१) आलो चितस्याननिषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो धृतिं चक्रुः। (८२) पयोनिधीनां हृदयानीव

---

(७९) गुरुचरणेषु—अभ्यर्हितजनचरणेषु, स्तम्भितमिव—निश्चलीकृतमिव, गर्भे समुद्भवति सत्यपि प्रतिद्वन्द्विभावनिवेशात् महावीरस्य सार्वभौमस्य च जनक भावस्य प्रकृतिविरोधि भावत्वात्। पूर्वोक्तेषु सत्सु एव वाक्येषु वीरपुरुषाश्रित धर्मत्वात् तयोक्तिरिति भावः।

(८०) सखीजना—वयस्याश्च। ["सखीजनाश्च" इत्यत्र "सख्यश्च" इति पाठान्तरम्] प्रमोदविस्फारितैः, आनन्दविकसितैः। आसन्नेति।—आसन्न, —समीपवर्ती यः प्रसव—गर्भमोचनं स एव तेन वा महोत्सव,—आनन्दजनक व्यापार, तद्धियेव तद्बुद्ध्या इव महोत्सवं समीपवर्ती इति विविच्य इत्यर्थः। धवलयन्त—शुभ्रीकुर्वन्त। विकचेति।—विकचानि—विकसितानि यानि कुमुद कमल कुवलयानि—कैरव पद्म नील पद्मानि तेषां पलाशानि—दलानि, तेषां दृष्टिमय —बहुलात्मक रक्षाबलिविधि—रक्षार्थं—गर्भस्य विघ्नाभावसम्पादनाय, बलिविधि— पूजाविधानमिव। विदधाना,—कुर्वन्त। मुमुचु,—तत्यजु, आसन्नप्रसवाया नियतपार्श्ववर्त्तित्वनियमादिति भावः।

(८१) आलोकेति। आलोक,—स्वस्य उचितेषु—योग्येषु स्थानेषु निषण्णा,— उपविष्टा, महान्त,—उत्तमा इत्यर्थ, भिषजश्च भिषज,—वैद्या, विविधा,— नानाविधा, औषधी,—वनस्पत्य दक्षभूतनादिप्रतिनिवारकाणि, तथा रोगोपशमनानि भेषजानि, द्रुमलतादीनि च, धरन्तीति तथोक्ता, यद्वा—भूधरपक्षे,—विविधा औषध्य यासु तादृश्य धरा—भूमयः येषु तथाभूता। भूधरा इव—पर्वता इव, भुव, —भूमे, प्रसवस्थानस्य इत्यर्थ, पृथिव्याश्च धृतिम्—धैर्यधारणं धारणञ्च, चक्रु,— कृतवन्त, महत्त्वसत्तमा चिकित्सका एतत्प्रसूतौ किमपि न प्रत्यैलु इति भावः।

(८२) पयोनिधीना—समुद्राणाम्। हृदयानीव—मध्यभागानीवेत्यर्थं, यथा

संवादितातीन्द्रियादेशः, दर्शितप्रभावः, सद्गणितो ज्योतिषि, सर्वासां ग्रहसंहितानां पारदृश्वा, सकलगणकमध्ये महितो हितश्च, त्रिकालज्ञानभाक्, भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान्,—"देव! श्रूयतां, मान्धाता किलैवंविधे (८६) व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि सर्वेषु उच्चस्थानस्थितेषु एवं ग्रहेषु ईदृशि लग्ने भेजे जन्म।

---

संवादितेति।—संवादित,—प्रत्ययीकृत, अतीन्द्रिय,—इन्द्रियमतिक्रान्त, [अत्यादय "क्रान्ताद्यर्थे द्वितीयया" (वा०) इति समास] साक्षीति भाव, आदेश,—आज्ञा, घटना इति यावत् येन तथाभूत, अवितथवक्तेति भाव, यद्वा,—संवादित, सफलीकृत इति भाव, अतीन्द्रिय,—अलौकिक, आदेश,—आज्ञावाक्य, भविष्यत्कथनं यस्य तथाभूत। दर्शितप्रभाव,—दर्शित,—प्रकटित, प्रभाव—सामर्थ्यं येन तथोक्त, यद्वा,—दर्शित,—दर्श,—दर्शनं सञ्जातोऽस्य इति विग्रहे ["तदस्य—" (५।२।३६ पा०) इत्यादिना तारकादेराकृतिगणत्वादितच्प्रत्यये सिद्ध] प्रभाव यस्य तथाभूत, एतेनास्य विश्वपरीक्षाप्रतिभावत्त्वं सूचितम्। सद्गणिती—सद्गणितम् अस्यास्तीति सद्गणिती, सद्गणनाभिज्ञ, गणिताभिज्ञ इति यावत्, ज्योतिषि—ज्योतिषशास्त्रे। ग्रहसंहितानां—ग्रहा,—रव्यादय, तेषां संहिता,—सन्दर्भा, तत्तद्ग्रहज्ञानग्रन्था इति यावत् तासां पारदृश्वा—पारदर्शी, विशेषज्ञ इति यावत् [पारं दृष्टवान् इत्यर्थे "दृशेः क्वनिप्" (३।२।९४ पा०) इति क्वनिपि रूपम्]। महित,—पूजित। हित,—हितकर मूर्खकृतज्योतिर्विद्याविडम्बनाया निरन्तरमनर्थनिषेधकत्वादिभि इति भाव। भोजक,—दैवज्ञ, सूर्योपासका हि प्रायश गणका भवन्ति, ते देशान्तरे "मगा" इति प्रसिद्धा, आम्नाता इत्यन्ये। भोजक,—आहारप्रदः इति भाव, यद्वा,—भोज एव इत्यर्थे स्वार्थे कनि तथाविध भोजवंशसम्भवो भोजवत् त्रिगणागमज्ञो वा इत्याशय। मान्धाता—सूर्यवंशीययुवनाश्वसुत सार्वभौमनृपतिविशेष।

(८६) व्यतीपातादीति।—व्यतीपात—"अयने हि मकरार्कौ युगपत् स्यातां यदैकमार्गस्थौ। अथवार्केन्दू यदा गतौ स भवेत् व्यतीपात॥" इत्युक्तलक्षण अन्योन्य राशिचक्रे समभागांशस्थयो चन्द्रसूर्ययो योगविशेष, आदिपदेन तथोक्ता, सर्वे दोषा, तेषाम् अभिषङ्ग—व्यतिकर, सम्बन्ध इति यावत् तेन रहित—वर्जित तस्मिन्, अहनि—दिवसे। उच्चस्थानस्थितेषु—तुङ्गेषु इत्यर्थ।

(८७) अर्वाक् ततोऽस्मिन् अन्तराले पुनः एवंविधे योगे चक्रवर्त्तिजनने न अजनि जगति कश्चिदपरः। (८८) सप्तानां चक्रवर्त्तिनाम् अग्रणीः, चक्रवर्त्तिचिह्नानां महारत्नानाञ्च भाजनं, सप्तानां सागराणां पालयिता, सप्ततन्तूनां सर्वेषां प्रवर्त्तयिता, सप्तसप्तिसमः सुतोऽयं देवस्य जातः" इति।

अत्रान्तरे स्वयमेव (८९) अनाघ्राता अपि तारमधुरं

---

ग्रहेषु—रव्यादिषु। ईदृशि—एवंविधे शुभे इति भावः। लग्ने—राश्युदये, ("राशीनामुदयो लग्नम्" इत्यमरः)। भिन्ने—भिन्ने।

(८७) अर्वाक् ततः,—तत्पदादित्यर्थः। अस्मिन् अन्तराले—अभ्यन्तरे, इयं मान्धातुः जन्मकालमध्ये इत्यर्थः, एवंविधे—ईदृशे, सर्वग्रहमाश्रये इति भावः, योगे—ग्रहादीनां सम्मेलने इत्यर्थः, चक्रवर्त्तिजनने—चक्रवर्त्तिनः,—सम्राजः, जननम्—उत्पत्तिर्यस्मिन् तादृशे। अपरः,—हर्षस्तु पात अन्य इति यावत्, न अजनि—न जातः। एतेन मान्धातुः तु कदाचित् सत्ययुगे आसीत्, इदानीमेव एव त्रिलोक्यामप्रतिमवीर्य्यं इत्यवगम्यते।

(८८) सप्तानां चक्रवर्त्तिनां—सार्व्वभौमनृपतीनां, "भरतार्जुनमान्धातृभगीरथयुधिष्ठिराः। सगरो नहुषश्चैव सप्तैते चक्रवर्त्तिनः॥" इत्युक्तानाम्, अग्रणीः,—अग्रगण्यः, तेषां सप्तानामपि श्रेष्ठ इत्यर्थः। चक्रवर्त्तिचिह्नानां—सार्व्वभौमलक्षणानां, मत्स्यजालच्छत्रादीनामित्यर्थः, महारत्नानां—"चक्ररथमणिभार्य्याश्वगजनिधि परिणायकः। (परिणायकः—सेनापतिः) षडेतानि तु रत्नानि कीर्त्तितानि मनीषिभिः॥" इत्युक्तविधानां रत्नविशेषाणां। भाजनं—पात्रम्। सप्तानां सागराणां—लवणेक्षुसुरासर्पिर्दधिदुग्धजलात्मनाम् इत्यर्थः। सप्ततन्तूनां—यज्ञानां, सप्तभिः भूरादिमहाव्याहृतिभिः साध्यमानत्वादिति भावः, ("यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः) प्रवर्त्तयिता—सम्पादकः। सप्तसप्तिसमः,—सप्त—सप्तसङ्ख्यकाः, सप्तयः,—अश्वाः यस्य सः सप्तसप्तिः,—सूर्य्यः इत्यर्थः, [गमनार्थकात् सृपधातोः "वसेस्तिः" (उ० ४ पा० १७८ सू०) इति सूत्रे बाहुलकग्रहणात् तिप्रत्यये रूपम्] तत्समः, आदित्यसदृश इत्यर्थः, तदनुप्रभवत्वात् इत्याशयः, ("भास्कराहस्करब्रध्नप्रभाकरविभाकराः। भास्वद्विवस्वत्सप्ताश्व ... ॥" इत्यमरः)। अत्र नरेन्द्रसूनोः लोकासाधारणसम्पत्तिशालित्ववर्णनस्य वस्तुवर्णनविषयत्वात् उदात्तालङ्कारः।

(८९) अनाघ्राता,—अपूरिता, मुखानिलेनेति भावः। तारमधुरम्—

मन्द्रा विरेसुः । अताडितोऽपि क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्ज अभिषेकदुन्दुभिः । अनाहतानि अपि (८०) मङ्गलतूर्य्याणि रेणुः । (८१) सर्व्वभुवनाभयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्य्यप्रतिशब्दः । (८२) विधुतकेशरसटाश्च साटोपगृहीतहरितदूर्व्वापल्लवकवलप्रग्रस्तैर्मुखपुटैः समक्रेषन्त हृष्टा वाजिनः । (८३) सलीलम् उच्छ्रितैः हस्तपल्लवैः नृत्यन्त इव श्रवणसुभगं जगर्ज्जु गजाः । (८४) ववौ च अचिरात् चक्रायुधम् उत्सृजन्त्या लक्ष्म्या निश्वास इव सुराऽऽमोदसुरभिः दिव्यानिलः ।

---

र्वैर्मधुरम् । विरेसुः,—दध्वनुः । अताडितः,—अनाहतः । क्षुभितेति ।—क्षुभितस्य—विक्षोभितस्य, जलनिधेः,—सागरस्य, जलं, तस्य ध्वनिरिव धीरं—गम्भीरम् । जुगुञ्ज—दध्वान । अभिषेकदुन्दुभिः,—अभिषेकसमये वादनीयभेरी, ("भेरी स्त्री दुन्दुभिः पुमान्" इत्यमरः)।

(८०) मङ्गलतूर्य्याणि—माङ्गलिकवाद्यविशेषाः, रेणुः,—रणन्ति स्म ।

(८१) सर्व्वेति ।—सर्व्वेषां भुवनानाम् अभयघोषणाय —निर्भयताख्यापनाय, पटह इव—आनकाख्यवाद्यविशेष इव, ("आनकः पटहोऽस्त्री स्यात्" इत्यमरः) तूर्य्यप्रतिशब्दः,—नान्दीवाद्यप्रतिध्वनिः ।

(८२) विधुतेति ।—विधुता,—कम्पिता केशराः,—ग्रीवारोमाणि एव सटाः,—जटाः यैः तथोक्ताः । साटोपेति ।—साटोपं—साडम्बरं, सवेगमित्यर्थः, गृहीतानां हरितानां—श्यामलानां, दूर्व्वापल्लवानां कवलैः—ग्रासैः, प्रग्रस्तानि—विस्तृतानीत्यर्थः, व्याप्तानीति यावत् तैः, मुखपुटैः,—मुखविवरैः । समक्रेषन्त—हेषारवम् अकुर्व्वन्, अशब्दादेव हर्षोद्गमादिति भावः । ["समक्रेषन्त" इत्यत्र "समहेषन्त" इति पाठोऽपि दृश्यते ]। हृष्टाः,—प्रसन्नाः । वाजिनः,—अश्वाः ।

(८३) सलील—सावहेलम्, उच्छ्रितैः,—उन्नमितैः इत्यर्थः, हस्तपल्लवैः,—शुण्डाग्रभागरूपकरपल्लवैः । श्रवणसुभगं—श्रुतिसुखं, जगर्ज्जुः,—ननदुः, गर्ज्जितवन्तः, इत्यर्थः, आनन्दाविर्भाव एव गजानां गर्ज्जने हेतुः इति बोध्यम् ।

(८४) ववौ—वहति स्म । चक्रायुधम्—विष्णुम्, उत्सृजन्त्या,—त्यजन्त्या । सुराऽऽमोदसुरभिः,—सुरायाः,—मद्यस्य, आमोदः,—दूरप्रसारिगन्धः, तद्वत् सुरभिः,—घ्राणतर्पणः गन्धः, अथवा—सुराणाम्—अमराणामपि, आमोदः,—आनन्दः यस्मात्

(८५) यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापकथितकल्याणागमाः प्रजज्वलुः अनिन्धना वैतानवह्नयः। (८६) भुवस्तलात् तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशाः समुद्गुः महानिधयः।

---

सौहार्द्यगामी सुरभिश्च इति विग्रहः, भ्रमरस्वरसम्पर्कसङ्क्रमवान् इत्यर्थः, दिव्यानिलः,—स्वर्गीयवायुः, सम्राजः श्रीहर्षस्य जातस्य स्तुतिस्तुतिविधिबोधितया कल्पया भाविविभवसम्प्रदायप्रवर्तकत्वज्ञानेन देवानामपि प्रमुदितत्वादिति भावः।

(८५) यज्वनां मन्दिरेषु—यज्ञशालासु इत्यर्थः ["इषिमदि—" (उ० १ पा० १२ सू०) इत्यादिना किरचि रूपम्]। प्रदक्षिणेति।—प्रदक्षिणः,—अनुकूलः, दक्षिणावर्त इति यावत्, अन्यथा हवनसमये ऋत्विजां हस्तदाहापातात्, तेन चापे अमङ्गलाशङ्काप्रसक्तेः तथा हि रघौ कालिदासः,—"प्रदक्षिणार्चिर्व्याजेन" इति, शिखाकलापः,—ज्वालासमूहः, तेन कथितः,—सूचितः, कल्याणागमः,—शुभोदयः यैः तथोक्ताः। अनिन्धनाः,—इन्धन—दारु, दाह्यकाष्ठमित्यर्थः, तद्रहिताः, वैतानवह्नयः,—वितानं—क्रतुः, तत्र भवाः वैतानाः —यज्ञीयाः इत्यर्थः [विपूर्वकात् तनधातोः "अकर्तरि च—" (३।३।१९ पा०) इत्यादिना घञि, ततः भवार्थे अणि च रूपम्] तथाविधाः वह्नयः,—यज्ञाग्नयः इत्यर्थः।

(८६) भुवस्तलात्—पृथ्वीतलात्, भूगर्भात् इत्यर्थः ["ल्यब्लोपे कर्मण्यधिकरणे च" (वा०) इति पञ्चमीविभक्तिः]। तपनीयेति।—तपनीयं—स्वर्णम्, ["तव्यत्तव्यानीयरः" (३।१।९६ पा०) इति कर्मणि अनीयर्प्रत्यये रूपम्। "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयम् ॥" इत्यमरः] तस्य शृङ्खला—हारविशेषः, सौवर्णरशनेत्यर्थः निगडो वा ("शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी) तस्याः बन्धेन बन्धुराः —मनोज्ञाः, रम्या वा ("बन्धुर सुन्दरानतम्" "बन्धुरं मुकुटे पुंसि । त्रिषु स्यादुन्नतानते ॥" इत्यमरमेदिन्यौ) कलशीकोशाः,—कुम्भभाजनानि, स्वाधारभूतकुम्भस्य पिधानानि वा येषां तथाविधाः, सौवर्णशृङ्खलाबद्धकुम्भपरिपूर्णा इत्यर्थः महानिधयः,—महान्ति अमूल्यरत्नानि, शङ्खपद्मादयः शेवधिभेदा इति यावत् समुद्गुः,—समुद्गच्छन्ति स्म समुत्तस्थुरित्यर्थः, महापुरुषजन्मप्रभावात् सर्वाण्येव शुभचिह्नानि सर्वत्र प्रादुरासन्निति भावः। अत्र जन्मानुकूलाभ्युदयिकदैवादिसंस्काराणाम् अप्रसिद्धगौणहेतुना सत्त्वेऽपि मुख्यकारणस्य इन्धनमुख्यहेतोः अभावात् विभावना।

(९७) प्रहतमङ्गलतूर्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदात् अक्रियत इव दिष्टवृद्धिकलकलः। (९८) तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजाभ्युदये समुपतस्थिरे द्विजातयः। साक्षाद्धर्म इव (९९) शान्त्युदकफलहस्तः तस्थौ पुरः पुरोधाः। (१००) पुरातन्यः स्थितय इव

---

(९७) प्रहतेति।—प्रहतस्य—ताडितस्य मङ्गलतूर्यस्य—माङ्गलिकवाद्यविशेषस्य, प्रतिशब्दः,—प्रतिध्वनिः, तन्निभेन—तद्व्याजेन। प्रमोदात्—आनन्दात्। दिष्टवृद्धिकलकलः —दिष्टं—भाग्यम्, ("दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः) तस्य वृद्धिः,—उन्नतिः तस्यै कलकलः,—कलरवः, [कलप्रकारः कलयतः "प्रकारे—" (८।१।१२ पा०) इत्यादिना द्वित्वे रूपम्] भाग्यवति सति श्रीहर्षे राजनि सुप्रासनगुणेन प्रजानां निरुपद्रवतया सुखात् सेवा स्वस्वकार्यभारलाघवसम्भावनयेति भावः। अक्रियत इव—कृत इव। अत्र सम्भावनाया उत्कटैककोटिकत्वात् उत्प्रेक्षा।

(९८) तत्क्षण एव—तज्जन्मसमये एव किञ्चित्कालोपसम्पन्नाः इति भावः, शुक्लवाससः—श्वेतवसनाः, ब्रह्ममुखाः,—ब्रह्म—वेदः, [बृंहिधातोः "बृंहेर्नोऽच्च" (उ० ४ पा० १४६ सू०) इति मनिनि नकारस्य अकारे ततः रत्वे रूपम्। परमेष्ठ्यादि इति केचित्। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः] मुखे येषां तथोक्ताः, वेदानुयायिनः इति यावत्, पितामहप्रमुखाश्च, कृतयुगप्रजापतय इव—कृतयुगे—सत्ययुगे प्रजापतयः—लोकसृष्टिकर्त्तार इव, परमेष्ठिप्रधानाः प्रजापतयः सृष्ट्यादौ यथा समवेता आसन् तद्वत् इत्यवैधर्म्यसाम्यादुपमालङ्कारः। प्रजाभ्युदये—प्रजानां—जनानां, प्रजायाः,—सन्तानस्य च, ("प्रजा स्यात् सन्ततौ जने" इत्यमरः) उदये—अभ्युदयाय स्थातुं सत्कर्तुमित्यर्थः, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। समुपतस्थिरे—उपस्थिताः। द्विजातयः,—ब्राह्मणाः, ब्राह्मणोपस्थितिः सर्वोत्पातनाशनत्वात् अतीवमङ्गलप्रदा इति हृदयम्।

(९९) शान्तीति।—शान्त्यर्थमुदकं—जलं शान्त्युदकं फलञ्च, आशीर्वादार्थमिति भावः हस्ते यस्य तथाभूतः। पुरोधाः,—पुरोहितः। [पुरस्पूर्वकात् धाधातोः "पुरसि च" (उ० ४ पा० २३० सू०) इति असि प्रत्यये रूपम्] माङ्गलिककार्यादौ सर्वत्र पुरोहितोपस्थितिः सनातनी पद्धतिरिति भावः।

(१००) पुरातन्यः,—चिरन्तन्यः [तत्र भवेऽर्थे "सायंचिर—" (४।३।२३

अट्टहसन्त आगता बान्धववृद्धाः। (१०१) प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि नश्यतः कलिकालस्य बान्धवकुलानि इव आकुलानि अधावन्त मुक्तानि बन्धनवृन्दानि। (१०२) तत्कालापक्रान्तस्य अधर्मस्य शिबिरश्रेणय इव अलक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्यः। (१०३) विलसदुन्मुखवामनकबधिरवृन्दवेष्टिताः साक्षाज्जातमातृदेवता इव बहुबालकव्याकुला ननृतुः वृद्धधात्र्यः।

---

पा० ) इत्यादिना ल्युट्प्रत्यये मुडागमे तस्य टित्त्वात् ङीपि रूपम् ] स्थितय इव—मर्यादा इव, शिष्टाचारपद्धतय इवेति यावत्। बान्धववृद्धाः,—बान्धवेषु—स्वगोत्रेषु, वृद्धाः,—स्थविराः, चिरन्तनाचारपरिरक्षणशीलत्वात् तेषामिति भावः।

(१०१) प्रलम्बेति।—प्रलम्बेन—लम्बमानेन, क्षौराभावात् इति भावः, श्मश्रुजालेन—कूर्चसमूहेन, जटिलानि—व्याप्ततया निबिडानि, आननानि येषां तानि। बहलेति।—बहलाना—बहुला, मलपङ्कानां—गात्रक्लेदरूपकर्दमानां, कलङ्केन—कृष्णवर्णचिह्नेन, कालः,—कृष्णवर्णः, मलिन इत्यर्थः, कायः,—देहो येषां तानि, स्नानाद्यभावादिति भावः। नश्यतः—पलायमानस्य, आविर्भूतराजदण्डभयादिति भावः। बान्धवकुलानि इव—स्वजनवृन्दानि इव। आकुलानि—चित्तविकारवशात् विह्वलानि इत्यर्थः। मुक्तानि—बन्धनागारात् त्यक्तानि बन्धनवृन्दानि—कारानिरुद्धलोकसङ्घाः, [बन्धननिरुद्धानि वृन्दानि इति विग्रहे शाकपार्थिवादित्वात् उत्तरपदलोपिसमासः], महोत्सवे राज्ञा कारावासिनो मुच्यन्ते इति चिरप्रसिद्धिः।

(१०२) तत्कालेति।—तस्मिन् काले—हर्षजन्मसमये इत्यर्थः, अपक्रान्तस्य—अपसृतस्य, धर्मतः शासितुः नृपस्य भयात् पलायितस्य इत्यर्थः, अधर्मस्य—वेदनिषिद्धकर्मजन्यपापाचारस्य, शिबिरश्रेणय इव—सेनानिवेशस्थानानि इव। लोकेति।—लोकैः,—जनैः, विलुण्ठिताः,—विशेषेण हृतद्रव्या इत्यर्थः विपणिवीथ्यः,—पण्यवीथिका निवहाः, आनन्देन राजाज्ञया लोका राजदैवचरितपुरस्कारा विपणिस्थिता वणिजां विपणिद्रव्याणि धर्षितशिबिरधनानीव लुण्ठितवन्त इत्यर्थः।

(१०३) विलसदिति।—विलसद्भिः,—आनन्देन स्फुरद्भिः, उन्मुखैः,—ऊर्ध्वमुखैः, वामनकानां—खर्वकायानां अन्तर्वंशिकानां, बधिराणाम्—षण्डानां, श्रुतिशक्तिरहितानामित्यर्थः, अन्तःपुरचारिणामिति भावः, वृन्दैः,—समूहैः, वेष्टिताः,—परिवृताः। साक्षात्—मूर्तिमत्यश्च, जातमातृदेवता इव—जातस्य—प्रसूतस्य

( १०४ ) प्रावर्तत च विगतराजकुलस्थितिः, अथ क्षतप्रतीहाराकृतिः, अपनीतविवेकः, निर्दोषान्तःपुरप्रवेशः, समस्वामिपरिजनः, निर्विशेषबालवृद्धः, समानशिष्टाशिष्टजनः, दुर्ज्ञेयमत्तामत्तप्रविभागः, तुल्यकुलयुवतिवेश्याविलासः, प्रनृत्तसकलकटकलोकः, पुत्रजन्मोत्सवो महान्।

धात्र्य मातृदेवता इव—षष्ठीदेव्य इव इत्यर्थः सा च मार्जारवाहिनी बहुबालकपरिवृता मूर्तिकाऽऽगारे स्थाप्यते। बहुभिर्बालकैः—क्रीडार्माहितैः शिशुभिः इति भावः, व्याकुला,—विह्वला, उद्वेजिता इत्यर्थं, युगपद्बहूनामनुरोधे व्यस्ततापातात् इति हृदय, वृद्धधात्र्यः,—स्थविरा उपमातरः नन्तृतु,—नृत्यन्ति स्म।

( १०४ ) प्रावर्तत—प्रारब्ध, प्रादुरभवदित्यर्थं। विगतेति।—विगता—छिन्ना, राजकुलस्य—राजवंशस्य, स्थिति,—नियमः यस्मिन् तथोक्त, कुमारदर्शनार्थं परित प्रजाना पर्याकुलतया स्थितेरिति भावः। अथ क्षतेति।—अथ, क्षता—पातिता, परित्यक्ता इत्यर्थ, प्रतीहाराणा—दौवारिकाणाम्, आकृति,—आकारः, भीषणवेशेन स्थितिरिति यावत यत्र तथाभूत, यद्वा,—अथ क्षता—अवज्ञा, अगणिता इत्यर्थ, कुमारदर्शनार्थिभिरिति भाव, प्रतीहाराणाम् आकृति,—भयङ्करमूर्तिरिति यावत यत्र तथाभूत। अपनीतविवेक,—अपनीतानि—अपसारितानि, वेत्राणि,—दण्डधारिभि, लोकापसारणायेति भाव, वेत्राणि—स्वर्णवेत्रयष्टयः यस्मिन् तथोक्त। निर्दोषेति।—निर्दोष,—दोषरहित, अन्तःपुरे—राज्ञावरोधे, प्रवेश यस्मिन् तथाभूत, अवारितान्तःपुरप्रवेश इत्यर्थ। समेति।—समौ—तुल्यौ, स्वामिपरिजनौ—प्रभुभृत्यौ यस्मिन् तथोक्त अत्र स्वामी, समुचितमुपचरितव्य, अत्र परिजन, तथा नोपचरितव्य इत्येव विचाररहित इति भाव। निर्विशेषेति।—निर्विशेषौ,—विशेषरहितौ, अभिन्नौ इत्यर्थं, बालौ,—शिशव, वृद्धा,—स्थविराश्च यस्मिन् तथाभूत, बालवृद्धयो परस्पर मिलित्वा तुल्यभावेन नृत्यकरणादिति भाव। समानेति।—समाना,—तुल्यप्रकारा, शिष्टा,—मान्या सन्त, अशिष्टा,—उद्धता मूर्खाश्च, जना यस्मिन् तथोक्त। दुर्ज्ञेयेति।—दुर्ज्ञेय,—क पानोन्मत्त, को वा कुमारजन्मना हृष्ट इति विभिन्न निर्णेतुमशक्य, पानेन आनन्देन च विवेकविच्युतेरुभयत्र तुल्यत्वादिति भाव, मत्ताना—उन्मत्तानाम्, अमत्ताना—प्रकृतिस्थानाश्च जनाना प्रविभाग,—प्रभेद यस्मिन् तथाभूत, सर्वेषामेव तत्र प्रमत्तत्वादिति भाव। तुल्येति।—तुल्य,—सम, कुलयुवतीना—कुलाङ्गनाना, वेश्याना—वारनारीणाञ्च, विलास,—विहार

( १०५ ) अपरेद्युः आरभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानि इव आवर्जितानि, असुरविवराणि इव अपावृतानि, नारायणावरोधानि इव प्रचलितानि, अप्सरसामिव महीमवतीर्णानि कुलानि, ( १०६ ) परिजनेन पृथुकरण्डपरिगृहीता' स्नानीयचूर्णावकीर्णकुसुमाः सुमनःस्रजः, स्फटिकशिलाशकलशुक्ल-

यस्मिन् तदीशे, कुमाराङ्गना विरजाश्च परस्परं मिलित्वैव समसाहेन विहरन्ति स्म, सर्वासामेव तदानीं निर्भरानन्दसन्दोहविमुग्धत्वादिति भावः। प्रवृत्तेति।—प्रकर्षेण वृत्ताः—नर्त्तनरताः, सकम्पा कटकलोका,—शिथिरस्वभवाः यस्मिन् तथाभूतः।

( १०५ ) अपरेद्युः इत्यादि।—"अपरेद्युः" [ "सद्यः—" ( ५।३।२२ पा० ) इत्यादिना निपातनात् सिद्धम् ] इत्यस्य "सामन्तानां पुरस्तादनामि आजग्मुः" इत्युपरि आन्वयः। तानि एव विशिनष्टि,स्त्रीराज्यानीव इत्यादिभिः।—आवर्जितानि—आकृष्टानि। स्त्रीराज्यानि इव—कुमारदर्शनार्थमेकत्र सङ्गता, स्त्रीसमूहा इत्यर्थः, एवमादिषु प्रजातस्य परात्मनः सम्भावनोदयात् उत्प्रेक्षालङ्कारः। असुरविवराणि इव—रसातलानि इव, अपावृतानि—उद्घाटितानि, उज्ज्वलत्वादिति भावः। नारायणावरोधानि इव—कृष्णान्तःपुरिका जना इव, तेषां सातिशयगौरववत्त्वात् षोडशसहस्रसङ्ख्यात्वाच्चेति भावः, [ अत्र अवरुध्यन्ते या ता अवरोधाः, इति अर्थेऽपि सति अवरोधशब्दस्य नियतपुंलिङ्गता, तथा हि मेदिनी,—"अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति, एवञ्च कोषशास्त्रविघटनात् विधाविरुद्धत्वदोषः स्थितः, अपि अपि च लिङ्गादिशास्त्र नियतपुंस्त्वानुशिष्टत्वात् व्याकरणादिलक्षणहीनत्वेन वा च्युतसंस्कारत्वमूह्यम्। अवरोधानां समूहः इत्यर्थे "तस्य समूहः" ( ४।२।३७ पा० ) इति सूत्रेण समूहार्थे अणि कृते अवरोधानि—अवरोधानां कुलानि इत्यपरत्वे तु कौषत्व कथञ्चित् सम्पादनीयमिति, तथा च नागहिण्डदीपावसर इति विवेक ]। महीं—पृथ्वीम्, अवतीर्णानि—आगतानि, अप्सरसः [ अद्भ्यः सरन्ति इत्यर्थे "अपपूर्वकात् सृधातोः "अप्सरा" ( उ० ४ पा० २३६ सू० ) इति असिप्रत्यये रूपम् ] कुलानीव—वृन्दानीव। अप्सरसामिव सुन्दरीणां नारीणामिकत्र सङ्गतत्वादिति भावः।

( १०६ ) परिजनेन—दासदासीवर्गेण। पृथ्विति।—पृथुभिः,—स्थूलैः, महद्भिर्वा, करण्डैः,—सम्पुटकैः, भाजनविशेषैः इत्यर्थः, परिगृहीताः,—सम्भृतमानीता इत्यर्थः। स्नानीयेति।—स्नानीयं—स्नानोपकरणं, चूर्णं—चोदं, सुगन्धद्रव्यविशेषचूर्णमिति भावः, तेन अवकीर्णं—युक्तं, व्याप्तं वा, कुसुमं यासां ताः, सुमनःस्रजः,—पुष्पमाल्यानि,

कर्पूरखण्डपूरिताः पात्री, (१०७) कुङ्कुमाधिवासभाञ्जि भाजनानि च मणिमयानि, सहकारतैलतिम्यत्तनुखदिरकेसरजालजटिलानि चन्दनधवलपूगफलफालीदन्तुरदन्तशफरुकाणि, (१०८) गुञ्जन्मधुकरकुलपीयमानपारिजातपरिमलानि पाटलानि पाटलकानि च, सिन्दूरपात्राणि च, पिष्टातकपात्राणि च, बाललतालम्बमानविटकवीटकाश्च ताम्बूलवृद्धान् बिभ्राणेन

---

"बिभ्राणेन" इत्यनेनान्वयः, एवमुत्तरत्र। स्फटिकेति।—स्फटिकं—तदाख्य, शिलाशकलं—प्रस्तरखण्डः, तद्वत् शकलेन—खण्डेन, कर्पूरखण्डेन पूरिताः,—पात्र्यो, पात्री,—कर्पूरभाजनानि इत्यर्थः।

(१०७) कुङ्कुमेति।—कुङ्कुमाधिवासः—काश्मीरजोऽन्यत्, अधिवासः,—अधिवासनद्रव्याणि सुगन्धिद्रव्याणि इत्यर्थः तानि भजन्ते इति तथोक्तानि, तत्पूरितानि इत्यर्थः। मणिमयानि—रत्ननिर्मितानि। सहकारेति।—सहकारस्य—अतिसौरभचूतफलस्य तैलेन—स्नेहविशेषेण तिम्यत—सिक्त तनु—अत्यल्प खदिरकेसर—खदिरसार, यद्वा—खदिर केसरस्य—किञ्जल्कस्य, तस्य जालेन—समूहेन, जटिलानि—युक्तानि, सम्भृतानि इत्यर्थः। चन्दनेति।—चन्दनवत् धवलानि—शुभ्राणि पूगफलानि—गुवाकफलानि तेषां फालीभः,—शकलैः, दन्तुराणि—सञ्जातदन्तानीव लक्ष्यमाणानि, दन्तशफरुकाणि—गजदन्तनिर्मितभाजनविशेषाः इत्यर्थः, [शफरोपपदात् धातोः "...गादयश्च" (उ० १ पा० ३८ सू०) इति कुप्रत्यये स्वार्थे कनि रूपम्]।

(१०८) गुञ्जदिति।—गुञ्जद्,—रणद्, मधुकरकुलैः,—भ्रमरवृन्दैः पीयमान—आस्वाद्यमान आघ्रायमाण इत्यर्थः, पारिजातानां—तत्पुष्पाणामित्यर्थः, तस्य महाप्रभावशालित्वात् देवानां सम्मतत्वाच्च, तेन पारिजातपुष्पाणि सुलभानीति सूचितम्, यद्वा—पारिजातानां—पारिभद्राख्यपुष्पविशेषाणां, परिमलः—अतिमनोहरः गन्धः येषां तानि। पाटलानि—श्वेतरक्तवर्णानि पाटलकानि—पात्रविशेषान्। [पाटलकानि इत्यत्र "पाटलकानि" इति पाठान्तरम्]। पिष्टातकपात्राणि—पिष्टातक,—पटवासक, वस्त्रवासक सुगन्धिद्रव्यचूर्णमित्यर्थः, ("पिष्टात पटवासक" इत्यमरः) तस्य भाजनानि—भाजनानि। बालेति।—बाला—अभिनवा, लता ताम्बूलवल्ली तस्यां लम्बमानानि—प्रसरन्ति इत्यर्थः, विटकवीटकानि—पत्रयुक्तताम्बूलदलैः क्रियमाणाः स्वक्रविशेषाः तेषु तान्। ताम्बूलवृद्धान्—पर्णवल्लीरित्यर्थः। बिभ्राणेन—दधता, [बिभर्ति

(१०९) अनुगम्यमानचरणानि, कुट्टनरणितमणिनूपुरमुखरितदिङ्मुखानि, नृत्यन्ति, राजकुलम् आगच्छन्ति, समन्तात् सामन्तान्तःपुरसहस्राणि अदृश्यन्त।

(११०) शनैः शनैः व्यजृम्भत च क्वचित् नृत्तानुचितचिरन्तनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः, क्वचित्

(१११) अन्तःस्थितक्षितिपालापेक्षितचौववृद्धदासीसमाकृष्य-

---

"ताच्छील्य—" (३।२।१२९ पा०) इत्यादिना चय अर्थे कर्तरि चानश् रूपम्] परिजनेन इत्यस्य विशेषणम्।

(१०९) अनुगम्यमानेति।—अनुगम्यमाना,—सेव्यमाना, चरणा येषां तानि सेव्यमानचरणानि इत्यर्थः। कुट्टनेति।—कुट्टनेन—दलनेन पदविक्षेपणेन इति यावत् [“अनुगम्यमानचरणानि कुट्टन—” इत्यत्र “अनुगम्यमानानि, चरणनिकुट्टन—” इति पाठे—पूर्वोक्तविशेषणविशिष्टेन परिजनेन अनुगम्यमानानि। चरणौ,—पादौ, निकुट्टनेन—भूपातनेन इत्यर्थः] रणितैः—ध्वनितैः, मणिनूपुरैः—रत्नमयमञ्जीरैः मुखरितानि—ध्वनितानि दिशां मुखानि यैस्तानि। नृत्यन्ति—क्रियमाणनर्तनानि इवेति प्रतीयमानोत्प्रेक्षा, यद्वा,—स्वदिग्गात्रविक्षेपैरेव विस्तारितम् अपूर्वसुखोदयात् अतिशयाह्लादकारीणि इत्यर्थः। राजकुलम्—राज्ञः—तारापीडस्य गृहम् आगच्छन्ति—आयान्ति कुमारदर्शनार्थमिति भावः। समन्तात्—चतुर्दिक्षु। सामन्तेति।—सामन्तानाम्—अधीनभूपतीनाम्, अन्तःपुराणि—अवरोधनानि [“ऋक्पू—” (५।४।७४ पा०) इत्यादिना समासान्ते अचि रूपम्] तेषां सहस्राणि—समूहाः। अर्घार्हणार्थं सामन्तावरोधानां माङ्गल्यपूर्णोचितद्रव्यसमारब्धानां राजभवनागमनौत्सुक्यं यथायथं प्रतिपादितमिति।

(११०) “शनैः शनैः व्यजृम्भत” इत्यस्य “उत्सवामोदः” इत्यनेनान्वयः। शनैः शनैः—क्रमेण। व्यजृम्भत—प्रावर्तत। नृत्तेति।—नृत्ते—नर्तने, अनुचितः,—अयोग्यः अनभ्यस्त इत्यर्थः, चिरन्तनशालीनः—चिरलज्जाशीलः चिरविनीतो वा, [शालाप्रवेशनम् “तदर्हति” (५।१।६३ पा०) इति खञि रूपम्] यः कुलपुत्रकलोकः,—सत्कुलजातः सुजनवर्गसमवायः, तस्य लास्येन—नर्तनेन, निरतिशयानन्दात् एतादृशैः एतेनापि नर्तितं लज्जायाः त्यक्त इति भावः, प्रथितः,—प्रकाशितः, पार्थिवस्य—राज्ञः, पार्थिवे—राज्ञि वा अनुरागः,—प्रीतिः यस्मिन् तथाविधः।

(१११) अन्तरिति।—अन्तःस्थितेन—अन्तरीभूतेन इत्यर्थः, स्वगृहजन्मनि

माणराजवल्लभः, क्वचित् (११२) मत्तकटककुट्टनीकण्ठलग्नवृद्धार्य्यसामन्तनृत्तनिर्भरहसितनरपतिः, क्वचित् (११३) क्षितिपाज्ञिसंज्ञादिष्ट दुष्टदासेरकगीत सूच्यमान सचिवचौर्य्यरतप्रपञ्चः, क्वचित् (११४) मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्रव्रजितजनितजनहासः, क्वचित् (११५) अन्योऽन्यनिर्भरस्पर्द्धोद्धुर-

---

क्षुद्रदासीनामपि प्रमोदातिशय्यदर्शनादिति भावः क्षितिपालेन—राज्ञा, अवेक्षिता,—निरीक्षिता, यद्वा,—अपेक्षिता,—उपेक्षिता इत्यर्थः, दृष्टेनापि अदृष्टेनैव, महताम् अप्रतिकूलस्वभावत्वात् इति भावः, क्षीबाभिः,—मद्यपानेन मत्ताभिः, चेटीभिः,—इतरजातीयाभिः, दासीभिः—परिचारिकाभिः, समाकृष्यमाणः,—आक्षिप्यमाणः, राजवल्लभः,—राज्ञः प्रियः इत्यर्थः। यत्र तादृशः।

(११२) मत्तेति।—मत्ताना—मधुपानविह्वलानां, कटककुट्टनीनां—राजधानीस्थितव्यभिचारिणीनां, ("कटकोऽस्त्री नितम्बोऽद्रेः ०। राजधानी वलययोरपि" इति मेदिनी) कण्ठेषु—गलेषु लग्नाः,—ससक्ताः, ये वृद्धाः,—स्थविराः, आर्य्याः,—साधवः, सामन्ताः,—अधीश्वराः भूपतयः, तेषां नृत्तेन—अविज्ञाताङ्गविक्षेपरूपनर्त्तनेन इत्यर्थः, निर्भरम्—अत्यन्तं हसितः,—कृतहासः, नरपतिः,—सम्राट् यत्र तथाभूतः, विलासिनीभिः सह राजवृद्धानां नर्त्तनं हास्यरसानुकूलमेव इति भावः।

(११३) क्षितिपेति।—क्षितिपस्य—राज्ञः, अक्षिसंज्ञया—नेत्रेङ्गितेन आदिष्टः,—आज्ञप्तः दुष्टः,—दुर्जनः, यो दास्याः अपत्यं दासेरकः,—दासीपुत्र इत्यर्थः, ["क्षुद्राभ्यो वा" (४।१।१३१ पा०) इति पक्षे ढ्रकि तत कनि रूपम्] षष्ठी वा, [ तस्येदमित्यर्थे सम्बन्धे इत्यर्थः, अन्यथा सूच्यमानत्वानापत्तेः ] तस्य गीतेन—गानेन, सूच्यमानः,—प्रकाश्यमानः, सचिवानाम—अमात्यानां, चौर्य्येण—गोपनेनेत्यर्थः, रतप्रपञ्चः,—निधुवनविहारविलसितं यत्र तथोक्तः।

(११४) मदोत्कटेति।—मदोत्कटाभिः,—मदमत्ताभिः, कुटहारिकाभिः,—कुटं—घटं, कुम्भमिति यावत् ("कुट कोटे पुमानस्त्री घटे स्त्री पत्तयोर्गृहे" इति मेदिनी) हरन्ति वहन्ति या तथोक्ताभिः, कुम्भयोगेन जलवाहिनीभिः दासीभिः, परिष्वज्यमानः,—आलिङ्ग्यमानाः गौरिव सकुटपुरुषार्थमिति भावः, यो जरन्,—स्थविरः, प्रव्रजितः,—सन्न्यासिन तेन जनितः,—उत्पादितः, जनानां हासो यस्मिन् सः।

(११५) अन्योऽन्येति।—अन्योऽन्यस्मिन्—परस्परं, निर्भरस्पर्द्धा—अत्यन्तमात्सर्यम्, आत्यन्तिकी ईर्ष्येत्यर्थः, तया उद्धुराः,—दृप्ताः, उन्मत्तप्राया इत्यर्थः, उच्छृङ्खला इति,

चरचारणचरणक्षोभं चचमे चमा। (१२०) क्षितिपाल-कुमारकाणां खेलताम् अन्योन्यास्फालैः आभरणेषु मुक्ताफलानि फेलुः। (१२१) सिन्दूररेणुना पुनरुत्पन्नहिरण्यगर्भगर्भशोणित-शोणायम् इव ब्रह्माण्डकपालम् अभवत्। (१२२) पटवास-पांशुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभ-स्तलम्। (१२३) विप्रकीर्यमाणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमलकिञ्जल्करजोराजिरञ्जिता इव

---

"तालावचर" इति ख्याते सङ्गीताङ्गीभूतनर्तनविशेषे वा, यदुक्तम्,—"स्फुटितालिकामतैर्युक्तं चारणजनस्य क्षोभिरूपणम्। तत्कालस्तालिकयाराजाशिष्टापद्धसुन्मालिकका॥" चचचर्नीति तालावचरा, ताडयन्ता चारयन्ता—कुशीलवाना, नृत्यता-मिति भाव, चरणक्षोभ—पदनिक्षेपजनिताघात, यथमपि—केनापि प्रकारेण, एतेन बहुबाहुल्यमुपेक्ष्यते। चचमे—चेमे। चमा—पृथ्वी।

(१२०) क्षितिपालकुमारकाणा—सामन्तकुमाराणाम्। खेलता—क्रीडताम्। अन्योऽन्यास्फालै,—परस्पराक्रन्दनै, आभरणेषु—अलङ्कारेषु मध्ये, मुक्ताफलानि—मौक्तिकानि, फेलु—विस्रस्तानि भग्नु, निभिदुर्वा।

(१२१) सिन्दूरेति।—सिन्दूररेणुना—सिन्दूरचूर्णेन। पुनरिति।—पुन-रुत्पन्नस्य—द्वितीयवार समुत्पन्नस्य हिरण्यगर्भस्य—प्रजापते ब्रह्मण, इत्यस्य चेति भाव, गर्भशोणितेन—गर्भाशि धत्थजनितमहत्तरलोहितेन, शोणा,—रक्ता, आया,—दिश यस्य तथोक्तम्। ब्रह्माण्डकपाल—पृथ्वीतलमित्यर्थ।

(१२२) पटवासेति।—पटवासाना—वस्त्रवासकगन्धद्रव्यविशेषाणा, पांशुपटलेन—रजःसमूहेन, विक्षिप्यमाणेनेति भाव, यद्वा,—पटवासा,—वस्त्रगृहा एव पांसव,—धूसरविशेषा, धावल्यादिति भाव, तेषा पटलेन। प्रकटितेति।—प्रकटित—दर्शित इव, मन्दाकिन्या—स्वर्गगङ्गाया, सैकतसहस्र—वालुकामयभूमिसमूह यस्मिन् तथोक्तमिव। नभस्तलम्—अन्तरीक्षम्, बहलोत्क्षिप्तगन्धचूर्णधाराबाहुल्यादेवमुत्प्रेक्षितम्।

(१२३) विप्रकीर्यमाणेति।—विप्रकीर्यमाणै,—प्रसार्यमाणै, पिष्टातकानां—पटवासकानां, परागै,—रेणुभि पिञ्जरिता,—रञ्जिता इत्यर्थ, आतपा—धर्मयूखा येषु तथाभूता। भुवनेति।—भुवनस्य—जगत, क्षोभेण—सञ्चलनेन, आनन्दजनितेनेति भाव, विशीर्ण—विदलित, यत् पितामहकमल—ब्रह्मकमल

दिशुर्दिवसाः। (१२४) संघट्टविघटितहारपतितमुक्ताफलपटलेषु चस्खाल लोकः।

(१२५) स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुना (१२६) झणझणायमानझल्लरीकेण ताड्यमानतन्त्रीपटहिकेन (१२७) वाद्यमानानुत्तालालाबूवीणेन काल-

---

प्रभाव सम्पादकारणीभूत पद्मभिराग, तस्य किञ्जल्का,—केसरा, तेषु ये रजसः,—परागाणां, राजयः,—समूहाः, तैः रञ्जिता इव। रेणु —धूमभिरे।

(१२४) संघट्टेति।—संघट्टेन—परस्परसंघर्षेण, लोकानाम् परिमिलितत्वादिति भावः, विघटितेभ्यः,—छिन्नेभ्यः हारेभ्यः पतितानि यानि मुक्ताफलानि—मौक्तिकानि, पटलानि—समूहाः तेषु, चस्खाल—पपात, पिच्छिलत्वात् उन्नतानततात्‌ तेषामिति भावः।

(१२५) स्थानस्थानेषु—क्वचित् क्वचित् प्रदेशेषु, स्थान—स्थिति, मर्यादा च, तत्प्रकारकेषु इत्यर्थः, अन्यथा "प्रकारे—" (८।१।१२ पा०) इत्यादिना न द्विरुक्तौ कर्मधारयवद्भाव इति स्थानेषु स्थानेषु वाक्यमेव स्यात् ], यद्वा,—स्थानानां—सुपरिज्ञानार्थमाश्रयाणां, स्थानानि—प्रधानमण्डपादीनि तेषु इति विग्रहः, [ "द्वन्द्वाख्या षष्ठी समस्यत इति वाच्यम्" (वा०) इति समासविधानात् ]। "स्थानस्थानेषु" इत्यस्य "पद्मविलासिन्यः प्रानृत्यन्" इत्युत्तरेणान्वयः, ता विशिनष्टि—कालेत्यादिनानुगम्यमाना इत्यादिभिः।—मास्फाल्यमानेति विशिनष्टि, मन्देत्यादिभिः।—मन्द मन्दम—मृदुशीघ्रम्, आस्फाल्यमानः,—ताड्यमानः, आलिङ्ग्यकः,—मुरजवाद्यभेदः यस्मिन् तेन, ("मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः" इत्यमरः)। शिञ्जानेति।—शिञ्जानः,—रणन् [ पदान्तरात्मनेपदिन शिञ्जिधातोः "लटः—" (३।२।१२४ पा०) इत्यादिना शानचि रूपम् ] मञ्जुः,—मनोज्ञः, वेणुः,—वंशीवाद्यभेदः यत्र नर्तकेन।

(१२६) झणेति।—झणझणायमाना—झणझणेति शब्दं कुर्वाणा झल्लरी—वाद्यभेदः यत्र तादृशेन। ताड्यमानेति।—ताड्यमाना—वाद्यमाना, तन्त्रीपटहिका—पटहवाद्यविशेषः यत्र तथोक्तेन।

(१२७) वाद्यमानेति।—वाद्यमाना—वाद्यमाना, अनुत्ताना—अनुद्धता, अलाबूवीणा—अलाबूनिर्मिता वीणा यस्मिन् तेन। कालेति।—का-

कांस्यकोशीक्वणितकाहलेन (१२८) समकालदीयमानानुत्ताल-तालकेन आतोद्यवाद्येन अनुगम्यमाना, पदे पदे झणझणित-भूषणरवैः अपि सहृदयैः इव अनुवर्त्तमानताललयाः, कोकिला इव (१२९) मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतानि अश्लीलरासकपदानि गायन्त्यः, समुण्डमालिकाः, सकर्णपल्लवाः, सचन्दनतिलकाः, समुच्छ्रिताभिर्वलयावलीबाहुलताभिः

---

मधुरस्वना, या कांस्यकोशी—करतालिका, तस्याः क्वणितेन—रणितेन सह काहला—महाशब्दवाद्यभाण्डभेदः, यद्वा—कांस्यकोशी—"कांसी" इति प्रसिद्ध कांस्यनिर्मितवाद्य-भेदः, तया सह क्वणिता काहला—वाद्यभाण्डविशेषः यत्र तथाविधेन, ("काहला वाद्यभाण्डस्य भेदे चास्फुटवाचि" इति मेदिनी)।

(१२८) समेति।—समकालं—युगपत्, दीयमानः—सम्पाद्यमानः इत्यर्थः, अनुत्तालः—अनुत्कटः, तालः—स्वरविशेषः, त्रिमात्रादिकालक्रियामानं वा यत्र तेन, ["तालकेन" इत्यत्र "तानकेन" इति पाठे,—जनपदाश्रयविशेषेण गानाङ्गस्वरभेदेन इत्यर्थः] आतोद्यवाद्येन—"ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्॥" इत्यमरोक्तेन वाद्यविशेषेण, अनुगम्यमाना—अनुस्रियमाणा। पदे पदे—प्रतिपदक्षेपम्, झणझणितभूषणरवैः—झणझणायमानालङ्करणध्वनिभिः। सहृदयैरिव—रसग्राहिभिः सामाजिकैरिव। अनुवर्त्तमानेति।—अनुवर्त्तमानौ—अनुसरन्तौ, ताललयौ—यथा-कामं दीयमानमानसाम्यरूपौ यासां ताः ("तालः कालक्रियामानं लयः साम्यमथा-स्त्रियाम्" इत्यमरः) तत्र हस्तेन अङ्गुल्या वा आकुञ्चनप्रसारणपर्यन्तक्रियया कालस्य परिमाणं मानं, कालक्रियोत्थं वादित्रादिक्रियायाः तथाविधं मानं ताल उच्यते। लयः पुनः गीतवाद्यपादन्यासादीनां क्रियाकालयोश्च परस्परं समतारूपः इत्यवगन्तव्यम्।

(१२९) मदेति।—मदेन—मद्यपानजनितेन उल्लासेन, अथवा—मदात्—हर्षात्, कला—मधुरास्फुटा काकली—सूक्ष्ममधुरध्वनिः, ("काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलः" इत्यमरः) तया कोमलः—मृदुमन्दः, पेशलमित्यर्थः, मनोज्ञमिति यावत् तद्रूपया तथा आलपन्तीति तथोक्ताः। विटानां—लम्पटानां, विलासिनामित्यर्थः, कर्णामृतानि—श्रुतिसुखानीत्यर्थः। अश्लीलेति।—अश्लीलानि—ग्राम्याणि, लज्जावहानि इति यावत्, रासयन्ति रासकानि—शृङ्गाररसोद्दीपनानीति भावः, पदानि—वस्तूनि, गायन्त्यः—उच्चारयन्त्यः। समुण्डमालिकाः—सपुष्प-

बाहुलतिकाभिः सवितारम् इव आलिङ्गयन्त्यः, कुङ्कुमप्रसृष्टि-रुचिरकायाः (१२०) काश्मीरकिशोर्य्य इव वलन्त्यः, नितम्बबिम्ब-लम्बिविकटकुरुण्टकशेखराः प्रदीप्ता इव रागाग्निना, सिन्दूर-च्छटाच्छुरितमुखमुद्राः शासनपट्टपङ्क्तय इव अप्रतिहतशासनस्य

कारमिरलः। समुत्क्षिप्ताभि,—समुत्थिताभि, वलयावलीवाचालाभि,—वलयराजि झणत्कारवतीभि इत्यर्थ, बाहुलतिकाभि,—भुजवल्लीभि, सवितार—सूर्यम्, आलिङ्गयन्त्य इव—आश्लिष्यन्त्य इव, [आङ्पूर्वकात् लिङ्गयते चौरादिकात् शतरि ङीपि रूपम्] नर्तनकाले बाहुद्वय विक्षिप्तिर्यथावत् ऊर्ध्वे प्रसार्य च गमनात् सूर्यालिङ्गन कल्पनेयमुत्प्रेक्षा। कुङ्कुमेति।—कुङ्कुमेन प्रसृष्टि,—प्रमार्जनम्, उद्वर्तन मित्यर्थ, उद्वर्तनमिति भाव, एतेन,—सौन्दर्यवर्द्धनाभिलाषात्, अथवा,—कुङ्कुमद्रवेषु लोठनादिति भाव, तया रुचिर,—मनोज्ञ, काय,—देह यासां ता।

(१२०) काश्मीरकिशोर्य्य इव—कुङ्कुमनिर्मिता कुमार्य इव, काश्मीर-देशीया कुमार्य इव वा, [कमते शब्दार्थकात् "कमेर्मुट् च" (उ० ४ पा० १२ सू०) इति ईरनि मुडागमे काश्मीर इति, तत्र भवा ता इति ज्ञेयम्] वलन्त्य,—चलन्त्य। नितम्बेति।—नितम्बबिम्बेषु—नितम्बभागेषु, लम्बिन,—लम्बमाना, विकटा,—आयता इत्यर्थ, कुरुण्टकशेखरा,—रक्तपुष्पविशिष्टझिण्ट्य इत्यर्थ यासां तथोक्ता, ["कुरुण्टक" इत्यत्र "कुरबक" इति पाठोऽपि च पठ्यते। प्रथम पाठे—कुपूर्वात् रुण्टते अचि, द्वितीये,—कुरधातो अकप्रत्यये सिद्धि]। प्रदीप्ता इव—प्रज्वलिता इव, रागाग्निना—अनुरागवह्निना, रक्तकुरुण्टकशेखराणां रक्तत्वादिति भाव। सिन्दूरेति।—सिन्दूरच्छटाभि,—सिन्दूरतिलकरागै, इत्यर्थ, छुरिता—रञ्जिता, मुखमुद्रा,—मुखशोभा, ललाटस्थोमस्तादयो वा, मुखान्येव मुद्रा इति वा यासां ता, मुद्राविशेषाणां सिन्दूरेण रञ्जितत्व लोके दृश्यते, अथवा,—सिन्दूरच्छटाभि,—सिन्दूरप्रभाभि, छुरिता मुखे—अग्रभागे, मुद्रा,—प्रत्ययोत्पादकचिह्नविशेषा यासां ता, शासनपट्टानामग्रभागेऽपि सिन्दूराङ्किता मुद्रा मुद्राङ्के इति लोकव्यवहार। शासनपट्टपङ्क्तय इव—शासनपट्टा,—नियोगपत्राणि दानपत्राणि वा, "सनन्दपत्र" इति भाषया प्रसिद्धा, तेषां पङ्क्तय इव—राजय इव। अत्र बहुवचनेन बहुनियुक्तविविधशासनपट्टविद्धि प्रतिचण प्रतिस्थान लिखद्भि शासितृ अप्रतिहतमहाराजस्य आज्ञाभङ्ग. माय, यथा न कैश्चिदपि शक्य, तथा,

कन्दर्पस्य,(१३१) मुष्टिप्रकीर्य्यमाणकर्पूरपटवासपांशुला मनोरथसञ्चरणरथ्या इव यौवनस्य, (१३२) उद्दामकुसुमदामताडिततरुणजनाः प्रतीहार्य्य इव तरुणमहोत्सवस्य, प्रचलत्पल्लवकुण्डला ललन्त्यो लता इव मदनचन्दनद्रुमस्य,(१३३) ललितपदहंसकरवमुखराः समुल्लसन्त्यो वीचय इव शृङ्गाररसस्य,(१३४) वाच्यावाच्यविवेकशून्या बालक्रीडा इव सौभाग्यस्य, घनपटहरवोत्कटकिल-

---

मन्मथस्य राज्ञः शासनपरभूता ता इहा सर्वे एव दर्शकाः कन्दर्पवशीभूता तच्छासन लोकाः इति अवगम्यते । अभिनवकृतस्य—अभ्यागतस्य ।

(१३१) मुष्टीति ।—मुष्टिभिः,—बद्धकरैः प्रकीर्य्यमाणैः,—प्रक्षिप्यमाणैः, विलासिभिरिति भावः कर्पूरपटवासैः—कर्पूरबहुलसुगन्धिचूर्णैरित्यर्थः, पांशुला,—धूल्याभिराहता इत्यर्थः । मनोरथेति ।—मनोरथेन—स्वेच्छया, सञ्चरणं—भ्रमणं, तस्य रथ्या इव—पन्थान इव, यौवनस्य—तारुण्यस्य यथेच्छसम्भोगयौवनशालिन्य इति भावः, रथ्या अपि रथ्यासु सञ्चरणात् पांशुलास्ता भवन्ति ।

(१३२) उद्दामेति ।—उद्दामैः—उत्कटैः, विपुलैरित्यर्थः, कुसुमदामभिः,—पुष्पमाल्यैः ताडिताः,—आहताः तरुणजनाः,—युवजना याभिः तथोक्ताः, तरुणमहोत्सवस्य—तरुणानां—यूनां, महोत्सवः तस्य प्रतीहार्य्य इव—रक्षिण्य इव स्वयं प्रतीहार्य्योऽपि महोत्सवस्थलं जनान् ताडयन्ति । प्रचलत्पल्लवकुण्डला,—प्रचलन्ति —नृत्यवेगात् आन्दोल्यमानानीत्यर्थः पल्लवानि—किसलया एव, कुण्डलानि—कर्णभूषणानि यासाम्,—पल्लवानि कुण्डलानीव यासां ताः, अत एव ललन्त्यः,—स्फुरन्त्यः, [“ललन्त्य” इत्यत्र ‘लसन्त्य” इति पाठोऽपि तु दृश्यते ] लता इव—व्रतत्य इव। मदनचन्दनद्रुमस्य—मदनः,—काम एव, चन्दनद्रुमः —चन्दनतरुः तस्य ।

(१३३) ललितेति ।—ललितानि—रमणीयानि, पदानि—चरणानि, तेषु हंसकाः —नूपुराः, ( पादाङ्गदं तुलाकोटिमञ्जीरौ नूपुरोऽस्त्रियाम् । हंसकः पादकटकः” इत्यमरः ) शुद्रहंसाश्च, [ अन्यार्थे कनप्रत्ययः ] तेषां रवः—ध्वानम्, मुखराः,—शब्दिताः, यद्वा —ललितानि पदानि यासां तासु ताः हंसकरवमुखराश्च तथाभूताः । समुल्लसन्त्यः,—समुल्लासमानाः । वीचय इव—तरङ्गा इव । शृङ्गाररसस्य—प्रधानोज्ज्वलरसस्य, रसस्य—जलस्य च ।

(१३४) वाच्येति ।—वाच्यं—वक्तव्यम् अवाच्यम्—अवक्तव्यं, तयोर्विवेकः—विचारः, शून्याः,—रहिताः, यथाकामं व्याहारिण्य इत्यर्थः । बालक्रीडा इव—भाग्-

गात्रयष्टयः केतक्य इव कुसुमधूलिमुद्गिरन्त्यः, कमलिन्य इव दिवसमुत्फुल्लाननाः, कुमुदिन्य इव रात्रावनुपजातनिद्राः, (१३५) आविष्टा इव नरेन्द्रवृन्दपरिवृताः, प्रीतय इव हृदयमपहरन्त्यः, गीतय इव रागमुद्दीपयन्त्यः, पुष्टय इव आनन्दमुत्पादयन्त्यः, मदमपि मदयन्त्य इव, रागमपि रञ्जयन्त्य इव, आनन्दमपि आनन्दयन्त्य

---

निकावबलामिव, अन्यत्र—बालाना—शिशूना, क्रीडा—खेला, ("क्रीडा केलिपरीहासे स्यात् विलासवल्लभयोरपि" इति मेदिनी), नवाभ्युदयमागच्छन् दरिद्र अविवेकी यथा सौभाग्यमदेन यथेच्छव्यवहार शिष्टाशिष्टजनविषयकविवेकविच्युत बाल्याशाव्यवहारयुक्तो भवति, तथैव सा पण्ययोषितोऽपि नृत्यकालेऽभूवन् इत्याशय। सौभाग्यस्य—शुभादृष्टविलासस्य। घनेनेति।—घनेन—गभीरेण, पटहस्य—वाद्यविशेषस्य, नृत्यसमकाल ताड्यमानस्येत्यर्थं, रवेण—ध्वनिना, अन्यत्र,—घन,—मेघ एव, पटह,—वाद्यविशेष तस्य ध्वनिना—रवेण, उत्कण्ठिता,—उद्गत लीलाहर्षा, सहसा वाद्यध्वनिश्रवणादिति भाव, अन्यत्र,—प्रकटितकण्टका गात्रयष्टय,—अङ्गलता यासा तथोक्ता, अन्यत्र,—शाखापीव यष्टय,—काण्डा, यासा ता। केतक्य इव—केतकलता इव। कुसुमधूलि—पुष्परागम उद्गिरन्त्य,—उद्गिरन्त्य इत्यर्थं। दिवस—दिन व्याप्य, उत्फुल्लानना,—उत्फुल्लानि—प्रफुल्लानि, आननानि—मुखानि, प्रियवयस्याभि सह हृद्यनायकविषयकालापेन इति भाव यासा ता, अन्यत्र,—विकसिता, कमलिनीना दिवाविकासित्वात्। अनुपजातनिद्रा,—न उपजाता—उपगता, कामकलाभिमध्यात्, राजसभादौ नर्तनादिविलासव्यापारव्यस्तत्वात् वा इति भाव, निद्रा—स्वाप यासा ता, अनिमीलन्त्यश्च, कुमुदिनीना रात्रिविकासित्वादिति भाव।

(१३५) आविष्टा इव—अधिष्ठिता इव, भूतादिभिरिति शेष। नरेन्द्रेति।—नरेन्द्राणा—राज्ञा, भूतवैद्यानाञ्च, भूतापसारणमन्त्रविदामित्यर्थं, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुरुषम्" इति मेदिनी, अत्र चकारग्रहणात् भूतवैद्यादय तदर्थका ज्ञेया) वृन्दे,—समूहै, परिवृता—वेष्टिता, पिशाचोपहता जना यथा भूतवैद्यपरिवेष्टिता भवन्ति तथा पण्ययोषितोऽपि राजवृन्दपरिवृता आसन्निति भाव, इति श्लेषमूलसाम्यादुपमाऽलङ्कार। हृदयमपहरन्त्य,—मनोहारिण्य। राग—वासनाविशेषम्, शुभदर्शनस्पृहामिति यावत्, अन्यत्र—गान्धारादिकञ्च, उद्दीपयन्त्य,—उत्तेजयन्त्य। पुष्टय

इव, नृत्यमपि नर्त्तयमाना इव, उत्सवमपि उत्सुकयन्त्य इव, (१३६) कटाक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिः, तर्जनेषु संयमयन्त्य इव नखमयूखपाशैः, कोपाभिनयेषु ताडयन्त्य इव भ्रूलताऽतिभागैः, प्रणयसम्भाषणेषु वर्षन्त्य इव सर्व्वरसान्, चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान्, पण्यविलासिन्यः प्रानृत्यन् ।

---

इव—मूर्त्तं इव इत्यर्थः । मदमपि—मत्ततामपि, मदयन्त्यः,—समुत्तेजयन्त्य इत्यर्थः, मदो हि सर्वदासुत्तेजको भवति, मदस्तु ता आश्रित्य स्वयमेव उत्तेजितोऽभवत् इति भावः । एवमुत्तरत्रापि सङ्गतिः करणीया, अत्र मदादीनां यदि एतादृशी दशा, तदा का कथा मदभिज्ञानामिति अपिशब्दस्यार्थः । रागं—सम्भोगाभिलाषमित्यर्थः, रञ्जयन्त्यः,—उल्लासयन्त्य इत्यर्थः । उत्सवम्—आनन्दजनकानुष्ठानमिति यावत्, उत्सुकयन्त्यः,—उत्सुकं कारयन्त्यः, [ "तत्करोति तदाचष्टे" (ग०) इति ण्यन्तात् उत्सुकात् शतरि ङीपि रूपम् ] उत्सवदर्शनार्थं सर्वे उत्कण्ठिता भवन्ति, उत्सवस्तु स्वयमेव ता द्रष्टुमुत्सुको जात इति भावः । [ मदादिषु वाक्यनिकरेषु लोकोत्तरचमत्कारातिशयजननोन्मादनमदादिक्रिया उत्प्रेक्षिता इति क्रियोत्प्रेक्षालङ्कारः ]।

(१३६) कटाक्षितेषु—अपाङ्गदर्शनेषु इत्यर्थः, [ "तदस्य सञ्जातं—" (५।२।३६ पा०) इत्यादिना इतचि रूपम् ] अपाङ्गशुक्तिभिः,—अपाङ्गाः,—नेत्रप्रान्तभागा एव, ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) शुक्तयः,—मुक्तास्फोटाः ताभिः, ( "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः ) पिबन्त्य इव—ग्रसन्त्य इव तरुणानिति शेषः, लोकेऽपि शुक्तिभिर्दुग्धादिपानीयं पिबन्ति । [ दुग्धादिपानवत् शुक्तिभिः तरुणपानमसम्भवमिति विरोधः, तच्च प्रियहृदयाकर्षकत्वेन बाला प्रियमुक्तिधारकत्वेन वा आभासीक्रियते इति विरोधाभास उत्प्रेक्षासङ्कीर्णः ] तर्जनेषु—भर्त्सनायाम् अङ्गुलिसञ्चालनविशेषेषु, नखमयूखपाशैः —नखानां मयूखाः,—किरणाः, पाशाः,—रज्जव इव तैः, संयमयन्त्य इव—बध्नन्त्य इव । कोपाभिनयेषु—कोपसूचकाङ्गचेष्टासु भ्रूलताऽतिभागैः,—भ्रुवौ सङ्कोचनानन्तरं अतिविशेषैरित्यर्थः, भ्रूलताभिघातैरित्यर्थो वा । [ "भ्रूलताऽतिभागैः" इत्यत्र "भ्रूलताऽभिघातैः" इति पाठे, —भ्रूनेत्रमुखप्रभृत्यवयवैरित्यर्थः ] प्रणयसम्भाषणेषु—प्रेमालापेषु, सर्वरसान्—सर्वान्—सम्पूर्णान् न तु किञ्चिन्मात्रानिति भाव, रसान्—शृङ्गाररसान्, अनुरागरसान् वा, वर्षन्त्य इव—मुञ्चन्त्य इव । चतुरचङ्क्रमणेषु—विदग्धभ्रमणेषु, शृङ्गारान्तःकरणविलासभ्रमणेषु इत्यर्थः, विकारान्—कामस्थभावविभ्रमान्, विकिरन्त्य इव—विक्षिपन्त्य इव, दर्शकेष्विति भावः ।

मानानीलोत्पलवनाः, काश्चित् (१४१) चलच्चरणच्युतालक्तकारुणस्वेदशीकरसिच्यमानभवनहंसाः सन्ध्यारागरज्यमानेन्दुबिम्बा इव कौमुदीरजन्यः, काश्चित् (१४२) कण्ठनिहितकाञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकारकुञ्चितभ्रुवः, कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्यः प्रारब्धनृत्या विरेजुः।

---

मानरम्या—मानवजनाना, घटासु—श्रोणिषु, लग्न,—सक्त, य विकटपक्ष,—"निकषदकस्तु भवेत् स्यात् नितीरवैष भूषणम्" इत्युक्तलक्षण रत्नखचितकर्णाभरणभेद, तेन वलिता,—सवलिता, सङ्कुचिता इत्यर्थ वा, आकर्षणेन कर्णपीडाऽनुभवात् शालीनताऽतिशयात वा इति भाव, विकटा,—उत्कटा, विशाला वा, कटाक्षा,—अपाङ्गावलोकनानि यासा तथोक्ता, अत एव इवेति।—हसै,—मरालै; आस्वाद्यमानानि—आस्विद्य नीयमानानि, नीलोत्पलवनानि यासा तथाविधा, सरस्य इव—वाप्य इव।

(१४१) चलदिति।—चलद्भ्याम्—सञ्चरद्भ्याम्, चरणाभ्याम्—पादाभ्याम्, च्युतानि—निर्गलितानि अलक्तकानि—लाक्षाद्रवा, अरुणा,—रक्ता, स्वेदा इव, तेषा शीकरै,—बिन्दुभि, सिच्यमाना—आर्द्रीक्रियमाणा, रज्यमाना इति यावत, भवनहंसा,—गृहपालितहंसविशेषा याभि तथोक्ता, अत एव सन्ध्याया,—सन्धौ भवा, सन्ध्यायते परस्परम् भवा नितराम् वा तस्या, राग,—लौहित्य, तेन रज्यमान—लोहितायमानम्, इन्दुबिम्ब—चन्द्रबिम्ब यासा ता, कौमुदीरजन्य इव—"कौ मोदन्ते जना यस्या नानाभावै परस्परम्। हृष्टास्तुष्टा सुखायत्तास्तेन सा कौमुदी स्मृता॥" इत्युक्तलक्षणा कार्तिकपौर्णमासीपूर्णा रात्रय [illegible] इत्यर्थ। शीतलाम्बलोहितवर्णानिमतीना दृपाङ्गनाना चन्द्रिकारजनीसाम्येन हर्षोद्दीपनसमर्थातिशय सूच्यते।

(१४२) कण्ठेति।—कण्ठेषु—गलेषु, निहितेन—अर्पितेन, काञ्चनकाञ्चीगुणेन—सौवर्णमेखलादाम्ना, अञ्चिताना—पूजिताना, परिहासार्थे नियन्त्रिताना वा, कञ्चुकिनाम्—"अन्त पुरचरो वृद्धो विप्रो (विप्रो) गुणगणान्वित। सर्वकार्यार्थकुशल कञ्चुकीत्यभिधीयते॥" इत्युक्तलक्षणानाम् अन्त पुरचारिणा दौवारिकविशेषाणा, (विप्रविशेषाणा) विकारेण—विकृतभावेन, कण्ठे काञ्चीप्रदानादिति भाव, कुञ्चिता—कुटिलिता, [ "विकारकुञ्चित—" इत्यत्र "विकाराकुञ्चित—"इति पाठे,—आकुञ्चिता—ईषत्कुटिलिता इत्यर्थ ] भ्रू यासा तथोक्ता, कञ्चुकिन विकारदर्शनेन तस्य तत्परिधाने अनिच्छा सूचा ईषत्कोपभावप्रकटनार्थम् इति भाव। कामवागुरा इव—कामस्य

विसस्मरुः । (१५४) निनर्तिषया मुनीनामपि मनांसि विपुस्फुरुः । सर्वस्वञ्च ददौ नरपतिः । दिशि दिशि (१५५) कुबेरकोषा इव अलुप्यन्त लोकेन द्रविणराशयः ।

(१५६) एवञ्च वृत्ते तस्मिन् महोत्सवे, शनैः शनैः पुनरपि अतिक्रामति काले, देवी च (१५७) उत्तमाङ्गनिहितरक्षासर्षपे, समुन्मिषत्प्रतापाग्निस्फुलिङ्गे इव गोरोचनापिञ्जरितवपुषि, (१५८) समभिव्यज्यमानसहजक्षात्रतेजसि इव हाटकबद्ध-

---

गाम्भीर्यमपहाय उन्मत्तवत् आचरन्ति स्म इति भावः । मत्ता इव—मद्यपानजविकारं दृप्ता इव विसस्मरुः—विस्मृतवन्तः ।

(१५४) निनर्तिषया नर्तितुमिच्छया । विपुस्फुरुः—विशेषेण स्पन्दन्ते स्म । विरागिणामपि वासनारहितेऽपि हृदये नर्तनानुरागोदयः किं वक्तव्यमन्येषाम् इत्याशयः । [ "विपुस्फुरु" इत्यत्र "विपुस्फुलु" इति पाठोऽपि न प्रमादः ] । सर्वस्वम्—समस्तं धनम् ।

(१५५) कुबेरकोषा इव—कुबेरस्य—धनाधिपस्य देवस्य [ 'कुम्बेर्नलोपश्च' (उ० १ पा० ६० सू०) इति कुबिधातोः एरचि नलोपे रूपम् अन्यस्थानेऽस्य पाठ इत्येके ] कोषा इव—भाण्डागाराणीव अक्षयाणि इति भावः । द्रविणराशयः,—धनराशयः । लोकेन—याचकजनेन इति भावः । अलुप्यन्त—हृतानि इत्यर्थः ।

(१५६) "एवञ्च" इत्यस्य "देवी यशोवती गर्भेण आधत्त राज्यश्रियम्" इत्युत्तरेणान्वयः । वृत्ते—अवसिते इत्यर्थः । अतिक्रामति—अतिगच्छति । "इव" इत्यादिपदं "हर्षे" इत्यस्य विशेषणम् ।

(१५७) उत्तमेति ।—उत्तमाङ्गे—शिरसि निहितानि—स्थापितानि रक्षासर्षपाणि—भूताद्युपद्रवेभ्यः रक्षार्थं मन्त्रपूतसर्षपबीजानि यस्य तथोक्ते । समुन्मिषदिति ।—समुन्मिषन्तः—बहिः स्फुरन्तः, प्रतापाग्नेः अन्तर्ज्वलतश्चेति भावः, स्फुलिङ्गाः,—कणसमूहा यस्य तथाभूते इव । गोरोचनेति ।—गोरोचनया—तदाख्येन पीतवर्णमाङ्गलिकद्रव्यभेदेन पिञ्जरितम्—पिङ्गलितं रञ्जितमित्यर्थः, वपुः—शरीरं यस्य तथोक्ते ।

(१५८) समभीति ।—समभिव्यज्यमानं—सम्यक् स्फुटीभवदित्यर्थः, सहजं—स्वाभाविकं क्षात्रं—क्षत्रियोचितं तेजः,—प्रतापः यस्य तथाभूते इव । हाटकेति ।—हाटकेन—स्वर्णेन, ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः)

विकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके, (१५९) हृदयोद्भिद्यमानदर्पाङ्कुर इव प्रथमाव्यक्तजल्पितेन सत्यस्य शनैः ओङ्कारमिव कुर्व्वाणे, मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि बन्धुहृदयानि आकर्षति, (१६०) जननीपयोधरकलशपयःशीकरसेकादिव जायमानैः विलाससहसिताङ्कुरैः दशनकैः अलङ्क्रियमाणमुखकमलके, (१६१) चरित्रे इव अन्तःपुरस्त्रीकदम्बकेन पाल्य-

---

बद्धा—नियन्त्रिता, विकटा—भीषणा, व्याघ्रस्य—शार्दूलस्य, नखपङ्क्तिः—नखरराजिः, तया मण्डिता—अलङ्कृता, ग्रीवा—कण्ठदेशः यस्य तथाभूते, विशेष्य बालस्य रक्षाविधानार्थं स्वर्णादिमण्डितव्याघ्रनखमालिकया बालकग्रीवाऽलङ्करणं क्रियते इति लोकाचारः।

(१५९) हृदयेति।—हृदये—मनसि, उद्भिद्यमानः,—उद्भेदं गच्छन्, दर्पस्य—अहङ्कारस्य स्पर्द्धाया इत्यर्थः अङ्कुरः,—प्ररोहः यस्य तथाभूत इव, मानोन्नतानां मानाङ्कुरोऽस्य जन्मसहज इत्याशयः। प्रथमाव्यक्तेति।—प्रथमं—वाक्स्फुरणप्रारम्भसमये, यत् अव्यक्तम्—अस्फुटं, जल्पितं—वचनं तेन, सत्यस्य—सत्ययुगस्य, सत्यवतो वा, ओङ्कारमिव—प्रणवमिव तस्य अनधिकारिजनश्रवणशङ्कया अस्पष्टतया उच्चार्यत्वादिति भावः, यद्वा,—ओङ्कारमिव—अभ्युपगममिव, स्वीकारमिवेत्यर्थः, कुर्व्वाणे—उच्चारयतीत्यर्थः, अयमहमेव सत्ययुगाचारं प्रवर्त्तयामि, सत्यमेव वच्मि, आदानमिति वा सदर्पम् अभिव्याहरतीति भावः। मुग्धस्मितैः,—रमणीयहास्यैः। बन्धुहृदयानि—बन्धुजनमनांसि, प्राकृतिकसारल्यमेव बन्धुहृदयावर्जनकारणमिति भावः।

(१६०) जननीति।—जनन्याः,—मातुः यशोवत्याः, ["चरितं—" (पा० २ पा० १०१ सू०) इत्यत्र बाहुलकादनि ततो ङीपि रूपम्] पयोधरौ—स्तनौ, पयोधराः,—मेघाश्च, तौ कलशौ इव तयोः, ते कलशा इव इति वा, अम्बाधारत्वादिति भावः, तेषां पयःशीकरसेकादिव—पयसां—दुग्धानां, जलानाञ्च, शीकराः,—बिन्दवः, तेषां सेकात्—सेचनात्, वदने इति भावः, जायमानैः,—उत्पाद्यमानैः, विलासहसिताङ्कुरैः,—लीलाहासप्ररोहैः, जलसेकात् भूमावपि अङ्कुरं उद्गच्छति, दशनकैः—क्षुद्रदन्तैः, अलङ्क्रियमाणं—शोभां नीयमानं, मुखकमलं—वदनपद्मं यस्य तथाभूते।

(१६१) चरित्रे इव—सुचरित्रे इव, ["चरित्रे इव" इत्यत्र "चारित्रे इव"

मिव द्यौः, प्रभावर्षिणीं (१७३) रत्नजातिमिव वेला, सकलजननयनानन्दकारिणीं चन्द्रलेखामिव प्रतिपत्, (१७४) सहस्रनेत्रदर्शनयोग्यां जयन्तीमिव शची, (१७५) सर्वभूभृदभ्यर्थितां गौरीमिव मेना प्रसूतवती दुहितरं, (१७६) यया द्वयोः सुतयोः उपरि स्तनयोः इव एकावलीलतया नितराम् अराजत।

(१७७) अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता सुतम् अष्टवर्षदेशीयम् उह्यमानकुटिलकाकपक्षकशिखण्ड

---

नाम, अथवा,—महद्भिः,—प्रभूतैः, कनकैः,—स्वर्णैः, अवदाता—उज्ज्वला नाम। वसुधारामिव—धनवृष्टिमिव। द्यौः,—अन्तरीक्षम्, सा हि जगतो महाऽभ्युदयार्थं दिव्यान्तरीक्षात् पतनीति प्रसिद्धिः।

(१७३) रत्नजातिमिव—रत्नराशिमिव। वेला—अब्ध्यम्बुविकृतिः, समुद्रजलोच्छ्वास इत्यर्थः, समुद्रकूलं वा, ("अब्ध्यम्बुविकृतौ वेला" "वेला काले च सीमायामब्धेः कूल विकारयोः" इत्यमर मेदिन्यौ) चन्द्रलेखामिव—शशिकलामिव। प्रतिपत्—प्रथमा तिथिः।

(१७४) सहस्रेति।—सहस्रैः नेत्रैः,—बहुजननयनैरिति भावः, सहस्रनेत्रेण—इन्द्रेण च दर्शनीयोग्या—दर्शनीया ता, जयन्तीमिव—तदाख्यां कन्यकामिव। ("जयन्ती शक्रदुहितर्यामिन्द्रपुत्री पताकयोः" इति मेदिनी) शची—इन्द्राणी।

(१७५) सर्वेति।—सर्वैः भूभृद्भिः,—राजभिः, अथवा—सकलभूभृता—अस्या भुवमभिव्याप्य स्थितेन हिमाद्रिणा इत्यर्थः, यद्वा,—सर्वैः भूभृद्भिः,—पर्वतैः, राजकुमारीदर्शनेच्छया इति भावः, अभ्यर्थिता—प्रार्थिता ता गौरीमिव—पार्वतीमिव। मेना—मेनका, हिमवन्महिषीति यावत्। [ पूर्वोक्तिस्वारस्येनैतत्सन्दर्भ एव प्रसूतवत्त्वमेव साहचर्ये हेतुः, इति साधारणधर्मस्य उत्पत्तिमात्रविवक्षणमात्रसम्बन्धात् मालोपमाऽलङ्कृतिः इति सहृदयाः ]।

(१७६) यया—दुहित्रा, द्वयोः सुतयोः,—राज्यवर्द्धन-हर्षवर्द्धनयोः, उपरि—अग्रे स्थितया इति शेषः, यद्वा,—उपरि—अनन्तरमित्यर्थः, जातया इति शेषः, ऊर्ध्वभागविराजमानया च। एकावलीलतया—एकसरेण हारेण इत्यर्थः। यशोवती नितराम्—अतिशयेन अराजत इति सम्बन्धः।

(१७७) अस्मिन्नेवेति।—अस्मिन्नेव समये—दुहितृजननकाले। "अस्मिन्नेव" इत्यस्य "यशोवत्या भ्राता सुतं भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्" इति उत्तरेण

परशुपाशचिह्नितं कान्ततां गतं, (१८२) कण्ठसूत्रग्रथित भङ्गुरप्रवालाङ्कुरं हिरण्यकशिपुमिव उरःकाठिन्यखण्डितनरसिंहनखरखण्डं गृहीतजन्मान्तरं, शैशवेऽपि सावष्टम्भं बीजमिव वीर्यद्रुमस्य भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्।

(१८३) अवनिपतेस्तु तस्य उपरि पुत्रयोः तृतीयस्य नेत्रयोः इव ईश्वरस्य तुल्य दर्शनमासीत्। राजपुत्रौ अपि

---

गतं, परशु,—कुठार, स एव पाश —रज्ज्वाकार, यद्वा,—अविप्रथपदेन बोध्य,—रेखामात्रावशिष्ट, अत एव अपकृष्ट परशु,—परशुपाश, प्रशस्तपाशाख्यान इति भाव, तेन चिह्नितं,—परशुरामोऽयमिवति सूचित, महावीरनिवर्हणधीर क्षत्रियदलनपरिचयपरिवर्धनेन इदानीमपि परशो किञ्चित् खण्ड भूषणमिव दधानं वा इत्यर्थ तम्। कान्ततां—स्निग्धत्वं, गत—प्राप्त पुनरन्यत्रं परशुरामसिवेत्यर्थं। श्रीराम-लक्ष्मणयो इव राज्यवर्धन-हर्षयो उपाश्रयार्थमेव परशुरामश्रेष्ठ कुमारस्य तदनुबोधकत्वमेतत इति भाव।

(१८२) कण्ठेति।—कण्ठसूत्रे—ग्रैवेयनिहिततन्तौ, ग्रथित —गुम्फित, भङ्गुर —कुटिल प्रवालाङ्कुर,—विद्रुमशरीरं यस्य तम, अत एव हिरण्यकशिपुमिव—तदाख्यमादिदैत्यमिव। उर इति।—उरस,—वक्षस, काठिन्येन—दार्ढ्येन खण्डित —भग्न नरसिंहस्य—नृसिंहाकृतेर्भगवतो विष्णो, नखरखण्ड यस्मिन तथोक्तम। अर्थोऽयं भगवन्नरसिंहनखरत्वेन एतस्य विशोरेशत्व ध्वनितम, एवञ्च बाध्यबाधकत्वभेदाग्रहाद्दोषापत्ते। गृहीतजन्मान्तर—पुनर्जातमित्यर्थं। अभिन्नेव रूपेण भग्नभग्नखरदोषापि अनुरूप साम्यप्रतिपादनात् हीनोपमेयमिति, अत तदा विधाभूताभावात आवश्यकत्वाच्च भगवतोऽवतारासम्बन्धे सम्बन्धरूपातिशयोक्ति यथा। सावष्टम्भ—सतेजस्कम् इत्यर्थं, बीजमिव—प्ररोहमूलमिव, बालमात्र बीजमित्युत्प्रेक्षा उपमा। वीर्यद्रुमस्य—शौर्यवृक्षस्य।

(१८३) अवनिपते—राज्ञ। तस्य—भण्डिनामकस्य कुमारस्य। पुत्रयो तृतीयस्य—आत्मजौ अपेक्ष्य तृतीयस्थानमधिकृतस्य इत्यर्थं तृतीयपुत्रत्व गतस्येति भाव, [ पूरणगुण—" ( २।२।११ पा० इति न षष्ठीसमास ] ईश्वरस्य—हरस्य, नेत्रयो तृतीयस्य—तृतीयनेत्रस्य इव, तुल्य—समान न तु भिन्नविधमित्यर्थं, दर्शनम्—अवलोकनम्, अत्र,—दृष्टिम्, राजा आत्मपुत्राविव तं ददर्शेत्यर्थं।

सकलजीवलोकहृदयानन्ददायिनो तेन (१८४) प्रकृतिदक्षिणेन मधुमाधवाविव मलयमारुतेन उपेतौ नितरां रेजतुः। क्रमेण च अपरेणेव आत्मा प्रजानन्देन सह वर्द्धमानौ यौवनम् अवतेरतुः। (१८५) स्थिरोरुस्तम्भौ च पृथुप्रकोष्ठौ दीर्घभुजार्गलौ (१८६) विकटोरःकवाटौ प्रांशुशालाभिरामौ महानगरसन्निवेशाविव सर्व्वलोकाश्रयभूतौ बभूवतुः।

---

सकलेति।—सकलाना—सर्वेषां जीवलोकाना—प्राणिपूर्वजनता, हृदयस्य—मनसः आनन्दम्—उल्लासं, ददत,—जनयत इति तौ।

(१८४) प्रकृतिदक्षिणेन—प्रकृत्या—स्वभावेन, दक्षिण,—सरल, उदारो वा तेन, दक्षिणदिग्भवेन च। मधु माधवाविव—चैत्र वैशाखाविव, ("स्याच्चैत्रे चैत्रिको मधुः वैशाखे माधवो राध" इत्यमर ) उपेतौ—युक्तौ, सङ्गतौ इत्यर्थः। अपरेण—द्वितीयेन प्रजानन्देन—प्रजानामानन्देन, आत्मजन्मना यथा आनन्दो भवति, तथैव अनयोर्दर्शनेन प्रजाना तथाऽऽनन्दवृद्धि जातेति भाव। अवतेरतु,—प्रापतु, यौवनोद्गमसम्भिन्नौ बभूवतु इत्यर्थः।

(१८५) स्थिरोरुस्तम्भौ—स्थिरो—दृढौ, ऊरू—सक्थिनी, स्तम्भाविव, अन्यत्र,—स्थिरा,—दृढा, उरव—महान्त, स्तम्भा,—स्थूणा ययो तौ, पृथुप्रकोष्ठौ—पृथू—स्थूलौ, इत्यन्य, प्रकोष्ठौ—"प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इत्युक्तौ कूर्परावधोभागौ इत्यर्थः, कक्षविशेषाश्च ययो तौ ("प्रकोष्ठो मणिबन्धक... । गृहकक्षान्तरेऽपि स्यात्" इति मेदिनी ) दीर्घेति।—दीर्घौ—आयतौ, भुजौ—बाहू, अर्गलाविव—कपाटरोधककाष्ठदण्डाविव, अन्यत्र,—भुजा इव अर्गलो ययो तौ।

(१८६) विकटेति।—विकट,—विशाल, उर,—वक्षःस्थल, कवाट इव—द्वारमिव, द्वाराबरणभूतकाष्ठफलकमिव इत्यर्थः, अन्यत्र,—उर इव कवाटौ ययो तौ प्रांश्विति।—प्रांशू—उन्नतौ, शालौ इव—तरुखण्डाविव इव, अभिरामौ—रमणीयौ, अन्यत्र,—प्रांशुना शालेन—प्राकारेण, ("प्राकारो वरण शाल." इत्यमर ) यद्वा,—प्रांशुभि शालभि,—गृहविशेषै, अभिरामौ। महेति।—महत,—विशालस्य, नगरस्य सन्निवेशौ इव—रचनाविशेषभूतौ इवेत्यर्थः। सर्वेति।—सर्वेषा लोकाना—जनानाम्, आश्रये—आश्रयदाने, अभयदाने इति यावत्, रक्षणे इति भाव, अधिष्ठाने च, दक्षौ—समर्थौ, यौवराज्योचितवीरत्वात् बहुप्रासादवत्त्वाच्चेति भाव।

माननयनौ, (१८४) सन्ध्याऽञ्जलिघटनेषु अपि शूलायमानोत्तमाङ्गौ, (१८५) जलधरधृतेन अपि धनुषा दोदूयमानहृदयौ, आलेख्यक्षितिपतिभिः अपि अप्रणमद्भिः सन्तप्यमानचरणौ, (१८६) परिमितमण्डलसन्तुष्टं तेजः सवितुरपि अबहुमन्यमानौ, (१८७) भूभृदपक्षतलक्ष्मीकं सागरमपि उपहसन्तौ, अनवरतमकृतविग्रहं मारुतमपि निन्दन्तौ, हिमवतोऽपि चमरी-

कुमार, प्रभुत्व लाभजन्मेन अवज्ञायमानचक्षो—दुःखानुभाविनावित्यर्थं, कथमस्मद्व्यतिरिक्तो अपि स्वामीति प्रयुज्यते इति धियेति भावः। दर्पणघटितेन—आदर्शावलोकितेन प्रतिपुरुषेण—प्रतिबिम्बगतेन अनेन प्रासस्पर्द्धिपुरुषेण वा, स्वप्रतिबिम्ब दर्पणगतम् दृष्ट्वा प्रतिस्पर्द्धी अयमिति धियेति भावः, दूयमाननयनौ—असन्तुष्टनेत्रौ।

(१८४) सन्ध्येति।—सन्ध्यायाम् अञ्जलिघटनानि—सन्ध्याकालिकदेवतावन्दने शिरसि अञ्जलिनिबन्धनानि इत्यर्थं तेषु शूलायमान—शूलविद्धमिवाचरत, उत्तमाङ्ग—शिरो ययो तौ अस्मदभिमन्यते एव कोऽन्ये शिरसि अञ्जलिबन्धस्य, कथमु कथमञ्जलिं शिरसि बध्नीम ॥ इति धियेति भावः।

(१८५) जलेति।—जलधरधृतेन—मेघधृतेन, धनुषा—इन्द्रधनुषेत्यर्थं, दोदूयमानहृदयौ—पुनः पुनः सन्ताप्यमानमानसौ, कथमपरेणापि धनुर्ध्रियते अस्माकं समक्षम् ॥ इति क्रोधादिति भावः। आलेख्यक्षितिपतिभिः,—चित्रार्पितनृपतिभिः इत्यर्थः। सन्तप्यमानचरणौ—दह्यमानपादौ, कथमिते अस्माकं चरणेषु न प्रणमन्ति ॥ इति क्रोधादिति भावः।

(१८६) परिमितेति।—परिमिते—परिच्छिन्ने इयत्तया ईदृक्तया च इति भावः, मण्डले—बिम्बे, देशे च विषये इत्यर्थः ("मण्डलं परिधौ दमे कोठ द्वादशराजसु। कोऽशय निवहे बिम्ब बिम्ब ॥" इति मेदिनी) सन्तुष्टम्—एतदेव पर्याप्तमिति मत्वा हृष्टमित्यर्थः, सवितुः—सूर्यस्य, तेजः—आतपं प्रभावञ्च, अबहु—न प्रभूतमित्यर्थं, मन्यमानौ—अवधारयन्तौ, स्वस्य अपरिमितदेशशासित्वादिति भावः।

(१८७) भूभृदिति।—भूभृता—मन्दराचलेन इत्यर्थं, भूभृद्भिः,—राजभिश्च, अपहृता लक्ष्मीः—श्रीः, रत्नादिसम्पद् यस्मात् तथाभूतं, सागरमपि उपहसन्तौ—परिहासं कुर्वन्तौ, ततोऽपि स्वस्य दुर्धर्षत्वादिति भावः। अनवरतं,—अनारतं, विग्रह युद्धम्, अकृतं,—अचरन्तं, विग्रहः,—शरीरं येन तथोक्तञ्च, मारुतम्—वायुम्। निन्दन्तौ—कुत्सयन्तौ, यदि विग्रहबलमस्य अभविष्यत्, तदा क्रियत्

असद्बुद्धिं जनयन्ति विप्रलम्भकाः। (२०५) गीतनृत्यहसितैः उन्मत्ततामावहन्ति उपेक्षिता विकारा इव वातिकाः। (२०६) चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः। (२०७) मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः। (२०८) यमपट्टिका इव अम्बरे चित्रमालिखन्ति उद्वीतकाः।

---

इव, मिथ्यादर्शनैः,—चमत्कारैः, अलीकवस्तुप्रकटनैः, असतीम—यहीमना, दुष्टामित्यर्थं बुद्धिं—ज्ञानम्, असति—अविद्यमाने अलीके च, बुद्धिं—धियं, जनयन्ति—उत्पादयन्ति, निरन्तरसदसत्प्रपञ्चपर्यवेचणशक्त्वात् इति भावः। विप्रलम्भकाः,—प्रतारकाः, असन्मार्गप्रवर्त्तका इति भाव।

(२०५) गीतेति।—गीत—गानं नृत्य—नर्त्तनं, हसितं—हास्यं च, उपेक्षिता,—अवधीरिता, अचिकित्सिता इत्यर्थं, वातिका,—वायुजनिता इत्यर्थं, ["तत आगत" (४।३।७४ पा०) इति वातात् ठञ् रूपम्] विकारा,—रोगविशेषा इव, वातिका,—धूर्त्ताः, उन्मत्तता—विकृतचित्तताम्, आवहन्ति—नयन्तीत्यर्थं, सदसद्विचारशक्तेर्दुर्बलीकरणात् इति भाव।

(२०६) चातका इव—तदाख्यपक्षिविशेषा इव, तृष्णावन्त,—धनलुब्धा, पिपासिताश्च, अकुलीना,—अकुलजा, दुष्कुलजाता इत्यर्थं, अन्यत्र,—न कौ—पृथिव्या, लीना,—स्थिता, आकाशचारिण इत्यर्थं, ग्रहीतु—वशीकर्त्तुं, धर्त्तुञ्च, न शक्यन्ते—न पार्य्यन्ते, एकत्र—दुष्टहृदयत्वात् खलप्रकृतिकत्वाच्च, अन्यत्र,—आकाशचारित्वात् इति भाव।

(२०७) मानसे इति।—जालिका,—कूटकारका, शठा इत्यर्थं, जालोपजीविन कैवर्त्ताश्च, मानसे—चित्ते, तदाख्यसरसि च, स्फुरन्त—विराजमानम्, अभिप्रायम्—आशयं, गृह्णन्ति—अवबुध्यन्ते, धरन्ति च, उभयत्र निरपराधसत्त्वप्राणिनियन्त्रणं समानम् इत्याशय।

(२०८) यमपट्टिका इवेति।—उद्वीतका,—अतिदुश्चरितत्वेन उद्दीत—कीर्त्तनं येषां तथाभूता, अतिदुर्विनीता इत्यर्थं, यमपट्टिका इव—यमस्य पट्टिका येषां ते, यमदूता इत्यर्थं, यमपट्टेन—यमपट्टप्रदर्शनेन जीवन्ति इति वा ते यमपट्टिका इति, अन्तकशासनप्रवर्त्तका, गृहीतपट्टलिखितसपरिजनधर्मराजा वा, ते इव, बहुव्रीहिसमासान्तठन्प्रत्ययौ गृहस्य कौचित् पत्तिङ्गयो उपमानोपमेय भावस्य साधुत्वाभावात्, अम्बरे—आकाशे, अभित्तौ इत्यर्थः, वस्त्रे च, चित्रम्—

(२०९) शल्यं हृदये निक्षिपन्ति अतिमार्गणाः। (२१०) यतः सर्वदोषाभिषङ्गैः असङ्गतौ बहुधा उपधाभिः परीक्षितौ शुची विनीतौ विक्रान्तौ अभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजौ इव मे शरीरात् अव्यतिरिक्तौ कुमारगुप्त माधवगुप्तौ अस्माभिर्भवतोः अनुचरत्वार्थम् इमौ निर्दिष्टौ। अनयोः उपरि भवद्भ्यामपि न अन्यपरिजनसमवृत्तिभ्यां भवितव्यम्" इत्युक्त्वा तयोः आह्वानाय प्रतीहारम् आदिदेश।

(२११) न चिरात् द्वारदेशनिहितलोचनौ राज्यवर्द्धन हर्षौ

---

आश्चर्यम्, असम्भावनीयं वस्तु इति भावः, आलिख्य च आलिखन्ति—चित्रयन्ति, ऐन्द्रजालिका यथा अतर्कितमेव आश्चर्यमनुतिष्ठन्ति, तथा तादृशा धूर्त्ता सहसा अव आव्यमनिष्टमुत्पादयन्ति, यद्वा,—चमपट्टिका यथा विविधं चित्रं यमपुरस्य सर्वं आलिख्य दर्शयित्वा विस्मयमुत्पादयन्ति, तथा धूर्त्ता आकाशकुसुमोपमं विविधं सुखं चित्र प्रदर्श्य राजानमायत्तीकुर्व्वन्तीति भावः।

(२०९) शल्यमिति।—अतिमार्गणा,—अत्यर्थमन्वेषणपरा अतिशयेन किञ्चिद्विषये इत्यर्थः, वाह्यभक्तिप्रदर्शिनः धूर्त्तविशेषा इति भावः, तीक्ष्णशराश्च, ("मार्गणो याचके शरे। याञ्चान्वेषणयोः क्लीवम्" इति मेदिनी) हृदये—अन्तरात्मनि, वक्षसि च, शल्यं—व्यथाविशेषं शङ्कुञ्च, निक्षिपन्ति—निदधतीत्यर्थः।

(२१०) यत इति।—यत,—यस्मात्, सर्वैः दोषाभिषङ्गैः, दोषैः,—अविनयादिभिः, अभिषङ्गा,—पराभवाः तैः, ("अभिषङ्गः पराभवे" इत्यमरः) असङ्गतौ—असंसृष्टौ, सर्वदोषविनिर्मुक्तौ इत्यर्थः। बहुधा—बहुना प्रकारेण, उपधाभिः,—छलैः, भृत्यानां परीक्षणोपायविशेषैरित्यर्थः "उपेत्याधीयते यस्मादुपधेति तां स्मृता। उपायं उपधा ज्ञेया तया भृत्यान् परीक्षयेत्॥" इत्युक्तेः, परीक्षितौ—अवेक्षितौ। शुची—विशुद्धचरितौ। विनीतौ—विनयवन्तौ। विक्रान्तौ—पराक्रमशालिनौ। अभिरूपौ रमणीयौ, सुन्दराकृती इत्यर्थः। ("अभिरूपो बुधे रम्ये" इति मेदिनी)। अव्यतिरिक्तौ—अभिन्नौ। अनुचरत्वार्थं—साहचर्य्यार्थम्। इमौ इति।—तत्र असन्निधानेऽपि तयोरनन्तरमेव आगमनात् इदंशब्देन निर्देशो ज्ञेयः। निर्द्दिष्टौ—निरूपितौ। तयो,—मालवराजपुत्रयोः कुमारगुप्त-माधवगुप्तयोः आह्वानाय।

(२११) "न चिरात्" इत्यस्य "राज्यवर्द्धन हर्षौ · कुमारगुप्त प्रहत तस्य"

प्रतीहारेण सह प्रविशन्तम्, अग्रतो ज्येष्ठम् अष्टादशवर्षवयसं, नात्युच्चं, नातिखर्वम्, अतिगुरुभिः पदन्यासैः अनेकनरपतिसञ्चरणचलां निश्चलीकुर्वाणम् इव उर्वीम्, (२१२) अनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरात् ऊरुद्वयात् निष्पतितेव अनुल्वणजानुग्रन्थिप्रसृतेन तनुतरजङ्घाकाण्डयुगलेन भासमानम्, (२१३) उल्लिखितपार्श्वप्रकाशितकार्श्येन मन्दरमिव सुरासुरभसभ्रमितवासुकिकषणक्षीणेन मध्येन लक्ष्यमाणम्,

---

भ्रातरौ अद्राक्षत्" इत्यनेन सम्बन्धः। प्रथमं तावत् कुमारगुप्तं विशिनष्टि, प्रतीहारेणेत्यादिभिः।—प्रतीहारेण—दौवारिकेण। अष्टादशवर्षवयसम्—अष्टादशवर्षाः वयः यस्य तादृशम्। अतिगुरुभिः—अतिभारवद्भिः सत्त्ववत्त्वादिति भावः, पदन्यासैः—पदनिक्षेपैः। अनेकेति।—अनेकेषु—बहुषु नरपतिषु—राजसु सञ्चरणेन—सङ्क्रमणेन, चलाम्—चञ्चलाम्, एकस्थाननिश्चलामित्यर्थः, बहुस्वामिकामिति भावः। निश्चलीकुर्वाणमिव—स्थिरीकुर्वाणमिव एकस्वामिकां कुर्वाणमित्यर्थः। उर्वीम्—पृथ्वीम्।

(२१२) अनवरतेति।—अनवरतम्—अविच्छेदं यथा तथा, अभ्यस्तेन—पुनः पुनः शीलितेन, लङ्घनेन—उत्प्लवनेन उल्लम्फनेन इति यावत्, बाल्यसुलभाचारात् इति भावः, घनः—सान्द्रः, निविडमिति यावत्, उपचयेन—वृद्ध्या, कठिनम्—अशिथिलम्, दृढमित्यर्थः, यत् मांसं तेन मेदुरः—पुष्टः तस्मात्, ["भञ्जभास—" (३।२।१६१ पा०) इत्यादिना कुरचि रूपम्] ऊरुद्वयात्—ऊरुयुगलात् निष्पतितेव—निर्गच्छतेव। अनुल्वणेति।—अनुल्वणः,—अनुत्कटः, यः जानुग्रन्थिः,—जङ्घोर्वोः सन्धिः, तस्मात् प्रसृतम्—प्रवृत्तं तेन, तनुतरजङ्घाकाण्डयुगलेन—तनुतरम्,—क्षीणतरम्, कार्श्यदिशया इति भावः, यत् जङ्घाकाण्डम्,—प्रसृताकाण्डम्, जानुगुल्फयोर्मध्यदेशः इत्यर्थः, तद्युगलम्—तद्द्वयेन, तनुतरजङ्घाकाण्डद्वयेन इत्यर्थः, भासमानम्—राजमानम्, भासमानत्वं तनुजङ्घाकाण्डस्य सामुद्रिकलक्षणत्वात् इत्याशयः।

(२१३) उल्लिखितेति।—उल्लिखितेन—तनूकृतेन, ("स्यादुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत्" इति मेदिनी) पार्श्वेन—पार्श्वदेशेन, प्रकाशितः,—प्रकटितः, कार्श्यम्—कृशता यस्य तेन। सुरेति।—सुराश्च असुराश्च ते, रभसेन—वेगेन, भ्रमितस्य—सञ्चालितस्य, वासुकेः,—नागराजस्य, कषणेन—घर्षणेन, क्षीणः—कृशः तेन, मध्येन—मध्यभागेन, कटिदेशेन इत्यर्थः। मन्दरमिव—मन्दराचलमिव, लक्ष्य-

प्रलापसुभग पारिजात इव जात श्रिया सह पुन अवतारितो, मेदिनी नववधूवदनावलोकनकुतूहलेन इव (२००) क्वथमाणहृदय , पतन्निव सुखेन प्रत्यासन्नलग्नो ग्रहवर्म्मा ।

(२०१) राजा तु तम् उपद्वारम् आगतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुत प्रत्युज्जगाम । अवतीर्णञ्च तं कृतनमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढम् आलिलिङ्ग । यथाक्रमं परिष्वक्तराज्यवर्द्धनहर्षश्च हस्ते गृहीत्वा अभ्यन्तरं

---

(१९९) कुसुमेति।—कुसुमानां—पुष्पाणां, सौरभात—आमोदात, गर्वेण—उल्लासेन भ्रान्तानां—भ्रमतां भ्रमराणां—मधुकराणां, कुलस्य—वृन्दस्य कलप्रलापैः—मधुरास्फुटैः झङ्कारैः, सुभग,—मनोहर, पारिजात इव—देवतरुविशेष इव, श्रिया—लक्ष्म्या सौन्दर्य्येणैश्वर्य्येण, सहोदरया इति भाव । अवतारित,—अवतार नीत, विधात्रेति शेष, कडनियतलग्नावधारणा युगपदाविर्भावादिमाङ्गलिकनियमादित्याशय ।

(२००) क्वथमाणहृदय —मन्दया नीयमानमानस । पतन्निव—स्वस्थानाद्‌ध पतन्निव, अतिपरिचालितधावमानतुरङ्गोल्लासमसमर्पणवेगात इति भाव, सुखेन—"ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च। गलो गलादिसकल सप्ताङ्ग मुखमुच्यते॥" प्रफुल्लावयवतया वदनेन इत्यर्थ, [ खणधातो "डित् खनेर्मुट् स चोदात्त" ( उ० ५ पा० २० सू० ) इति अचि डित्वात धातोर्मुडागमे रूपम ] वेगाक्रान्तानाम् अधोमुखेन पतन लोके प्रसिद्धम । प्रत्यासन्नलग्न —प्रत्यासन्न—समीपवर्त्ति, लग्न—विवाहकालिकशुभराश्युदय यस्य तथाभूत, अनुकूलयाग्रप्रसादात् सन्निहितवैवाहिकशुभक्षण इत्यर्थ ।

(२०१) राजेत्यादि।—उपद्वार—द्वारसमीप द्वारे वा, [ विभक्त्यर्थे अव्ययीभाव ]। राजचक्रानुगम्यमान,—राजचक्रै,—स्वसभास्थराजसमूहै सौहार्दादिसम्बन्धोपस्थितैश्च, अनुश्रियमाण, एतेनास्य चक्रवर्तित्व व्यज्यते। प्रत्युज्जगाम—प्रत्युद्गमन चकार अनादिविवाहप्रथावत्त्वात लौकिकैरपि कन्यापितृभि समित्रकुटुम्बादिभि सन्निकृष्टागमने आश्रिता अपि सामन्तसामान्यनरपाश्च स्वयमुपगम्यन्ते पादचारिभि एष सदातन सदाचार इति मन्यते। अवतीर्णम्—अवरूढ वैवाहिकयानादिति शेष । माधव,—कृष्ण, वसन्तो वा, मन्मथमिव—प्रद्युम्नमिव काममिव

(२०७) साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैः निभृतायतैः श्वसितैः अपयान्तं कुमारभावम् इव अनुशोचन्तीम्, (२०८) अत्युत्कम्पिनीं पतनभिया इव त्रपया निष्पन्दं धार्यमाणां, हस्तं तामरसप्रतिपक्षम् आसन्नग्रहणं शशिनमिव रोहिणीं भयवेपमानमानसाम् अवलोकयन्तीं, (२०९) चन्दनधवलतनुलता ज्योत्स्नयाऽऽदानसञ्चितलावण्यात् कुमुदिनीगर्भादिव प्रसूतां,

---

(२०७) साध्वसेति।—साध्वसेन—सुचिरमध्युषितं मद्धृदयं सपदि विहाय गते त्वयि अहं निराश्रया भवेयमिति भयेनेति भावः, निरुध्यमानः,—मा मा निर्गमीरिति अवरुध्यमानः, हृदयदेशः,—चित्तप्रदेशः, तस्मात् दुःखेन—क्लेशेन, कुमारभावनिरोधजनितेनेति भावः, समापततः यौवनस्य तादृशस्य तदानीं प्रसभमागमनात् तद्विरोधिनः कौमारस्य सहसा तद्धृदयदेशादपसरणं बोद्धव्यम्, अत अत्यापदेऽपि तद्विरोधाभावादिति तात्पर्यम्, मुक्तैः,—त्यक्तैः, अत एव निभृतायतैः,—अस्पष्टदीर्घैः स्वयं, उद्वेगादिति भावः, श्वसितैः,—दीर्घनिश्वासैः, अपयान्तम्—अपसरन्तम्, आत्मानं त्यजन्तमिति यावत्, कुमारभावं—कौमारम्, अनुशोचन्तीं—विलपन्तीं, गतस्य पुनरप्रत्यागमनात् इति भावः।

(२०८) अत्युत्कम्पिनीम्—अतिशयेन उत्कम्पमानाम्, अत एव पतनभिया—पतनाशङ्कया त्रपया—लज्जया निष्पन्दं—निश्चलं यथा तथा, धार्यमाणाम्—अवलम्ब्यमानाम् अत्यधिकलज्जावतीमित्यर्थः, सौभाग्यवतीभिः विवाहे तदा पतिकराधारणाकार-दर्शनात् इति भावः। तामरसप्रतिपक्षं—रक्तोत्पलविरोधिनं, रक्तकमलवैरिणम् इत्यर्थः, तदानीं यौवनोद्गमाभावात् आसन्नग्रहणम्—अचिरप्राप्तिपीडनं, कल्पितस्वर्णमयमिति भावः, कल्पितसादृश्य ("रोहिणी सोमापरपरामीरयष्ट्रिवन्दु" इति मेदिनी) भयेति।—भयेन वेपमानं—कम्पमानं, मानसं—चित्तं यस्याः ताम् अवलोकयन्तीं—पश्यन्तीम्। शशी हस्तस्य सादृश्यात् तस्य अतिमात्रसंवलनकम् इदानीन्तु यौवनोद्गमात् तस्य ग्रहणोत्पत्तेः, शशिनः सादृश्यम् रोहिण्याः तत्प्रियायाः यौवनभिया चरम वयःसन्धिवर्तत्वाच्चारुत्वमिति वर्णनीयाः, यौवनकान्तिः पूर्वतया दर्शित इति।

(२०९) चन्दनेति।—चन्दनेन—चन्दनानुलेपनेन, चन्दनवत्, निर्मलतया इतिवन्दित भावः, धवला—विशदा, तनुलता—शरीरयष्टिः यस्याः ताम्। ज्योत्स्नेति।—ज्योत्स्नायाः—कौमुदीनाम्, आदानेन—ग्रहणेन, सञ्चित—पुष्ट,

(३१०) कुसुमामोदनिर्हारिणीं वसन्तहृदयात् इव निर्गतां, निश्वासपरिमलाकृष्टमधुकरकुलां मलयमारुतात् इव उत्पन्नां, क्षतकन्दर्पानुमरणां रतिमिव पुनर्जातां, (३११) प्रभालावण्य-मदसौरभमाधुर्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः सर्व्वरत्नगुणैः अपरामिव सुरासुरकथा रत्नाकरेण कल्पितां श्रियं,

---

लावण्य—कान्तिविशेष यस्य तस्मात्, कुमुदिनीगर्भात्—कैरविण्या जठरात्, प्रसूतामिव—निर्गतामिव, अन्यथा आनन्दाह्लादिनी कथमेतस्या कान्तिः? इत्युत्प्रेक्षा-बीजम्।

(३१०) कुसुमेति।—कुसुमानां—पुष्पाणाम्, आमोदः,—सौरभम्, तेन निर्हरति—मोदाना बाह्यं रञ्जयतीति यावत् तदीशा तां, वसन्तहृदयात्—वसन्तस्य—पुष्पसमयस्य, कन्दर्पपरिजनस्य इति यावत्, हृदयात्—वक्षःस्थलात्, प्रस्फुटितसर्वकुसुमा-मयत्वं वसन्तकालस्य मध्यभागादित्यर्थ, निर्गतामिव—प्रसूतामिव, एतेनास्या अङ्गेषु प्रसूतसौरभमयत्वात् पद्मिनीत्वेन व्यक्तीकृतमिति। एतदेव विशिष्य व्यनक्ति, निश्वासेति।—निश्वासपरिमलेन—निश्वाससौरभेण, आकृष्टानि—आनीतानि, मधुकरकुलानि—भ्रमर-वृन्दानि यया ताम्, उत्तमानामङ्गनानां निश्वासादि पद्मगन्धादिविशिष्टत्वादिति भाव, मलयेति।—मलयमारुतस्यापि चन्दनामोदवाहित्वेन सुगन्धत्वादिति भावः। क्षतेति।—क्षत—विहित, कर्त्तुमभीप्सितमिति यावत्, कन्दर्पस्य—मदनस्य, अनुसरणम्—अनुगमनं यया ताम्। एतेनास्याः अपि कन्दर्पप्रतिमत्वं ध्वनितमिति वेदितव्यम्।

(३११) प्रभेति।—प्रभा—कान्तिः, लावण्य—"मुक्ताफलेषु छायायास्तरलत्व-मिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षण, मदः,—मद्य-पानजनित उल्लास, सौरभ—परिमल, माधुर्यं—"सर्वावस्थाविशेषेषु माधुर्यं रमणीयता" इत्युक्तलक्षण वै, कौस्तुभशशिमदिरापारिजातामृतप्रभवैः,—कौस्तुभ,—नारायणवक्षःस्थलस्थमणिविशेष, शशी—चन्द्र, मदिरा—मद्य, पारिजात,—नन्दन-काननीयपुष्पविशेष, अमृत—सुधा, तेभ्य, क्षीरोदमथनोद्भूतेभ्य इति भाव, प्रभवै,—उद्भूतै, तत्र कौस्तुभस्य गुण प्रभा, शशिनो गुणो लावण्य, मदिराया गुण मदः, पारिजातस्य गुण सौरभम्, अमृतस्य गुणो माधुर्यमिति द्रष्टव्यम्। सर्व्वरत्नगुणैः,—सर्वेषां रत्नानाम्—उत्कृष्टानां वस्तूनां, ("जातौ जातौ यदुत्कृष्टं तत् रत्नमिह कथ्यते" इत्युक्तलक्षणानां) गुणा,—उत्कर्षा वै। सुरासुरकथा—देवासुरान् प्रति कोपेन,

( २१२ ) स्निग्धेन बालिकालोकेन सितसिन्धुवारकुसुममञ्जरीभिः इव मुक्तादीधितिभिः कल्पितकर्णावतंसां, ( २१३ ) कर्णाभरणमरकतप्रभाहरितशाद्वलेन कपोलस्थलीतलेन विनोदयन्तीम् इव हारिणीं लोचनच्छायाम्, ( २१४ ) अधोमुखं वरकौतुकालोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयञ्च निर्भर्त्सयन्ती वधूम् अपश्यत्।

---

मन्थनेन सह निरपराधस्य सर्वोत्कृष्टाभ्यः रत्नास्तत्पितामह मुमुक्षचितामाह वल्लभा अन्यत्र मह्यम् जनितेन इति भाव, रत्नाकरेण—समुद्रेण, कल्पिता—निर्मिताम्। पुरा देवासुराभ्यां मिलित्वा बलपूर्वकं समुद्रं विमथ्य निर्गतरत्नजातं तत उद्धृत्य गृहीतमिति पौराणिकी वार्ता, एतामेवोपजीव्य इतरत्नवत् रत्नाकरेण कोपवशादेव अस्मिन्नविषयत्वे इतररत्नगुणानाम् एकत्रैव सन्निवेश्य निर्मितामिवेत्युत्प्रेक्षितमिति वेदितव्यम्, अन्यथा विधिः कथं न एतादृशीम् अलौकिकरूपाकृतिं निर्मातुं प्रभवेत् इत्याशयः।

( २१२ ) स्निग्धेन—प्रणयिना बालिकालोकेन—कुमारीदर्शनेन सिताभिः—शुभ्राभिः, सिन्धुवारकुसुमानां—निर्गुण्डीपुष्पाणां, मञ्जरीभिः—मञ्जरीभिः, मुक्तादीधितिभिरिव—मौक्तिकप्रभाभिरिव, इत्यवैधर्म्यसाम्ययोगादुपमालङ्कारः, कल्पितः,—रचितः कर्णावतंसः,—कर्णभूषणं यस्याः ताम्।

( २१३ ) कर्णेति।—कर्णाभरणेषु—कर्णभूषणेषु, यानि मरकतानि—हरिन्मणयः, तेषां प्रभाभिः—कटाक्षैः हरितशाद्वलेन—बहुलश्यामघासयुक्तेनेवेत्यर्थः, ( "शाद्वलः शादहरिते" इत्यमरः ) कपोलस्थलीतलेन—गण्डतटेन, विनोदयन्तीमिव—प्रीणयन्तीमिव, हारिणीं—मनोहारिणीं, हरिणीसम्बन्धिनीञ्च, लोचनच्छाया—नेत्रकान्तिम्, हरिणीलोचनच्छायामपि शाद्वलं स्वाभाविकं स्वाभिरामतया स्वेन विनोदयति इति। अनेनास्याः हरिणायतलोचनत्वं व्यज्यते।

( २१४ ) अधोमुखम्—अवनतमुखं, कन्यकाजनस्वाभाविकत्रपातिशयात इति भावः। वरेति।—वरस्य—वोढुः कौतुकेन—कुतूहलेन आलोकने—दर्शने आकुलं—व्याकुलम्। कृतेति।—कृतः मुखस्य उन्नमने—उत्तोलने प्रयत्नः,—चेष्टा येन तम्। हृदयं—चित्तम्, हृदयमपि उक्तविशेषणत्रयविशिष्टमिति बोद्धव्यम्। निर्भर्त्सयन्तीं—निन्दन्तीम्, लज्जां विहाय वरदर्शनार्थं प्रयासकरणात सखीजननिर्भर्त्सनं तथा दर्शनतृष्णाया प्रबलायाः सत्यामपि सहजलज्जावशात् तत्कर्तुमक्षमतया

प्रविशन्तमेव (३१५) तं हृदयचौरं बध्वा समर्पितं जग्राह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यत् यत् कार्य्यते जामाता, तत् तत् सर्व्वम् अतिपेशलं चकार। (३१६) कृतपरिणयानुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम; (३१७) जगाम च नवसुधाधवलां निमन्त्रितागतैः तुषारशैलोपत्यकाम् इव

---

हृदयनिर्भर्त्सनं बोद्धव्यम्। "कन्या स्वजातीयपरमा संलभ्या नवयौवना" इति दर्पणकृदुक्तलक्षणसौसादृश्यात् नवोढायामप्येतस्यां तदानीमपि तद्गुणत्यागाभावादिति विभाव्यम्।

(३१५) स—दर्पकस्तत्काम। हृदयचौरं—चेतोऽपहर्तारं मनोहरमिति भावः। बध्वा—राज्यश्रिया, समर्पितं—धृत्वा प्रदत्तं कन्दर्पायेति भावः, यथा लोके कश्चित् कमपि चौरं धृत्वा कस्यापि राजपुरुषस्य हस्ते समर्पयति तथा राज्यश्रीरपि तं हृदयचौरं ज्ञात्वा, धृत्वा च कन्दर्पराजपुरुषस्य हस्ते समर्पितवतीत्यर्थः, पूर्वमसौ राज्यश्रिया दृष्टः कन्दर्पवशगो जात इति भावः। परिहासेति।—परिहासेन स्मेर—ईषद्धसितं मुखं यासां ताभिः। कौतुकगृहे—वैवाहिकमङ्गल्यानुष्ठानार्थ-निर्दिष्टभवने। कार्य्यते—कार्य्यते। अतिपेशलम्—अतिरुचिरम्, अतिदक्षं वा यथा तथा ("पेशलो रुचिरे दक्षे" इति मेदिनी) चकार—कृतवान्, नवीनजामातरं वञ्चयित्वा आनन्दमनुभवितुं परिहासप्रियाभिः ताभिः यत्किञ्चित् लोकव्यवहारादिकम् प्रकाश्येत स बध्वायत्तहृदयत्वात् तत्सर्वं सत्यं वा कृत्यं वा इति निर्णेतुमशक्यतया अविचार्य्यैव तेन सम्पादितम् इति भावः।

(३१६) कृतेति।—कृत परिणयस्य—विवाहस्य, अनुरूपस्य—सदृशस्य, वेशस्य—परिच्छदस्य, परिग्रहः—स्वीकारः, परिधानमित्यर्थं यया तथोक्ता, विवाहसमयोचितप्रसाधनवतीम् इत्यर्थः।

(३१७) "जगाम" इत्यस्य "वेदीम्" इत्युत्तरेणान्वयः। तां विशिनष्टि, नवेत्यादि। —नवाभिः—नूतनाभिः सद्यः प्रदत्ताभिरित्यर्थः सुधाभिः—चूर्णलेपैः इत्यर्थः, धवला—श्वेता ताम्। निमन्त्रिताः—आहूता इत्यर्थः, तथाभूताः सन्तः आगताः—उपस्थिताः, तैः। तुषारशैलस्य—हिमगिरेः, ("तुषारस्तु हिमं हिमम्" इत्यमरः), उपत्यकामिव—आसन्नां भूमिमिव, ("उपत्यकाऽद्रेरासन्ना भूमिः" इत्यमरः)।

(३१८) लम्बकाम्बिकाविवाहाहूतैः भूभृद्भिः परिवृतां, (३१९) सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः कलशैः कोमलवर्णिकाविचित्रैः अमलमुखैश्च (३२०) मङ्गल्यफलहस्ताभिः अञ्जलिकारिकाभिः उद्भासितपर्यन्ताम्, (३२१) उपाध्यायोपधीयमानेन्धनधूमायमानाग्निमभ्युद्यच्चणिकोपद्रष्टृद्विजाम्, (३२२) उपक्रमानुनिहितानुप-

(३१८) लम्बकाम्बिकाविवाहाहूतैः,—हरगौरीविवाहनिमन्त्रितैः, भूभृद्भिः,—राजभिः, पर्वतैश्च परिवृताम्—व्याकीर्णाम्। अत्र भूभृद्भिः इव भूभृद्भिः इति उपमानोपमेययोः समानधर्मोपसंग्रहणात् श्लेषसहोपमा।

(३१९) सेकेति।—सेकेन—जलसिञ्चनेन, सुकुमाराः,—सुकोमला ये यवाङ्कुराः,—यवप्ररोहाः तैः दन्तुराः,—सञ्जातदन्ता इव लक्ष्यमाणाः तैः, [ दन्तशब्दात् उन्नतदन्तार्थे "दन्त—" (५।२।१०६ पा०) इत्यादिना उरचि रूपम् ] पञ्चास्यैः,—पञ्चमुखैः, कलशैः,—कुम्भैः। कोमलेति।—कोमलाभिः,—नयनसुभगाभिरित्यर्थः, वर्णिकाभिः,—वर्णविशेषैः, चन्दनादिभिः खटिकादिभिर्वा इति यावत् विचित्राः,— रम्याः तैः, अमलमुखैः,—शोभमुखैः, यद्वा,—अम०—पावनम्, आम्रपल्लवविशेष इति यावत्, ("अल्लमावपन भाण्ड पात्रामत्रञ्च भाजनम्" इत्यमरः) मुखं—अग्रभागो येषां तैः। [ "अमलमुखैश्च" इत्यत्र "अमित्रमुखैश्च" इति पाठेऽपि—कम्रमयैः इत्यर्थः ]।

(३२०) मङ्गल्येति।—मङ्गल्य—मङ्गलाय हितं, फलं—नारिकेलाम्रादिकं, हस्ते यासां ताभिः, अञ्जलिकारिकाभिः,—मृन्मयप्रतिमाभिः, शालभञ्जिकाभिर्वा, उद्भासितपर्यन्ता—विद्योतितप्रान्तभागाम्।

(३२१) उपाध्यायेति।—उपाध्यायेन—गुरुणा, पुरोधसेति यावत्, उपधीयमानानि—अर्प्यमाणानि इन्धनानि—काष्ठानि, अग्निसन्दीपनार्थमिति भावः, तैः धूमायमानः,—धूमसुवमन् योऽग्निः,—अनलः, वैवाहिकहोमीय इति भावः, तस्य अभ्युद्यच्चणिकः—प्रज्वालने, चणिकः,—चणेन कार्यसम्पादनार्थी, व्यग्र इत्यर्थः, [ "अभ्युद्यच्चणिको—" इत्यत्र "अभ्युद्यच्चणिको—" इति पाठे,—अचणिकः,—चणादतीत अचणः,—कालासहिष्णुरित्यर्थः, तस्मात् अचणिकः,—कार्यनिष्पादने चणादिविचारवर्जितः, व्यग्र इत्येवार्थ ] उपद्रष्टा—साक्षीभूतः, "उपदेष्टा" इति केचित्, द्विजः,—ब्राह्मणः, ऋत्विगित्यर्थः यस्यां तयोक्ताम्।

(३२२) उपेति।—उपक्रमानु—अग्रिमप्रान्ते, निहिताः,—स्थापिताः, अनुप-

हृतहरितकुशां, सन्निहितदृषदजिनाज्यस्रुक्समित्पूलीनिवहां, (२२३) नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजराजिनीं वेदीम्। आरुरोह च तां दिवमिव सज्योत्स्नः शशी। (२२४) समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य समीपम्। हुते च (२२५) हुतभुजि दक्षिणावर्तप्रवृत्ताभिः वधूवदनविलोकनकुतूहलिनीभिः इव ज्वालाभिः एव सह प्रदक्षिणं बभ्राम। पात्यमाने च

---

हृता,—छिन्ना, हरिता,—हरिद्वर्णा, यद्वा समाहृता इति यावत् महोत्सवादौ तथाविधानामेवोपयोगात् इति भावः, कुशा,—दर्भा यस्यां ताम्। सन्निहितेति।—सन्निहिता,—समीपस्था, दृषत्—शिला, अजिनं,—चर्म, आज्यं—घृतं, स्रुक्—होमभाण्डं, समिधः,—काष्ठानि, तेषां पूल्यः,—नैचय, तासां निवहाः—सङ्घाः यस्यां ताम्।

(२२३) नूतनेति।—नूतने—नवे, शूर्पे—प्रस्फोटने, "कुला" इति बङ्गीयैः परिभाषिते, अर्पितानि—स्थापितानि, श्यामलानि—हरिद्वर्णानि, यानि शमीपलाशानि—शमीपत्राणि तैः मिश्रा,—सम्मिलिता, लाजाः,—भृष्टधान्यानीत्यर्थः, "खइ" इति बङ्गीयैः "लाइ" इति च पाश्चात्यैः परिभाषितानि, तैः राजते—शोभते इति तथाविधा ताम्, अतिधावल्यात् लाजानां तेषु हासत्वमुपचर्य वदितव्यं "यथास्ति धवलता वर्धते हासकीर्त्योः" इति कविसमयप्रसिद्धेरिति। तां—वेदीम्, आरुरोह—आरूढवान्। सज्योत्स्नः,—ज्योत्स्नासहित, सवधूक इति भावः।

(२२४) समुत्ससर्प—उपातिष्ठत्। वेल्लितेति।—वेल्लिता,—चञ्चला अरुणा, —रक्ता, शिखा,—ज्वाला, पल्लवा इव—किसलया इव शिखा एव पल्लवाः यस्य तथाभूतस्य शिखिनः,—अग्नेः, द्रुमस्य च वृक्षस्य चेत्यर्थः, "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे" इति मेदिनी) कुसुमायुध इव—काम इव। रक्ताशोकस्य—विकसित पुष्पाशोकपादपस्य। तस्य रक्तप्रसूनत्वात् अग्निभावः, मदनोद्दीपकत्वाच्च तत्रानियतकाम मवस्थायिना सश्रीकमदनेन सह सवधूककुमारस्य साम्य मुत्प्रेक्षितमेवेति ज्ञेयम् अत उपमालङ्कारः।

(२२५) हुतभुजि—अग्नौ, दक्षिणावर्तप्रवृत्ताभि,—दक्षिणस्यां दिशि आवर्तेन प्रवृत्ताभि, तथा च, ऋत्विजां दक्षिणा हि आज्यग्रहणाय समुत्सुक प्रधावताभि,

लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्ववधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः ।

अत्रान्तरे (३२६) स्वच्छकपोलोदरसङ्क्रान्तमनलप्रतिबिम्बमिव निर्वापयन्ती (३२७) स्थूलमुक्ताफलविमलबाष्पबिन्दुसन्दोहदर्शितदुर्दिना निर्वदनविकारं रुरोद वधूः । (३२८) उदश्रुविलोचनानाञ्च बान्धववधूनाम् उदपादि महान् आक्रन्दः । परिसमापितवैवाहिकक्रियाकलापस्तु जामाता

---

प्रदक्षिणप्रक्रमाभिरित्यर्थः, दक्षिणावर्तस्य वह्नेः शुभसूचकत्वादिति भावः । ज्वालाभिः,—शिखाभिः । पात्यमाने—प्रक्षिप्यमाणे, वर्धमाने इत्यर्थः, लाजाञ्जलौ—अक्षताञ्जलौ, भृष्टधान्याञ्जलावित्यर्थः, कुमारिकाकर्तृके लाजहोमसम्पादनार्थमिति भावः । नखेति ।—नखानां—कररुहाणां, वधूवरयोरिति भावः, मयूखेन—प्रभया, धवलिता—शुभ्रीभूता, तनुः,—देहः यस्य तथाभूतः, अत एव अदृष्टेति ।—अदृष्टपूर्वेण—प्रागनवलोकितेन, वधूवरयोः,—कन्याजामात्रोः, रूपेण—सौन्दर्येण, यो विस्मयः,—आश्चर्यभावः, तेन स्मेर इव—सहास इव, विभावसुः,—वह्निः । अत्राभास्वरप्रभावतः कृशानोः स्वगुणत्यागात् नखमयूखैः अत्युत्कृष्टशुभ्रधवलितत्वरूपगुणग्रहणेन तद्गुणालङ्कारसङ्कीर्णोत्प्रेक्षा ।

(३२६) स्वच्छेति ।—स्वच्छम्—उज्ज्वलं, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरं, तत्र सङ्क्रान्तः,—प्रतिफलितः यः, अनलप्रतिबिम्बमिव—अग्निप्रतिच्छायामिव, निर्वापयन्ती—प्रशमयन्ती । अग्निदाहमस्याः निराकर्तुमिवाश्रुविसर्जनमित्युत्प्रेक्षा वोऽनयान्वयः ।

(३२७) स्थूलेति ।—स्थूलानि—पृथूनि मुक्ताफलानि—मौक्तिकानि इव, विमला—स्वच्छा, बाष्पबिन्दूनाम्—अश्रुकणानां सन्दोहः,—समूहः, तैः दर्शितं—प्रकटितं, दुर्दिनं—मेघाच्छन्नम् अहः, पतदश्रुधनीरासार वाष्परमिति यावत्, दुःखजनकं दिनञ्च, सामयिकपित्रादिविच्छेदसम्भावनया इति भावः यया तथाभूता । निर्वदनविकारं—निः,—नास्ति, वदनस्य—मुखस्य, विकारः,—विकृतिः यस्मिन् तत् यथा तथा, निःशब्दमिति भावः ।

(३२८) उदश्रुविलोचनानाम्—उद्गतबाष्पनेत्राणां, बान्धववधूनां—स्वजननारीणाम्, आक्रन्दः,—क्रन्दनम्, ( "आक्रन्दः क्रन्दने दाने मित्र दारुणयुद्धयोः" इति मेदिनी ) ।

बध्वा मम प्रणनाम स्रग्वी। (३२९) प्रविवेश च द्वारपक्ष-लिखितरतिप्रीतिदैवतं, प्रणयिभिः इव प्रथमप्रविष्टैः अलिकुलैः कृतकोलाहलम्, (३३०) अलिकुलपक्षपवनप्रेङ्खोलितैः कर्णोत्पलप्रहारभयप्रकम्पितैः इव मङ्गलप्रदीपैः प्रकाशितम्, (३३१) एकदेशलिखितस्तवकितरक्ताशोकतरुतलभाजा अधिज्यचापेन तिर्यक्कूणितनेत्रविभागेण शरमृजूकुर्वता

---

(३२९) "प्रविवेश" इत्यस्य "वासभवनम्" इत्युत्तरेण सम्बन्धः। तदेव विशिनष्टि, द्वारेत्यादि।—द्वारपक्षे—द्वारपार्श्वे ("पक्षो मासार्द्धके। पार्श्वे कुञ्जरपार्श्वयोः" इति मेदिनी) लिखित—चित्रितं, रतिप्रीतिदैवत—रतिरेव—कामवधूरेव, प्रीतिदैवत—प्रणयदेवता यस्य तत्, यद्वा,—रतेः,—दाम्पत्यानुरागस्य, प्रीतेः,—हर्षे, दैवतम्—मङ्गलचण्ड्यादीनां प्रतिकृत्या रूपायमाणानां देवतानां समूहः यत्र तथाविधम्, एता हि दाम्पत्यसुखविधायिन्य इति वेदितव्यम्। प्रणयिभिरिव—सुहृद्भिरिव, प्रथमप्रविष्टैः—अग्रे एव आगतैः, कुसुमामोदसमाकृष्टैरिति भावः, प्रणयिनः प्रणयवताम् अन्तःपुरादावपि स्वच्छन्दप्रचारित्वं भवतीति गम्यते।

(३३०) अलीति।—अलिकुलानां—भ्रमरवृन्दानां, पक्षपवनेन—पतत्रानिलेन, प्रेङ्खोलिताः,—कम्पिताः तैः, अत एव कर्णेति।—कर्णोत्पलस्य—कर्णभूषणीभूतस्य उत्पलस्य प्रहारात्—ताडनात्, भयेन—शङ्कया, प्रकम्पितैरिव—प्रवेपितैरिव, मङ्गलार्थितानां ताडनभङ्गस्य सततविभावात् इति भावः। ननु सत्स्वपि बहुषु वस्तुषु वासगृहे कथमत्र ताडनाशङ्का मङ्गलप्रदीपानां जाता? इति चेदवधीयतां,—सम्पक्षिपक्षा तुल्यबलाः परस्परं प्रतिहतिमाप्नुवन्ति इति दृश्यते, अत एव कर्णोत्पलायमानाः मङ्गलदीपाः भ्रमराभिलङ्घनशङ्किताः कर्णोत्पलान्दोलनं तेषां स्वताडनार्थं समुद्योगं विभावयन्त इत्युत्प्रेक्षाबीजमवधेयम्।

(३३१) एकेति।—एकदेशे—एकस्मिन् विभागे, लिखित,—चित्रित, स्तवकित—सञ्जातगुच्छ, यः रक्ताशोकतरु,—रक्तपुष्पाशोकवृक्ष, तस्य तलं—निम्नदेशं, भजते—आश्रयति इति तथोक्तेन तरुतलस्थितेन इत्यर्थः, अधिज्यचापेन—मौर्वीयुतधन्वना, तिर्यगिति।—तिर्यक—वक्रं यथा तथा, कूणित,—सङ्कोचित, नेत्रविभाग,—नयनस्य तृतीयांशः येन तथाविधेन, लक्ष्यस्थिरीकरणाय अपाङ्गाकुञ्चनतत्परेणेत्यर्थः, शर—बाणम्, ऋजूकुर्वता—सन्दधतेत्यर्थः।

चामरदेवेन अधिष्ठितम्, (२३२) एकपार्श्वन्यस्तेन काञ्चनचामरकेण इतरपार्श्ववर्तिन्या च दान्तशफरकधारिण्या कनकपुत्रिकया साक्षाल्लक्ष्म्येव उद्दण्डपुण्डरीकहस्तया सनाथेन सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं, (२३३) शयनशिरोभागस्थितेन च कृतकुमुदशोभेन कुसुमायुधसाहायकाय आगतेन शशिनेव निद्राकलशेन राजतेन विराजमानं वासगृहम्।

तत्र च (२३४) ह्रीताया नववधूकायाः पराङ्मुखप्रसुप्ताया मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि (२३५) प्रथमालापाकर्णनकौतुकागतगृहदेवताऽऽननानीव मणिगवाक्षकेषु वीक्षमाणः

---

(२३२) एकपार्श्वन्यस्तेन—एकपार्श्वनिहितेन, काञ्चनचामरकेण—काञ्चनं—सौवर्णं, चामरकं—चामरव्यजनमिति तेन। "काञ्चनचामरकेण" इत्यत्र "काञ्चनचामरकेण" इति पाठकल्पनं साधु, काञ्चनचामरकेण—स्वर्णदण्डशोभितबालव्यजनेन। इतरपार्श्ववर्तिन्या—अपरपार्श्वस्थायिन्या, दान्तेति।—दान्त—गजदन्तमय, शफरकं—कुमुदविशेषमित्यर्थः, धरति—धारयतीति तथोक्तया, कनकपुत्रिकया—काञ्चनपुत्तलिकया। उद्दण्डेति।—उद्दण्डम्—उन्नतनाल, पुण्डरीक—श्वेतपद्म, हस्ते यस्याः तथाभूतया। सनाथेन—युक्तेन। सोपधानेन—उपधान—"बालिश" इति लोकभाषया प्रसिद्ध, तत्सहितेन, स्वास्तीर्णेन—शोभनास्तरणसमन्वितेन, शयनेन—शय्यया, पर्यङ्केनेत्यर्थः।

(२३३) शयनेति।—शयनस्य—शय्यायाः, शिरोभागे—अग्रभागे, स्थितेन—निहितेन, कृतेति।—कृता—विरचिता, कुमुदेन—कैरवेण, कुमुदस्य च, शोभा—सौन्दर्यं यस्य येन च तेन, कुसुमेति।—कुसुमायुधस्य—पुष्पशरस्य, कामस्येत्यर्थः, साहायकाय—साहाय्यकरणाय, शशिन उद्दीपकत्वादिति भावः। राजतेन—रौप्यमयेन, निद्राकलशेन—निद्रायाः—शयने, शयनगृहे इत्यर्थः, यः कलशः,—घटः, नीराजनादीनाञ्च मङ्गलार्थं स्थापित इति भावः तेन।

(२३४) ह्रीतायाः,—लज्जितायाः। पराङ्मुखप्रसुप्तायाः,—पराङ्मुख निद्रितायाः, लज्जावशादेवेति भावः। मणीति।—मणिभित्तय,—रत्नकुड्यानि एव, दर्पणाः,—आदर्शाः तेषु, मुखप्रतिबिम्बानि—आननप्रतिच्छायाः।

(२३५) प्रथमेति।—प्रथमालापस्य—आद्यसम्भाषणस्य, आकर्णने—श्रवणे, यत् कौतुक—कौतूहलं, तेन आगता,—उपस्थिता, या गृहदेवता,—भवनाधि-

क्षणदां निन्ये। स्थित्वा च श्वशुरकुले (३३६) शीलेन अमृतमिव श्वश्रूहृदये वर्षन्, अभिनवाभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि स्थित्वा, दत्त्वा राजदौवारिकमिव राजकुले रणरणकं, यौतुकनिवेदितानि इव संबलानि आदाय हृदयानि सर्वलोकस्य, कथङ्कथमपि विसर्जितो नृपेण वध्वा सह स्वदेशम् अगमदिति।

इति श्रीबाणभट्टकृते हर्षचरिते चक्रवर्तिजन्मवर्णनं नाम
चतुर्थ उच्छ्वासः ॥ ४ ॥

---

हादर्दैर्य, तासाम् आननानि इव—मुखानि इव, अधिगवाक्षकेषु—रथमयवातायनेषु, [ गवाम् अक्षीव इत्यत्र "अक्ष्णोऽदर्शनात्" (५।४।७६ पा०) इति समासान्ते अचि "अवङ्—" (६।१।१२३ पा०) इत्यादौ व्यवस्थितविभाषाश्रयणात् अवङि रूपम् ] वीक्षमाणः,—पश्यन्, क्षणदां—रात्रिं, निन्ये—यापयामास इत्यर्थः।

(३३६) शीलेन—सच्चरितेन। अभिनवाभिनवोपचारैः,—प्रतिदिनं नूतननूतनसत्कारैः। अपुनरुक्तानि—अनास्वादितपूर्वाणि। राजदौवारिकं—राजद्वाररक्षकम्। रणरणकं—विच्छेदजनितमुद्वेगमित्यर्थः, [ रण,—शब्द, तत्प्रकारः रणरण इति, तत स्वार्थे कन् ] दौवारिको यथा नियतमेव द्वारमाक्रम्य वर्त्तते, तथा तद्गमनजनितरणरणकोऽपि सदैव राजपरिजनानां हृदयमाक्रम्य अतिष्ठदिति भावः। यौतुकेति।—यौतुकाय—वैवाहिकोपहाराय निवेदितानि—समर्पितानि। संबलानि—पाथेयानि, आदाय—गृहीत्वा, हृत्वेत्यर्थः। कथङ्कथमपि—अतिकष्टेन, अनिच्छयेत्यर्थः, अपत्यभूतं वस्तु न हि केनापि नयनगोचरादपसारयितुं शक्यते सहसा मायावद्धहृदयैरपीति भावः, विसर्जितः,—गमनाय अनुमत इति यावत्। वध्वा—राज्यश्रिया।

इत्यमिषमाल्याटवीमध्यस्थपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायां बालबोधिन्याख्यायां
श्रीहर्षचरितव्याख्यायां चतुर्थ उच्छ्वासः ॥ ४ ॥

# पञ्चम उच्छ्वासः।

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम्।
कृत्वाऽऽलोकं तरला तडिदिव वज्रं निपातयति ॥ १ ॥
पातयति महापुरुषान् सममेव बहूननादरेणैव।
परिवर्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

(१) अथ कदाचित् राजा राज्यवर्धनं कवचहरम् आहूय हूणान् हन्तुं हरिणान् इव हरिर्हरिणेशकिशोरम् अपरिमित

---

इदानीं राज्ञः प्रभाकरवर्धनस्य स्वर्गगमनं सूचयितुं नियतिं बाधकतया गतिं तस्याः प्रकटयति नियतिरिति।—नियतिः,—दैवं, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः) प्रथमम्—आदौ एव, पुंसां—जनानां, सुखम्—आनन्दं, विधाय—दत्त्वा, तरला—चपला, तडित्—विद्युत् आलोकम्—उद्योतं, कृत्वा—सम्पाद्य, उपरि—पश्चात् वज्रमिव—अशनिमिव, दारुणं—भीषणं, दुःखं—क्लेशं, निपातयति—पातयतीत्यर्थः। अत्र तडिता सह नियतेर्वैधर्म्यसाम्यप्रतिपादनात् निपातनादिरूपसाधारणधर्मादीनाञ्च वाच्यत्वात् पूर्णोपमाऽलङ्कारः। आर्या छन्दः ॥ १ ॥

पातयतीति।—अनन्तः—अशेषः, शेषाख्यनागश्च, एकः—केवलः, एकाकी च, सहायान्तरनिरपेक्ष इत्यर्थः, कालः,—समयः, महाकालश्च, प्रलयकाले सर्वसंहारकस्य भगवतो रुद्रस्य मूर्त्यन्तरेण भवत्यात्मना जगतो विध्वंसकारित्वोक्तेः, परिवर्तमानः,—चक्रवत् परिभ्रमन्, निजपरिवर्तनादिकं कुर्वंश्च, शैलानिव—पर्वतानिव सममेव—तुल्यकालमेव, युगपदेवेत्यर्थः, बहून्—अनेकान्, महापुरुषान्—देवजनान्, अनादरेणैव—अवहेलयैव, पातयति—ध्वंसयति। एतेन वर्तमानस्य राज्ञः भाविनिधनं सूचितम्। अत्रापि पूर्ववदेवोपमाऽलङ्कारः। आर्या छन्दः ॥ २ ॥

(१) अथेत्यादि।—कवचहरं—कवचधरं, ["हरतेर्—" (३।२।९ पा०) इत्यादिना कवचोपपदात् हरतेः अच् रूपम्]। हूणान्—तदाख्यान् म्लेच्छजातिविशेषान्। हरिः,—सिंहः। हरिणेशकिशोरं—मृगेन्द्रशिशुं, सिंहशावकमित्यर्थः, हरिः हरिणेशकिशोरं हरिणान् हन्तुं यथा प्रहिणोति, तथा राजा राज्यवर्धनं हूणान् हन्तुं प्राहिणोदित्यन्वयः। इह हकार रकार णकारादीनाम् असकृदावृत्त्या वृत्त्यनुप्रासः,

बलानुयातं चिरन्तनैः अमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसारम् उत्तरापथं प्राहिणोत्।

(२) प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैः अनुवव्राज। प्रविष्टे च (३) कैलासप्रभाभासिनी ककुभं भ्रातरि, वर्त्तमानो नवे वयसि विक्रमरसानुरोधिनि (४) केसरि-शरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु (५) उत्कण्ठमानवनदेवताकटाक्षाक्षारितशरीरक्षान्तिः क्रीडन् मृगया

---

पूर्वोपमाऽलङ्कारश्च। अपरिमितबलानुयातम्—अपरिमितैः,—प्रभूतैः, बलैः,—सैनिकैः, सामर्थ्येन, अनुयातम्—अनुगतं, चिरन्तनैः,—प्राचीनैः, मुख्यतमैरित्यर्थः, "सेवकाः पुरातनाः" इत्युक्तेर्निरतिशयविश्वासपात्रैः इति भावः, अनुरक्तैः,—स्वामिनि अनुरागवद्भिः, महासामन्तैः—सामन्तप्रधानैः। साभिसारम्—ससहायमित्यर्थः। ["साभिसारम्" इत्यत्र "साभिसरम्" इति पाठोऽपि स्वरसार्थं, यथा—तैः सानुचरं सम्राट् सुतत्वात् सामन्तैः सेवकादिभिरनुगतम्]। उत्तरापथम्—उत्तरदिक्स्थप्रदेशविशेषं, प्राहिणोत्—प्रेषयामास।

(२) प्रयान्तम्—गच्छन्तम्, इत्यादीति शेषः। प्रयाणकानि—पदानि। अनुवव्राज—अनुजगाम, निष्कलङ्कसौभ्रात्रभावात् प्रवासगमनपथस्थे प्रियजने कियत्पदं तदनुसरणस्य लोकाचारसिद्धत्वाच्च इति भावः।

(३) कैलासेति।—कैलासस्य—तदाख्यस्य अद्रेः, प्रभया—कान्त्या, भासते—द्योतते इति तथोक्ता ताम्, ककुभम्—दिशम्। भ्रातरि—राज्यवर्द्धने। नवे वयसि—प्रथमयौवने इत्यर्थः। विक्रमरसानुरोधिनि—विक्रमे—शौर्य्ये यो रसः,—अनुरागः, उत्साह इति यावत् तम् अनुरुध्यते—अनुबध्नाति इति तथाभूते, यौवनकालस्वभावात् शौर्य्यप्रदर्शनोपयोगिनीत्यर्थः।

(४) केसरीति।—केसरिणः—सिंहाः, शरभाः—अष्टापदमृगाः शार्दूलाः,—व्याघ्राः, वराहाः,—शूकराः, तैः बहुलेषु—आकीर्णेषु, यद्वा—तैः बहुलाः—प्रभूता यत्र तथोक्तेषु, दुर्गमस्थानादौ तेषां प्राचुर्य्यम् इति भावः, तुषारशैलोपकण्ठेषु—हिमाचलान्तिकेषु।

(५) उत्कण्ठेति।—उत्कण्ठमानानां—तादृशशोभनाकृतिवीरपुरुषदर्शनेन तत्

मृगलोचनः कतिपयानि अहानि बहिरेव व्यलम्बत। चकार च (६) आकर्णान्ताकृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिः एव दिवसैः निःश्वापदानि अरण्यानि।

एकदा तु (७) वासतेय्याः तुरीये यामे प्रत्युषसि एव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत्। तस्मिन् एव च दावदहने (८) समुत्सृज्य शावकान् उत्प्लुत्य च आत्मानं पातयन्तीं सिंहीम् अपश्यत्। आसीच्च अस्य चेतसि,—

---

कल्पिकावती, तदर्शनमात्रेण अनुरागोदयात् दर्शनीयमुक्तामालिन्यत्र, वनदेवतानां—वनाधिष्ठातृदेवीनां, कटाक्षाः—सानुरागतिर्यग्वीक्षितानि तेषाम् अवधिः,—समूहः, भारिता—विक्षिता, शरीरकान्तिः,—देहलावण्यं यस्य तथाभूतः। मृगलोचनः,—हरिणायतरम्यनयनः, रम्य इति भावः। व्यलम्बत—विलम्बं कृतवान्।

(६) आकर्णेति।—कर्णान्तात् आ आकर्णान्तम्—कर्णसमीपपर्यन्तम्, ["आङ—" (२।१।१३ पा०) इत्यादिना अव्ययीभावः] आकृष्टात्—आकर्षितात्, कार्मुकात्—धनुषः, निर्गतान्—निःसृतान्, भासुरान्—प्रदीप्तान्, मार्जितान् इति भावः, भल्लान्—शराख्यास्त्रविशेषान् वर्षति—मुञ्चतीति तथाभूतः। स्वल्पीयोभिः,—अत्यल्पैः। निःश्वापदानि—श्वापदरहितानि, अत्यर्थमृगयाव्यसनात् हिंस्रजन्तुशून्यानीत्यर्थः।

(७) वासतेय्याः,—वसति,—रात्रिरिति वासतेयी तस्याः, [तत्र साधु इत्यर्थे "पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना ढञ्प्रत्ययः] (वसतौ रात्रि तेयमस्ती इत्यमरः) तुरीये—चतुर्थे, यामे—प्रहरे। प्रत्युषसि—प्रभाते। चटुलेति।—चटुलानां—चञ्चलानाम् इतस्ततः प्रसरणशीलानामित्यर्थः, ज्वालानां—शिखानां, पुञ्जैः—समूहैः, पिञ्जरीकृताः,—पिङ्गलीकृताः, सकलाः,—समस्ताः, ककुभः,—दिशः येन तथाभूतेन, दुर्निवारेण—निवारयितुमशक्येन अनिर्वाप्येणेत्यर्थः दवहुतभुजा—दावाग्निना। केसरिणं—सिंहम्, अनेन पितुर्मरणदाहकरो व्याधिः सूचितः, प्रसूताणि तस्यासौ दाघप्रः निरर्थकत्वाभावात्।

(८) समुत्सृज्य—परित्यज्य। उत्प्लुत्य—उल्लम्प्य। पातयन्तीं—निक्षिपन्तीम्, उत्पतनमिति भाव, अनेन अस्य मातुरग्निप्रवेशः सूचितः।

(९) "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः, यदाकृष्टाः तिर्यञ्चोऽपि एवम् आचरन्ति" इति। (१०) प्रबुद्धस्य च अस्य मुहुर्मुहुः दक्षिणेतरम् अक्षि पस्पन्दे; गात्रेषु च अकस्मादेव वेपथुः विपप्रथे; निर्निमित्तम् एव अन्तर्बन्धनस्थानात् चचाल इव हृदयम्; अकारणादेव च अजायत गरीयसी दुःखासिका। "किमिदम्?" इति च (११) समुत्पन्न-विविधविकल्पविमथितमतिः अपगतधृतिः चिन्ताऽवनमित-वदनः स्तिमिततारकेण चक्षुषा (१२) समुद्भिद्यमान-स्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षौणीम्। अक्षि च तस्मिन् शून्येन एव च चेतसा चिक्रीड मृगयाम्।

(९) लोके—जगति, संसारे इत्यर्थः, कठिनतराः—अतिशयकठिनाः, स्नेहमयाः—स्नेहात्मकाः, बन्धनपाशाः—बन्धनरज्जवः। यदाकृष्टाः,—यैः,—पाशैः, आकृष्टाः,—नियन्त्रिताः तिर्यञ्चः,—पशुपक्ष्यादयः, एवम्—अग्निप्रवेशेन आत्मत्यागरूपं व्यवसायमिति भावः।

(१०) प्रबुद्धस्य—जागरितस्य। दक्षिणेतरम्—वामम्, अक्षि—नेत्रम्, पस्पन्दे—चुस्फोर। वेपथुः,—कम्पः, विपप्रथे—प्रचकाशे, आविरभूदित्यर्थः। निर्निमित्तम्—अहेतुकम्, अन्तरिति।—अन्तः,—देहाभ्यन्तरे इत्यर्थः, यत् बन्धनस्थानम्—संयमनस्थानं हृदयस्येति भावः तस्मात् चचाल—चकम्पे, हृत्कम्पः जात इत्यर्थः। गरीयसी—अतिगुर्वी, दुःखासिका—दुःखेन अवस्थानम्, प्राकृतिकारणाभिभावात्, निरतिशयमायात् अवनुदा भीकलततिर्वा।

(११) समुत्पन्नेति।—समुत्पन्नेन—आविर्भूतेन, विविधेन—नानाप्रकारेण, विकल्पेन—सन्देहेन, विमथिता—आलोडिता, मतिः,—बुद्धिर्यस्य तथाभूतः, अपगतधृतिः,—अधीरः, शुभमशुभं वा इति निर्णेतुमशक्यत्वात् इति भावः, चिन्तेति।—चिन्तया—दुर्भावनया, अवनमितम्—अधःकारितं, वदनं—मुखं येन तथाभूतः। स्तिमिततारकेण—निश्चलकनीनिकेन।

(१२) समुद्भिद्यमानेति।—समुद्भिद्यमानं—विकाशं गच्छत्, स्थलकमलिनीवनं—स्थलपद्मिनीकाननं यस्यां तामिव। चकोरेक्षणः,—चकोरनेत्रः, स्वाभाविकारुण्यात् इति भावः। क्षौणीं—पृथ्वीम्।

(१३) आरोहति च हरितहये मध्यमह्नो भवनम् आगत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलविततां (१४) अतिशिशिरमलयजरसलवलुलितवपुषम् इन्दुधवलोपधानधारिणीं वेत्रपट्टिकाम् अधिशयानः साशङ्क एव तस्थौ।

(१५) अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं, (१६) श्रमातपाभ्याम् आरोप्यमाणकायकालिमानम्, अन्तर्गतेन शोकशिखिना अङ्गा-

---

(१३) हरितहये—हरिदश्वे, सूर्ये इत्यर्थः, अह्न,—दिवसस्य, मध्य,—मध्यभागं तम्, आरोहति—उपगच्छति, मध्याह्ने जाते इत्यर्थः। उभयत,—उभयोः पार्श्वयोरित्यर्थः। संवाह्यमानेति।—संवाह्यमान—सञ्चाल्यमान, किङ्करादिभिः इति भाव, तनु—स्वल्प, क्षुद्रमित्यर्थः, मन्दं मन्दं यथा स्यात्तथा वा, तालवृन्त—व्यजनं यस्य तथाभूत। क्षितितलवितता—भूतलविस्तृताम्।

(१४) अतिशिशिरेति।—अतिशिशिरेण—अतिशीतलेन, मलयजरसस्य—चन्दनद्रवस्य, लवेन—बिन्दुना लुलित—लिप्त, वपु,—अवयव यस्या तथोक्ताम्। इन्दुधवलेति।—इन्दु,—चन्द्र, तद्वत् धवलं—शुभ्रम्, उपधानम्—उपबर्हं, "बालिश" इति ख्यात शिरस उपर्यासितमृदुपूर्णद्रव्यविशेष इत्यर्थ, तत् धरतीति ता, तद्विशिष्टामित्यर्थ, वेत्रपट्टिका—"शीतलपाटी" इति समाख्यया वङ्गदेशे प्रसिद्धवेत्रनिर्मितशयनसाधनविशेषम्। साशङ्क,—सोद्वेग।

(१५) "अथ" इत्यस्य "दूरादेव ··कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्" इति अग्रेण सम्बन्ध। तं विशिनष्टि, लेखगर्भयेत्यादिभि।—लेखगर्भया—अन्तर्गतलिप्या, नीलीति।—नीलीराग,—नीलवर्ण, यद्वा,—नीली—"नील" इति प्रसिद्ध ओषधिविशेष, तस्या राग,—रञ्जन, तेन तद्वद्वा मेचका—श्यामला, मयूरकण्ठाभा इत्यर्थ, ('कृष्णे नीलासितश्यामकालश्यामलमेचका' इत्यमर) रुक्—कान्ति यस्या तया, चीरचीरिकया—वसनखण्डेन, रचितेति।—रचिता—कृता, मुण्डमाला—शिरोमाला, शिरोवेष्टनमित्यर्थं येन तम्।

(१६) श्रमेति।—श्रम,—आयास, आतप,—रौद्र ताभ्याम्, आरोप्यमाणेति।—आरोप्यमाण,—उत्पाद्यमान, कायस्य—देहस्य, कालिमा—कार्ष्ण्यं यस्य तम्। अन्तर्गतेन—हृदयस्थेन, शोकशिखिना—शोकाग्निना, अङ्गा-

रताम् इव नीयमानम्, (१७) अनिलवशाऽऽगमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्या इव अनुगम्यमानम्, (१८) अभिमुखपवनप्रेङ्खप्रविततोत्तरीयपटप्रान्तवीज्यमानोभयपार्श्वम् अतित्वरया कृतपक्षम् इव आशु परापतन्तं, प्रेर्य्यमाणम् इव पृष्ठत स्वाम्यादेशेन, कृष्यमाणम् इव पुरस्तात् आयतेन श्रमश्वाससमीरेण, (१९) स्विद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्य्यकौतुकात् अपह्रियमाणलेखमिव भास्वता, सम्भ्रमभ्रष्टै इव इन्द्रियैः शून्यीकृतशरीरं,

---

रतामिव—अपातकतामिव नीयमान—प्राप्यमाण सन्धापातिरिक्तस्य जायमानत्वात् कृष्णवर्णद्वप्रर्भामिति भाव ।

(१७) अनील ।—अनिलवशात्—अतिवेगेन आगमनम्—आगति तस्मिन् द्रुततरेण—अतिशीघ्रम् शीघ्रगामितिनेत्यर्थ पदेन—पदक्षेपेण उद्धूयमाना—उत्क्षिप्यमाणा या धूलीना—रजसा राजि —श्रेणी समूह इत्यर्थ तद्व्याजेन—तच्छलेन राजवार्त्ताश्रवणकुतूहलिन्या—राज्ञ प्रभाकरवर्द्धनस्य सवादाकर्णनौत्सुक्यवत्या मेदिन्या—पृथिव्या क्षितिपतिश्चात राजपत्न्याः इति भाव अनुगम्यमानम्—अनुस्रियमाणम् ।

(१८) अभिमुखेति ।—अभिमुखपवनेन—सम्मुखागतेन वायुना प्रेङ्खन्—चलन प्रविततस्य सुविस्तृतस्य उत्तरीयपटस्य—उत्तरीयवसनस्य य प्रान्त —पर्य्यन्तभाग तेन वीज्यमानौ—प्राप्तवीजनौ उभयौ—द्वौ पार्श्वौ—कक्षयोरधोभागौ यस्य तम अत एव कृतपक्षं—जनितपक्षमिव । परापतन्त समागच्छन्तम् । प्रेर्य्यमाणमिव—प्रणुद्यमानमिव । स्वाम्यादेशेन—प्रभुनियोगेन । पुरस्तात्—अग्रत, आयतेन—दीर्घेण श्रमश्वाससमीरेण —परिश्रमजनितनिश्वासमीरणेन अविश्रामधावने सत्येव सञ्जातात् इति भाव ।

(१९) स्विद्यदिति ।—स्विद्यत्—घर्म्माक्तम् ललाटतटम्—भालदेशम् घटमान—पतत् प्रतिबिम्ब—प्रतिरूप यस्य तथाभूतेन *भास्वता*—सूर्य्येण कार्य्यकौतुकात्—केन कार्य्यानुरोधेन अयमीदृक् द्रुततर गच्छति इति ज्ञातुमौत्सुक्यात् अपह्रियमाणा—चोर्य्यमाणा लेखा—लिपि यस्मात् यस्य वा तम् ("लेखा लिपिराजिकयोरपि" इति मेदिनी)। सम्भ्रमभ्रष्टैरिव—सम्भ्रम —कार्य्यव्यग्रता तेन भ्रष्टानि—

( २० ) लेखापितप्रयोजनगौरवात् इव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं, कालमेघशकलम् इव प्रतियतो दुर्वार्ता-वज्रस्य, धूमपल्लवम् इव ज्वलिष्यतः शोकज्वलनस्य, बीजम् इव फलिष्यतो दुष्कृतशालेः, अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्।

दृष्ट्वा च ( २१ ) पूर्वानिमित्तपरम्पराऽऽविर्भूतभीतिः अभियत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम्

कृतानि तैरिव, इन्द्रियैः,—हस्तपदादिभिः, मुक्तीकृतेति।—मुक्तीकृत—विरचित-मित्यर्थं, शरीर—देह यस्य तथोक्त, महाऽऽर्ताव तथैव बैकल्यमिति इति भाव।

( २० ) लेखेति।—लेखे—पत्रिकायाम्, अर्पितस्य—निहितस्य, लिखितस्येत्यर्थ, प्रयोजनस्य—कार्यस्य, गौरव—गुरुत्व तस्मादिव, समे—समतले, अबन्धुरे इत्यर्थ, अपि वर्त्मनि—पथि, शून्यहृदयतया—विमनस्कतया, महाराजामङ्गलापत्त्यैति भाव, स्खलन्त—पतन्तम्। कालमेघशकलमिव—कृष्णवर्णमेघखण्डमिव, प्रलयकालिक-सम्वर्तादिमेघखण्डमिव वा, दुर्वार्तावज्रस्य—दु॰—दुष्टा, कठिना इत्यथ, वार्ता—सवाद एव वज्रम—अशनि तस्य ( वजधातो "सर्वेभ्यस्तु—" ( उ॰ २ पा॰ १८ सू॰ ) इत्यादिना रनि रूपम् ]। धूमपल्लवमिव—धूमनिचयमिव, शोकज्वलनस्य—शोकाग्ने। फलिष्यत —फल प्रसविष्यमाणस्य, दुष्कृतशाले,—दु खशोकिभिद्दस्य, दुर्दैवधान्यविशेषस्य वा, त्वरितफलाविर्भावद्योतनाय आशीरौपम्यम। अनिमित्त-भूतदीर्घाध्वग—दुर्निमित्तसूचक दीर्घपथिकम, यद्वा,—अनिमित्तभूत—दुर्निमित्त-रूपं, दीर्घम—आयतम्, अध्वान—पन्थान गच्छतीति तथोक्त, विशिष्टामङ्गलसम्भावनाव्यतिरेकेण ईदृशदीर्घाध्वागमनप्रयोजनाभावात इति भाव।

( २१ ) पूर्वेति।—पूर्वाश्च,—प्रागनुभूताश्च, अनिमित्तपरम्पराश्च,—दुर्लक्षण समूहश्च, दु स्वप्नदर्शनादिरूपेश्च इति भाव, [ "पूर्वानिमित्त—" इत्यत्र "पूर्वनिमित्त—" इति पाठे,—पूर्वेषा—पूर्वदृष्टाना, निमित्ताना—हेतूना, दु स्वप्नादि-दुर्निमित्तसूचकानामिति भाव ] आविर्भूता—सञ्जाता, भीति,—भय यस्य तथाभूत, ["—आविर्भूत—" इत्यत्र "—आविर्भावित—" इति पाठान्तरम्, तत्र पूर्वानिमित्तपरम्पराभि कर्तृभि आविर्भाविता—सञ्जनिता, भीति यस्य तादृश ] हृदयेन अभियत—भग्नहृदयोऽभूदित्यर्थं, दूतस्य व्यग्रमलिनत्वदर्शनात् इति भाव।

कृताचमनश्च (२३) जनयितुः आयुष्कामोऽपरिमितमणि-कनकरजतजातमात्मपरिवर्हम् अशेषं ब्राह्मणसात् अकरोत्, (२४) अभुक्त एव उच्चचाल। "दापय वाजिनः पर्य्याणम्" इति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाषे युवानम्। (२५) वेपमानहृदयश्च ससम्भ्रमप्रधावितपरिवर्हकोपनीतम् आरुह्य तुरङ्गमम् एकाकी एव प्रावर्त्तत।

(२६) अकाण्डप्रयाणसंज्ञाशङ्खक्षुभितम् सम्भ्रमात् सज्जीभूतम् उद्धतमुखरखुररवभरितसकलभुवनविवरम् आगत्यागत्य सर्व्वाभ्यो दिग्भ्यो धावमानम् अश्वीयम् अढौकत।

---

(२३) जनयितुः—पितुः, आयुष्कामः—जीविताकाङ्क्षी, अपरिमितेति। —अपरिमितानि—असङ्ख्यानि, मणयः—रत्नानि, कनकानि—काञ्चनानि, रजतानि—रौप्याणि, तेषां जातं—समूहम्, आत्मनः—स्वस्य, परिवर्हं—परिच्छदम्, अधीपकरणभूतमिति यावत्, अशेषं—समग्रं, ब्राह्मणसात्—विप्रदेयं, ब्राह्मणाधीनमित्यर्थः।

(२४) अभुक्त एव—असम्पन्नान्नपानादिक्रिय एव, उच्चचाल—चलितुमियेष इत्यर्थः। दापय—आरोपय इत्यर्थः, वाजिनः—अश्वस्य, पर्य्याणं—पल्ययनम्। शिर इति। —शिरसि—मूर्द्धि, कृपाणम्—असिं, निहितमिति भावः, बिभ्राणं—धारयन्तं, प्रभुनिर्देशाकर्णने सज्जतया तदाचारवत्त्वात् इति भावः। बभाषे—उवाच।

(२५) वेपमानहृदयः—कम्पमानचित्तः। ससम्भ्रमेति।—ससम्भ्रमं—सत्वरं, प्रधावितः—प्रचलितः, यः परिवर्हकः—अश्वपालः तेन उपनीतः—उपस्थापितः तम्। एकाकी एव—असहाय एव। प्रावर्त्तत—प्रचक्रमे, गन्तुम् इति शेषः।

(२६) अकाण्डेति।—अकाण्डे—असमये सहसा इत्यर्थः, प्रयाणं—यात्रा, प्रस्थानमिति यावत् तस्य संज्ञा—सूचना, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) तस्यै शङ्खः—शङ्खनादः इत्यर्थः, तेन क्षुभितं—समाकुलितम्। सम्भ्रमात्—आवेगात्, उद्वेगाद्वा, सज्जीभूतं—कृतसज्जम्, उद्धतेति।—उद्धतेन—उच्चैः मुखरैश्च—उच्चैः प्रहतेन इत्यर्थः, खुराणाम्—अश्वशफानां रवैः—नादैः, भरितम्—आपूरितं सकलं भुवनानां—जगतां, विवरम्—अवकाशः येन तत् तथाभूतम्। सर्वाभ्यः—चतसृभ्य इत्यर्थः। अश्वीयम्—अश्वानां समूहः अश्वीयम्—

(२७) प्रस्थितस्य च अस्य प्रदक्षिणेतरं प्रयान्तो विनाशम् उपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। (२८) अग्निगिर-रश्मिमण्डलाभिमुखश्च हृदयम् अवदारयन् इव दावशुष्के दारुणि दारुणं रराव वायसः। (२९) कज्जलमय इव बहुदिवसम् उपचितबहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिच्छलाञ्छनो नग्नाटकः।

---

अन्यसैन्यादि सर्वादिकं, स्वचक्रमामसिद्धान इति भावः तन्मार्गेनयनात् निम्नो क्षितम् अद्यारोहिसैन्यनिम्नयोर्वा ["तस्य समूहः" (४।२।३७ पा०) इति "तस्मै हितम्" (५।१।५ पा०) इत्यर्थे वा कविधानात् इति ध्येयम्] अक्षौहिण—मनुष्यो, तन्निति ग्रेव।

(२७) प्रस्थितस्य—प्रचलितस्य अस्य—नृपस्य। प्रदक्षिणेतरम्—अप्रदक्षिणं यथा तथा, वामभागेन इति यावत् प्रयान्तः,—गच्छन्तः। राजसिंहस्य—राजश्रेष्ठस्य, ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः), यद्वा—राजा सिंह इव राजेव सदृशः तस्य, हरिणाः,—मृगाः हरिणा हि अरण्ये उद्धतं पशुं तद्रक्षाय सिंहाभाववत्त्वं सूचयन्ति। प्रकटयाम्बभूवुः,—सूचयामासुः उक्तञ्च—"वामे प्रवसिताकुम्भा दक्षिणे मीनवाजिनः" इति।

(२८) अग्निगिरेति।—अग्निगिरा—उग्राः, रश्मयः,—किरणाः यस्य तस्य, सूर्यस्येत्यर्थः, मण्डलम्—बिम्बं तदभिमुखः,—तत्सम्मुखीकृत्य उपविष्टः इत्यर्थः। अवदारयन्—विदारयन् व्यथयन्निति यावत् ताद्दृशवायसालापनमङ्गलसूचकत्वादिति भावः। दावशुष्के—वनाग्निना दग्धार्धशिष्टे इति यावत् दारुणि—काष्ठे, अर्धदग्धशुष्कवृक्षे इत्यर्थः, स्थित इति शेषः। दारुणं—श्रुतिकठोरं यथा तथा रराव—दध्वान, एतस्य दर्शनश्रवणमशुभं वराहमिहिरेण, यथा—"छिन्नाग्रेऽङ्कुरच्छेदे कलह शुष्कद्रुमस्थिते काके" इति।

(२९) कज्जलमय इव—अञ्जनमय इव। उपचितेति।—उपचितेन—वृद्धिं गतेन अङ्गमलेषु जीवानां सञ्चारसम्भावनया जैनशासनरतानां तत्क्षालननिषेधादिति भावः बहलेन—प्रभूतेन मलपटलेन—किट्टनिचयेन मलिनिता—सञ्जातमला तनुः—शरीरं यस्य तथाभूतः। शिखीति।—शिखिनः,—मयूरस्य, पिच्छं—बर्हं लाञ्छनं—चिह्नं यस्य तथाभूतः नग्नाटकः,—नग्नः,—विवसनः सन्, अटति—भ्रमतीति तथोक्तः, नग्नक्षपणक इत्यर्थः दिगम्बरबौद्धसन्न्यासीति यावत्। अहिंसा परमो धर्मो वदन्ति बौद्धाः शरीरकीटविनाशशङ्कया न शरीरसंस्कारं कुर्वते, मयूरपिच्छकृतेन

( ३० ) दुर्निमित्तैः अनभिनन्द्यमानगमनश्च नितराम् अप्रहृष्टेन हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणः, ( ३१ ) तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुः अविचलं दधानः, समवसितहसितसङ्कथः, ( ३२ ) तूष्णीम्भूतेन भूपाललोकेन अनुगम्यमानो ( ३३ ) बहुयोजनसम्पिण्डितम् अध्वानम् एकेन एव अह्ना समलङ्घयत्।

( ३४ ) उपलब्धनरेन्द्रमान्द्यवार्त्ताविवशे इव नष्टतेजसि

---

व्यजनेन च पथि आकाशे च सञ्चारिणः कीटा अपसार्यन्ते आघातोपघातादिभ्य- स्त्राणभयात् इति प्रसिद्धिः, तेषाञ्च दर्शनस्य दुर्लक्षणत्वमुक्तं यथा,—"मधुमक्ष्याः- मधुमक्षिकाहिनाम्बा। प्रस्थाने वा प्रवेशे वा नैव ते दर्शनं गताः॥" इति।

( ३० ) दुर्निमित्तैः,—पूर्वोक्तैः वामगादरिष्टादिभिः दुर्लक्षणैः, अनभिनन्द्यमानम्—अप्रशस्यमानम्, अनादिष्टमात्रमिति यावत्, गमनं यस्य तथाभूतः, तस्मात् किं द्रक्ष्यामि? किं श्रोष्यामि? अथवा अस्मिन्नेव समये कदाचित् अनर्थपातः घटेत, तर्हि किं मुखं दर्शयाम अम्बायाः? इति चिन्तयन् मन्दोत्साहहृदयेन इत्यर्थः, नितराम्—अतिशयेन। पित्रिति।—पितरि—जनके, स्नेहः,—प्रेम अनुरागविशेष इत्यर्थः तेन आहितः,—जनितः, म्रदिमा—मार्दवं यस्य तेन, जनकस्नेहाकुलेन इति भावः, तत्तत्—दुर्निमित्तजातमित्यर्थः, उपेक्षमाणः,—अगणयन्।

( ३१ ) तुरङ्गमेति।—तुरङ्गमस्य—अश्ववाहनस्य, स्कन्धे—गलदेशे एव, बद्ध—सम्बद्धमित्यर्थः, लक्ष्यं—दृष्टिविषयः यस्य तथोक्तम्, अविचलं—स्थिरं, चक्षुः,—नेत्रं, दृष्टिमित्यर्थः, दधानः,—धारयन्। समवसितेति।—समवसिता—अवसानं गता, [ "समवसित—" इत्यत्र "दु समवसित—" इति पाठे,—दु,—दुःखात्, समवसिता इत्यर्थः.] हसितेन—हास्येन सह, सङ्कथा—आलापः यस्य सः।

( ३२ ) तूष्णीम्भूतेन—मौनिना, महादुर्भावनया विह्वलताप्रावेशेन इति भावः।

( ३३ ) बहुयोजनेति।—बहुभिः,—अनेकैः, योजनैः,—क्रोशचतुष्टयैः ( "स्यात् योजनं क्रोशचतुष्टयेन" इति लीलावती ) सम्पिण्डितं—सम्बद्धं, पूर्णमिति यावत् गुणितं वा, बहुयोजनविस्तृतमित्यर्थः। अह्ना—दिवसेन, ["अपवर्गे तृतीया" ( २।३।६ पा० ) इति तृतीया ]। समलङ्घयत्—अतिचक्राम।

( ३४ ) उपलब्धेति।—उपलब्धया—विदितया, नरेन्द्रस्य—राज्ञः, मान्द्यवार्त्तया

अधोमुखीभवति भगवति भानुमति भण्डिप्रमुखेण प्रणयिना राजपुत्त्रलोकेन बहुशो विज्ञाप्यमानोऽपि न आहारम् अकरोत्। (३५) पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च वहन्नेव निन्ये निशाम्।

(३६) अन्यस्मिन् अहनि मध्यन्दिने विगतजयशब्दम्, अस्तमितमूर्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रणीतचारणम्, (३७) अप्रसारितापणपण्यं, स्थानस्थानेषु यवन-

---

—अकुमलसंवादेन, विषण्णे इव—विषादं गते इव, व्यथिते इव इत्यर्थं, नष्टतेजसि—मन्दाभे, स्वगुरुमहीपतिकलेशदर्शनात इति भावः, अधोमुखीभवति—पश्चिमायामवतरति इत्यर्थं। भानुमति—सूर्ये। भण्डिप्रमुखेण—भण्डिप्रभृतिना। विज्ञाप्यमानोऽपि—अनुरुध्यमानोऽपि, प्रणयप्राचुर्यात् सहचराचारनियमवशात् वा इति भावः।

(३५) पुर इति।—पुरः,—अग्रतः, प्रवृत्तेन—प्रचलितेन, प्रतीहारेण—दौवारिकेण, गृह्यमाणा—ध्रियमाणा, पथिज्ञानार्थमाहूय आनीयमाना इत्यर्थं, या ग्रामीणपरम्परा,—ग्रामवासिगणः, तयैतस्मात् ग्रामात् अपरग्रामपर्यन्तं पन्थानं प्रदर्श्य, तस्मादेतस्मात् पुरः स्थापान्तरग्रामेषु निवेशकवदीव आदिश्यमानप्रतिग्रामस्थजना इति भावः ताभिः प्रकटितं—प्रदर्शितं प्रगुणम्—ऋजु, सुगममित्यर्थः, ("ऋजावजिह्मप्रगुणौ" इत्यमरः) वर्त्म—पन्थाः यस्य तथाभूतः सन्, वहन्नेव—अविश्राम्य चलन्नेव, पितृपादद्दर्शनौत्सुक्येन इति भावः।

(३६) "अन्यस्मिन्" इत्यस्य "स्कन्धावारमाससाद" इत्युत्तरेणान्वयः। मध्यन्दिने—मध्याह्ने। स्कन्धावारं विशिनष्टि, विगतेत्यादि।—विगतः—विरहितः, जयशब्दः,—जयसूचकमङ्गलनिनादः यस्मात् यस्मिन् वा तं, महाविषादात् इत्याशयः। अस्तमितेति।—अस्तमिताः,—अस्तं गताः, नष्टा इत्यर्थं, तूर्याणां—वादित्रभेदानां, नादाः,—ध्वनयः यस्मिन् तम्। उपेति।—उपसंहृतानि—त्यक्तानीति यावत्, गीतानि—गानानि यस्मिन् यस्माद्वा तम्। उत्सारितोत्सवम्—अपनीतानन्दम्। अप्रणीतचारणम्—प्रकृष्टं नीतं येषां ते प्रणीताः, न सन्ति प्रणीताः अप्रणीताः,—अकृतसङ्गीता इत्यर्थः, चारणाः,—कुशीलवाः, नटा इति यावत् यस्मिन् तम्।

(३७) अप्रसारितेति।—न प्रसारितानि—न विस्तारितानि, आपणेषु—निषद्यासु, हट्टेषु इत्यर्थं, ("आपणस्तु निषद्यायाम्" इत्यमरः) पण्यानि - विक्रेयवस्तूनि

वनकुटिलाभिः कोटिहोमधूमलेखाभिः उल्लसन्तीभिः (३८) यममहिषविषाणकोटिभिः इव उल्लिख्यमानं, कृतान्तपाशवागुराभिः इव वेष्ट्यमानम्, (३९) उपरि कालमहिषालङ्कारकालायसकिङ्किणीभिः इव कटु क्वणन्तीभिः दिवस वायसमण्डलीभिः भ्रमन्तीभिः आवेद्यमानप्रत्यासन्नाशुभं, (४०) क्वचित् प्रतिशायितस्निग्धबान्धवाराध्यमानाहिबुध्नं, क्वचित् (४१) दीपिकादह्यमान-

---

यस्मिन् तम्। पवनेति।—पवनस्य—वायोः वलेन—वेगेन कुटिलाः,—वक्रास्ताभिः, कोटीति।—कोटिहोमस्य—राज्ञः पीडानिरासार्थं स्वस्त्ययनेषु कोटिकृत्वः अनुष्ठितहोमस्य इति भावः, धूमलेखाभिः,—धूमराजिभिः, उल्लसन्तीभिः,—उद्गच्छन्तीभिः।

(३८) यमेति।—यमस्य—कृतान्तस्य, राज्ञो ग्रहणाय आगतस्य इति भावः, यो महिषः,—वाहनभूत इति भावः, तस्य विषाणकोटिभिरिव—शृङ्गाग्रैरिव, उल्लिख्यमानम्—उद्धृष्यमाणं समन्तादाक्रोश्यमाणमिवेति यावत्। कृतान्तेति।—कृतान्तस्य—यमस्य, पाशाः,—प्राणिसंयमनार्थमस्त्रविशेषा एव, वागुराः,—मृगबन्धनजालविशेषाः ताभिः, [ वाधातोः "मद्गुरादयश्च" (उ० १ पा० ४२ सू०) इति आकृतिगणत्वात् उरचि गुगागमे निपातनात् रूपम्। "वागुरा मृगबन्धनी" इत्यमरः ] वेष्ट्यमानमिव—बध्यमानमिव।

(३९) उपरि—ऊर्ध्वदेशे, आकाशे इत्यर्थः, कालेति।—कालस्य—यमस्य, ("मनमी यमराड् यमः। कालो दण्डधर" इत्यमरः) यो महिषः,—वाहनस्वरूपः तस्य अलङ्कारः,—आभरणरूपाः, याः कालायसकिङ्किण्यः —कृष्णलौहनिर्मितक्षुद्रघण्टिकाः ताभिरिव, कटु—श्रुतिविरसं यथा तथा इत्यर्थः, क्वणन्तीभिः,—रुवतीभिः दिवस—कृत्स्नं दिनं व्याप्य इत्यर्थः, भ्रमन्तीभिः—विचरन्तीभिः, वायसमण्डलीभिः,—काकनिवहैः, आवेद्यमानेति।—आवेद्यमानम्—सूच्यमानं, प्रत्यासन्नम्—आगतप्रायम्, अशुभम्—अमङ्गलं राजविनाशरूपमिति भावः यस्मिन् तं, महोत्पातादौ क्रूरजीवानां स्वयं ग्रामसमापतनवत्त्वादिति भावः।

(४०) क्वचित्—कुत्रचित् विभागे, प्रतिशायितेति।—प्रतिशायितैः —कृतोपवासैरित्यर्थः, स्निग्धैः,—वत्सलैः, राजनि अनुरक्तैरित्यर्थः, बान्धवैः,—बन्धुजनैः, आराध्यमानः,—उपास्यमानः आरोग्यकामनयेति भावः, अहिबुध्नः,—अहिना भोगिना बुध्नः,—दीर्घः, अहेरिव बुध्नो वा यस्य सः अष्टमूर्त्तिः, शिव इत्यर्थः, सततकण्ठावेष्टितभुजङ्गवत्त्वात्

विलीयमानगुग्गुलुविकलनवसेवकानुनीयमानमहाकालम्, अपरत्र
(४५) निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्ताप्तवर्गम्, अपरत्र
(४६) प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्,

---

तथा,—"शरीराबाधासु घोरासु वेदनाऽभ्यर्दितोऽपि वा। अरुन्धमेतन्माहात्म्यं नरो मुच्येत सङ्कटात्॥" इति च। [ "अम्भोङ्क्रियमाण ... चण्डिकाम्" इत्यत्र "अम्भोङ्क्रियमाणाऽभ्युपयाचमानचण्डिकम्" इति पाठे,—अम्भेव अङ्क्रियमाणं यस्य—बलिपशो उदरदेशस्य मांसोविशेष, तेन, तद्दानेन इत्यर्थं, उपयाच्यमाना—"देवि। एतदम्बुदयेन सन्तुष्टा राजानं नीरुजं कुरु" इति प्रार्थ्यमाना, चण्डिका यत्र त, तेषाम् उत्कटतम्नीतावारकत्वात् इत्याशय ]।

(४४) शिर इति।—शिरसा—मूर्ध्ना, विधृतेन—धृतेन, शिरसि स्थापितेन इत्यर्थं, विलीयमानेन—अम्नुत्तापेन विगलता, गुग्गुलुना—तन्निष्पन्नधूपविशेषेण, विकल,—विह्वल धूमानलसन्तापात् इति भाव, यो नव,—नवीन, युवेत्यर्थं, इच्छाया तद्धारणासामर्थ्यादिति भाव, सेवक,—उपासक, तेन अनुनीयमान,—प्रसाद्यमान, कालकवलनाद्राजरक्षणार्थमिति भाव, महाकाल,—हर यस्मिन् तम्, तदुक्तमग्निपुराणे,—"गुग्गुलं घृतसंयुक्तं साक्षात् गृह्णाति शङ्कर." इति।

(४५) निशितेति।—निशितया—तीक्ष्णया, शस्त्र्या—छुरिकया, ("शस्त्री चासिपुत्री च छुरिका चासिधेनुका" इत्यमर) निकृत्तेन—छिन्नेन, आत्मन—स्वस्य, मांसेन - पिशितेन यो होम,—देवयज्ञ, देवानुद्दिश्य मन्त्रोच्चारणपूर्वकमग्नौ आहुतिदानमित्यर्थः, तस्मिन् प्रसक्त,—प्रवृत्त, आप्तवर्ग,—स्वजना यस्मिन् तम्, इतरेषां तत्काले तथाविधानुरागाभावात् इत्याशय, उक्तञ्च तन्त्रसारे,—"य स्वहृदयसम्भूतं मांसं मायममापयत। त्रिमधुद्दमनाच्च वा दद्यात् भक्तियुक्तो नर॥ स एव मासाभ्यन्तरे कामानिष्टमवाप्नुयात्॥" इति।

(४६) प्रकाशेति।—प्रकाशं—सर्वेसमक्षं यथा तथा नरपतीनां—राज्ञां, करदानां सामन्तानामित्यर्थं, कुमारकै,—तनयै, क्रियमाण,—विधीयमान, महामांसाना—मनुष्यपिशितानां, निहतनृमेध्यपुरुषावयवगृहीतानामिति भाव, विक्रयस्य, पिशाचादिभ्य इति भाव, प्रक्रम,—प्रारम्भ यस्मिन् तथोक्तम्, पिशाचादयोऽपि महामांसप्राप्त्या तद्विनिमयेन अलौकिकशक्तिमत्तया विक्रेतृणामुपकारं कुर्वन्ति, अत्र तु राजजीवनोपायभूतौषधादिदानमेव उपकार इति भाव। तादृशक्रियाया राजदण्डभयात् लोकापवादभीते. वा अप्रकाशम् अनुष्ठानं वने क्रियते, इह तु राजाभीष्ट-

(४७) उपहतमिव श्मशानपांशुभिः, अमङ्गलैरिव परिगृहीतं, यातुधानैरिव विध्वस्तं, कलिकालेन इव कवलितं, (४८) पाप-पटलैः इव सञ्छादितम्, अधर्मविप्लवैः इव लुण्ठितम्, अनित्यता-धिकारैः इव आक्रान्तं, नियतिविलासैः इव आत्मीकृतं, शून्यमिव, सुप्तमिव, मुषितमिव, विलुञ्चितमिव, छलितमिव, मूर्च्छितमिव स्कन्धावारम् आससाद ।

---

विषये तदनुष्ठानात् न राजदण्डभयं न लोकनिन्दाभयं वा इति प्रकाशप्रच्छेदेन आचरितम् ।

(४७) श्मशानेति ।—श्मानः,—शवाः शेरतेऽत्र इति श्मशानम्—शवदाहस्थानम्, [श्मनुपपदात् 'शीङ्' इत्यस्मात् "सुपि—" (अ० २ पा० ९० सू०) इत्यादिना उणादिविधौ । बाहुलकत्वात् इति आनचि नलोपे आकारलोपश्च डित्वात् रूपम् ] तस्य पांशुभिः—श्मशानस्थधूलिपुञ्जैः इत्यर्थः, उपहतमिव—दूषितमिव नीरसेकमार्जनाद्यभावात् पांशुव्याप्तमिति भावः । अमङ्गलैः,—अशुभैः, परिगृहीतमिव आक्रान्तमिव, सर्वेषामेव प्रबलविषादाग्निसमाक्रान्तत्वादिति भावः । यातुधानैरिव—राक्षसैरिव, ("राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । यातुधानः पुण्यजनः" इत्यमरः ।) विध्वस्तं—विनष्टं सर्वत्र स्थितिनियमानुकूलसङ्गत्याभावात् । कवलितं—ग्रस्तं, ग्रासनाभावतः दुर्दशायाः प्रभावाधिक्यात्, सुस्वादादिव्यापारविरहात् इति भावः ।

(४८) पापपटलैरिव—कलुषनिचयैरिव, सञ्छादितम्—आकीर्णम् । अधर्म-विप्लवैः इव—अधर्मसञ्चारैरिव लुण्ठितम्—कृतलुण्ठनम् । अनित्यताधिकारैरिव—अनित्यः—संसारोऽयं क्षणभङ्गुरः, तस्य भावः अनित्यता—विनश्वरता तस्या अधिकाराः—अनित्यः संसारः धिगिति वचनानि तैरिव, आक्रान्तम्—अभिभूतम्, शोकावेगात् सर्वेषामेव कर्तव्येषु औदासीन्यादिति भावः । नियतिविलासैरिव—भाग्यविपाकैरिव, आत्मीकृतं—गृहीतम्, अहो दुर्दैवम् । कथमस्माकमीदृशी दशा समुपस्थिता इत्य-नेकैर्दैन्यवाक्यप्रवर्तनादिति भावः । शून्यमिव—जनरहितमिव, सुप्तमिव—निद्रित-मिव, महाशोकवैकल्येन सर्वेषां निःस्पन्दमवस्थानादिति भावः । मुषितमिव—हृत-सर्वस्वमिव इत्यर्थः, विभूषिताङ्गानामपि जनानां भूषणादिकं परित्यज्य दीनभावेनाव-स्थानादिति भावः । विलुञ्चितमिव—अप्रतिभमिव, लज्जितमिव वा । छलितमिव—प्रतारितमिव, दुर्भाग्यतया सुखादिवैकल्यादिति भावः । मूर्च्छितमिव—मोहं गतमिव,

प्रविशन्नेव च (४९) विपणिवर्त्मनि कुतूहलाकुलबहुलबालकपरिवृतम् ऊर्ध्वयष्टिविष्कम्भवितते वामहस्तवर्तिनि (५०) भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरम् इतरकरकलितेन शरकाण्डेन कथयन्तं यमपट्टिकं ददर्श, तेनैव च गीयमानं श्लोकम् अशृणोत्,—

"मातापितृसहस्राणि पुत्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते ? कस्य वा भवान् ?"॥३॥ इति।

---

शोकावेगेन समन्धेरात्रिक्याविहिति इत्यर्थम्, स्कन्धावार—कटक सैनिकनिवेशनस्थानमित्यर्थं, राजधानीमिति यावत्, आवसाद—प्राप उपलेभे इत्यर्थं, ["आससाद" इत्यत्र "समाससाद" इति पाठोऽपि—स एवार्थः]। अत्र शोकमहाराजस्य, आलम्बनविभाव निजपितृसंवेदनशुश्रूषणविभावा दैवनिन्दाक्रन्दितादयनुभावाः, मोहादिव्यभिचारिणि वै व्यक्तीकृतः शोक करुणरसरूपतामेव गमितामिति, रौद्रबीभत्सरूपस्यास्य च रसभूता ज्ञेया इति सङ्क्षेपः।

(४९) "विपणिवर्त्मनि" इत्यस्य "यमपट्टिकं ददर्श" इत्यनेनान्वयः। विपणिवर्त्मनि—पण्यवीथिकामार्गे ("विपणिः पण्यवीथिका" इत्यमरः) कुतूहलेति।—कुतूहलेन—किमेतदिति कौतुकेन, आकुला—आक्रान्ता, बहुला,—बहव, ये बालका,—शिशव, तैः परिवृत—वेष्टित तम्, ऊर्ध्वेति।—ऊर्ध्वा—ऊर्ध्वमवस्थापिता इत्यर्थ, या यष्टि,—दण्ड, सैव विष्कम्भ,—स्तम्भनप्रतिबन्ध इत्यर्थं, अवलम्बनमिति यावत्, ("विष्कम्भो योगभेदे स्यात् विस्तार प्रतिबन्धयोः" इति मेदिनी) तेन वितत,—प्रसारिते तस्मिन् वामहस्तवर्तिनि—वामकरस्थिते।

(५०) भीषणेति। भीषण—भयङ्कर य महिष तम् अधिरूढ,—अधिष्ठित, य प्रेतनाथ,—यम, तत्सनाथे—तद्युक्ते, चित्रवति—चित्रिते, पटे—वस्त्रे इत्यर्थं परलोकव्यतिकर—परलोके अन्यस्मिन् जगति, प्रेतलोके इति यावत्, य व्यतिकर,—सम्बन्ध शुभाशुभकर्मजनितपुरस्कारदण्डरूप इति भाव, तं परलोकव्यापारनिचयं, इतरकरकलितेन—दक्षिणहस्तधृतेन, शरकाण्डेन—तदाख्यतृणविशेषस्य स्तम्बेन कथयन्त—प्रदर्शयमानवर्त्मैव निर्दिशन्तम् इत्यादिदर्शयन्तमित्यर्थं, यमपट्टिक—यमपटेन—यमपटप्रदर्शनेनैव, दीव्यति इति यमपट्टिक तम्, ["तेन दीव्यति—" (४।४।२ पा० ) इत्यनेन ठक् रूपम्]। तेनैव—यमपट्टिकेनैव।

चित्र प्रदर्श्य तत्र तत्र तत्तत्कर्मफलनर्त्याख्येन गाथा आचरणीयाम् एषयति,

(५१) तेन च अधिकतरम् अवदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगात् अवतीर्य च अभ्यन्तरात् निष्क्रामन्तम् अप्रसन्नमुखरागं मुक्तमिव इन्द्रियैः सुषेणनामानं वैद्यकुमारम् अद्राक्षीत्। कृतनमस्कारश्च अप्राक्षीत्, —"सुषेण। अस्ति तातस्य विशेषो न वा?" इति। सोऽब्रवीत्, —"नास्ति, इदानीं यदि भवेत् कुमारं दृष्ट्वा" इति। (५२) मन्दमन्दं द्वारपालैः प्रणम्यमानश्च दीयमानसर्वस्वः, पूज्य-

---

मातेति।—मातापितृणा—मातरपितृणाम् ["आनङ् ऋतो द्वन्द्वे" (६।३।२५ पा०) इति सूत्रेण आनङादेशः मातुरानङ्] सहस्राणि—समूहाः, पुत्रदारशतानि च—पुत्रकलत्रसमूहाश्च, युगे युगे—प्रतियुगं, व्यतीतानि—अतिक्रान्तानि, [redacted] स्व सम्बन्धिनः गताः नाम गतानि इत्यर्थः ते—मातापित्रादयः स्त्रीपुत्रादयश्च, कस्य?—न कस्यापि इत्यर्थः, भवान् त्वं वा कस्य?—न कस्यापि इत्यर्थः। श्लोकेनानेन राजन्नपि त्वया अथैवेदं न भाव्यं प्राकृतजनमिवैव मति निमग्ना, तथाऽप्येवमेव गन्तव्यमिति उपदिष्ट इव हर्षः इति बोध्यम्। अत्र पितुर्वियोगो भविष्यति, तेन पितृविरहजनितशोकस्तु त्वया परिहरणीयः, तत्सम्बन्धस्यानित्यत्वात् अस्थिरत्वादिति विशेषे प्रस्तुते श्लोके मातापित्रादीनां प्रतियुगमुक्तस्य अस्थिरत्वस्य सामान्यमभिहितमिति सामान्येन विशेषस्य समर्थनात् अप्रस्तुतप्रशंसाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ २॥

(५१) तेन—श्लोकश्रवणेन, अवदीर्यमाणहृदयः,—भिद्यमानान्तःकरणः। प्रतिषिद्धेति।—प्रतिषिद्धः,—निवारितः, सकलानां लोकानां—जनानां, प्रवेशः,—अन्तर्गमनं यस्मिन् तत्। अभ्यन्तरात्—गृहमध्यात्, अन्तःपुरादिति भावः। निष्क्रामन्तम्—निर्गच्छन्तम्। अप्रसन्नेति।—न प्रसन्नः,—प्रसादयुक्तः, मुखस्य रागः,—कान्तिः यस्य तम्। इन्द्रियैः,—चक्षुरादिभिः, मुक्तमिव—परित्यक्तमिव, राज्ञः रोगप्रशमनोपायानुसन्धानव्याकुलचित्ततया बाह्यज्ञानरहितमिव इत्यर्थः। विशेषः—अवस्थापरिवर्तनमित्यर्थः, क्रियता परिमाणेन रोगोपशम इति यावत्। अस्ति, विशेष इति शेषः। भवेत्, विशेष इति शेषः, प्रवासागतपुत्रमुखनिरीक्षणेन महानन्दोदये रोगप्रशमनस्य कथञ्चित् सम्भावितत्वात् इति भावः।

(५२) "मन्दमन्दम्" इत्यस्य "प्रणम्यमानः ···राजकुलं विवेश" इति अनेन सम्बन्धः। मन्दमन्दं—शनैः शनैः। "मन्दमन्दम्" इत्यत्र "मन्द मन्दम्" इति

(५६) निर्वर्त्त्यमानभूतरक्षाबलिविधानं, प्रयतविप्रप्रस्तुतसंहिताजपं, (५७) जप्यमानरुद्रैकादशीशब्दायमानशिवगृहम्, अतिशुचि-शैवसम्पाद्यमान-विरूपाक्ष-क्षीरकलश सहस्रस्नपनम्, (५८) अजिरोपविष्टैश्च अनासादितस्वामिदर्शनदूयमानमानसै-

---

संयद्दिदिति यावत् यत्र तत्, दुष्टग्रहाणां कोपदृष्टिपातया भूम्यां मल्लाङ्गबलिप्रसङ्गया वा इति भावः।

(५६) निर्वर्त्त्यमानेति।—निर्वर्त्त्यमानं—सम्पाद्यमानं भूतेभ्यः,—देवयोनिविशेषेभ्यः रक्षार्थं—त्राणार्थं बलिविधानं—माषभक्ताद्युपहारप्रदानं यस्मिन् तत्, तदुपहारमन्त्रश्च उक्तो यथा—"ॐ भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले। ते गृह्णन्तु मया दत्तं बलिमेतं प्रसाधितम्॥ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥" इति। [ पच्यमानबलिविधानम्" इत्यत्र "पच्यमानमहामायूरामवर्त्त्यमानदेवशान्तिनिवर्त्त्यमानभूतरक्षाबलिविधानम्" इति समस्तपाठे,—पच्यमाना या महामायूरी तथा प्रवर्त्त्यमानायै—क्रियमाणायै देवस्य शान्त्यै—दोषप्रमोचनाय निवर्त्त्यमानं भूतरक्षाबलिविधानं यत्र तत् ]। प्रयतेति।—प्रयतैः,—संयमशालिभिः, विशुद्धचित्तैः इति यावत् विप्रैः—द्विजैः प्रस्तुतः,—प्रारब्धः, संहिताजपः—वेदपाठः यस्मिन् तत्, अपौरुषेयवेदपाठस्य कल्मषसीमानां निरन्तरपाठनाशप्रत्यवायनाशशक्तिमत्त्वात् इति भावः।

(५७) जप्यमानेति।—जप्यमानया—पठ्यमानया रुद्रैकादश्या—"नमस्ते रुद्रमन्यव" इत्यादि यजुर्वेदोक्तरुद्राध्यायस्तुतिरूपया शब्दायमानं—निनादयमानं शिवगृहं—शिवमन्दिरं यस्मिन् तत् दुःसाध्यपीडादौ शिवसाक्षि रुद्राध्यायपाठस्य महाफलप्रदत्वात् इति हृदयम्। अतिशुचीति।—अतिशुचिना—अतिपूतेन शैवेन—शिवपाशुपतेन, सम्पाद्यमानम्—अनुष्ठीयमानं, विरूपाक्षस्य—शिवस्य, [ "बहुव्रीहौ—" (५।४।११३ पा०) इत्यादिना षच् ] क्षीरकलशानां—दुग्धकुम्भानां, सहस्रेण—सहस्रसङ्ख्यया स्नपनम्—अभिषेचनं यस्मिन् तत्, शैवतन्त्रावधानेन तथाविधानुष्ठानस्य उत्पातप्रशमकत्वात् इति भावः।

(५८) अजिरोपविष्टैः—चत्वरासीनैः [ अजधातोः "अजिर—" (उ० १ पा० ५४ सू०) इत्यादिना किरचि वीभावाभावे रूपम्। "अङ्गनं चत्वराजिरे" इत्यमरः ] अनासादितेति।—अनासादितेन—अप्राप्तेन, स्वामिदर्शनेन—प्रभुसाक्षात्कारेण, स्वामिदर्शनाप्राप्त्या इत्यर्थः, दूयमानं—तप्यमानं, मानसं—चित्त

अभ्यन्तरनिष्पतितनिकटवर्त्तिपरिजननिवेद्यमानवार्त्तैः वार्त्तीभूतस्नानभोजनशयनैः (५९) उज्झितात्मसंस्कारमलिनवेशैः लिखितैः इव निश्चलैः नरपतिभिः नीयमाननक्तन्दिनं, (६०) दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशुव्याहृतैः केनचित् चिकित्सकदोषान् उद्भावयता, केनचित् (६१) असाध्यव्याधिलक्षणपदानि पठता, केनचित् दुःस्वप्नान् आवेदयता, केनचित् पिशाचवार्त्तां विसृजता, केनचित्

येषां ते। अभ्यन्तरेति।—अभ्यन्तरात्—प्रासादमध्यात्, अन्तःपुरादिति यावत्, निष्पतितेन—निर्गतेन, निकटवर्त्तिना—समीपस्थेन, राज्ञ इति भावः, परिजनेन—परिचारकेण, निवेद्यमाना—विज्ञाप्यमाना, वार्त्ता—राजवृत्तान्तः येषां ते। वार्त्तीभूतेति।—वार्त्तीभूतानि—वार्त्तामात्रावशिष्टानि, कथाशेषाणीति भावः, स्नानानि—आप्लावाः भोजनानि—आहाराः, शयनानि—स्वापाश्च येषां ते, सम्राजो जीवनाशाङ्कया उद्विग्नचित्तत्वादिति भावः।

(५९) उज्झितेति।—उज्झितेन—परित्यक्तेन, आत्मसंस्कारेण—स्वकीयदेहशरीरमार्जनादिरूपेण प्रसाधनकर्मणा इत्यर्थः, मलिनाः—विवर्णाः, वेशाः—परिच्छदाः येषां तैः। लिखितैरिव—चित्रार्पितैरिव, निश्चलैः—निस्पन्दैः। नीयमानेति।—नीयमानम्—अतिक्रम्यमाणम्, नक्तन्दिनं—रात्रिन्दिवं यस्मिन् तत्। [ नक्तञ्च दिवञ्च इत्यत्र "अचतुर—" (५।४।७७ पा०) इत्यादिना एकवद्भावे अपम्। 'नक्तन्दिनम्' इत्यत्र "नक्तन्दिवम्" इति पाठोऽपि स एवार्थः, "अचतुर—" (५।४।७७ पा०) इत्यादिना समासः ]।

(६०) दुःखेति।—दुःखेन—मनःपीडया, शोकेनेति यावत्, दीनं—म्लानं, वदनं यस्य तेन। प्रघणेषु—बहिर्द्वारप्रकोष्ठविशेषेषु, ("प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके" इत्यमरः) बद्धमण्डलेन—मण्डलाकारोपविष्टेन, उपांशुव्याहृतैः—अनुच्चभाषितैः, चिकित्सकदोषान्—चिकित्सकाः रोगमेव न निर्णेतुं शक्नुवन्ति, औषधान्यपि न तथा सुप्रयुक्तानीत्येवं दोषान्, उद्भावयता—प्रकटयता।

(६१) असाध्येति।—असाध्यस्य—दुश्चिकित्स्यस्य, व्याधेः—रोगस्य, ('रोगव्याधिगदामयाः" इत्यमरः) लक्षणपदानि—लिङ्गप्रकाशकवाक्यानि, पठता—कीर्त्तयता, सर्वैर्याभिमानित्वादिति भावः। दुःस्वप्नान्—अमङ्गलसूचकस्वप्नदर्शनानि,

(६२) कार्त्तान्तिकादेशान् प्रकाशयता, केनचित् उपलिङ्गानि गायता, अन्येन अनित्यतां भावयता, संसारञ्च अपवदता, कलिकालविलसितानि च निन्दता, दैवञ्च उपालभमानेन अपरेण धर्माय कुप्यता, राजकुलदेवताश्च अधिक्षिपता, अपरेण (६३) क्लिष्टकुलपुत्रकभाग्यानि गर्हयता बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश।

(६४) अविरलबाष्पपयःपरिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधिद्रव्यद्रवगन्धगर्भसुरभिकथनां छायानां

---

आवेदयता—ज्ञापयता, परस्परमिति भावः। पिशाचवार्त्ता—पिशाचः,—अपदेवयोनिविशेषः, तस्य वार्त्ता—वृत्तान्तः तां, पिशाचाविष्टो वा राजा, अदस्तथा चेष्टित इश्यते, इत्येवंरूपवचनमित्यर्थः, विकत्थता—प्रकटयता।

(६२) कार्त्तान्तिकादेशान्—गणकादेशान्, ज्योतिर्विदः राज्ञ एवमेकमशुभं निर्दिष्टवन्त इत्येवंरूपानित्यर्थः। ("सांवत्सरो ज्यौतिषिको दैवज्ञ गणकावपि। स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्त्तान्तिका अपि॥" इत्यमरः)। उपलिङ्गानि—उत्पातचिह्नानि, अमङ्गलसूचकरक्तवृष्ट्यादिरूपान् इति भावः, गायता—कीर्त्तयता। अनित्यता—क्षणभङ्गुरता, देहस्य इति भावः, भावयता—चिन्तयता। अपवदता—निन्दता। कलिकालविलसितानि—कलिकालस्य—चतुर्थयुगस्य, विलसितानि—दुश्चेष्टितानि, कलिकाले पापिजनसहस्रसमाकुले ईदृशो धर्म्मपरायणो राजा कथमपि न जीवति इत्यादिरूपाणीति भावः। दैवं—विधिम्, उपालभमानेन—तिरस्कुर्वता। अधिक्षिपता—निर्भर्त्सयता।

(६३) क्लिष्टेति।—क्लिष्टानां—क्लेशाभिभूतानां, दीनानामित्यर्थः, कुलपुत्राणां—सत्कुलजातकुमाराणां, पित्रादिविहीनतया निराश्रयाणां राज्ञा पाल्यमानानामिति भावः, भाग्यानि—दुरदृष्टानि, गर्हयता—निन्दता। बाह्यपरिजनेन—बहिःस्थितपरिवारवर्गेण, कथ्यमानेति।—कथ्यमाना—मिथः आलप्यमाना कष्टा—दारुणा, पार्थिवस्य—राज्ञः अवस्था—दशा यस्मिन् तत्।

(६४) अविरलेति।—अविरलैः,—निरन्तरैः, अविच्छिन्नैरिति यावत्, बाष्पपयोभिः,—नेत्रजलैः, [अत्र पयःपदमधिकमेव, बाष्पशब्देनैव विवक्षितार्थलाभादिति ध्येयं] परिप्लुते—सिक्ते, लोचने—नयने यस्य तेन। विविधेति।—विविधानां

सर्पिषां तैलानाञ्च पच्यमानानां गन्धम् आजिघ्रन् अवाप द्वितीयं कक्ष्यान्तरम्।

(६५) तत्र च अतिनिःशब्दे गृहावग्रहणीग्राहिबहुवेत्रिणि, त्रिगुणतिरस्करिणीतिरोहितसुवीथीपथे, (६६) पिहितपक्षद्वारके, परिहृतकवाटरटिते, घटितगवाक्षरचितमरुति, दूयमानपरिचारके, (६७) चरणताडनस्खलत्सोपानप्रकुपितप्रती-

—नानाप्रकाराणाम्, औषधिद्रव्याणां—रोगोपशमकफलतागुल्मादीनां द्रवस्य—रसस्य, गन्धम्,—आघ्राय, गर्भे—मध्ये यत्र तत् यथा तथा, उत्क्वथतां—पच्यमानानां क्वाथानां—कषायविशेषाणाम्। सर्पिषां—घृतानाम्। अवाप—प्राप, प्रविवेश इति यावत्। कक्ष्यान्तरं—कक्षे—राजान्तःपुरे भवा कक्ष्या,—हर्म्यादिप्रकोष्ठ इत्यर्थः, तासामन्तरम्—अभ्यन्तरम्।

(६५) तत्रेत्यादि।—"तत्र च" इत्यस्य "धवलगृहे स्थितं पितरमद्राक्षीत्" इत्युत्तरेण सम्बन्धः। गृहेति।—गृहावग्रहणी—देहली, द्वारारम्भप्रदेश इत्यर्थः, ("गृहावग्रहणी देहली" इत्यमरः) तद्ग्राहिणः,—तद्धारिणः तत्रावस्थायिन इत्यर्थः, बहवः,—अनेके, वेत्रिणः—वेत्रपाणयः पुरुषाः यस्मिन् तथोक्ते। त्रिगुणेति।—त्रिगुणाभिः,—त्रिरावृत्ताभिः तिरस्करिणीभिः,—जवनिकाभिः, तिरोहिताः,—अन्तर्हिताः, सुवीथ्यः—गृहाङ्गानाम् अभ्यन्तरस्थवीथिकाणामित्यर्थः, ("वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः" इति मेदिनी) पन्थानः,—अभ्यन्तरमार्गाः इत्यर्थः, यस्मिन् तथोक्ते, असूर्यम्पश्यानां राजदाराणां निःशब्दसञ्चारायेति भावः।

(६६) पिहितेति।—पिहितम्—आवृतम्, पक्षद्वारम्—अभ्यन्तरस्थ पक्षद्वारं, "खिड्की" इति ख्यातं गुप्तद्वारमित्यर्थः पार्श्वस्थद्वारं वा यस्य तस्मिन्, ("पक्षद्वारमन्तर्वर्ति यत् पक्षद्वारं तदुच्यते" इति "पक्षद्वारन्तु पक्षकः" इति च कोषान्तरे)। परिहृतेति।—परिहृतं—परित्यक्तं, कवाटानाम्—अररीणां, द्वारपिधानकाष्ठफलकानामित्यर्थः, रटितं—शब्दः यस्मिन् तथोक्ते राज्ञः कर्णपीडाशङ्कया प्रवेशनिर्गमनयोरपि सशब्दावरोधनात् निःशब्द इति भावः। घटितेति।—घटितैः,—बद्धैः, गवाक्षैः—वातायनैः, रचिताः,—निरुद्धाः, मरुतः,—वायवः यस्मिन् तथोक्ते निवारितबाह्यवायाविति भावः। दूयमानपरिचारके—दूयमानाः—तप्यमानाः, परिचारकाः,—भृत्याः यस्मिन् तथोक्ते।

(६७) चरणेति।—चरणस्य—पदस्य, इतस्ततः सञ्चरतां जनानामिति भावः, ताडनेन—आघातेन, चेपणेन इति यावत्, स्खलत्—मदत्, यत् सोपानम्—अधिरोहणी तेन

द्वारे, निभृतसञ्ज्ञानिर्दिश्यमानसकलकर्म्माणि, नातिनिकटोपविष्टकञ्चुकिनि, (९८) कोणस्थिताह्वानचकिताचमनकवाहिनि, चन्द्रशालिकालीनमूकमौलिलोके, महाऽऽधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके, (९९) सज्जवनपुञ्जितोद्विग्नपरिजने,

---

प्रकुपिता,—क्रुद्धा, प्रतीहारा,—द्वारपाला यस्मिन् तादृशे, राजशोकाशङ्कया प्रतिहारैर्निषिद्धपदिप्रवेशशब्दपदसञ्चारे इति भावः । निभृतेति ।—निभृतया—विनीतया, शब्दरहितया इति भावः सञ्ज्ञया—हस्तादीनाम् इङ्गितेन, निर्दिश्यमानानि—प्रदर्श्यमानानि, सकलानि—समस्तानि कर्म्माणि—अनुष्ठेयानि यस्मिन् तथाविधे, कोलाहलपरिहारार्थमिति भावः । नातीति ।—नातिनिकटे—नातिसन्निधौ, उपविष्टाः,—आसीनाः कञ्चुकिनः,—कञ्चुकिनः यत्र तस्मिन् ("तत्रुष वर्म्म दंशनम् । उरश्छद कङ्कटक " इत्यमरः) तेषामवयवस्वनेन शब्दस्य सञ्जायमानत्वात् जायते इति तत्परिहारार्थमिति भावः ।

(९८) कोणेति ।—कोणेषु—गृहैकदेशेषु, स्थिता,—दण्डायमाना इत्यर्थः, आह्वानेन—आकारणामात्रेण, चकिता—त्रस्ता इत्यर्थः, आचमनकवाहिनः,—आचमनार्थं पानीयवाहिनः यत्र तादृशे । ["आचमनकवाहिनि" इत्यत्र "आचमनवाहिनि" इति पाठेऽपि—स एवार्थः ] । चन्द्रेति ।—चन्द्रशालिकायाम्—शिरोगृहे, प्रासादोपरिवर्त्तिनि गृहविशेषे इत्यर्थः, ("चन्द्रशाला शिरोगृहम्" इत्यमरः) लीना,—निलीनोपविष्टा इत्यर्थः, [लीधातो "निष्ठा" (३।२।१०२ पा०) इति क्तप्रत्यये "ल्वादिभ्यः" (८।२।४४ पा०) इत्यादिना निष्ठा नत्वे रूपम् ] मूका,—अवाचः, मौला,—कुलक्रमपालिता, लोका,—प्रकृतिवर्गा इत्यर्थः यस्मिन् तस्मिन्, विहर्ष्यता-विमोहात इति भावः । महेति ।—महद्भिः,—प्रबलैः, आधिभिः—मानसव्यथाभिः, ("पुंस्याधिर्मानसी व्यथा" इत्यमरः) विधुराणां—व्याकुलानां बान्धवाङ्गनानां—बन्धुस्त्रीणां, वर्गेण,—समूहेन, गृहीतम्—अधिष्ठितं, प्रच्छन्नं—निर्जनं, गुप्तमित्यर्थः, प्रग्रीवकं—कल्याविशेषः, वातायनं वा यस्मिन् यस्य वा तस्मिन्, यद्वा—महाधिविधुरबान्धवाङ्गनावर्गैः गृहीताः,—अवलम्बिताः अन्योऽन्यमिति भावः, प्रच्छन्ने—निभृतप्रदेशे, प्रग्रीवकाः,—प्रकृष्टाः ग्रीवाः, शोभनकन्धरा इत्यर्थः यत्र तादृशे, शोकक्षोभेषु परस्परं ग्रीवामवलम्ब्य प्रच्छन्नभावेनावस्थानस्य प्रकृतिसिद्धत्वात् जनाचारात् इति भावः ।

(९९) सज्जवनेति ।—सञ्जवने—चतुःशालायाम्, अन्योऽन्याभिमुखावस्थितगृहचतुष्कयुतभवने इत्यर्थः, ("सञ्जवनन्त्विदम् । चतुःशालम्" इत्यमरः) पुञ्जिताः,

प्रविष्टकतिपयप्रणयिनि, गम्भीरस्वरारब्धभीतभिषजि, दुर्मनायमानमन्त्रिणि, (७०) मन्दायमानपुरोधसि, सीदत्सुहृदि, निद्राणविपश्चिति, सन्तप्तसामन्ते, (७१) विचित्तचामरग्राहिणि, दुःखक्षामशिरोरक्षिणि, क्षीयमाणप्रसादवित्तमनोरथसम्पदि,

---

—समवेता, शुचिता —उत्कण्ठिता इत्यर्थः, परिजना,—परिवारवर्गा यस्मिन् तथोक्ते, बहुसङ्ख्यकानां तेषां तथाविधप्रकोष्ठाभ्यन्तरे अवस्थानस्य सुघटत्वात् इति भावः। प्रविष्टेति।—प्रविष्टा,—अभ्यन्तरागता, कतिपये—केचन इत्यर्थः, प्रणयिनः,—सुहृदः यत्र तादृशे। गम्भीरेति।—गम्भीरस्य—"गम्भीरस्तु स्वरो ज्ञेयो घनतादीर्घ तथा। आमत्तेन वाक्येन वाचकारोदयेन च।" इत्युक्तलक्षणस्य स्वरस्य आरम्भात्—प्रारब्धदर्शनादित्यर्थः, भीता,—शङ्किता, तस्य महाव्यसनसूचकत्वे शङ्कितत्वात् इति भावः, भिषजः,—चिकित्सका यस्मिन् तथाविधे ("भिषग्वैद्यौ चिकित्सके" इत्यमरः)। दुर्मनायमानेति।—दुर्मनायमाना,—विमनायमाना, दुश्चिन्तान्तःकरणा इत्यर्थः, व्यथितमनस इति यावत्, ("दुर्मना विमना अन्तर्मनाः" इत्यमरः) मन्त्रिणः,—सचिवा यस्मिन् तादृशे।

(७०) मन्देति।—मन्दायमानाः —विषादं गच्छन्तित्यर्थः, पुरोधाः,—पुरोहितो यस्मिन् तथोक्ते। सीददिति।—सीदन्तः —अवसादं गच्छन्तः क्लिश्यन्त इत्यर्थः, सुहृदः,—बान्धवा यस्मिन् तथोक्ते। निद्राणविपश्चितीति—निद्राणाः,—सुप्ताः, अपहीनार्ताङ्गत्वेन उपशान्तचित्तावस्थत्वादिति भावः, विपश्चितः —विद्वांसः, ज्ञाता इति यावत् यस्मिन् तथोक्ते ("विद्वान् विपश्चिद्दोषज्ञः" इत्यमरः)। सन्तप्तेति।—सन्तप्ताः,—व्यथिता इत्यर्थः भाषा — विरहिता, सामन्ताः —अधीनस्थ राजानः यत्र तादृशे, अपरोपरनरेन्द्रोपद्रवशङ्काभिभूतत्वादिति भावः।

(७१) विचित्तेति।—विचित्ता,—विचेतनप्राया, चामरग्राहिण्य —चामरधारिण्य यत्र तथोक्ते। दुःखेति।—दुःखेन—मनःपीडया, शोकेनेति यावत्, क्षामः,—क्षीणः, शिरोरक्षी—शीर्षरक्षकः यस्मिन् तथाविधे। क्षीयमाणेति।—क्षीयमाणा—क्षयमापद्यमाना, आरोग्यनैराश्येन इति भावः, प्रसादवित्ताना—प्रसादध्याताना, राजानुग्रहेण प्रतिपालितानामित्यर्थः, यद्वा,—प्रसादः,—राजानुग्रहः एव, वित्तं—धनं येषां तथोक्तानां, मनोरथसम्पत्—अभिलाषसमृद्धिः यस्मिन् तादृशे, तेषां साक्षात् अनुग्राहकस्य राज्ञः अभावे तेषां जीविकानिर्वाहस्य कष्टसाध्यतया इति भावः।

वैद्योपदिश्यमानपथ्याहारस्यावहितपौरोगवे, अनुजीविपीयमानाश्वयकधारावारिविनोद्यमानास्यशोषरुजि, राजाभिलाषभोज्यमानबहुभुजि, (७६) भेषजसामग्रीसम्पादनव्यग्रसमयव्यवहारिणि, मुहुर्मुहुः आहूयमानतोयकर्मान्तिकानुमितघोरातुरतृषि, तुषारपरिकरितकरकाशिशिरीक्रियमाणोदश्विति,

---

कुत्सितम् इति यावत् वैद्येन—भिषजा, उपदिश्यमानस्य—निर्दिश्यमानस्य इत्यर्थः, पथ्यस्य—आतुरयोग्यस्य हितजनकस्य आहार्यद्रव्यस्य, रोगोपशमनीयद्रव्यस्य भक्ष्यद्रव्यस्य इति यावत्, आहरणे—आयोजने, अवहितः—अभिनिविष्टः, पौरोगवः,—महानसाध्यक्षः यस्मिन् तदोक्ते, [ पुरोऽग्र, माधवसुधियभवं, गौ नेम यथोति बहुव्रीहौ "गोरतद्धितलुकि" (५।४।९२ पा०) इति सूत्रेण समासान्ते टचि निपादितम् पुरोगुरुस्मात् स्वार्थे "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) अण्च। "पौरोगवस्तदध्यक्षः" इत्यमरः ]। अनुजीवीति।—अनुजीविभिः,—सेवकैः, ("सेवकार्थ्यनुजीविनः" इत्यमरः) पीयमानेन अश्वयकधारावारिणा—जलीकृतपानपात्रनिःसृतजलेन ("चषकोऽस्त्री पानपात्रम्" इत्यमरः) विनोद्यमाना —शाम्यमाना, आस्यस्य—मुखस्य, शोषरुक्—शोषाख्यव्याधिः यस्मिन् तदोक्ते, टंकिम कांस्यकजलधारानिःसृतस्य तदनुकूलतोऽपि तज्जलीय सेवकैः तदुद्धृतजलधारात् धारावारि पीयमानं पश्यत तस्य मुखशोषनिवृत्तिः जायते इति भावः। राजेति।—राज्ञः,—नृपस्य, अभिलाषेण—इच्छया, भोज्यमाना,—आहारं कार्यमाणाः, बहुभुजः,—प्रभूतभोजनक्षमा पुरुषा यत्र तदोक्ते, अत्र भोक्तुमसमर्थस्य नृपस्य अन्यभोजनदर्शनेनापि तृप्तिः जायते इति भावः।

(७६) भेषजेति।—भेषजस्य—औषधस्य, या सामग्री,—उपकरणानि, तासां सम्पादने—समाहरणे व्यग्रा,—व्यापृता, समयाः,—शकुना व्यवहारिणः, —व्यवहाराभिज्ञा इव्यगुणपरीक्षका इति भाव यत्र तादृशे। आहूयमानेति।—आहूयमानेन—आकार्यमाणेन, तोयकर्मान्तिकेन—तोयदानकर्मणि नियतेन पुरुषेण इत्यर्थः, अनुमिता—तर्किता, निरन्तरमेव जलदानार्थं तत्कालं समाह्वानदर्शनात् इति भावः, घोरा दारुणा आतुरस्य—रोगिणः, तृषा—पिपासा यस्मिन् तादृशे, ग्रीष्मज्वरजनितप्रचण्डमुखशोषादौ दुःसहतृष्णोपमर्ददर्शनात् इति भावः। तुषारेति। —तुषारेण—नीहारेण, वस्त्रा द्रव्यादिना वा, परिकरितः,—संयुक्तः, करकः,—

श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके, (७७) नाम्न्यान-पङ्कलिप्यमाननवभाण्डगतगण्डूषग्रहणमस्तुनि, तिम्यत्कोमल-कमलिनीपलाशप्रावृतमृदुमृणालके, सनालनीलोत्पलपूली-सनाथ सलिलपानभाजन भुवि, धारानिपात निर्वाप्यमाण-

तुषारस्य—हिमस्य, परिकरः,—समारम्भः, घनसन्निवेश इत्यर्थः, तस्मात् यः करकः,—वर्षोपलः,"करक्" इति वङ्गभाषया प्रसिद्धः जलसङ्घातविशेषः इत्यर्थः, यद्वा,—तुषारैः परिकरितः,—मिश्रितः, यः करकः,—कमण्डलुः, ("कमण्डलौ च करकः" इत्यमर) तेन, तत्र स्थापनेनेत्यर्थः, शिशिरीक्रियमाणं—शीतलीक्रियमाणम्, उदश्वित्—घर्षोदकं तक्रं यस्मिन् तथोक्ते ("तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्" इत्यमर)। श्वेतेति।—श्वेते—शुभ्रे, धौते इत्यर्थः, आर्द्रे—जलसिक्ते इत्यर्थः, कर्पटे—जीर्णवस्त्रखण्डे, अर्पितैः,—निहितैः, कर्पूरस्य—घनसारस्य, [ अपघाती "खुर्च्छे—" (उ० ४ पा० ९० सू०) इत्यादिना ऊरप्रत्यये सत्वाभावे रूपं] परागैः,—रजोभिः, शीतलीकृता,—शिशिरीकृता, शलाका,—शिलाशलाका, यद्वा,—सौरभ्यादिकमर्पयितुं तद्व्यावर्णेषा इत्यर्थः, शिरोहृदयादिषु च मयदाघतप्तकुमाराङ्गेषु च तस्य प्रर्शनेन उपशैत्यविनोदानुभवात् इति भावः यत्र तथोक्ते।

(७७) नाम्न्यानेति।—नाम्न्यानेन—अघनेन, तरलेन इत्यर्थः, (आङ्पूर्वकस्य "स्त्यायने" इत्यस्य निष्ठायां रूपं, पश्चात् नञ्समासः ] पङ्केन—कर्दमेन, मुखशोषप्रशमनाय शीतलीकरणार्थमिति भावः, लिप्यमानं—दिह्यमानं, यत् नवं—नूतनं भाण्डं—घटः, तद्गतं—तत्रस्थं, गण्डूषग्रहणाय—मुखपूरणाय इत्यर्थः ("गण्डूषो मुखपूर्तौ च पुष्करप्रहितेऽप्यथ" इति मेदिनी) मस्तु—दधिभवं मस्तु, दध्न उपरिभागात् निःसृतं दधिसम्पृक्तं जलमित्यर्थः यत्र तादृशे, तस्य मुखशोषाद्युपशमकरगुणवत्त्वात् इति भावः, ("मस्तु दधिभवं मस्तु" इत्यमर)। तिम्यदिति।—तिम्यता—आर्द्रीभवता सद्यः आनीततया जलसम्पर्केण इत्यर्थः, कोमलेन—मृदुना, कमलिनीपलाशेन—पद्मिनीपत्रेण, प्रावृतानि—आच्छादितानि, मृदूनि—कोमलानि, मृणालकानि—उशीराणि, बिसानि वा यस्मिन् तथोक्ते, ("मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे" इति मेदिनी। नलदम्—उशीरम्) एतत्स्पर्शात् सन्तापस्य कथञ्चिदुपशमः स्यादिति द्रव्यगुणविदामाम्नायः। सनालेति।—सनालानां—नालसहितानां, नीलोत्पलानाम्—इन्दीवराणां, पूलीभिः,—समूहैः, सनाथा—युक्ता, आच्छादितेति यावत्, सलिलपानभाजनानां—जलपानपात्राणां, भूः,—स्थानं यस्मिन् तथोक्ते, सुरभितां शीतलतां च नेतुं भूमौ सनाल-

क्वथिताम्भसि, ( ७८ ) पटुपाटलशर्करामोदमुचि, मञ्चकाश्रितसिकतिलकर्करीविश्रान्तातुरचक्षुषि, ( ७९ ) सजलशैवलवलयितगलद्दोलयन्त्रके, गल्वर्कशालाजिरोच्छ्वासितलाजसक्तुनि, पीतमसारपात्रीपरिगृहीतकर्कशकर्करे,

---

शीतोत्पलसमूहं निधाय तदुपरि सजलपात्रं स्थापितवान् इति भावः। धारेति।—धारायाः—प्रपातस्य, जलस्येति भावः, निपातेन—पतनेन, निर्वाप्यमाणानि—शीतलीक्रियमाणानि, क्वथितानि—उष्णीकृतानि, अम्भांसि—जलानि यस्मिन् तादृशे, त्वरितशैत्योपयोगायेति भावः।

( ७८ ) पट्विति।—पटु—स्पष्टं यथा तथा, पाटलायाः—केसरवर्णायाः, शर्करायाः,—पुष्पविशेषस्य, ("शर्करा खण्डविकृतावुपलाशकले तु च। पुष्पभेदेऽपि" इति रभसः) आमोदं—सौरभं, मुञ्चति—त्यजतीति तस्मिन्। मञ्चकेति।—मञ्चकम्—आधारविशेषः, तत्र आश्रिता—अधिष्ठिता, सिकतिला—सिकतामयी, प्रायशो वालुकानिर्मितेति भावः, [ सिकताशब्दात् "देशे लुबिलचौ च" (५।२।१०५ पा०) इतीलच्‌ि रूपम् ] कर्करी आलुभेदः, जलाधारविशेष इत्यर्थः, ("कर्करी आलुभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी) तस्यां विश्रान्ते—कृतविश्रामे, निश्चलतया अवस्थिते इति यावत्, चञ्चलत्वाभावादिति भावः, आतुरस्य—पीडितस्य राज्ञः, चक्षुषी—नयने यत्र। ["विश्रान्तातुरचक्षुषि" इत्यत्र "विश्रान्तानलचक्षुषि" इति पाठे,—अनले—अग्निहोत्रे देवार्चनप्रयोजन कोटरं गते इति भावः, चक्षुषी, राज्ञ इति भावः यस्मिन् यस्य वा तथोक्ते।

( ७९ ) सजलेति।—सजलैः—जलसहितैः, [ "सजल—" इत्यत्र "सरल—" इति पाठे,—सरलैः—ऋजुभिः दीर्घैरिति यावत् ] शैवलैः,—शैवालैः, वलयित—वेष्टितं, गलत्—स्यन्दमानं, दोलयन्त्रं—जलयन्त्रमिति प्रसिद्धं बहुच्छिद्रं जलयन्त्रं यस्मिन् तथोक्ते, सदनस्य शैत्यविधानार्थम् इति भावः। गल्वर्केति।—गल्वर्कः,—मणिविशेषः, तस्य शालाजिरः,—शरावः, मल्लकनिर्मित इति यावत् ("स्फाटिका-पात्रं गल्वर्कः शालाजिरः" इति त्रिकाण्डशेषः) तत्र उच्छ्वासिता—उद्भासिता, लाजसक्तवः,—भृष्टतण्डुलः, भ्रष्टधान्यचूर्णानि इत्यर्थः यत्र तथोक्ते, कदाचित् पथ्यार्थमिति भावः। पीतेति।—पीतः,—पीतवर्णः, यो मसारः,—मणिविशेषः, तस्य पात्री—शरावविशेषः, ("पात्री पात्रशरावयोः" इति विश्वः) तया परिगृहीता,—स्वादिता, कर्कशकर्करा,—श्वेतशर्करा यत्र तादृशे।

(८० शिशिरौषधरसचूर्णावकीर्णस्फटिकशुक्तिशकलसञ्चये, सञ्चितप्रचुरप्राचीनामलकमातुलुङ्गद्राक्षादाडिमादिफले, (८१) प्रतिग्राहितविप्रविप्रकीर्यमाणशान्त्युदकविप्रुषि, प्रेष्यापेष्यमाणललाटलेपोपदिग्धदृषदि धवलगृहे स्थितं, (८२) परलोकविजयाय नीराज्यमानमिव ज्वरज्वलनेन, अनवरतपरिवर्त्तनैः तरङ्गिणि शयनीये शेषमिव पिपासया क्षीरोदन्वति विचेष्टमानं,

---

(८०) शिशिरेति।—शिशिरौषधानां—शैत्यकारकाणाम् औषधानां, रसे,—द्रवे, चूर्णे—क्षोदे च अवकीर्णा,—आकीर्णा, परिपूर्णा इत्यर्थः, स्फटिकानां—स्वनामख्यातमणीनां, शुक्तीनां—मुक्तास्फोटानां, शकलानां—खण्डानाञ्च, सञ्चयः,—समूहः यस्मिन् तथोक्ते, सर्वेषां शैत्यगुणाधायकत्वात् इति भावः। सञ्चितेति।—सञ्चितानि—सङ्गृहीतानि, औषधार्थमिति भावः, प्रचुराणि—प्रभूतानि, प्राचीनानां—पुरातनानाम्, आमलकानां—धात्रीफलानां, प्राचीनामलकानां—पानीयामलक इति ख्यातानाम् आमलकविशेषाणां वा मातुलुङ्गानां—बीजपूराणां, जम्बीरविशेषाणामित्यर्थः, द्राक्षाणां—मृद्वीकानां, दाडिमादीनाञ्च फलानि यत्र तादृशे।

(८१) प्रतिग्राहितेति।—प्रतिग्राहिताः,—प्रतिग्रहं ग्राहिताः, दत्तदक्षिणा इति यावत् ये विप्राः,—ब्राह्मणाः, तैः विप्रकीर्यमाणाः,—समन्तात् विक्षिप्यमाणाः, शान्त्युदकानां—शान्तिजलानां, विप्रुषः,—बिन्दवः यस्मिन् तथोक्ते, सर्वत्र शान्त्युदकानां प्रक्षेपेण त्वरितफलाशा इति भावः, ("पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यमरः)। प्रेष्येति।—प्रेष्याभिः,—दासीभिः, पेष्यमाणेन—चूर्ण्यमानेन, ललाटलेपेन—भाललेपनद्रव्येण, उपदिग्धाः,—प्रलिप्ताः, दृषदः,—शिलाः यस्मिन् तथोक्ते, धवलगृहे—स्फटिकशिलानिर्मिते सुधाधवलिते वा भवने।

(८२) परलोकेति।—परलोकस्य—स्वर्गस्य, विजयाय—आत्मसात्करणाय, लाभायेत्यर्थः, ज्वरज्वलनेन—ज्वराग्निना, नीराज्यमानमिव—निर्मञ्छ्यमानमिव, क्रियमाणाऽऽरात्रिकक्रियमिवेत्यर्थः, इत्युत्प्रेक्षा, विजयाय प्रस्थितस्य जिगीषोः नीराजना क्रियते इति प्रसिद्धिः। अनवरतपरिवर्त्तनैः,—शय्यायां निरन्तरलुण्ठनैः, तरङ्गिणि—भङ्गीमति, सङ्कोचशालिनि इत्यर्थः, शयनीये—शय्यातले, क्षीरोदन्वति—क्षीरसागरे, पिपासया—पिपासाधिक्येन, विचेष्टमानं—लुठन्तं, शेषमिव—अनन्तनागमिव। अत्र शेषेण सहावेष्ट्यसाम्यमोषादुपमाऽलङ्कारः।

(८६) निविड़दुकूलपट्टनिपीडितकेशान्तकथ्यमानकष्टवेदनाऽनुबन्धं मूर्द्धानं धारयन्तं, (८७) दुर्द्धरवेदनोद्गमनीलशिराजालककरालेन च कालकराङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससङ्ख्यानेन इव ललाटफलकेन भयमुपजनयन्तम्, (८८) आसन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तःप्रविष्टतारकं, शुष्यद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणीं मृगतृष्णिकामिव उष्णां निश्वासपरम्पराम् उद्वहन्तम्, (८९) अत्युष्णनिश्वासदग्धया इव क्षामायमानया रसनया निवेद्यमान-

---

(८६) निविडेति।—निविडेन—दृढेन, दुकूलपट्टेन—क्षौमवस्त्रखण्डेन, निपीडित—दृढनिबद्ध इत्यर्थः यः केशान्तः,—कचप्रान्तभागः, ललाटादेरित्यर्थः, तेन कथ्यमानः,—ज्ञाप्यमानः, कष्टः,—कृच्छ्रः, वेदनाऽनुबन्धः,—व्यथानैरन्तर्यं यस्य तथाभूतं मूर्द्धानं—मस्तकं, ( "मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः )।

(८७) दुर्द्धरेति।—दुर्द्धरया—दुःसहया, वेदनया—पीडया, शिरस इति भावः, उद्गमतः—उद्गच्छत् यत् नीलं—कृष्णं शिराणां—नाडीनां, जालकं—समूहः तेन करालः—दन्तुरः भीषणो वा तेन, कालेति।—कालस्य—यमस्य कराङ्गुलिभिः,—हस्ताङ्गुलिभिः [ "कालकराङ्गुलिभि" इत्यत्र "कालाङ्गुलिभि" इति पाठे,—कालस्य—यमस्य अङ्गुलिभिः करस्य इति भावः ] लिख्यमानया—रच्यमानया, लेखया—रेखया ख्यातः—प्रकाशितः, मरणस्य—मृत्योः, अवधिदिवसानां—मर्यादादिनानां सङ्ख्यानं—गणना यस्मिन् तेनैव।

(८८) आसन्नेति।—आसन्नम्—आगतप्रायं, यमस्य—कृतान्तस्य दर्शनम्—अवलोकनं तेन उद्वेगः—भीतिः तस्मादिव किञ्चित्—ईषत्, अन्तरिति।—अन्तः प्रविष्टा—कोटरं गता, तारका—कनीनिका यस्य तम्। शुष्यदिति।—शुष्यन्त्याः,—शोषं गच्छन्त्याः दशनानां—दन्तानां, पङ्क्तेः,—श्रेण्याः, प्रसृताः,—निःसृताः याः धूसराः,—ईषत् पाण्डुवर्णाः, दीधितयः—मयूखाः तासां तरङ्गाः,—समूहः सन्ति यस्यामिति तथोक्तां मृगतृष्णिकामिव—मरीचिकामिव, उष्णां—तप्तां, निश्वासपरम्परां—निश्वाससन्ततिम्।

(८९) अत्युष्णेति।—अत्युष्णैः,—अतितप्तैः, निश्वासैः—नासावायुभिः, दग्धा—भस्मीभूता तया इव, दग्धाया वैवर्ण्यमत्र इति भावः, क्षामायमानया—

दारुणसन्निपातारम्भम्, (८०) उरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तं कृतान्तदूतदर्शनयोग्यमिव आत्मानं कुर्वाणम्, (८१) अङ्गभङ्गवलनोत्क्षिप्तभुजयुगलं पर्यस्तहस्तनखमयूखैः धारागृहमिव तापशान्तये रचयन्तं, (८२) नेदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिबिम्बैरपि सन्तापाति-

---

ग्रामतामापद्यमानया, [ "क्रोडादि—" (४।१।१२ पा०) इत्यादिना स्त्रीत्वम् ज्ञातव्य् ] रसनया—जिह्वया, घोरसन्निपातविकारे रसना स्तब्धा भवति इति वैद्याः, निवेद्यमानेति ।—निवेद्यमानं,—कथ्यमानं, विज्ञाप्यमानम् इत्यर्थः, दारुणस्य,—भीषणस्य, सन्निपातस्य—दोषत्रयप्रभूतस्य ज्वरस्य, आरम्भ,—उपक्रमः यस्य तथोक्तम् ।

(८०) उरःस्थलेति ।—उरःस्थले—वक्षसि, स्थापिता,—निहिता, तापशान्त्यै इति भावः, मणीनां—रत्नानां, मौक्तिकानाञ्च—मुक्ताफलानाञ्च, हारा,—एकावल्यः, चन्दनानि—श्रीखण्डानि, चन्द्रकान्ताश्च—तदाख्यमणिभेदाश्च यस्य तम्, अत एव कृतान्तेति ।—कृतान्तः,—यमकः, राजा इति भावः, तस्य दूतेन—वार्त्तावहेन, दर्शनं—साक्षात्कारः, तस्य योग्यः,—अनुरूप इव, राजानः दूतानां सन्निधौ स्वस्य ऐश्वर्याधिक्यप्रदर्शनाय रत्नादिभिः सुसज्जितैर्भूषयते इति भावः, कृतान्तदूतानां दर्शनयोग्य वा, आ जीवनात्सम्पादितहारावलीनरनाभिरामरूपादर्शनात् इत्याशयः। [ पूर्वपदस्थस्य उत्तरपदस्थहेतुकत्वात् काव्यलिङ्गम्, अविवेकसम्पादकानां मौक्तिकहारादीनाञ्च विभावादिसम्भवो दाहज्वरेण प्रकटनात् यमदूतदर्शनयोग्यत्वनाम्नि सम्भावनादुत्प्रेक्षा चैतयोः सङ्करः ]।

(८१) अङ्गेति ।—अङ्गानाम्—अवयवानां, भङ्गः—मोटने, "मालोडा" इति वङ्गभाषा तस्मै वलनं—कुञ्चनं तेन उत्क्षिप्तम्—उन्नमितं, भुजयुगलं—बाहुद्वयं येन तथोक्तम्, अत एव पर्यस्ता,—समन्तात् प्रसृता, हस्तयोः,—करयोः नखानां मयूखाः,—किरणा यैः, धारागृह—"फोयारा" इति भाषा जलयन्त्रागारं, दाहार्त्तस्य तादृशगृहे अवस्थानस्य विधानात् इति भावः, रचयन्त—कल्पयन्तम्, उत्तोलितकरयोः अधोमुखीभूतेभ्यः नखेभ्यः प्रसृतानां शुक्लकिरणानां जलधाराकृतिरूप प्रतीयमानत्वादिति भावः ।

(८२) नेदिष्ठेति ।—नेदिष्ठेषु—अतिसन्निहितेषु, (अन्तिकशब्दात् "अतिशायने—" (५।३।५५ पा०) इत्यादिना इष्ठनि "स्थूलदूरयुव—" (६।४।१५६ पा०)

छायया सूच्यमानम्, (८४) उद्योगमिव उपद्रवाणां, सर्वास्त्रमोक्षमिव क्षामतायाः, हस्तीकृतं विह्वलतया, विषयीकृतं वैषम्येण, चेटीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दष्टं दुःखासिकया, आत्मीकृतम् अस्वास्थ्येन, विधेयीकृतं व्याधिना, क्रोडीकृतं कालेन, लक्ष्यीकृतं दक्षिणाशया, पीतमिव पीडाभिः, जग्धमिव जागरेण,

---

प्रवेशेव, छायया—कान्त्या, परया कान्त्येति ध्वनिः, सूच्यमानं—परिक्षियमाणं, उपशोषसुखभविदेहाकान्ततयेति भाव, दुःसहवेदनया शरीरं निष्प्रभमेवेति तात्पर्यम्।

(८४) उद्योगमिव—उपक्रममिव, स्वपराक्रमप्रदर्शनाय विविधचेष्टाया स्थानमित्यर्थं, उपद्रवातिशययुक्तमिति भाव उपद्रवाणां—रोगारम्भकदोषप्रकोपजन्यानामन्यविकाराणां, हिक्कामूर्च्छाऽतीसारादीनामिति यावत्। सर्वास्त्रमोक्षमिव—सर्वेषाम् अस्त्राणाम्—आयुधानां, मोक्ष,—निक्षेप इव, क्षामतायाः,—क्षीणतायाः, क्षीणतया सर्वथा आक्रान्तमिति भाव। विह्वलतया—व्याकुलभावेन, ("विह्वलव्याकुलौ समौ" इत्यमरः) हस्तीकृतम्—आयत्तीकृतमित्यर्थं, [इति प्रतीयमानोत्प्रेक्षा] अत्याकुलमिति भाव। वैषम्येण—विषमावस्थया, दारुणावस्थयेत्यर्थं, विषयीकृत—समीपतीकृत, आयत्तीकृतमित्यर्थं, विषमावस्थापन्नमिति भाव। क्षयेण—नाशेन, अल्पतया इति यावत्, आनूनमिति भाव, चेटीकृत—स्वाधीनतम्, आधारीकृतमित्यर्थं, क्षीणधातुकमिति भाव। गोचरीकृत—विषयीकृतं, कवलितमित्यर्थं, ग्लान्या—वेदनाविशेषेणेन हर्षाभावकेनैव, अतीव म्लानमिति यावत्। दष्ट—ग्रस्त, दुःखासिकया—कष्टावस्थानेन, शय्याऽऽसनादिष्वपि असुभूतक्लममिति यावत्, यद्वा,—दुःखासिकया—क्लेशवृत्त्येन, दष्ट—ग्रस्तम्। आत्मीकृतम्—आयत्तता नीतम्, अस्वास्थ्येन—रोगजनितेन क्लेशेन, आत्मीयमिति मत्वा अस्वास्थ्येनाश्रित, स्वयमपि मातृभूतस्वास्थ्यमिति भाव। विधेयीकृत—आयत्तीकृतम्, आयत्तीकृतमित्यर्थं, ("विधेयो विनयग्राही वचनेस्थित आश्रव" इत्यमरः) अविचारेण प्रतिपालित व्याध्यादेशमिति भाव। क्रोडीकृतम्—उत्सङ्ग नीतमित्यर्थ, कालेन—कृतान्तेन, अचिरमेव कालभवनगमनोन्मुखमिति भाव। लक्ष्यीकृत,—दृष्ट, दक्षिणाशया—दक्षिणया दिशा, यमपालितयेति भाव। पीतमिव—दग्धमिव, कष्टासहभावात् शेषत्वादिति भाव। जग्धमिव—भक्षितमिव, जागरेण—अनिद्रया, व्याधिजदुःखेन

निगीर्णमिव वैवर्ण्येन, (८५) ग्रासीकृतं गात्रभङ्गेन, ध्रियमाणमिव विपद्भिः, वण्ट्यमानम् इव वेदनाभिः, लुण्ठ्यमानमिव दुःखैः, आदित्सितं दैवेन, निरूपितं नियत्या, प्रातम् अनित्यत्वेन, अभिभूयमानम् अभावेन, परिकलितं परासुतया, दत्तावकाशं क्लेशस्य, निवासं वैमनस्यस्य, समीपे कालस्य, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे

---

निद्राभावादिति भावः । निगीर्णमिव—कवलितमिव, वैवर्ण्येन—मालिन्येन, दीनजनोचितेन कान्तिक्षयात् अतीव विवर्णमिति भावः ।

(८५) गात्रभङ्गेन—"गा कीड़ा" इति वङ्गभाषया प्रसिद्धेन देहकीटनेन ग्रासीकृतम्—कवलीकृतम्, [ अत्र "इव" पदाप्रयोगात् प्रतीयमानोत्प्रेक्षालङ्कारः ] दीयमानत्वात् निरन्तरकृतगात्रभङ्गमिति भावः । ध्रियमाणमिव—धीर्यमाणमिव, नीयमानमिवेत्यर्थः, विपद्भिः—आपद्भिः, विपदाक्रान्तमित्यर्थः । वण्ट्यमानमिव—विभज्यमानमिव, मुखे नासिकायाञ्च श्वासेन, चक्षुषि कोटरप्रविष्टत्वेन, कर्णे बाधिर्येण, एवम् एकैकस्मिन् अङ्गे पृथक्तया वेदनया विभज्य गृह्यमाणमित्यर्थः । लुण्ठ्यमानमिव—स्वातन्त्र्यात् यथास्थानस्थितेरभावात्त्वेन बलपूर्वकं नीयमानमिव, अतीव दुःखमनुभवन्तमित्यर्थः । आदित्सितम्—ग्रहीतुमिष्टम्, [ आददाते सनि "सनि—" (७।४।५४ पा०) इत्यादिना अच् इति "निष्ठा" (३।२।१०२ पा०) इति कर्मणि क्तः ] दैवेन—प्राक्तनेन कर्मणा, देवानां समूहः दैवं तेन, देवसमूहेन इत्यर्थो वा । निरूपितम्—निर्द्धारितम्, दृष्टमिति भावः, नियत्या—भाग्येन, ("भाग्यं स्त्री नियतिर्विधिः" इत्यमरः)। प्रातमिव—गृहीतमिव, अनित्यत्वेन—अस्थायित्वेन अचिरमेव मरिष्यमाणत्वात् इति भावः । अभिभूयमानम्—आक्रम्यमाणम्, अभावेन—अविद्यमानतया । परिकलितम्—कवलितम्, परासुतया—प्राणपञ्चत्वतया, गतप्राणतया इत्यर्थः, मृतधर्म्मेणेति यावत्, ("परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः । मृत-प्रमीतौ त्रिष्वेते" इत्यमरः)। दत्त,—अर्पितः, अवकाशः,—स्थानं येन तम्, क्लेशेन यदृच्छया निरन्तरं क्लिश्यमानमिति भावः । निवासम्—आश्रयम्, वैमनस्यस्य—विकृतमनस्कतायाः, विधिबोधितान् अवश्यकरणीयान् अभिलषितानप्यसमयपरलोकगमनाशङ्कया मुहुर्मुहुः विमनायमानमिति भावः । "समीपे" इत्यस्य वर्त्तमानमिति उपरेणान्वयः । कालस्य—यमस्य, प्रायेण निधनं गतमिति भावः । अन्तिके—सन्निधौ, अन्त्योच्छ्वासस्य—चरमनिश्वासस्य, प्राणापानवायोः वियोगस्येत्यर्थः । मुखे—वदने, कवले इति

महाप्रयासस्य, द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्त्तमानं, विरलं वाचि, चलितं चेतसि, विह्वलं वपुषि, क्षीणमायुषि, प्रचुरं प्रलापे, सन्ततं श्वसिते, जितं जृम्भिकाभिः, पराधीनम् आधिभिः, (८९) अनुबद्धम् अनुबन्धिकाभिः, पार्श्वोपविष्टया अनवरतरोदनोच्छूननयनया अङ्गीकृतचामरिकयाऽपि निश्वसितैः एव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः,—"आर्यपुत्र! स्वपिषि?" इति व्याहरन्त्या

---

भाव, महाप्रयासस्य—महतः क्लेशस्य। द्वारि—द्वारसमीपे दीर्घनिद्रायाः,—चिरनिद्रायाः, मृत्योरित्यर्थः। जिह्वाग्रे—रसनाग्रे, जीवितेशस्य—यमस्य, ("जीवितेशो यमे पुंसि प्रिये स्याज्जीवितेश्वरे" इति मेदिनी)। विरलम्—अल्पं वाचि—वाक्यकथने, वाक्यं कथञ्चित् सम्पन्नमिति भावः। चलितं—भ्रष्टं, चेतसि—चित्ते व्यथाप्रकोपेण विगतचित्तमित्यर्थः, भ्रष्टचेतनमिति भावः। विह्वलं—विवशं, वपुषि—देहे, अवशशरीरमित्यर्थः। क्षीणं—पर्यन्तम्, आयुषि—जीवितकाले। प्रचुरं—प्रभूतं, प्रलापे—असम्बद्धभाषणे, अर्थरहितवचने इत्यर्थः, ("प्रलापोऽनर्थकं वचः" इत्यमरः) अनवरतं प्रलपन्तमिति भावः। सन्ततं—निरन्तरं, श्वसिते—श्वासनिक्षेपे, पुनः पुनः अतिशयेन निश्वसन्तमित्यर्थः। जृम्भिकाभिः,—जृम्भाभिः, वदनव्यादानपूर्वकवायुबहिष्करणरूपाभिः श्वासप्रकटनक्रियाभिरित्यर्थः जितम्—अभिभूतं, मुहुर्मुहुः जृम्भावेगेन अवसन्नमित्यर्थः। आधिभिः,—मनःपीडाभिः, एतान् प्रियजनान् परित्यज्य सहसा एव चिराय प्रतिष्ठे इति मनोदुःखैः इत्याशयः, पराधीनम्—आयत्तीकृतं प्रियपुत्रकलत्रादीनामाप्तवियोगसम्भावनया पीड्यमानमिति निष्कर्षः।

(८९) अनुबन्धिकाभिः,—व्याधिसम्बन्धिपीडाभिः, यद्वा—मुख्यानुयायिनीभिः, प्रधानरोगानुवर्तिनीभिः मूर्च्छापिपासादिभिः पीडाभिरिति यावत्, ("अनुबन्धः प्रकृत्यादौ दोषोत्पादे मुख्यानुयायिनि" इति मेदिनी) अनुबद्धम्—अविच्छिन्नम्, अनुगतमित्यर्थः। पार्श्वोपविष्टया—पार्श्वे आसीनया, अनवरतेति।—अनवरतेन—अविरतेन, रोदनेन—क्रन्दनेन, उच्छूने—स्फीते, नयने—लोचने यस्याः, तथाभूतया अङ्गीकृतचामरिकया—धृतबालव्यजनया, चामरेण वीजयन्त्येति यावत्, निश्वसितैः,—मुहुर्मुहुः पतद्भिः दीर्घनिश्वासैरिति यावत्। विविधेति।—विविधानां—नानाप्रकाराणाम्, ओषधीनां—रोगोपशमकद्रव्यलतादीनां, धूलिभिः,—चूर्णैः, धूसरितम्—ईषत्पाण्डुरीकृतं शरीरं—गात्रं यस्याः, तथाभूतया। व्याहरन्त्या—भाषमाणया, शोकातिशयप्राचुर्येण विकलाप-

देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरम् अद्राक्षीत्।

दृष्ट्वा च (८७) प्रथमदुःखसम्पातमथ्यमानमतिः आशङ्कित इव भागधेयेभ्यः समभवत्। अन्तकपुरवर्त्तिनमिव च पितरम् अमन्यत। निराकृत इव च अन्तःकरणेन क्षणम् आसीत्। अवधूतश्च धैर्येण, सेवीकृतः क्षोभेण, रिक्तीकृतो रत्या, विपर्यीकृतो विषादेन, पावकमयमिव हृदयम् उद्वहन्, विषमविषदूषितानीव मुह्यन्ति इन्द्रियाणि बिभ्राणः, तमसा रसातलमपि विशेषयन्, शून्यत्वेन आकाशमपि अतिशयानो न

---

मानयीति भावः। अत्र महाराजः आलम्बनविभावः, तस्य महाक्लेशानिद्रादिप्रभवतश्च उद्दीपनविभावाः, क्रन्दितभूपातादयः अनुभावाः, मोहविषादादयश्च व्यभिचारिणः, एतैः व्यक्तीकृतः शोकः करुणरसरूपतामापन्नः इत्यवधेयम्।

(८७) प्रथमेति।—प्रथमेन—आद्येन, इतः पूर्वं कदाऽप्यननुभूतत्वात् इति भावः दुःखानां—मनःपीडानां, सम्पातेन—समागमेन, मथ्यमाना—विलोड्यमाना, मतिः—बुद्धिः यस्य तथाभूतः भागधेयेभ्यः—दुर्भाग्येभ्यः, आसन्नपितृविनाशहेतुभ्यः इति भावः आशङ्कित इव—जाताशङ्क इव, समभवत्—समजायत, पितृविनाशं शङ्कितवानित्यर्थः। अन्तकपुरवर्त्तिनम्—यमपुरगतमिव। अन्तःकरणेन—अन्तरिन्द्रियेण, मनसा इत्यर्थः, निराकृत इव—परित्यक्त इव, पितृमहाक्लेशदर्शनजनितशोकक्षोभेण नष्टमना इवेत्यर्थः। अवधूतः—विचलितः, धैर्यविहीन इत्यर्थः, कठोराघाते तथाभावात् इति भावः। सेवीकृतः—अधीनीकृतः, क्षोभेण—दुःखेन दुःखाभिभूत इत्यर्थः। रिक्तीकृतः—विरहितः, रत्या—सन्तोषेण, अप्रसन्न इत्यर्थः। विपर्यीकृतः—पीतीकृतः, विषादेन—अवसादेन, अप्रसन्नतयेत्यर्थः, विवर्ण इति यावत्। पावकमयमिव—अग्निमयमिव, महातापाग्नेः ज्वालमिव इत्यर्थः अतीव सन्तप्यमानमानस इति भावः। विषमेति।—विषमेण—दारुणेन, विषेण—हलाहलेन, दूषितानीव—विकृतानीव, अत एव [illegible] मुह्यन्ति—मोहं गच्छन्ति, विमूढानीव स्वस्वव्यापाररहितानीति भावः, इन्द्रियाणि—चक्षुरादीनि। तमसा—अन्धकारेण, शोकेन च, शोकजमोहेन इत्यर्थः, ("तमो ध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे" इति मेदिनी) रसातलम्—पातालमपि, विशेषयन्—अतिशयानः, अन्धतमसबहुलात् पातालादप

अविन्दत कर्त्तव्यम्। पस्पर्श च हृदयेन भियम् उत्तमाङ्गेन च गाम्।

(८८) अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयं तद-वस्थोऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ "एहि एहि" इति आह्वयन् शरीरार्द्धेन शयनात् उदगात्। ससम्भ्रमम् उपसृतश्च एनं विनयावनम्रम् उन्नमय्य बलात् उरसि निवेश्य, विशन्निव प्रेम्णा निशाकरमण्डलमध्यं, मज्जन् इव अमृतमये महासरसि, (८९) स्नान् इव महति हरि-चन्दनरसप्रस्रवणे, अभिषिच्यमान इव तुषाराद्रिद्रवेण, पीडयन्

---

तमसाऽभिभूत इवायं। ग्रस्तेन—विरहितत्वेन, नीरूपमाकाशमिव सर्वद्रव्यसम्बन्धोऽसौ पितृवियोगसम्भावनया सर्वैरेव विरहितमिव आत्मानम् अमन्यत इति भाव, आकाशमपि—गगनमपि, अतिशयान,—अभिभवन्, कर्त्तव्य—तात्कालिककार्य्यं, न अविन्दत—न अबबुधे। भिय—भीतिं, ("भीतिभीः साध्वसं भयम्" इत्य-मर) साध्वसहृदय अभवदिति भाव, उत्तमाङ्गेन—शिरसा, गा—भूमिं, पस्पर्श स्पृष्टवान्, भूमिपतित पितुः प्रणनामेत्यर्थं। अत्र प्रस्तुतौ, हृदयोत्त-माङ्गयो स्पर्शरूपैकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कार इति ज्ञेयम्।

(८८) अवनिपति,—भूपाल, प्रभाकरवर्द्धन इति यावत्। अतिदयितम्—अतिप्रियम्। तदवस्थोऽपि—तथा अस्वस्थोऽपीत्यर्थं। निर्भरेति।—निर्भरेण—निरति-शयेन स्नेहेन—प्रेम्णा, आवर्जित,—वशीभूत, आकृष्ट इति यावत्, मनसा—चित्तेन, न तु शरीरेण उत्थानसामर्थ्याभावादिति भाव। शरीरार्द्धेन—पूर्वकायेन, कटिदेशात् शिर पर्यन्तेनेत्यर्थं। उदगात—उत्तस्थौ। ससम्भ्रमं—सत्वरम्, उपसृतम्—उपगतम्। प्रेम्णा—स्नेहेन। निशाकरमण्डलमध्य—चन्द्रमण्डलाभ्यन्तर, तनया भिद्दनस्य सन्तापनिवारकत्वेनातीव प्रीतिजननत्वात् चन्द्रमण्डलमध्यप्रवेशवदानन्दानुभव इति बोद्धव्य चन्द्रमण्डलस्यापि हृदयाह्लादकपीयूषमयत्वकैव्यवत्त्वेन तथाविधत्वादिति भाव, एवमन्यत्रापि उन्नेयम्। अमृतमये महासरसि—अमृतपूर्णह्रदे।

(८९) स्नान् इव—स्नान कुर्व्वन्निव, [ धातो 'लट —" (३।२।१२४ पा०) इत्यादिना अप्रथमान्तेन सामानाधिकरण्ये शतृ शानचौ विधानात् कथमत्र शत्रागम ? इति चेत् दीक्षिता,—"लडित्यनुवर्तमाने पुन्लंट्ग्रहणम् अधिकविधा-

अङ्गैः अङ्गानि, कपोलेन कपोलम् अवघट्टयन्, निमीलयन् पक्ष्माग्रग्रथिताजस्रास्रबिन्दुविसराविणी विलोचने, विस्मृतज्वरसञ्ज्वर सुचिरम् आलिलिङ्ग। (१००) कथङ्कथमपि चिरात् विमुक्ताम् उपसृत्य कृतनमस्कारं प्रणतजननीकम् उपागतम् आसीनञ्च शयनान्तिके पिबन् इव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्। पस्पर्श च पुनः पुनः वेपथुमता पाणितलेन। चयस्थान-

नार्थे तेन प्रथमा सामानाधिकरण्येऽपि क्वचित्" इति प्रत्ययः। हरिचन्दनेति। —हरिचन्दनस्य—हरेः—प्रकाश्य इन्दुस्यार्थं ("हरिश्चन्द्राकथावाश्व । प्रभा लोकान्तरे पुमान्॥ इति मेदिनी) प्रियचन्दनं—स्वतन्त्रविग्रह इत्यर्थः गोशीर्षाख्य मलयैकदेशज चन्दनभेदो वा ("हरिचन्दनमस्त्री स्यात् देवतामा महीरुह। नभसे कन्तु गोशीर्षे ज्योत्स्ना कुङ्कुमयोरपि॥" इति मेदिनी) हरः—विष्णौ प्रिय चन्दनं श्वेतचन्दनं शिर्यर्भा वा तत्रान्तरीय शैत्यगुणवत्त्वेन दाहनाशकत्वात् तस्य रसः—द्रव एव प्रस्रवणः—निर्झरः तत्कल्पेन। तुषाराद्रिद्रवेण—हिमाचलरसावयवेण अङ्गैः स्वीयरीत भाव अङ्गानि कुमारस्येति भाव पीडयन्—वत्साकाङ्क्षितत्वात् निविडमालिङ्ग्य स्थित्वा। अवघट्टयन्—सङ्घट्टयन्। निमीलयन्—मुद्रयन् आत्मजालिङ्गनजन्यसुख अपूर्वानन्दोदयात् इति भाव। पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नाम् अग्रेषु—प्रान्तेषु, ग्रथितानि—सङ्गतानि अजस्राणि—अनवच्छिन्नानि अस्राणि—वाष्पाणि विसरन्त— विगलन्त इति तथोक्ते विलोचने—नेत्रे। विस्मृतेति।—विस्मृत —अननुभूत इत्यर्थ, ज्वरस्य—दाहज्वरस्य इत भाव सञ्ज्वर —सन्ताप येन तथाभूत ("सन्ताप सञ्ज्वर समौ इत्यमर)।

(१००) कथङ्कथमपि—यावत्कृच्छ्रम् अपेक्षितमपेक्ष्य पुनरभाविन्यभावनी दया इति भाव। विमुक्ताम्—त्यक्ताम्। कृतनमस्कारं—कृतप्रणाम पित्र एव इति भाव। उपसृत्य—समीप गत्वा मातुरिति भाव प्रणतेति।—प्रणता—वन्दिता जननी—माता येन तथाभूतम्। उपागतम्—उप—समीपे आगत—प्रत्यावृत्त, मातृप्रणामानन्तरमिति भाव। आसीनम्—उपविष्टम्। शयनान्तिके—शय्या सन्निधौ विगतेति।—विगत —परिहृत निमेष —निमीलन यस्मिन् तथा भूतेन अत एव निश्चल—स्थिरेण तेन। वेपथुमता—कम्पमानेन [वेपधातो "ट्वितो ऽथुच् (३।३।८९ पा०) इत्यथुच् ततः "तदस्य— (५।२।९४ पा०) इत्यादिना

कण्ठेन लब्धात् इव अवादीत्,—"वत्स ! कृशोऽसि" इति। भण्डिस्तु अकथयत्,—"देव ! तृतीयमहः कृताहारस्य अस्य अद्य" इति।

(१०१) तत् श्रुत्वा बाष्पवेगगद्गदमाग्रहेण कथञ्चिदपि आयतं निःश्वस्य उवाच,—'वत्स ! जानामि त्वां पितृप्रियम् अतिस्निग्धहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियम्। अति दुस्तरो बान्धवस्नेहः सर्वप्रमाथी, अतो न अर्हसि आत्मानं शुचे दातुम्। (१०२) उद्दामदाहज्वरदग्धोऽपि दह्ये खलु महत् अधिकतरम् अनेन आयुषसाधिना। निशितमिव शल्यं तक्ष्णोति मां त्वदीयं तनिमा। मुञ्च राज्यं वत्स प्राणान्

भक्तो राजानः, न ज्ञातिभिः। तत् उत्तिष्ठ, कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम्” इत्येवम् (१०५) अभिहितस्य च अस्य धक्ष्यन्निव हृदयमन्तरा शोकानलः सन्दुधुक्षे। क्षणमात्रञ्च स्थित्वा पित्रा पुनः आहारार्थम् आदिश्यमानो धवलगृहात् अवततार; चकार च चेतसि,—“अकाण्डे खलु अयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः। सामान्योऽपि तावत् शोकः सोच्छ्वास मरणम्,

---

पा०) इत्यादिना ग्रन्थ] भवादृशां—भवद्विधानां, जन्मग्रहणोपाय,—जन्मग्रहणस्य —उत्पत्तिलाभस्य, उपाय,—साधन, निमित्तभूतौ इत्यर्थ, [उद्देश्यविधेयभावस्थले लिङ्गवचनैकत्वं नास्ति तन्त्रता इति वचनविपर्यास]। पितरौ—माता च पिता च तौ, तथाच वशिष्ठेन,—“प्रजाजीवितसुखस्य पुत्रो मातापितृनिमित्तक” इति, भवादृशां महात्मनां शरीरपरिग्रहणायमेव पितरौ जीवनधारणस्य प्रयोजनीयता, तव जन्मना तत्सिद्धे इदानीं अवजीवनस्य तयो नास्ति काऽप्युपयोगिता इति भाव। प्रजाभि,—भूतलवासिभिर्जनै, बन्धुमन्त—स्वजनवन्त, राजान,—नृपा, न ज्ञातिभि,—पित्रादिभि सगोत्रै, बन्धुमन्त इति शेष, प्रजा एव राज्ञ बन्धव, न ज्ञातय, परस्परपोषणादिभि अन्वयव्यतिरेकात् इत्याशय अत मदभावे न त्वं निर्बान्धवो भविष्यसि, न च त्वया मदर्थं जीवितव्यं, यथा प्रजानां हित भवति, तथा क्रियतामिति निष्कर्ष। सर्वा क्रिया,—स्नानाहारादिका इत्यर्थ, त्वयि जीवति प्रजा सनाथा भविष्यन्ति, तेन प्राणजीवनरक्षणेन त्वया रक्षितव्यम्, अत स्नानाहारादिषु नोपेक्षा कर्तव्या इति भाव। उपयोक्ष्ये—खादिष्यामि।

(१०५) अभिहितस्य—उक्तस्य, पित्रा इति शेष। अस्य—हर्षस्य। धक्ष्यन्निव —भस्मीकरिष्यन्निव। अन्तरा—अभ्यन्तरे। सन्दुधुक्षे—सन्दिदीपे, पितृजीवन नैराश्यात् इति भाव। आदिश्यमान,—आज्ञाप्यमान, अनुरुध्यमान इति यावत्। अकाण्डे—सहसा। महाप्रलय,—कल्पान्तकाल महात्यय, जन्मभाजानधिकरणीभूतकाल इत्यर्थ। व्यभ्र,—निरभ्र, निर्मेघ इत्यर्थ। सामान्य,—अल्प, शोक, —प्रियजनविच्छेदज दुःखविशेष, सोच्छ्वास—सनिश्वास, मरण—मृत्यु, मरणे निश्वासापगम स्यात्, शोकरूपे मरणे तु तदभाव इति भाव। श्वासवत्वात् प्रत्यक्षप्रत्यत्वेन मरणादतिरिच्यते शोक इति व्यतिरेकध्वनि।

(१०६) अनुपदिष्टौषधो महाव्याधिः, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतश्च एव नरकवासः, निर्ज्योतिः अङ्गारवर्षम्, अधकालीकरणं क्रकचदारणम्, (१०७) अव्रणो वज्रसूचीपातः, किमुत विशेषाश्रितः ? किमत्र करवाणि ?" इति ।

(१०८) राजपुरुषेण अधिष्ठितश्च गत्वा स्वधाम (१०९) धूममयान् इव सन्तापानुपातान्, अग्निमयान् इव जनितहृदय-

(१०६) अनुपदिष्टेति ।—न उपदिष्टः—न कथितम्, औषधं—भेषजं यस्य तथाभूतः, शास्त्रोक्तभेषजरहित इत्यर्थः, ["अनुपदिष्टौषध" इत्यत्र "अनुपदिष्टौषधो" इति पाठान्तरम्] महाव्याधिः—महान् रोगः महतो व्याधेः शास्त्रीयौषधेन प्रतीकारः स्यात्, शोकस्य तु न तथेति भावः । अभस्मीकरणः,—अदहन इत्यर्थः, अग्निप्रवेशोऽङ्गदाहः स्यात् शोके तु न तथा, किन्तु केवलं ज्वलनमिति भावः । अनुपरतः—अनतः नैव त इत्यर्थः, नरकवासः—नरके—निरवच्छिन्नदुःखितैः स्थानविशेषे वासः—अवस्थानं भवत्येव पापातिरेकात् नरकेऽवस्थानं, शोकापत्ते तु तदभावेऽपि वास भावः । निर्ज्योतिः,—निष्प्रभम्, अङ्गारवर्षं—ज्वलदग्निस्फुलिङ्ग-वृष्टिः, तादृशाङ्गारवर्षणे उद्द्योतो दृश्यते, शोकरूपे तु अन्तर्वर्षणात् नहि निष्प्रभता एव भवतीति भावः । अधकालीकरणम्—अङ्गकालीकरणं, क्रकचदारणं—करपत्र-विपाटनं करपत्रच्छेदने वस्तुनः द्वेधा त्रेधा वा विपाटनं भवति शोके तु न तथा, परं तादृशः क्लेशः वर्तत भावः ।

(१०७) अव्रणः,—अक्षतकरणः, वज्रसूचीपातः,—कुलिशशलाकापतनं, वज्र-सूचीपाते शरीरे व्रणः स्यात्, शोकपाते तु न तथा किन्तु तत्पतनक्लेशः दा भावः, यथा—हीरकसूच्यवेध, हीरकस्य अतीव काठिन्यात् तेन विद्धनस्य ।मरणादिक-क्लेशदायकत्वात् । किमुत—किं पुनः, विशेषाश्रितः ?—विशेषेण आश्रितः ? अस्मादन्य इत्यर्थः, पितृवियोगजः इति भावः, सामान्येऽपि शोके यदा एव क्लेशः सञ्जायते तदा पित्रादिवियोगजशोकस्य दारुणत्वे किं पुनर्वक्तव्यम् ? इति निष्कर्षः ।

(१०८) "राजपुरुषेण" इत्यस्य "कवन्नान् अपश्यत्" इत्युत्तरेणान्वयः । राजपुरुषेण—राजलोकेन, ["षष्ठी" (२।२।८ पा०) इति समासः] अधिष्ठितः,—अनुसृतः । स्वधाम—स्वमावासम् ।

(१०९) कवन्नान् विधिर्नाट्, धूमेति ।—कृतः,—विहितः, अश्रूणा—वाष्पाणां, पातः,—पतनं येषां तान्, अत एव धूममयानिव—धूमात्मकानिव, धूमाच्छन्नानिव वा,

दाहान्, विषमयान् इव दत्तमूर्च्छावेगान्, महापातकमयान् इव उत्पादितघृणान्, क्षारमयान् इव आनीतवेदनान् कतिचित् कवलान् अग्रहीत्। (११०) आचमय्य चामरग्राहिणम् आदिदेश,—"विज्ञाय आगच्छ, कथम् आस्ते तातः" इति। गत्वा च प्रतिनिवृत्य च,—"देव। तथैव" इति विज्ञापितः तेन अगृहीतताम्बूल एव उत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वान् आहूय उपह्वरे,—"वैद्याः! किमस्मिन्नेवविधे

---

धूमेन यथा दृष्टिविघातकरम् अश्रु आविर्भवति, तथा तत्कवलग्रहणकाले उत्कण्ठित शोकाश्रुणा दृष्टेरवरोधादिति भाव। जनितेति।—जनित,—उत्पादित, हृदयस्य—अन्तःकरणस्य, दाह,—ज्वलन यै तान, अत एव अग्निमयानिव—अनलसन्निभानिति यावत्। दत्तेति।—दत्त —जनित इत्यर्थ, मूर्च्छाया,—मोहस्य, वेग,—जव, प्रसर इति यावत यै तान, अत एव विषमयानिव—विषमिश्रितानिवेत्यर्थ, विषस्य मोहजनकत्वादिति भाव। उत्पादितेति।—उत्पादिता—जनिता, घृणा—जुगुप्सा, पितुरनिष्टाशङ्कया स्वजीवने निस्पृहत्वादिति भाव यै तान, अत एव महापातकमयानिव— 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः तत्संसर्गश्च पञ्चमः॥' इत्युक्तानि पञ्चविधानि महान्ति—घोराणि, पातकानि—पातित्यजनकानि तन्मयान—तत्प्रचुरान इव, पापानि यथा लोके जुगुप्सन्ते, तथा तदानीन्तनं तस्य कवलेषु घृणा आसीदिति भाव। आनीतवेदनान—जनितक्लेशान्, अत एव क्षारमयान इव—लवणमयान इव, यथा समधिकलवणाक्तान्नादिभक्षणे क्लेशः स्यात तथा तत्कवलग्रहणेऽस्य आत इति भाव, यद्वा—क्षारमयानिव—गुप्तकादिभक्षकृतसुतीक्ष्णरसविशेषात्मकानिवेत्यर्थ, देहस्य कुत्रचित क्षताशे लिप्त क्षारो यथा अतीव सन्तापकारी भवति, तथा तदन्नभक्षणेऽपि तस्यातीऽस्य महाशोकक्षतहृदयस्य जात इति भाव, ("क्षारो रसान्तरे धूर्ते लवणे काचभस्मनी" इति मेदिनी)। कतिचित—स्वल्पान इत्यर्थ, द्वित्रानिति यावत, पितुर्निदारुणरोगत्वात् इति भाव, कवलान्—ग्रासान।

(११०) आचमय्य—आचमनं कृत्वेत्यर्थ। चामरग्राहिणं—वीजनकारिणमिति यावत। कथं—कीदृक। तथैव—यथा प्रागासीत, अधुनाऽपि तत्सदृश एव इत्यर्थः। अगृहीतताम्बूल,—अचर्वितपर्ण। उत्ताम्यता—क्लाम्यता। अस्ताभिलाषिणि—

विधेयमधुना ?" इति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्,—"देव ! धैर्यमवलम्बस्व, कतिपयैः एव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं द्रक्ष्यसि पितरम्" इति।

तेषान्तु भिषजां मध्ये (१११) पौनर्वसवो युवा, अष्टादशवर्षदेशीयः, तस्मिन्नेव राजकुले कुलक्रमागतः, (११२) गतः पारम् अष्टाङ्गस्य आयुर्वेदस्य, भूभुजा सुतनिर्विशेषं लालितः,

---

महाबल तनुमभिलषति, सर्वान्, वैद्यानिति शेष, उपह्वरे—रहसि, विजने इत्यर्थ, ("रहोऽन्तिकमुपह्वरे" इत्यमर ) । देवा ! इति सम्बोधनम्। अस्मिन्नेवविधे—ईदृशि रोगे अवस्थान्तरागमेऽस्य । विधेय—कर्तव्यम्। ते—वैद्या, व्यज्ञापयन्—न्यवेदयन्। कतिपयै—स्वल्पै, वासरै,—दिवसै, [ अपवर्गे तृतीया ] स्वां प्रकृति—निजस्वभाव स्वाभाविकीमवस्थामित्यर्थ, आपन्न—प्राप्त, स्वस्थ—प्रकृतिस्थ रोगमुक्तमिति यावत्। 'स्वां प्रकृतिमापन्नं स्वस्थम्" इत्यनेन प्रकृतिम्—अव्यक्तरूपत्वम्, अव्यक्तस्वरूपमित्यर्थ, क्षित्यादिमहाभूतेषु लयरूपमिति भाव, "मरणं प्रकृति शरीरिणाम्" इत्युक्त, आपन्न—प्राप्त प्राप्यव्यादिरूपेण परिणतमित्यर्थ, पार्थिवादिदेहस्य लये तत्तद्भूतस्य तत्र तत्र परिणमनादिति भाव, स्वस्थम्—अविकृत, "विकारदर्शिनोऽमुष्यत ध्रुवे" इति स्मरणात् मृतमिति भाव, स्वर्गस्थमिति वा, इत्यपि ध्वन्यते, "जातस्य हि ध्रुवो मृत्यु, ध्रुवं जन्म मृतस्य च। तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥" इति शास्त्रात्।

(१११) पौनर्वसव—पुनर्वसुनक्षत्रे जात पुनर्वसो अपत्य पुमान् पौनर्वसव इति वा, यद्वा—पुनर्वसुना मुनिना प्रोक्तम् आयुर्वेद वेत्ति अधीते वेति पौनर्वसव, अष्टादशवर्षदेशीय,—प्रायेण अष्टादशवर्षवयस्क, [ "ईषदसमाप्तौ—" (५।३।६७ पा० ) इत्यादिना देशीयर्प्रत्यय ]। कुलक्रमागत,—वंशपरम्परया चिकित्सकपदाधिष्ठित इत्यर्थ।

(११२) अष्टाङ्गस्येति।—अष्टौ अङ्गानि यस्य तथोक्तस्य तथा चोक्त,—'कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहु चिकित्सा तेषु संश्रिता ॥" इति। "ततोऽल्पायुष्ट्वम् अल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्, शल्य, शालाक्य कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्र, रसायनतन्त्र, वाजीकरणतन्त्रञ्च" इति सुश्रुतसंहिता। आयुर्वेदस्य—आयुर्विद्यते—लभ्यते येन स, आयुरनेन विन्दति—लभते इति वा, आयुरस्मिन् विद्यते—वर्तते इति वा, आयुर्वेत्ति—

प्रकृत्यैव अतिपटीयस्या प्रज्ञया यथावत् विज्ञाता व्याधिस्वरूपाणां रसायनो नाम वैद्यकुमारकः सास्रः तूष्णीम् अधोमुखोऽभूत्। पृष्टश्च राजसूनुना,—"सखे! रसायन! कथय तथ्यं, यदि असाधु इव पश्यसि?" इति। सोऽब्रवीत्,—"देव! श्वः प्रभाते यथाऽवस्थितम् आवेदयितास्मि" इति।

अत्रैव च (११३) अन्तरे भवनकमलिनीपालः कोकम् आश्वासयन् अपरवक्त्रमुच्चैः अपठत्,—

"विहग! कुरु दृढं मनः स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि।
सह कमलसरोजिनीश्रिया व्रजति सुमेरुगिरौ विरोचनः" ॥ ४ ॥

---

जानाति अनेनेति वा आयुर्वेदः,—वैद्यशास्त्रमित्यर्थः तस्य, पारं गतः,—पारदृश्वा, अष्टाङ्गायुर्वेदेऽधीती इत्यर्थः। कुमारः—राजा। प्रकृत्यैव—स्वभावेन एव, अतिपटीयस्या—अतिचतुरया, अतितीक्ष्णयेत्यर्थः, प्रज्ञया—बुद्ध्या, यथावत—यथायथं, व्याधिस्वरूपाणां—रोगप्रकृतीनां, विज्ञाता—वेत्ता। सास्रः—अश्रुपूर्णलोचनः राज्ञः अतिप्रियत्वात्। तूष्णीं—मौनम्। राजसूनुना—हर्षेण। तथ्यं—प्रकृतवृत्तान्तम्। असाधु—अशुभं, दुर्लक्षणमित्यर्थः, यथाशास्त्रविधि गोपनं निष्प्रयोजनम् इत्याशयः। श्वः,—अनागतेऽह्नि, परदिने इत्यर्थ, आगामिनि दिवे इति यावत्, ("अनागतेऽह्नि श्वः" इत्यमरः) यथा अवस्थितम्—प्रकृतावस्थामित्यर्थ, आवेदयितास्मि—कथयितास्मि। [लुटि रूपम्]।

(११३) अन्तरे—अवसरे। भवनेति।—भवनकमलिनीपाल,—कमलं—जलम् अस्त्यासामिति कमलिन्यः—पुष्करिण्यः ("सलिलं कमलं जलम्" इत्यमरः) भवने—गृहे, या कमलिनी—पुष्करिणी, तां पालयति—रक्षति इति, गृहसरसीरक्षक इत्यर्थः, कोकं—चक्रवाकं, भाविविच्छेदविधुरमिति भाव, ("कोकश्चक्रश्चक्रवाक" इत्यमरः) आश्वासयन्—प्रबोधयन् सान्त्वयन् वा, अपरवक्त्रं—छन्दोविशेषम् "अयुजि न-न-र-ला गुरुः समे तदपरवक्त्रमिदं न-जौ ज-रौ" इत्युक्तलक्षणं, तल्लक्षणश्लोकमिति यावत्।

कोकमुद्दिश्य यदृच्छया पठितमानेन श्लोकेन राज्ञः आयुर्विनाशं सूचयन्नाह, विहगेति।—विहग!—हे पक्षिन्! चक्रवाक! इति यावत्, त्वं स्वयम्—आत्मना, मनः,—चित्तं दृढं—स्थिरं, धीरमिति यावत्, कुरु—विधेहि, शुचं—शोकं, भाविप्रियावियोगजमिति भावः, त्यज—मुञ्च, विवेकवर्त्मनि—ज्ञानमार्गे, संसारसुखस्य क्षणभङ्गुरत्वप्रदर्शिनि इति भावः, आस्स्व—तिष्ठ, विचरेत्यर्थः, विरोचनः,—सूर्यः, ("सूर-

(११४) तच्च आकर्ण्य वाङ्निमित्तज्ञः पितरि सुतरां जीविताशां शिथिलीचकार। गतेषु च भिषक्षु चलधृतिः क्षपामुखे क्षितिपालसमीपम् एव पुनः आरुरोह धवलं गृहम्। (११५) तत्र च,—"दाहो महान्, आहर हारान् हरिणि!, मणिदर्पणान् मे देहि देवि वैदेहि!, हिमलवैर्लिम्प ललाटं लीलावति!, चन्द-

---

सूर्य्योऽर्य्यमादित्य · · · चित्रभानुर्विरोचनः ॥" इत्यमरः) कमलसरोजिनीश्रिया—कमलयुक्ता सरोजिनी—पद्मपुष्पसमन्विता पद्मिनी, पद्मलतेत्यर्थः, तस्याः श्रीः,—शोभा तया, सह—सार्द्धं, सुमेरोः,—कनकाचलस्य, शिरः,—शृङ्गम्, श्रयति—अवलम्बते, अस्तमेतीति भावः, विधातुर्नियोगोऽयं यत्, प्रतिदिनं सूर्य्यस्य उदयास्तमने स्याताम्, उदये गुणाकरस्य सम्मेलनात् सुखम्, अस्तमने च वियोगदुःखं तदन्तं नियते अपरिहार्य्ये च विषये तथा शोकं परित्यज्य धैर्य्यमवलम्ब्यतामिति निष्कर्षः। तत्रास्तमनमपि पतनं नियतमेव इति सम्बन्धस्य बिम्बानुबिम्बत्वेन बोधनात् निदर्शनालङ्कृतिः, अपि च राज्ञः प्रभाकरवर्द्धनस्य सूर्य्यतुल्यस्य राजमहिष्या सह सुमेरुशिरोरूप-स्वर्गप्राप्तिः अचिरभाविनी इति अवश्यम्भाविनि विषये कुमारेण त्वया धैर्य्यावलम्बनं कर्त्तव्यमिति प्रस्तुतस्य, अप्रस्तुतेन विहगसमाश्वासनरूपेण वस्तुना प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, समासयोः सम्बन्धभेदादेव भेदेन अभेदाध्यवसायरूपातिशयोक्ति-मूलकसङ्कीर्णालङ्कारस्य इत्येषामङ्गाङ्गिभावेन सस्थिते सङ्करः। अपरवक्त्रं छन्दः ॥४॥

(११४) तत—पठितश्लोकम्। वाङ्निमित्तज्ञः,—वाचः,—वाक्यस्य, निमित्तं—शुभाशुभलक्षणं जानातीति तथोक्तः। सुतरां—अतो वाङ्निमित्तज्ञः अत एवेत्यर्थः, कथितवाक्यस्य शोकपातावसानसूचकत्वादिति भावः। शिथिलीचकार—मन्दीचकार। भिषक्षु—वैद्येषु। चलधृतिः,—विचलितधैर्य्यः, आसन्नपित्रोः वियोगाशङ्कया धैर्य्यभङ्गस्य नियतत्वात् इति भावः। क्षपामुखे—रजनीमुखे। क्षितिपालसमीपं—राजान्तिकम्। {"आरुरोह धवलं गृहम्" इत्यत्र "आरुरोह" इत्येतावन्मात्र एव पाठः पुस्तकान्तरे ]।

(११५) "तत्र च" इत्यस्य "जाग्रदेव निशामनैषीत्" इत्युत्तरेणान्वयः। तत्र—क्षितिपालसमीपे धवलगृहे। आहर—आनय, अङ्गेषु अर्पय इत्यर्थः। हरिणि!—तदाख्यायाः परिचारिकायाः सम्बोधनम्, एवमुत्तरत्र। हिमलवैः,—तुषारलेशैः, "बरफ" इति वङ्गभाषया प्रसिद्धैः घनीभूततुषारखण्डैरित्यर्थः, चन्दनबिन्दुभिरिति वा, ("हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम्" इति मेदिनी)। लिम्प

सारचोदधूलीर्निधेहि धवलाक्षि !, निक्षिप चक्षुषि चन्द्रकान्तकान्तिमति !, कपोले कलय कुवलयं कलावति !, चन्दनचर्चां रचय चारुमति !, पाटय पटमारुत पाटलिके !, मन्दय दाहमिन्दुमति ! अरविन्दे, जनय जलार्द्रया मुदं मदिरावति !, समुपानय मृणालानि मालति !, तरलय तालवृन्तम् आवन्तिके !, (११६) मूर्धनि धावमानं बधान मन्मथवति !, कन्धरां धारय धारिणिके !, उरसि तुषारकरं कुरु कुरङ्गवति !, संवाहय बाहू वनमालिके !, पीडय पादौ पद्मावति !, गृहाण गाढमङ्कम् अनङ्गसेने !, का वेला विलासवति ! नैति निद्रा, कथां कथय कुमुद्वति !" इत्येवंप्रायान् पितुरालापान् अनवरतम् आकर्णयन् दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशाम् अनैषीत् ।

—क्षिप कुरु । [illegible]—कर्पूरस्य ("अथ कर्पूरमस्त्रियाम् । घनसारः [illegible]" इत्यमरः) क्षोदाः—चूर्णानि धूलयः—पांशवः ता निधेहि—अर्पय । चन्द्रकान्त—तदाख्यमणेः [illegible] शीतलत्वात् कपोले—गण्डदेशे, कलय—निधेहि कुवलयं—नीलोत्पलम् । चन्दनचर्चा—चन्दनलेपम् । पाटय—[illegible] इत्यर्थः पट—[illegible] इत्यर्थः [illegible] पटमारुत—"टानापारा" इति [illegible] । मन्दय—ह्रासय । अरविन्दे—पद्मि, [illegible] । जलार्द्रया—जलार्द्रा [illegible] इत्यर्थः ("[illegible]" इति वैजयन्ती) मुदं—[illegible] इति भावः । समुपानय—समाहर ["समुपानय" इत्यत्र "समुपनय" इति पाठान्तरम्] । तरलय—चालय ।

(११६) मूर्धनि—मस्तके धावमानं—[illegible] बधान—[illegible] धारयस्व । कन्धरा—ग्रीवाम् । उरसि—वक्षसि तुषारकरं—[illegible] कुरु—स्थापय । संवाहय—[illegible] इति वा । पीडय—संवाहय । गाढ—दृढं यथा तथा अङ्कं—क्रोडप्रदेशम् । का वेला—[illegible] [illegible] [illegible] [illegible] वा स्वाधीना [illegible] [illegible] इति भावः । एति—आगच्छति । कथां कथय—मया सह आलापं कुरु इत्यर्थः । एवंप्रायान्

(११७) उषसि च अवतीर्य राजद्वारदेशोपसर्पिणा परिवर्द्धकेन उपस्थापितेऽपि तुरङ्गे चरणाभ्यामेव आजगाम स्वमन्दिरम्। तत्र च (११८) त्वरमाणो भ्रातुः आगमनार्थम् उपर्युपरि क्षिप्रपातिनो दीर्घाध्वगान् प्रजविनश्च उष्ट्रपालान् प्राहिणोत्। प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म न अग्रहीत। (११९) अग्रतः स्थितानां राजपुत्रयूनां विमनसां 'रसायनो रसायन" इति जल्पितम् अत्यल्पम् अश्रौषीत्। पप्रच्छ च तान्—भद्राः! किं रसायन?" इति। पृष्टाश्च ते

—उत्कण्ठ [illegible] मनसः—[illegible] आकलयन् —[illegible] हृदय — [illegible]। [illegible] [illegible] प्रतीयमाना [illegible]। [illegible] [illegible]।

(११७) उषसि [illegible] —[illegible]

[illegible]—उपतिष्ठते [illegible]

[illegible]

(११८) त्वरमाण —[illegible] भ्रातुः —[illegible] उपर्युपरि— [illegible] उप [illegible] (८।१।३ पा०) [illegible] [illegible] ] क्षिप्रपातिनः [illegible] दीर्घाध्वगान् [illegible] [illegible] [illegible] —उष्ट्रपालान् [illegible] [illegible] [illegible] [ [illegible] (२।१।१ पा० [illegible] (२।२।५ [illegible] ] प्राहिणोत् [illegible] प्रसाधनम् ( [illegible] ) [illegible] विमनस्कतात [illegible]

(११९) अग्रतः —पुरतः स्थितानाम् —[illegible] राजपुत्र [illegible]—[illegible] राजसुतानां विमनसाम्—[illegible] जल्पितम् —भाषितम् अत्यल्पम्—[illegible]। [illegible] —[illegible] [illegible] ( [illegible]

दह्यता। (१२४) किं वा अस्य आकल्पम् अवस्थितस्य श्रेयसो यशोमयस्य दह्यते? (१२५) पतितः स केवलं दहने, दग्धास्तु वयम्। धन्यः खलु असौ अग्रणीः पुण्यभाजाम्। अपुण्यभाक् तु इदमेव राजकुलं, कुलपुत्रेण यत् तादृशा वियुक्तम्। अपि च ममापि कः खलु एतेषां प्राणानां (१२६) कार्य्यातिभारः कृत्यविशेषो वा? का वा व्यापृतता, येन न अद्यापि निष्ठुरा प्राणाः प्रतिष्ठन्ते? को वा अन्तरायो हृदयस्य, येन सहस्रधा न दलति?" इति। दुःखार्त्तश्च न जगाम राजसद्म। समुत्ससर्ज्ज च सर्व्वकार्य्याणि। (१२७) शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानम् अवगुण्ठ्य अतिष्ठत्।

---

अतिस्थितिशीलस्य। यशोमयस्य—पूर्णयशसः, यशोरूपस्य देहस्य वा, किं दह्यते?—किं भस्मीक्रियते? भगवतोक्तं हि "चलचित्तं चलवित्तं चलज्जीवनयौवनम्। चलाचलमिदं सर्व्वं कीर्त्तिर्यस्य स जीवति॥" इति आरम्भात्, दग्धीभूतनश्वरदेहोऽपि सुकृतलब्धेनाविनश्वरेण यशःशरीरेण आकल्पजीवी वर्त्तत इति भावः। इहापि वास्य ध्वनिना विभिन्नयोः चमत्कारातिशयानुबन्धना परिकल्पितरचना।

(१२५) स—राजा, दहने—अग्नौ, केवलं पतितः,—प्रविष्ट एव, न तु दग्धः, अविनाशियशोलाभादिति भावः, वयन्तु दग्धाः,—वयमेव भस्मीभूताः, तद्वियोगेन, पितृशोकानलज्वालयेति भावः। असौ—राजा। अग्रणीः,—अग्रगण्यः, पितृतुल्यस्य राज्ञः शोकभोगावसराभावात्, प्रभौ जीवत्यपि असामर्थ्ये तथा कतिचित्कालजीवेन राजभक्त्या स्वजीवनपरित्यागादिति भावः। तादृशा—तथाविधेन, कुलपुत्रेण—सत्कुलजातेन, वियुक्तं—विरहितम्।

(१२६) कार्य्यातिभारः,—कार्य्यगौरवम्। कृत्यविशेषः,—कर्त्तव्यविशेषः, अस्ति इति शेषः। व्यापृतता—कार्य्यनियोगः, कार्य्यासक्तता इति यावत्। प्रतिष्ठन्ते—अपगच्छन्ति, प्रस्थानं कुर्व्वन्तीत्यर्थः, यद्वा—प्रतिष्ठन्ते—अग्रेसरा भवन्ति, ("पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः" इत्यमरः) प्रतिष्ठां कुर्व्वन्ति वा इत्यर्थः, तदा विधानाचरणं तदलाभात् इति भावः। अन्तरायः—विघ्नः। समुत्ससर्ज्ज—परितत्याज निरुत्साहत्वादिति भावः।

(१२७) शयनीये—शय्यायां, ("शय्यायां शयनीयवत्" इत्यमरः)। उत्त

(१२८) इत्थम्भूते च देवे हर्षे, राजनि च तदवस्थे, सर्वस्य लोकस्य कपोलेषु कीलिता इव कराः, लोचनेषु (१२९) लेप्यमय्य इव अश्रुस्रुतयः, नासाग्रेषु ग्रथिता इव दृष्टयः, कर्णेषु (१३०) उत्कीर्णा इव रुदितध्वनयः, जिह्वासु (१३१) सहजानि इव हा! कष्टानि, लपनेषु पल्लवितानि इव श्वसितानि, अधरेषु (१३२) लिखितानि इव परिदेवितपदानि, हृदयेषु निधानीकृतानि इव दुःखानि अभवन्। (१३३) उष्णास्रुदाह-

---

उत्तरीयवाससा—उत्तरीयवसनेन सोत्तमाङ्गम्—समस्तकमित्यर्थः, आत्मानम्—शरीरम्, ("आत्मा यत्ने स्वभावे च प्रयत्ने मनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी) अवगुण्ठ्य—आच्छाद्य।

(१२८) इत्थम्भूते—ईदृगवस्थे, राजनि—प्रभाकरवर्द्धने। तदवस्थे—पर्यवसितजीवने इत्यर्थः। कपोलेषु—गण्डदेशेषु, कराः—हस्ताः, कीलिता इव—कीलप्रोथिता इव, सर्वे लोकाः कपोलनिहितकराः सन्तः चिन्तामग्ना जाता इति भावः।

(१२९) लेप्यमय्य इव—लेपाय—लेपनकर्मणे हितं, लेप्यं, तन्मय्य इव, स्थिरा इवेत्यर्थः, अविच्छिन्ना इति भावः, अश्रुस्रुतयः—अश्रुपाताः, सदैव सर्वे रुदन्तः इति भावः। ग्रथिता इव—निबद्धा इव, दृष्टयः—नयनानि, इतः परं किं भविष्यति इत्यादिध्यानपरायणा बभूवुः इति भावः।

(१३०) उत्कीर्णा इव—उल्लिखिता इव, सततसन्निहिता इति भावः, रुदितध्वनयः—रोदननिनादाः अनवरतं रोदनध्वनिरश्रूयत इति भावः।

(१३१) सहजानि इव—स्वाभाविकानि इव, हा! कष्टानि—हा कष्टं, किमेतत्? इत्येवंवचनानीत्यर्थः, सर्वे शोकार्त्ताः अनवरतमेव हा! कष्टम् इति जगुः इति भावः। लपनेषु—मुखेषु, ("लपनं मुखम्" इत्यमरः) पल्लवितानीव—सञ्जातपल्लवानीव, विस्तारं गतानीत्यर्थः, श्वसितानि—निश्वासाः, सदैव प्रबलशोकावेगेन दीर्घनिश्वासं तत्यजुरित्यर्थः।

(१३२) लिखितानि इव—चित्रितानि इव, परिदेवितपदानि—विलापाक्षराणि, ("विलापः परिदेवनम्" इत्यमरः) लिखितपदानि यथा कदापि न विलुप्तीभवन्ति, तथा विलापाक्षराण्यपि सदैव प्रावर्त्तन्त इत्यर्थः। निधानीकृतानि इव—विहितानि इव, आस्पदीकृतानीवेत्यर्थः, सर्वे दुःखमथितहृदया जाता इति भावः।

(१३३) उष्णेति।—उष्णैः,—तप्तैः, अस्रुभिः,—नेत्रजलैः, दाहात्—भस्मी-

भीता इव न अभजत नेत्रोदराणि निद्रा। (१३४) निश्वासवातविधूता इव व्यलीयन्त हासाः। (१३५) निरवग्रहदग्धा इव च सन्तापेन न प्रावर्त्तन्त वाणी। कथासु अपि न अश्रूयन्त परिहासाः। क्व अगमन्निति न अज्ञायन्त गीतगोष्ठ्यः। (१३६) जन्मान्तरातीतानि इव न अस्मर्यन्त लास्यानि। स्वप्नेऽपि न अदृश्यन्त (१३७) प्रसाधनानि। वार्त्ताऽपि न अलभ्यत उपभोगानाम्। नामापि न अकीर्त्यत आहारस्य। (१३८) खपुष्पप्रतिमानि आसन् आपानमण्डलानि। लोका-

---

भवनात्, भीता इव—त्रस्ता इव, नेत्रोदराणि—नयनान्तराणि, न अभजत—न सिषेवे, सर्वैवाप्रजया जागरितमभूत्, रात्रावपि निद्रा न समभवत् इति भावः।

(१३४) निश्वासेति।—निश्वासवातेन—नासामुखनिःसृतेन प्राणवायुना, विधूता इव—सञ्चालिता इव, निरस्ता इवेत्यर्थः, व्यलीयन्त—विलयं गता इत्यर्थः, केऽपि न जहसुः इति भावः।

(१३५) निरवग्रहदग्धा इव—नितान्तभस्मीकृता इव, प्रावर्त्तन्त—उदचरन्नित्यर्थः, वाणी—वाक् सर्वे सर्वे मौनेन अतिष्ठन् इति भावः। परिहासाः,—नर्मवचनानि व्यवहारस्तु दूरे वास्ताम्, परिहास इति पदमपि केऽपि न उच्चरितवन्त इति भावः। क्व—कुत्र। अज्ञायन्त—अबुध्यन्त। गीतगोष्ठ्यः—सङ्गीतसभाः, सङ्गीतालापा वा, सर्वैः व्यथितान्तरत्वात् तानि परित्यक्तानीति भावः।

(१३६) जन्मान्तरातीतानि इव—जन्मान्तरप्राप्तानि इव, ["जन्मान्तरातीतानि" इत्यत्र "जन्मान्तरातीतानि" इति पाठे,—जन्मान्तरात्—पुनर्जन्मनि, अतीतानि—गतानि, भूतानीत्यर्थः] लास्यानि—नर्त्तनानि, राजभवने तस्मिन् प्राक् कदाऽपि नर्त्तनादिकमभवत् इत्यस्यापि संस्कारस्य विलोपाद्देवेन न अनुसमकुर्वन् तदा इति भावः।

(१३७) प्रसाधनानि—अलङ्काराः। वार्त्ताऽपि—प्रवृत्तिरपि, कथाऽपीत्यर्थः, उपभोगानाम्—सम्भोगानाम्, चन्दनवनितादिविलासादीनामिति यावत्। अकीर्त्यत—अकथ्यत, अश्रूयतेति यावत् किमुत आहार इति भावः।

(१३८) खपुष्पप्रतिमानि—आकाशकुसुमनिभानि, अलीकानि इत्यर्थः। आपानमण्डलानि—पानगोष्ठीसमूहाः, ("आपानं पानगोष्ठिका" इत्यमरः) वयस्यप्रियस्यादिभिः सह मद्यपानार्थं समवेतनागरिकाणां समाजाः सपदि अन्तर्हिता इव

न्तरम् इव अनीयन्त वन्दिवाचः। युगान्तर इव अवर्त्तन्त निर्लयः। (१३९) पुनरिव अदह्यत शोकाग्निना मकरकेतुः। दिवाऽपि न अमुच्यन्त शयनानि। (१४०) शनैः शनैश्च महापुरुषविनिपातपिशुनाः समं समन्तात् समुदभवन् भुवने भूयांसो भूपतेः अभावाय भयम् उत्पादयन्तो (१४१) भूतानां महोत्पाताः।

---

भाव। लोकान्तरमिव—परलोकमिव, राजपुरे तदुच्चारणाभावादिति भाव, अनीयन्त—प्राप्यन्त, महाराजमसुखयता दुर्दैवेनेति भाव। वन्दिवाच,—वैतालिकसूक्तय। युगान्तर इव—युगावसान इव, कल्पान्त इवेति यावत, अवर्त्तन्त—अतिष्ठन, निर्लय,—सुखानि, प्रालय इत्यर्थ, निश्चेष्टता इति यावत् प्रलयावसाने जीवानभावात यथा सर्वत्र निस्तब्धैव महाशान्ति विराजते, तथा सर्वेषा सुखाभावात् तत्रापीति भाव, ("निर्लयः स्त्रियामवस गमने च सुखेऽस्त्रियाम्" इति मेदिनी)।

(१३९) मकरकेतु—काम पुनरिव—भूय इव, हरकोपाग्निना प्राक् दग्धोऽपीति भाव, अदह्यत—दग्धोऽभूत, सर्व्वैव तत्प्रसङ्गराहित्यादिति भाव। अमुच्यन्त—त्यक्तानि, दुःखिताऽवसादाविष्टत्वादिति भाव, शयनानि—शय्या।

(१४०) शनै शनै,—मन्द मन्दम् अल्पश इत्यर्थ, महापुरुषेति।—महापुरुषस्य—महाराजस्य, विनिपात—विध्वसन, तस्य पिशुना,—सूचका, ("पिशुनो खल सूचकौ" इत्यमर) समं—युगपत, समन्तात—चतुर्दिक्षु, समुदभवन्—प्रादुर्भूता। भूयास —बहव, अभावाय—विनाशाय, तं ज्ञापयितुमित्यर्थ, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। उत्पादयन्त,—जनयन्त।

(१४१) भूतानां—प्राणिनां, महोत्पाता,—महान्त,—प्रबला, उत्पाता,—प्रकृतिविपर्य्यासरूपा भूकम्पादय, तदुक्तं नारदसंहितायाम्,—"उत्पाता विविधा लोके दिव्यभौमान्तरीक्षजा। दैवतौघा प्रनृत्यन्ति पतन्ति प्रज्वलन्ति च॥ मुहुर्नादन्ति रोदन्ति प्रस्विद्यन्ति हसन्ति वा। वमन्त्यग्निं तथा धूम स्नेह रक्त पयो जलम॥ अधोमुखा प्रतिष्ठन्ति स्थानात् स्थान व्रजन्ति वा। एवमाद्याश्च दृश्यन्ते विकारा प्रतिमादिषु॥ गन्धर्व्वनगरञ्चैव दिवा नक्षत्रदर्शनम्। महोल्कापातन काष्ठ तृणा रक्तप्रवर्षणम्॥ गान्धर्व्वदाहौ दिग्दाहौ भूमिकम्पो दिवानिशि। अनग्नौ च स्फुलिङ्गा स्युर्ज्वलनञ्च विनेन्धनम्॥ निशीन्द्रचापमण्डूकशिखर श्वेतवायसम्। प्रतिसूर्य्याङ्कितञ्च स्युर्दिक्षु युगपद्दव॥ जम्बूकी ग्रामसंवेश केतूनाञ्च प्रदर्शनम्। काकानामाकुलं रात्रौ कपोतानां दिवा यदि॥" इति।

तथा हि (१४२) दोलायमानसकलकुलाचलचक्रवाला पत्या सार्द्धं गन्तुकामा इव प्रथमम् अचलत् धरित्री। (१४३) धान्वन्तरे इव अन्तरे तस्मिन् सरन्तः परस्परास्फालन-वाचालवीचयो विजुघूर्णिरेऽर्णवाः। (१४४) भूभृदभावभीताना वितताशिखाकलापविकटकुटिलाः केशपाशा इव ऊर्द्धीबभूवुः

(१४२) दोलायमानेति।—दोलायमान—कम्पमान, सकलाना—सर्वेषां, कुलाचलाना—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥" इत्युक्ताना, चक्रवाल—मण्डल यस्याः तदाभूता, ('चक्रवालन्तु मण्डलम्' इत्यमरः) धरित्री—पृथिवी, पत्या—प्रभाकरवर्द्धनेन राज्ञेति भावः, सार्द्धं—सह, अचलत्—अकम्पत पतिव्रतायाः पत्यः पतिसहगमनस्य शास्त्रानुमोदितत्वेन तदाचारप्रतिपालनार्थमिति भावः प्रथमतरोत्पातरूपो भूमिकम्पः प्रादुरासीदिति हृदयम्।

(१४३) धान्वन्तरे—धन्वन्तरिरिव धान्वन्तरि—प्रसिद्ध स्वर्वैद्यविशेष तस्य [ कस्मापि षष्ठी ] धन्वन्तरिनिमित्तं, ["धान्वन्तरे" इत्यत्र "धन्वन्तरे" इति पाठोऽपि दृश्यते ] सरन्तः,—यदि इदानी धन्वन्तरिरत्रागमिष्यत्, तदा राजानमरोगिणं अकरिष्यदित्येवं चिन्तयन्त इति यावत्, तस्मिन् अन्तरे—अवसरे मरणवेलेति।—परस्परस्य—अन्योऽन्यस्य आस्फालनेन—उल्लासनेन वाचालैः—शब्दायमानाः वीचयः—तरङ्गा येषां ते, अर्णवाः—समुद्राः [ कुत्सित बहु भाषते इत्यर्थे "वाचो ग्मिनिः" "आलजाटचौ बहुभाषिणि" (५।२।१२५ पा०) "कुत्सित इति वक्तव्यम्" (वा०) इत्यालच् ] वीचयः—तरङ्गा येषां ते, अर्णवाः—समुद्राः विजुघूर्णिरे—चुक्षुभुः अर्थात् समुद्रा अपि भूपाल-निधनोत्पातमहावातेन क्षुभिता बभूवुः इति भावः। पुरा धन्वन्तरिः समुद्रगर्भस्थित-पश्चात् तदुत्थानञ्च पुराणेषु प्रसिद्धम् तथा च—'अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः। उदतिष्ठन् महाराज। पुरुषः परमाद्भुतः॥ अमृतापूर्णकलसं बिभ्रत् वलयभूषितः। धन्वन्तरिरिति ख्यातः आयुर्वेददृगिज्यभाक्॥" इति।

(१४४) भूभृदिति।—भूभृत,—राजा, अभावात—मरणसम्भावनात भीता,—शङ्किता तासां, राज्ञ दिक्पालांशसम्भूतत्वात् पतिवियोगार्त्तानामिति भावः, ककुभां—दिशां, केशपाशा इव—केशनिचया इव, विततेति।—विततेन—विस्तृतेन, शिखाकलापेन—ज्वालानिचयेन ["विततशिखाकलाप—" इत्यत्र 'विततशिखि-कलाप—' इति पाठे,—विततेन—विस्तृतेन, शिखिकलापेन—अग्निसमूहेन, अनङ्ग

धूमकेतवः ककुभाम्। (१४५) धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूमधूम्रमिव अभवत् भुवनम्। (१४६) भ्रष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करकबन्धकायव्याजेन कोऽपि पार्थिवप्राणितार्थी पुरुषोपहारमिव उपजहार। (१४७) ज्वलितपरिवेशमण्डलाभोग-

---

शिखावन्तःशिखिबर्हैरिव, कलाप—शिखिन,—मयूरस्य, कलापन—बर्हेण, ('शिखी वह्नौ बलीवर्दे। मयूरे कुक्कुटे॥' "कलापः संहतौ बर्हे..." इति च मेदिनी) विकटा,—उत्कटा कुटिला—भङ्गिमत इत्यर्थः, धूमकेतवः—उत्पातसूचका ग्रहविशेषा ककुभाम् ऊर्ध्वीबभूवुः,—उदगच्छन्, उक्तञ्च कालिदासेन, —"उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" इति, भीतानां केशपाशाश्च ऊर्ध्वीभवन्ति, अपरेऽपि ऊर्ध्वज्वलनं प्रापद्यन्त।

(१४५) धूमकेत्विति।—धूमकेतुभिः,—उत्पातविशेषैः, वह्निभिश्च ("स्याद्धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्" इति मेदिनी) करालितानि—भीषणीकृतानि, व्याप्तानि च, दिशां—ककुभां मुखानि यस्य तथोक्तम् अत एव दिक्पालानाम्।—दिक्पालैः,—इन्द्रादिभिः लोकपालैः, आरब्धस्य—उत्पातशान्तये प्रक्रान्तस्य, आयुष्कामस्य—राज्ञः आयुर्वर्धनायाभिलाषवतस्तस्य, होमस्य—देवयज्ञस्य, धूमैः धूम्रमिव—धूम्रवर्णमिव कृष्णलोहितमिवेति यावत्। उत्पातधूमव्याप्तत्वात् तथोत्प्रेक्षा।

(१४६) भ्रष्टेति।—भ्रष्टा—च्युता, भाः,—दीप्तिः यस्य तथोक्ते, निष्प्रभे इत्यर्थः अभिवीक्षते तदानीं भूलोकस्यानिष्टोदयेन तीव्रशोकोदयात् वैवर्ण्यप्राप्तेरिव, इत्याशयः, तप्तेति।—तप्तम्—अत्यन्ततापेन उष्णं, यत् कालायसं—कृष्णवर्णलौहविशेषः, तस्य कुम्भः—ताम्रमितकलसः इत्यर्थः तद्वत् बभ्रु—पिङ्गलं तस्मिन्, भानुमण्डले—सूर्यबिम्बे, [अधिकरणे सप्तमी] भयङ्करेति।—भयङ्करः—भयजनकः, कबन्धकायः—क्रियायुक्तमपमूर्धकलेवरं, सक्रियं छिन्नशिरःशरीरमित्यर्थः, ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्" इत्यमरः) तस्य व्याजेन—मिषेण, कोऽपि, जन इति शेषः, पार्थिवेति।—पार्थिवस्य—राज्ञः, प्राणितं—जीवितं, तस्य अर्थी—तत्काम इत्यर्थः पुरुषोपहारमिव—नरबलिमिव, उपजहार—उपहृतवान्, पुरुषोपहारेण सूर्यदेवम् आराधितवान् इव इत्युत्प्रेक्षा, सूर्यमण्डलं निष्प्रभं जातं, तथा तत्र कबन्धाकारः समदृश्यत इति भावः।

(१४७) ज्वलितेति।—ज्वलितस्य—प्रदीप्तस्य, परिवेशमण्डलस्य—परिधिवल-

भास्वरो जिह्वयाजृम्भमाणस्वर्भानुभयात् उपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुः। (१४८) अवनिपतिप्रतापप्रसाधिताः प्रथमतरकृतपावकप्रवेशा इव अदृश्यन्त अनुरक्ता दिशः। (१४९) स्रुतशोणितशीकरासाररूषिततनुः अनुमरणाय प्रावृतपाटलांशुकपटेव अदृश्यत वसुधावधू। (१५०) नराधिपविनाश-

---

यस्य, आभोगेन—वेष्टनेन, भास्वर,—दीप्यमान, जिह्वेति।—जिह्वया—ग्रहीतुमिच्छया, ग्रसितुमिच्छयेति यावत, जृम्भमाण,—मुखं व्याददत् य स्वर्भानु,—राहु, ("तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमर) तस्मात् भयं—त्रास तस्मात्, उपरचितेति।—उपरचित,—मण्डलाकारेण कल्पित, राहुग्रसननिवारणायमिति भाव, अग्निप्राकार,—अग्निमयो वरण येन तथाविध इव, ("प्राकारो वरणः शाल" इत्यमर.) श्वेतभानु,—सितांशु. चन्द्र इत्यर्थ, प्रत्यदृश्यत —अलक्ष्यत, सुधांशो रक्तवर्णपरिवेषस्य दर्शनमशुभसूचकत्वात् इति भाव।

(१४८) अवनीति।—अवनिपते —राज्ञ प्रभाकरवर्द्धनस्य प्रतापेन—प्रभावेण, कोषदण्डजेन तेजसेति यावत्, ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमर) प्रसाधिता —आयत्तीकृता, अवश्यकृताश्च प्रथमेति।—प्रथमतरम्—अतिपूर्व्वमित्यर्थं, महाराजस्वर्गारोहणात् पूर्व्वमेवेति भाव, कृत—अनुष्ठित, पावक—अग्नौ, प्रवेशः याभि तथाभूता इव, अदृश्यन्त—दृष्टा अभवन्, अनुरक्ता —रक्तीभूता, लोहित-सन्ध्यायिता वा, अनुरागिण्यश्च कामिन्यश्च, अनुरागिण्यः कामिन्यः यथा पत्युर्मरणं निश्चितं विभाव्य तन्मरणात् पूर्व्वमेव अग्नौ प्रविशन्ति तथा दिशश्चापीति भाव, दिग्दाहोऽभूदिति फलितम्। एतेन दिग्वधूनां स्वीयात्वमुन्नेयं, "पतिव्रता स्वीया" इत्यादिलक्षणसमन्वयात् इत्याशय।

(१४९) स्रुतेति।—स्रुतानां—क्षरितानामित्यर्थं, शोणितानां—रक्तानां, शीकरासारैः—बिन्दुधाराभिः, रूषिता—रञ्जिता, रक्ताक्तेत्यर्थ, तनु,—कलेवरं यस्या तथाभूता, वसुधावधू,—वसुधा—पृथ्वी एव, वधू,—राजपत्नीति भाव, अनुमरणाय—पत्युर्मरणात् पर मरणाय सहमरणाय वा, प्रावृतेति।—प्रावृत,—आच्छादित, परिहित इति यावत्, पाटल,—रक्त इति भाव, अंशुकपट,—वस्त्ररूपमावरणं यया तथाभूता इव, अनुमरणे तादृशवस्त्रपरिधानस्याचारत्वात् इति भाव, भुवनभयङ्करी रक्तवृष्टि-रभूदिति फलितम्।

(१५०) नराधिपेति।—नराधिपस्य—राज्ञ, विनाशेन—मरणेन, भाविना

सम्भ्रमभीतै' लोकपालैः इव कालायसकवाटपुटैः अकालकाल-मेघपटलैः अरुध्यन्त दिग्द्वाराणि। (१५१) प्रेतपतिप्रयाणप्रहताः पटवः पटहा इव आरटन्तो हृदयस्फोटना' पस्फायिरे निर्घातानां घोरा निर्घोषा'। (१५२) निकटीभवद्यममहिषखुरपुटोद्धूता इव द्युमणिधाम धूसरीचक्रु' क्रमेलककचकपिलाः पांशुवृष्टय'।

इति भाव, य सम्भ्रम —आवेग तस्मात् भीता,—त्रस्ता तै, तस्य लोकपालत्व-त्वादिति भाव, लोकपालै,—इन्द्रादिभि, कालेति।—कालायस—कृष्णवर्ण-लौहविशेष तस्य कवाटानां पुटानि—आवरणानि तैरिव, कृष्णलौहनिर्मितकवाटपर-म्पराभिरिवेति यावत्, अकालेति।—अकाले—असमये, प्रावृड्व्यतिरिक्ते इत्यर्थ, ये कालमेघा —नीलनीरदा तेषां पटलानि—वृन्दानि तै, दिग्द्वाराणि—दिशां द्वार-देशा अरुध्यन्त—आच्छाद्यन्त राज्ञ प्रतापेन लोकपाला निष्कण्टक स्व स्वमधिकार पालयन्ति स्म इदानीं तन्निधनेन असुराणां प्रादुर्भावात् पुन स्वाधिकारेषु उपद्रवो भविता इति आशङ्कया कवाटावरणेन तन्निरोधयाञ्चक्रु इति भाव, अकालमेघो-दयरूपा उत्पाता प्रादुरासन् इति निष्कर्ष।

(१५१) प्रेतेति।—प्रेतपते —अन्तकस्य, प्रयाणे—यात्रायां, प्रहता,—ताडिता, पटव,—गभीरस्वना इत्यर्थ पटहा इव—वादित्रभेदा इव, आरटन्त —नदन्त, हृदयस्फोटना,—हृदयविदारिण इत्यर्थ, निर्घातानां—"यदान्तरीक्षे बलवान् मारुतो मरुताहत। पतत्यध स निर्घातो जायते वायु-सम्भव॥" इत्युक्तलक्षणानां परस्परप्रहतवायुविक्रियाणां घोरा —दारुणा निर्घोषा,—शब्दा, पस्फायिरे—वर्धिरे, उदभवन् इत्यर्थ, हृदयकम्पनोत्पत्त्वाल्लोकस्य जगज्जीवदाहवद् उत्पातकत्वात् इति भाव।

(१५२) निकटीभवदिति।—निकटीभवन—समीपमागच्छन्, यमस्य—कृता-न्तस्य राज्ञ प्राणानामादातुमिति भाव यो महिष,—वाहनमित्यर्थं तस्य खुराणां—शफानां पुटै,—युगलै उद्धूता इव—उत्क्षिप्ता इव, [ 'खुरपुटोद्धूता' इत्यत्र "खुरपुटोद्भूता" इति पाठे—खुरपुटेभ्य उद्भूता —समुत्पन्ना, उद्गता इत्यर्थ ] क्रमेलकेति।—क्रमेलकस्य—उष्ट्रस्य, ("उष्ट्रे क्रमेलक मय-महाङ्गा" इत्यमर) कचा इव—केशा इव लोमानि इव इति यावत् ("कच केश शिरोरुह" इत्यमर) कपिला,—धूसरा पांशुवृष्टय,—रजोवर्षणानि, द्युमणे,—सूर्यस्य ("सूरसूर्यार्य-मादित्य...। द्युमणिस्तरणिर्मित्र" इत्यमर) धाम—स्थानम्, अन्तरीक्षमित्यर्थं,

(१५३) विरसविराविणीनाम् उन्मुखीनां शिखिनो ज्वालाः प्रतीच्छन्त्य इव पतन्तीः उल्का नभसो ववाशिरे शिवानां राजयः। (१५४) राजधामनि धूमायमानकबरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशितशोका इव प्राक्रन्दन्त प्रतिमाः कुलदेवतानाम्। (१५५) उपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिन-

---

धूसरीचक्रु,—धूम्रवर्णीकृतवन्त, छादयामासु इति भाव, महापुरुषनिपातरूपघोरविप्लवादिसूचक पांशुवृष्टिरुत्पात प्रादुरभवदिति निष्कर्ष।

(१५३) विरसेति।—विरस—कठोर, ["विरस—" इत्यत्र "विसर—" इति पाठे,—विसर—विस्तर यथा तथा, इत्यर्थः ] विरुवन्ति—नदन्तीति तथोक्तानां, कर्कशनिनादिनीनाम् इत्यर्थ, उन्मुखीनाम्—ऊर्ध्वमुखीनां, शिवाना राजय,—शृगालवृन्दानि, शिखिन,—वह्ने, ज्वाला,—शिखा, प्रतीच्छन्त्य इव—गृह्णन्त्य इव, जिघृक्षन्त्य इव इति यावत, तत्सिद्धाया विवृतमुखीनां तासां मुखान्तः ज्वलदग्निवत् परिदृश्यमानत्वादिति भाव, नभस,—आकाशात पतन्ती,—भ्रश्यन्ती, उल्का,—ज्वलन्महत्प्रकाशवदत्युग्ररूपाकृतिर्ज्योतिर्विशेषान्, "हस्तच्छिद्रा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता॥" इत्युक्तलक्षणा इत्यर्थ, ववाशिरे—चाक्रन्दन्ति स्म तदानीम उल्कामुख्य वदनेभ्य अग्निशिखा वहन्त्य कठोर क्रन्दन उल्कापाताय अभवन इति वाक्यार्थ।

(१५४) राजधामनि—राजमन्दिरे, धूमेति।—धूमायमानेन—धूममुद्गिरति धूमायमान तेन केशाभ्यङ्गाभावात् रुक्षेणेत्यर्थ, कबरीविभागेन—केशनिचयेन इत्यर्थ, विभावित,—प्रकटित, विकार,—विकृतिभाव यासां ता, अत एव प्रकीर्णेति।—प्रकीर्णेन—विक्षिप्तेन, समन्तादालुलायितेन इति यावत्, केशपाशेन—कुन्तलकलापेन, प्रकाशित,—प्रकटित, शोक,—शुक् याभि ता इव, प्राक्रन्दन्त—अरोदन्त, शोकार्ता इव अलक्ष्यन्त इति भाव, गृहदेवप्रतिमानां स्वयमश्रुप्रसाधनशृङ्गारविमर्दस्य दैवतापकरत्वप्रापनात इति बोध्यम्।

(१५५) उपसिंहासन—सिंहासनस्य समीपे, कुलदेवताया राज्ञो वा इति भाव, ["अव्यय—" (२।१।६ पा०) इत्यादिना सामीप्यार्थेऽव्ययीभाव ] आकुल—सचल, कालेति।—कालरात्रि,—सत्वअनुमरणोपलक्षिताया, कल्पान्तरात्रे,

गतिवश विशीर्य्यमाणालङ्कार झाङ्कारिणी विजयघोषणेव विषादस्य, (१५९) आकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिः उद्ग्रीवाभिः किम् ? किम् ? इति पृच्छ्यमानेव दूरादेव भवनहंसीभिः, (१६०) स्खलितविशालश्रोणिशिञ्जानरशनानुराविणीभिश्च बाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः, (१६१) अट्टकवाटपट्टसङ्घट्टस्फुटितललाटपट्टरुधिरपटलेन पटान्तेन इव रक्तांशुकस्य मुखम् आच्छाद्य प्ररुदती,

---

राजान्तःपुरादित्यव, यथा विविधगति, द्रुतेति ।—द्रुतगतवशेन—शीघ्रगमनवशेन, विशीर्य्यमाणे —च्युतानि, अलङ्कारे —भूषणे, झाङ्कारिणी—झाङ्कारशब्दवती, अत एव विषादस्य,—दुःखस्य, विजयघोषणा इव—विजयख्यापनी इव वीर्य्यरटना इव इत्यर्थः, विषादेन त्वविजयघोषणाप्रचारस्य स्वाभाविकत्वात् इति भावः ।

(१५९) आकुलेति ।—आकुलयोः,—अस्थिरयोः, दुःखावेगत्सहानामत्र-बोधेन विशिथिलयोरिति भावः, चरणयोः,—पादयोः, चलन्त्यौ —चलन्त्यौ तुला कोट्यौ,—नूपुरयोः, ("पादाङ्गदं तुलाकोटी मञ्जीरौ नूपुरोऽस्त्रियाम्" इत्यमरः) क्वणितम्—रणितेन, वाचालिताः —मुखरीकृताः ताभिः मञ्जीररवविशेषेण इवैना नूपुररवश्रवणेन तदनुकरणशीलत्वादिति भावः, उद्ग्रीवाभिः —उन्नमितकन्धराभिः, भवनहंसीभिः —गृहपालितहंसीभिः पृच्छ्यमाना—अनुयुज्यमाना अतिव्यग्रतया किमर्थं क्रियते ? इति प्रश्नः कृत इव इति भावः ।

(१६०) बाष्पान्धा—अश्रुपूरेण दृष्टिशक्तिहीना इति यावत्, राज्ञः शोकादिति भावः, अत एव स्खलितेति ।—स्खलिता—स्खलन्ती भ्रष्टा शिथिलीभूतामित्यर्थः, श्रोण्याः—नितम्बे, शिञ्जाना—क्वणन्ती रशना—काञ्चीम् अनुरवन्ति—अनुनदन्तीति तथोक्ताभिः, गृहसारसीभिः —भवनस्थसारसयोषिद्भिः, समिति ।—समुपदिश्यमान,—प्रदर्श्यमानः मार्गः,—पन्था यस्याः यस्यै वा तथोक्ता, दृष्टिहीनत्वे पथप्रदर्शनस्य स्वजनाचारत्वात् इति भावः । सारसयोषित् रशनारवमनुकरोति इति प्रसिद्धिः ।

(१६१) अट्टेति ।—अट्टस्य—चलचित्रस्य, महाक्षोभात् व्यस्ततया बाष्पान्धतया वेति भावः, कवाटपट्टस्य—कवाटफलकस्य, सङ्घट्टेन—सम्मर्देन, स्फुटितात्—भग्नात्, विदीर्णात् इत्यर्थः, ललाटपट्टात्—भालफलकात्, निःसृतमिति शेषः यत् रुधिरपटलम्—रक्तनिचयः तेन, रक्तांशुकस्य—रक्तवस्त्रस्य, पटान्तेन इव—अञ्चलेन इव, मुखम् आच्छाद्य—अवगुण्ठ्य ।

(१६२) सन्तापबलविलीनकनकवलयरसधारामिव वेत्रलताम् उत्सृजन्ती, (१६३) मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनी इव निर्मोकमञ्जरीम् आकर्षन्ती, नम्रांससंसिना अनिलविलोलेन नीलतमेन तमालचीरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन चञ्चता प्रावृतकुचा, (१६४) कुचताडनपीडया समुच्छूनाताम्रश्यामतलं मुहुर्मुहुः अत्युष्णाश्रुप्रमार्जनप्रदग्धम् इव करकिसलयं धुनाना,

---

(१६२) सन्तापेति ।—सन्तापस्य—शोकजोत्तापस्य, बलेन—वेगेन, विलीनस्य—गलितस्य, कनकवलयस्य—स्वर्णकङ्कणस्य, रसधारामिव—द्रवपरम्परामिव, वेत्रलताम्—प्रतीहारत्वेन स्वेन ध्रियमाणां वेत्रयष्टिम्, उत्सृजन्ती—पातयन्ती ।

(१६३) मुखेति ।—मुखमरुता—मुखवायुना, मुखनिःसृतेन शोकोत्थदीर्घनिःश्वासेन इति भावः, तरङ्गिताम्—सञ्जाततरङ्गां ताम्, कुञ्चितामिति चञ्चलामिति वा भावः, ['तदस्य—' (५।२।३६ पा०) इत्यादिना इतच्] स्फुरन्तीम्—प्रेङ्खन्तीम्, उत्तरीयांशुकपटीम्—उत्तरासङ्गवसनम्, फणिनी—भुजङ्गी, निर्मोकमञ्जरीमिव—कञ्चुकवल्लरीमिव, आकर्षन्ती—निघ्नाना इत्यर्थः, शोकस्थेऽपि स्त्रीजनस्वभावसिद्धाचारात् इति भावः । नम्रांससंसिना—नम्रे—आनते, अंसे—स्कन्धदेशे, स्रंसते—लम्बते इति तथोक्तेन, अनिलविलोलेन—पवनचलेन, नीलतमेन—अतिनीलेन, तमालेति ।—तमालस्य—कालस्कन्धाख्यवृक्षविशेषस्य चीरचीवरेणेव—सूक्ष्मत्वगिव वसनेनेव, शोककाले वल्कलपरिधानस्याचारात् इत्याशयः, शोकोचितेन—शोकसमययोग्येन, धम्मिल्लरचनारहितेन—असंयतेन, बन्धनरहितेनेत्यर्थः, ("धम्मिल्लः संयताः कचाः" इत्यमरः) चञ्चता—स्फुरता, शिरोरुहसञ्चयेन—केशनिचयेन, प्रावृतकुचा—आच्छादितस्तनी ।

(१६४) कुचेति ।—कुचयोः—स्तनयोः, ताडनम्—आघातः, तेन या पीडा—व्यथा तया, समुच्छूनेति ।—समुच्छूनम्—सम्यक् स्फीतम्, आताम्रम्—ईषद्रक्तं, श्यामञ्च—कृष्णञ्च, तलं यस्य तथाभूतम् । अत्युष्णेति ।—अत्युष्णानाम्—अतिसन्तप्तानाम्, अतिदीर्घशोकात् इति भावः, अश्रूणाम्—नेत्रजलानां, प्रमार्जनेन—प्रोञ्छनेन, प्रदग्धम्—प्रकर्षेण दग्धमिव, करकिसलयम्—हस्तपल्लवं, धुनाना—कम्पयन्ती, उद्धालयन्ती इत्यर्थः, शोकावेगेन वक्षसि कराघातम् अश्रुप्रमार्जनं तथा दुःखसन्तापात् हस्तकम्पनञ्च कुर्वन्तीति भावः ।

(१६५) चक्षुर्निर्झरे श्च्योतति स्नपयन्ती इव शोकाग्निप्रवेशाय स्वकपोलतलप्रतिबिम्बितम् आसन्नलोकं, (१६६) लोललोचनप्रवृत्तैः तरलैः तारकांशुभिः श्यामायमानम् आत्मदुःखेन दिवसमपि दहन्ती इव "क्व कुमारः? क्व कुमारः?" इति पुरुषं पृच्छन्ती, वेलेति नाम्ना यशोवत्याः प्रतीहारी आजगाम। (१६७) विषण्णलोकलोचनप्रत्युद्गता च उपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्ती इव शुष्यन्तं दशनदीधितिधाराभिः आधूसरम् अधरम् अधोमुखी विज्ञापितवती,—"देव।

---

(१६५) श्च्योतति—क्षरति प्रस्रवतीत्यर्थः, चक्षुर्निर्झरे—नेत्रवारिप्रवाहे, ("उत्स प्रस्रवणो वारिप्रवाहो निर्झरो झरः" इत्यमरः) स्नेति।—स्वस्य—आत्मनः कपोलतले—गण्डदेशे, अविरलनयनजलेन प्रक्षालनादतिस्वच्छे इति भावः, प्रतिबिम्बितं—प्रतिफलितम्, आसन्नलोकं—पार्श्ववर्तिनं जनसमूहं, स्नपयन्ती इव—स्नानं कारयन्तीव, कृतस्नानस्यैवाग्निप्रवेशाधिकारात् इत्याशयः।

(१६६) लोलेति।—लोलात्—चञ्चलात् लोचनात्—नयनात् प्रवृत्ता,—निःसृता तैः, तरलैः—स्फुरद्भिरित्यर्थः तारकांशुभिः,—तारकायाः,—कनीनिकायाः, ("तारकाऽक्ष्णः कनीनिका" इत्यमरः) अंशुभिः,—मयूखैः, श्यामायमानम्—मलिनायमानम्। आत्मदुःखेन—स्वीयशोकसन्तापेन इत्यर्थः, दहन्तीव—भस्मीकुर्वतीव, दग्धस्य श्यामो भवतीति भावः, एतेन तदा अपराह्णः सञ्जात इति सूचितम्। पुरुषम्—अनियतं जनं यं कञ्चित् पश्यति, तमेवेति भावः। प्रतीहारी—द्वाररक्षिणी।

(१६७) विषण्णेति।—विषण्णाः—विषादयुक्ताः, ["रदाभ्याम्—" (८।२।४२ पा०) इत्यादिना निष्ठायाः, धातोर्दकारस्य च नत्वम्] लोकानां—जनानां लोचनैः,—नयनैः, प्रत्युद्गता—प्रत्युत्थिता, दैन्यात् प्रतीहारीत्वात् सम्मानप्रदर्शनार्थमिति भावः। कुट्टिमन्यस्तहस्तयुगला—कुट्टिमे—रत्नबद्धभूतले, न्यस्ते—निहिते हस्तयुगले—करद्वये यया तथाभूता, भूतलस्पृष्टकरेति यावत्, शोकाक्रान्ततया स्थातुमसामर्थ्यात् अवलम्बनार्थं, प्रभुसमीपे तादृशाशुभसंवाददर्शनस्य अनुजीविनाम् अवश्यकर्तव्यत्वाद्वा इति भावः, गलन्तीभिः,—स्रवन्तीभिः, दशनदीधितिधाराभिः,—दन्तकिरणपरम्पराभिः, विमलवारिधाराभिरिव प्रतीयमानाभिरिति भावः, शुष्यन्तं—शोषमापद्यमानं, शोकसन्तापादिति भावः, अध

परित्रायस्व परित्रायस्व, जीवत्येव भर्त्तरि किमपि अध्यवसितं देव्या" इति।

ततस्तत् (१९८) अपरम् आकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आचान्त इव चिन्तया, तुलित इव तापेन, अङ्गीकृत इव आतङ्केन अप्रतिपत्तिः आसीत्; आसीच्च अस्य चेतसि (१९९) प्रतिपन्नसत्त्वस्य,—"बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन् अश्मनीव लोहप्रहारः कठिने हुतभुजम् उत्थापयति, न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्" इति। उत्थाय च

---

एव आधूसरम्—आपाण्डुम्, अधरम्—अधोरदनच्छदं, सिञ्चन्तीव—आर्द्रीकुर्व्वतीव, अधोमुखी—अवनतवदना। लोकेऽपि सर्व्वे अध स्वद्रव्यसिञ्चनकाले, अधोमुखा भवन्तीति दृश्यते। भर्त्तरि—स्वामिनि, राज्ञि प्रभाकरवर्द्धने इति यावत्। किमपि—अनिर्व्वचनीयम् अतिशोच्यतया वक्तुमशक्यमिति भावः। अध्यवसितम्—उद्युक्तं, देव्या—यशोवत्या।

(१९८) अपरम्—अन्यत्, अशुभमित्यर्थः, शोककारणमिति भावः। च्युत इव—भ्रष्ट इव सत्त्वेन—बलेन, अतिदुर्ब्बल इत्यर्थः। द्रुत इव—गलित इव, दुःखाम्बुविनिमग्न इत्यर्थः, अतिकारुण्यरसोद्रेकात् इति भावः। आचान्त इव—निपीत इव, चिन्तामग्न इत्यर्थः। तुलित इव—लघुतां नीत इव, तापेन—उष्मणा, शोकाग्निनेत्यर्थः, शोकावसन्न इति यावत्। अङ्गीकृत इव—क्रोडनिहित इवेत्यर्थः, आतङ्केन—भयेन, भयाक्रान्त इत्यर्थः। अप्रतिपत्तिः,—इतिकर्त्तव्यताविमूढ़, मूर्च्छित इवेत्यर्थः, [अत्र च्युतत्व-द्रुतत्वादीनां सर्व्वासामेव क्रियाणाम् उत्कटैककोटिकसंशयोदयादुत्प्रेक्षाऽलङ्कारः।

(१९९) प्रतिपन्नसत्त्वस्य—लब्धचैतन्यस्य। बहुशः—बहुवारान्, पुनः पुनरपीत्यर्थः, कठिने—दृढे, अश्मनि—प्रस्तरे, लोहप्रहारः,—लौहाघात इव, निरनुक्रोशस्य—निर्द्दयस्य, निष्ठुरस्येति यावत्, मे—मम, कठिने हृदये—अन्तःकरणे, निपतन्—आविशन्नित्यर्थः, दुःखाभिषङ्गः,—दुःखाभिघातः, हुतभुजम्—अग्निम्, उत्थापयति—जनयति, न तु भस्मसात् करोति—न दहत्येव, अतिकठोरहृदयत्वादिति भावः, यथा लौहादिताडि कठिनप्रस्तरात् अग्निरुत्तिष्ठते, न तु स प्रस्तरः तदुद्भूतेन तेन दग्धीक्रियते, तथा पाषाणकठोरे मम हृदयेऽपि पुनः पुनरापतन् दुःखातिशयः शोकाग्निं प्रवर्द्धयत्येव, न तु तेनाग्निना मां निःशेषं दहति, अहो! कष्टम् इति निष्कर्षः।

त्वरमाणोऽन्तःपुरम् अगात्। (१७०) तत्र च मर्त्तुमुद्यतानां राजमहिषीणाम् अशृणोत् दूरादेव,—"तात! चूत! चिन्तय आत्मानं, प्रवसति ते जननी। वत्स! जातीगुच्छ! गच्छामि, आपृच्छस्व माम्। मया विना अद्य अनाथा भवसि भगिनि! भवनदाड़िमलते!। रक्ताशोक! मर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च। (१७१) पुत्रक! अन्तःपुरबालबकुलक! वारुणीगण्डूषमधुपदुर्ललित! दृष्टोऽसि। वत्से! प्रियङ्गुलतिके! गाढम् आलिङ्ग मां, दुर्लभा भवामि ते। भद्र! भवन-

---

(१७०) "तत्र" इत्यत्र "राजमहिषीणामशृणोत्" इत्येवप्रायानालापान् इत्युत्तरेण सम्बन्धः। तात!—वत्स! चूत!—आम्र! आत्मानम्—स्वं, चिन्तय—स्वस्य योगक्षेमं स्वयमेव सम्पादयेति यावत्। जननी—उत्पादिका, प्रवसति—दूरं गच्छति। या त्वामुत्पादितवती स्वयं जलेन पालितवती च, सा इदानीं आत्मजीवननैराश्यात् परलोकं गच्छतीति भावः। जातीगुच्छ!—जातीस्तवक! मा— तृं जननीं, पालयित्रीमिति यावत्, आपृच्छस्व—सम्भाषस्व, पुनः समागमाभावात् इति भावः, ["आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्]। अनाथा—निराश्रया, सेचयित्र्याः पोषिकायाः अभावादिति भावः। भवनदाडिमलते!—गृहप्राङ्गणरोपित-दाडिमवल्लि! इति यावत्। रक्ताशोक!—रक्तपुष्पाशोकवृक्ष! पादप्रहाराः,—चरणताडनानि, "पादाहतः प्रमदया विकसत्यशोकः" "पादाघातादशोको विकसति" इति च कविसमयसिद्धेः कर्णेति।—कर्णपूराय,—कर्णभूषणाय, पल्लवानां—किसलयानां भङ्गाः—छेदाः एव, अपराधाः,—दोषाः, मर्षणीयाः,—सोढव्याः, क्षन्तव्या इत्यर्थः।

(१७१) पुत्रक!—वत्स! कृत्रिमपुत्र! इति वा, अन्तःपुरबालबकुलक!—अवरोधस्थ-बालकेसरक! वारुणीति।—वारुणी—मदिराविशेषः, तस्याः गण्डूषः,—मुखपूरणं मुखपूरणमदिरारसः इत्यर्थः, तस्य मधुना—रसेन, स्वप्रसूनविकाशकदोहदव्यापार-सम्पर्कादिति भावः, दुर्ललित!—दुर्विनीत! मदोन्मादयोगात् अन्यथाऽपि बह्वाहत इति भावः, "सीधुं जहाति बकुलो मुखसीधुसिक्तः" "बकुलः योषिता-मास्यमद्यैः" इति च कविसमयसिद्धेः। दृष्टोऽसि—एतावत्कालम् अवलोकितोऽसि, अतःपरं न द्रक्ष्यसे शरीरपरित्यागात् इति भावः। गाढं—निर्भरम्। ते—तव, दुर्लभा—

वल्लभवल्लकीं, परिष्वजे तावत् एनाम्। चन्द्रसेने। (१७५) सुदृष्टः क्रियतामयं जनः। बिन्दुमति! इयं ते अन्त्या वन्दना। चेटि! मुञ्च चरणौ। आर्य्ये! कात्यायनिके! किं रोदिषि? नीताऽस्मि दैवेन। तात! कञ्चुकिन्! किं माम् अलभ्यां प्रदक्षिणीकरोषि? धावेयि! धारय आत्मानं, किं पादयोः पतसि? भगिनि! गृहाण माम् अपश्चिमां वाष्पे। कष्टम्! न दृष्टा प्रियसखी मलयवती। कुरङ्गवति! अयम् (१७६) आमन्त्रणाञ्जलिः। सानुमति! अयमन्त्यः प्रणामः। कुवलयवति! एष ते अवसान-परिष्वङ्गः। सख्यः! मन्तव्याः प्रणयकलहाः" इत्येवप्रायान् आलापान्।

(१७७) दह्यमानश्रवणश्च तैः प्रविशन्नेव निर्यान्तीं, दत्तसर्व्व-

---

सौविदल्ल!—कञ्चुकिन्, ("सौविदल्लाः कञ्चुकिनः" इत्यमरः) वल्लभवल्लकीं—प्रियवीणां, समुपनय—समुपस्थापय। एनां—वल्लकीमित्यर्थः, परिष्वजे—आलिङ्गामि।

(१७५) सुदृष्टः,—प्रीत्या अवलोकितः। अन्त्या—चरमा। मुञ्च—त्यज। दैवेन—विधिना, दौर्भाग्येण इत्यर्थः। अलभ्यां—दुर्लभयाम्। धावेयि!—उपमातः-तनये! आत्मानं धारय—धैर्य्यमवलम्बस्व इत्यर्थः। अपश्चिमाम्—अपुनः आगामिनी-मित्यर्थः। कष्टम्—खेदे, दुःखकरमेतदित्यर्थः।

(१७६) आमन्त्रणाञ्जलिः,—प्रार्थनाऽञ्जलिः, प्रस्थानकालिक अनुमतिप्रार्थनार्थं बद्धाञ्जलियोग इत्यर्थः। अन्त्य—चरम। अवसानपरिष्वङ्गः,—शेषालिङ्गनम्। मन्तव्याः,—मर्षयितव्याः, प्रणयकलहाः,—प्रेमविवादाः, तेषां क्षीवभावचिन्तात् इति भावः। एवम्प्रायान्— एतत्स्वरूपभूयिष्ठानित्यर्थः।

(१७७) "दह्यमानश्रवणः" इत्यस्य "मातरं ददर्श" इत्यग्रेण सम्बन्धः। तैः,—आलापैः, प्रागुक्तैरिति यावत्, दह्यमान—सन्तापमापद्यमानम्, अतिसन्तापकत्वात् इति भावः, श्रवणं—श्रोत्रेन्द्रियं यस्य तथाभूतः। मातरं विशिनष्टि, निर्यान्ती मित्यादि।—निर्यान्तीं—निर्गच्छन्तीम्, अन्तःपुरादिति शेषः। दत्तेति।—दत्तानि—वितरितानि, आवसथाकृतानीत्यर्थः, सर्व्वाणि—समग्राणि, स्वहस्तौ हितानि

स्वापतेयां, (१७८) गृहीतमरणप्रसाधनां, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीं, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रात् उत्थितां, (१७९) कुसुम्भबभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानां,

---

स्वापतेयानि—धनानि, स्वाधिकृतानि यौतुकादिद्रव्याणि इत्यर्थः यया ताम्, ["पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना ढञ्। "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः] महाराजमङ्गलाय अर्पितात्मकृताखिलधनामित्यर्थः ।

(१७८) गृहीतेति।—गृहीतानि—स्वीकृतानि मरणाय मरणस्य वा प्रसाधनानि—अलङ्काराः, सहमरणोचितरक्तवसनादय इत्यर्थः यया तथोक्ताम्। जानकीमिव—जनकदुहितरं सीतामिव, इत्युपमा, वैदेही यथा पुरा लङ्कापुरे स्वपरिहारार्थं पत्युः समक्षमेव वह्नौ आत्मानं विसृष्टवती तथेत्यर्थः, तथा हि अन्वारोहणधर्मे मृतस्य पत्युः प्रज्वलितचितायामेव सतीनां प्रवेशो दृश्यते, अत्र तु तदसत्त्वात् जीवतः पत्युः पुरतः ज्वलनं प्रविशन्त्या सीतया साम्यं प्रदर्शितम्, एवम्भूतनिदर्शनमतीव दुर्लभमेव अत्र तु एतावानेव विशेषः यत् तत्र स्वशुद्धिप्रदर्शनार्थम् इह तु जीवत्यपि पत्यौ भावितद्विरहजशोकसंकुलमसहमानतया प्रागेव चितायामारोहणमिति, एवञ्च उपमागतसादृश्याधिक्यनिबन्धनदोषो न शङ्कनीय इति। जातवेदसम्—अग्निम्, ("अग्निर्वैश्वानरो वह्निः। जातवेदास्तनूनपात्॥" इत्यमरः) पुरः,—अग्रतः, प्रवेक्ष्यन्तीं—प्रवेष्टुमिच्छन्तीम् अग्नेरन्तरेष्यन्तीम् इत्यर्थः। प्रत्यग्रेति।—प्रत्यग्रेण—नवेन, अचिरकृतेन इति यावत् स्नानेन—आप्लावेन आर्द्रः,—सिक्तः, देहः,—अवयवः यस्याः तस्या भावः तत्ता तया हेतुना, ज्वलने प्रवेष्टुकामेन अग्निप्रवेशात् पूर्वं कृतस्नानेन पुरुषेण तथा स्त्रियाऽपि भूयते इति प्रसिद्धिः, श्रियमिव—लक्ष्मीमिव, मथ्यमानक्षीरनिधेराविर्भावेन उत्थितिकालिकसादृश्यसत्त्वात् इति भावः।

(१७९) कुसुम्भेति।—कुसुम्भवत्—महारजनेत्यपराख्यस्वनामख्यातपुष्पवत्, बभ्रुणी—पिङ्गले, ("बभ्रुर्ना पिङ्गले त्रिषु" इत्यमरः) वाससी—वसने, परिधेयमुत्तरीयञ्च इति भावः, दिवमिव—आकाशमिव, सान्ध्ये—सन्ध्याकालीने, तेजसी—सूर्य-चन्द्रमसौ इत्यर्थः। इहोभयोरुपमानोपमेययोः अर्थैक्यासाम्यसत्त्वादुपमा। यदि सायं युगपत् द्वयोः तेजस्विनोः उदयास्तमयनकालसत्तायां विरोधः कश्चित् आपद्यते, तदा तेजःपदस्य तेजस्त्वार्थकतां परित्यज्य दीप्त्यर्थकता अङ्गीकरणीया, तथा च सान्ध्यरागौ इव लोहितायमाने वाससी वसानामित्यर्थः ।

(१८०) ताम्बूलदिग्धरागान्धकाराधरप्रभापटलपाटलं पट्टांशुकमिव विधवामरणचिह्नम् अङ्गलग्नम् उद्वहन्ती, (१८१) रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वती, (१८२) तिर्यक्कुटिलकुण्डलकोटिकण्टकाकृष्टतन्तुना हारेण वलितेन सितांशुकपाशेन इव कण्ठम् उत्पीडयन्ती, (१८३) सरसकुङ्कुमाङ्गराग·

---

(१८०) ताम्बूलेति।—ताम्बूलानां—पर्णानां, पुनः पुनः चर्वितत्वात् इति भावः, दिग्धः,—लिप्तः, घनीभूत इति भावः रागः,—लौहित्यम्, अन्धकार इव—तम इव, स्वाभाविकदीप्तेरावरकत्वात् आवरकभूत इत्यर्थः अधिकं गाढम्, [ [illegible] ] योऽधरः,—अधोरदनच्छदः, तस्य प्रभापटलम्—द्युतिपुञ्जम्, पाटलम्—अरुणम्, पट्टांशुकमिव—रक्तपट्टवस्त्रमिव, विधवेति।—विधवानाम्—पतिहीनानाम्, पत्युर्मरणानन्तरं सहमरणप्रवृत्तानामिति भावः, मरणचिह्नम्—सहगमनलक्षणम्, रक्तपरिच्छदादिकमिति यावत्, अङ्गलग्नम्—गात्रासक्तम्। ["ताम्बूल पटलपाटलम्" इत्यत्र ताम्बूलदिग्धरागान्धकारप्रभापटल पाटलम्" इति पाठः समीचीनतया प्रतिभाति, तत्र ताम्बूलदिग्धरागान्धकाराधरस्य प्रभाया,—द्युतेः, पटलम्—समूहः तेन तादृशम् अत एव पाटलम्—रक्तवर्णं, पट्टांशुकमिव इति योजना, तथात्वे पाटलमित्यस्य पट्टांशुकविशेषणत्वेन अर्थसङ्गतिरीयत्वमिति भावः ]।

(१८१) रक्तेति।—रक्त—रक्तवर्णं, कण्ठसूत्र—गलदेशनिहिततन्तु तेन, कुचान्तरावलम्बिना—स्तनान्तरविलम्बमानेन स्फुटितेति।—स्फुटितात्—विदीर्णात्, शस्त्रघातेन इति भावः, हृदयात्—वक्षसः, विगलितानि—स्रुतानि, यानि रुधिराणि—शोणितानि, तेषां धाराशङ्का—प्रवाहसंशयम्, कुर्वती—जनयन्ती, लोकानां द्रष्टॄणामिति भावः।

(१८२) तिर्यगिति।—तिर्यक्—वक्रं यथा तथा, कुटिलेन—भङ्गिमता, कुण्डलकोटिकण्टकेन—कर्णभूषणाग्रमुखेन, आकृष्ट,—आक्रान्त, तन्तु,—सूत्रं यस्य तेन, वलितेन—वेष्टनकारिणा, हारेण—एकावल्या, सितांशुकपाशेनेव—श्वेतवसनरूपरज्ज्वा इवार्थः, उत्पीडयन्तीम्—उद्बध्नतीम् [illegible] लम्बमाना, महाशोकाकुलत्वात् इत्याशयः।

(१८३) सरसेति।—सरसैः,—आर्द्रैः, कुङ्कुमैः,—वाह्लीकैः, अङ्गरागः,—

तया कवलितामिव दिधक्षता चिताऽर्चिष्मता, चितानलार्चनाकुसुमैः इव धवलधवलैः अश्रुबिन्दुभिः अंशुकोत्सङ्गम् आपूरयन्तीम्, (१८४) गृहदेवताऽऽमन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम्, आप्रपदीनां कण्ठे गुणकुसुममालां यमदोलाम् इव आरूढाम्, (१८५) अन्तर्गुञ्जन्मधुकरमुखरेण आमन्त्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन, (१८६) प्रदक्षिणीक्रियमाणामिव मणिनूपुरवल्गुभिर्भ्रमद्भिर्भवनहंसैः, सन्निहितप्राणसमं मह-

---

अवक्षेपणं यस्या तस्या भाव तत्ता तया हेतुना, कवलितामिव—ग्रस्तामिव, इत्युत्प्रेक्षा, दिधक्षता—दग्धुमिच्छता, चिताऽर्चिष्मता—चितानलेन। चितेति।—चितानलस्य—ग्रस्तदाहकस्य, अर्चनाकुसुमानि—पूजार्थपुष्पाणि तैरिव, इत्यर्चनाकुसुमसाम्याद्यमादुपमाऽलङ्कारः धवलधवलैः,—अतिशुभ्रैः, अश्रुबिन्दुभि,—बिन्दुबिन्दुरूपेण अविरलधारया पतितैः नयनजलैः, अंशुकोत्सङ्ग—वसनमध्यभागम्, आपूरयन्ती—परिपूर्णं कुर्वन्ती स्त्रियो हि पूजार्थकुसुमानि अञ्चले वसनाञ्चले धारयन्ति इति दृश्यते लोके नयनजलधारया सिक्तवस्त्रवसनामिति भाव।

(१८४) पदे पदे—प्रतिपादक्षेपं, विगलद्भि—स्रस्तैः, शोकक्षामाभ्यां हस्ताभ्याम् इति भाव, वलयैः,—कङ्कणैः, गृहदेवतानां—भवने प्रतिष्ठितकुलदेवतानाम् आमन्त्रणाय—सम्भाषणाय, बलिमिव—उपहारमिव विकिरन्तीं—विक्षिपन्तीम्, अर्पयन्तीमिति यावत्। आप्रपदीनां—प्रपद—पादस्याग्र ("पादाग्रं प्रपदम्" इत्यमरः) तन्मर्यादीकृत्य आप्रपदं तत्प्राप्नोति इति आप्रपदीना ताम्, ["आप्रपदं प्राप्नोति" (५।२।८ पा०) इति खः] गुणकुसुममाला—तन्तुगुम्फितपुष्पस्रजं, यमदोलामिव—यमान्दोलिकामिव प्राणिविशेषानयनार्थं यमस्य दोलायन्त्रमिव आरूढाम्—अधिष्ठिताम्।

(१८५) अन्त,—अभ्यन्तरे, गुञ्जद्भि,—ध्वनद्भिः, मधुकरैः,—भृङ्गैः, मुखरं—वाचालितं तेन, कर्णोत्पलेन—कर्णावतंसीकृतेन इन्दीवरेणेति यावत्, आमन्त्र्यमाणेति।—आमन्त्र्यमाणं—सम्भाष्यमाण, लोचनं—नयनम्, उत्पलमिव—इन्दीवरमिवेत्यर्थं, यस्या तामिव सजातीयत्वात् क्षताभावघनीलनीरजनयनामिवेति भाव।

(१८६) प्रदक्षिणीक्रियमाणामिव—अप्रदक्षिणा प्रदक्षिणा क्रियमाणा प्रदक्षिणी-

थाय चित्तमिव चित्रफलकमविचलं धारयन्तीम्, (१८७) अर्चाबद्धोह्यमानधवलपुष्पदामकां पतिव्रतापताकामिव पतिप्रासयष्टिमिष्टामुपगूहमाना, बन्धोरिव निजचारित्रधवलस्य नृपातपत्रस्य पुरो नेत्रोदकमुत्सृजन्ती, (१८८) पत्युः पादपतनसमुद्गमदभ्यधिकबाष्पाम्भःप्रवाहप्रतिरुद्धदृशः कथमपि प्रतिपन्नादेशान् सचिवान् सन्दिशन्तीम्, (१८९) अनुनयनिवर्त्तितविधुर-

---

क्रियमाणा—विष्वग्भ्राम्यमाणा तामिव, मणिनूपुरयोः,—रत्नमञ्जीरयोः, ध्वनिभिः,—शब्दैः, मणिनूपुरशब्दमखानैरिति भाव, बद्धमण्डल—विरचितचक्राकारवेष्टनमिव च । सन्निहितेति ।—सन्निहित,—सम्यक्तया स्थापित, चित्रित इति यावत्, प्राणसम,—जीवनसदृश, पतिरिति भाव यत्र तादृशम्, अविचल—निश्चलम्, एकाग्रम्, चित्रफलकम्—आलेख्यपट, धारयन्तीं—दधाना, तीव्रशोकावेग ज्ञातमरणनिश्चयामिति भाव ।

(१८७) अर्चेति ।—अर्चा—पूजा, तस्यै बद्ध—संयमितम्, उह्यमानं—वातेन चाल्यमानं, धवल—श्वेत, पुष्पदाम—कुसुममाल्यं यत्र तथोक्ता, पतिव्रतापताकामिव—पातिव्रत्यसूचनीं वैजयन्तीमिव, पत्यु,—भर्त्तु, प्रासयष्टिं—कुन्ताख्यास्त्रविशेषम्, इष्टा—प्रियां, भर्त्तुरिति शेष, यद्वा,—भर्त्तु प्रियत्वात् आत्मन प्रियाम्, प्रियप्रियेषु प्रियवदुपचारवत्त्वात इति भाव, उपगूहमानाम्—आश्लिष्यन्तीम् । बन्धोरिव—सुहृद इव, निज—स्वीय, चारित्र—विशुद्ध चरितमिव, धवल—शुभ्र तस्य, नृपातपत्रस्य—राजच्छत्रस्य, पुर,—अग्रत, नेत्रोदक—बाष्पम्, उत्सृजन्तीं—मुञ्चन्तीं, स्वजनाग्रत शोकस्य गाढत्वेन प्रकाश स्वभावसिद्ध इति भाव, "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इत्यादि महाकविप्रयोगदर्शनात् ।

(१८८) पत्यु,—स्वामिन, पादपतने—चरणप्रणिपातकाले, समुद्गमता—समुच्छलताम्, अभ्यधिकानाम्—अधिकाधिकानां बाष्पाम्भसाम्—अश्रुजलानां, प्रवाहेण—स्रोतसा, प्रतिरुद्धा,—आवृता, दृश,—नेत्राणि येषां तान्, प्रतिपन्नादेशान्—आज्ञाकारिण इत्यर्थ, सचिवान्—अमात्यान्, कथमपि—अतिकष्टेन, शोकावेगेन कण्ठावरुद्धत्वात् इति भाव, सन्दिशन्तीम्—एतत्परमेवमेव युष्माभि वर्त्तितव्यमित्यादिभणन्तीम् ।

(१८९) अनुनयेति ।—अनुनयेन—सान्त्वनेन, परलोकेऽपि परिचर्यार्थं पतिपरायणाना पुरोगमनस्य प्रतीक्षितसम्मतत्वात् मद्वियोगदुःखं मा कुरुत, इत्येवरूपेण

वृद्धबन्धुवर्गवर्द्धमानध्वनिभिः गृहाक्रन्दैः आकृष्यमाणश्रवणां, (१८०) भर्त्तृभाषितनिभैः पञ्जरसिंहहुंहितैर्ह्रियमाणहृदयां, धात्र्या भर्त्तृभक्त्या च निजया प्रसाधिता, जरत्या मूर्च्छया च संस्तुतया धार्य्यमाणां, सख्या पीडया च व्यसनसङ्गतया समालिङ्गिता, परिजनेन सन्तापेन च (१८१) गृहीतसर्वा-

---

प्रतीघवाक्येन इति भावः, निर्वर्त्तिताना—स्थिरीकृताना, विधुराणां—वियोगार्त्तानां, वृद्धानां—स्थविराणां, बन्धुवर्गाणां—सुहृद्गणानां, वर्द्धमाना—वृद्धिं गच्छन्तः रोदनानीति भावः ध्वनयः,—विलापाचरणोत्थशब्दाः तेषु तादृशैः, गृहाक्रन्दैः,—स्वस्वगृहमध्ये रुदितरवैः, आकृष्यमाणं—बलपूर्वकं नीयमानमित्यर्थः, करुणोत्कारैः बधिरीक्रियमाणमिति भावः श्रवणं—श्रोत्रेन्द्रियं यस्याः ताम्।

(१८०) भर्त्तृभाषितेति।—भर्त्तुः,—स्वामिनः भाषितं—वचनं, तन्निभानि—तत्सदृशानि तैः गम्भीरनिर्घोषत्वादिति भावः, पञ्जरसिंहहुंहितैः—पञ्जराबद्धसिंहगर्ज्जनैः, ह्रियमाणहृदयाम्—आकृष्यमाणचित्ताम्, भर्त्तृवाक्यसादृश्यत्वेन हृदयहारित्वात् इति भावः। धात्र्या—उपमात्रा भर्त्तृभक्त्या च पतिभक्त्या च, प्रसाधिता—प्रकर्षेण निवर्त्तनाय चेष्टिताम्, अलङ्कृताञ्च। जरत्या—वृद्धया, कयाचिदिति शेषः मूर्च्छया च—मोहेन च, संस्तुतया—परिचितया, एकत्र,—चाविनाश सहवासात्, अन्यत्र,—भर्त्तुर्वियोगवशतया पुनः पुनरागमनात् इति भावः, धार्य्यमाणाम्—अवलम्ब्यमानां, गृह्यमाणाञ्च। सख्या—वयस्यया, पीडया—चासन्नभर्त्तृवियोगजदुःखेनेत्यर्थः व्यसनसङ्गतया—व्यसने—विपदि, सङ्गतया—सम्मिलितया सहायभूतयेत्यर्थः, व्यसनात्—विपदः हेतोः समुपस्थितया च, समालिङ्गिता—समाश्लिष्टाम्, आक्रान्ताञ्च।

(१८१) गृहीतेति।—गृहीता,—अवलम्बिता, आक्रान्ताश्च, सर्वे—सकला, अवयवा,—अङ्गानि यस्य तथोक्तेन। परीता—वेष्टिता, युक्ताञ्च, [ परिजनसन्तापादीनां प्रस्तुतानाम् एकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कृतिः ]। कुलपुत्रेति।—कुलपुत्राणां—सत्कुलजातानाम्, उच्छ्वसिते —दीर्घनिश्वासे, महत्तरे,—महामहिमशालिभिः पुरुषैश्च, [ "कुलपुत्रोच्छ्वसिते" इत्यत्र "कुलपुत्रैरुच्छ्वसितैश्च" इति पाठः—कुलपुत्रा,—कुलीनतनयाः तैः, उच्छ्वसिता,—दीर्घश्वासाः तैः, महत्तरैः,—मानमहद्भिश्च ] अधिष्ठिता—परिवृताम्, आक्रान्तामित्यर्थश्च॥

वयवैन परीतां, कुलपुत्त्रोच्छ्रसितैश्च महत्तरैः अधिष्ठिता, (१८२) कञ्चुकिभिः दुःखेन अतिवृद्धैः अनुगतां, भूपालवल्लभान् कौलेयकान् अपि सास्रमालोकयन्तीं, सपत्नीनामपि पादयोः पतन्तीं, (१८३) चित्रपुत्रिका अपि आमन्त्रयमाणां, गृहपतत्रिणामपि अञ्जलिं पुरस्तात् उपरचयन्तीं, पशूनपि आपृच्छमानां, भवनपादपानपि परिष्वजमानां मातरं ददर्श।

दूरादेव च (१८४) बाष्पायमाणदृष्टिः अभ्यधात्,—"अम्ब! त्वमपि मां मन्दपुण्यं त्यजसि? प्रसीद, निवर्त्तस्व" इत्यभिदधान एव न सखेदमिव (१८५) नूपुरमणिमरीचिभिः चुम्ब्यमान-

(१८२) कञ्चुकिभिः,—मातुकुलजवर्षे बन्धुपुरुषादिभिः विज्ञवर्ये, अतिवृद्धै —अतिस्थविरैः, महद्भिः, अनुगताम्—अनुसृताम्, अभिभूताम्। भूपालवल्लभान् —राजप्रियान्, कौलेयकान्—सारमेयान् कुक्कुरान् इत्यर्थं, सत्कुलजातान् जना वा, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) सास्र—सबाष्प, त्वत्प्रियम् अचिरेणैव इहलोकात प्रस्थास्यति, त्वं निराश्रय कुत्र गमिष्यसि? इति कातर्यात् इति भाव। सपत्नीनामपि—समानपतिकानामपि, पादयो पतन्तीम्—एतावन्त काल मया युष्मासु सपत्नीबुद्ध्या यत्किञ्चिदपराद्ध, तत्सर्वं क्षन्तव्यम् इति मत्वा इदानीं मामनुज्ञातु इति भाव।

(१८३) चित्रपुत्रिका,—आलेख्यस्था पुत्तलिका, आमन्त्रयमाणा—सम्भाषमाणाम्। गृहपतत्रिणा—गृहपालितपक्षिणाम्। उपरचयन्तीं—कुर्वतीम्। पशून्—गवादीन्, आपृच्छमाना—सम्भाषमाणाम्, ["आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्, अत शानच्] भवनपादपान्—गृहप्राङ्गणरोपितवृक्षान् परिष्वजमानाम्—आलिङ्गन्तीम्।

(१८४) बाष्पायमाणदृष्टिः,—बाष्पायमाणा—बाष्पमुद्वमन्ती दृष्टिः—नेत्र यस्य तथोक्त, अश्रुपूर्णनयन इत्यर्थ। अम्ब!—मातः। मन्दपुण्य—क्षीणपुण्य, भाग्यहीनमित्यर्थ, दुर्भाग्यमिति यावत्। निवर्त्तस्व—विरता भव, मरणाध्यवसायादिति भाव।

(१८५) नूपुरेति।—नूपुरयो,—मञ्जीरयो, मातुरिति भाव, ("मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमर) ये मणय,—रत्नानि, तेषां मरीचिभि,—किरणै,

चूडः चरणयोः न्यपतत्। (१८६) देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणा इव उद्वेगवेगेन अवष्टभ्यमाना, मूर्च्छाऽन्धतमसं रसातलमिव प्रविशन्ती, (१८७) बाष्पप्रवाहेण इव चिरनिरोधसम्पिण्डितेन खेदसम्भारेण निर्भराविर्भूतेन अभिभूयमाना, कृतप्रयत्नाऽपि निवारयितुं न प्राभवत् बाष्पोत्पतनम्। (१८८) उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता च, गद्गदिकाघट्टमानगलविकला, निःसामान्यमन्युतरलीक्रियमाणाधरोष्ठी,

---

क्षुभ्यमाणचूडः,—क्षुभ्यमाना—क्षुब्धमाना, चूडा—शिखा यस्य तथाभूतः चरणार्पितोत्तमाङ्ग इति भावः।

(१८६) "देवी तु" इत्यारभ्य "निवारयितुं न प्राभवत् बाष्पोत्पतनम्" इत्यन्तेनान्वयः। तथा—तेन प्रकारेण तदवस्थायामित्यर्थः, तिष्ठति—वर्तमाने। पादनिहितशिरसि—चरणन्यस्तमूर्द्धनि। विमनसि—दुर्मनसि, पितुर्जीवननैराश्येन मातुर्दाहनाध्यवसायदर्शनेन च चिन्ताविक्लवचेतसि इत्यर्थः। कनीयसि—कनिष्ठे। [अल्पशब्दात् "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "युवाल्पयोः—" (५।३।६४ पा०) इत्यादिनाऽल्पस्य कनादेशः] प्रेयसि—अतिप्रियतमे। गुरुणा—महता, गिरिणा इव—पर्वतेन इव, उद्वेगवेगेन—दुःखातिरेकेण, अवष्टभ्यमाना—आक्रम्यमाणा। मूर्च्छेति।—मूर्च्छा—मोह एव, अन्धतमसं—गाढान्धकारम्।

(१८७) बाष्पप्रवाहेण—अश्रुस्रोतसा। चिरनिरोधसम्पिण्डितेन—चिरं—बहुकालं व्याप्य निरोधः,—अवरोधः तेन सम्पिण्डितः—पुञ्जीभूतः, एकत्र समवेत इत्यर्थः तेन खेदसम्भारेण—खेदातिशयेन निर्भराविर्भूतेन—समधिकमुदयमानेन, नितरामुच्छलितेन इत्यर्थः अभिभूयमाना—बाध्यमाना, कृतप्रयत्ना—विहितोद्यमा इत्यर्थः। बाष्पोत्पतनम्—अश्रुप्रवाहं, सवेगं प्रवहता प्रवाहस्य दुर्वारत्वात् इति भावः।

(१८८) उत्कटेति।—उत्कटेन—उद्दामेन, महता इत्यर्थः कुचयोः,—स्तनयोः, उत्कम्पेन—उद्वेपनेन, प्रकटितः—प्रकाशितः, असह्यः—दुःसहः शोकाकूतः—शोकाभिप्रायः यया तथाभूता। गद्गदिकेति।—गद्गदिकया—गद्गदस्वरेण, घट्टमानः,—अवरुध्यमान इत्यर्थः, यः गलः,—कण्ठः, तेन विकला—विह्वला, मग्ना,

(१९९) पुनरुक्तस्फुरणनिपीडितनासापुटा, निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ, (२००) सञ्छाद्य करनखमयूखमालाखचितदशान्तेन तनुना तन्वन्तर निर्गच्छदच्छश्वासस्रोतसा इव अंशुकपटान्तेन किञ्चित् उत्तानित वदनेन्दुं दूयमानमानसा, (२०१) स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसात् आरभ्य सकलम् अङ्कशायिनः शैशवम् वत्स,

---

त्रिवलीभङ्गुरत्वात् सगद्गद भाषमाणा इत्यर्थः । निःसामान्येति ।—निःसामान्येन—असाधारणेन, मन्युना—शोकेन, तरलीक्रियमाण,—क्षुभ्यमाण, वेपमान इत्यर्थः, अधरोष्ठ,—अधरभाग यस्या तथाभूता ।

(१९९) पुनरिति ।—पुनरुक्तेन—पुन पुन प्रवृत्तेन, उत्तरोत्तर वर्धमानेनेत्यर्थः, स्फुरणेन—स्पन्दनेन, निपीडित—विचलित, ["निपीडित—" इत्यत्र "निबिडित—" इति पाठे,—निबिडित—घनीभूत, सङ्कुचितमित्यर्थः] नासापुट—नासिकायुगल यस्याः तथोक्ता । निमील्य—मुद्रयित्वा । नयनाम्भःसेकप्लवेन—बाष्पजलाभिषेकप्रसरेण, प्लावयन्ती—आपूरयन्ती, मज्जयन्ती, सिञ्चन्ती वेत्यर्थः ।

(२००) सञ्छाद्य—आवृत्य । करेति ।—करनखानां—हस्तनखराणां, मयूखमालाभि,—किरणराजिभि, खचित,—व्याप्त, दशान्त,—वस्त्रप्रान्त, अञ्चलप्रान्त इत्यर्थ यस्य तथोक्तेन, तनुना—सूक्ष्मेण, ["करनख तनुना" इत्यत्र "करनखमयूखमालाखचिततनुना" इति पाठे,—करनखमयूखमालाभि खचितः तथा तनुः तेन, खचिता तनु,—अवयव यस्य तथोक्तेन इति वा अर्थः]। तन्वन्तरेति ।—तन्वन्तरात्—अवयवमध्यात्, निर्गच्छत—निःसरत, अच्छ—निर्मलम्, श्वासस्रोत —श्वासप्रवाह यस्य तथाभूतेन इव, अंशुकपटान्तेन—वसनाञ्चलेन। उत्तानितम्—उन्नमितम्, वदनेन्दु—मुखचन्द्रम् । दूयमानमानसा—सन्तप्यमानचित्ता, निधानेन मौक्तिकविशदेन अंशुकेनाच्छादितेव भाव ।

(२०१) स्मरन्ती—ध्यायन्ती । प्रस्नुतस्तनी—क्षरितपयोधरा, निःसृतस्तन्या इति यावत् वात्सल्यातिशयादिति भाव । प्रसवदिवसात्—गर्भमोचनवासरात्, हर्षोत्पत्तिदिवसादित्यर्थ, [अत्र आरभ्यार्थकप्रभृत्यादिशब्दयोगे एव पञ्चमी अनुशिष्टा, न तु आरभ्येति क्रियायोगे, क्रियायोगात्तया "प्रसवदिवसात्" इत्यत्र द्वितीया प्रसङ्गात् तथा च ल्यब्लोपे पञ्चमीं विधाय कथञ्चिदिदं समाधातव्यम् , आरभ्य

( २१० ) बाष्पार्द्रगण्डगृहीताम् श्रवणशिखरम् आरोप्य शोक-लम्बाम् अलकलताम्, ( २११ ) अधःस्रस्तविलोलवालिका-व्याकुलिताम् समुत्सार्य तिरश्चीं चिकुरसटाम्, ( २१२ ) अश्रु-प्रवाहपूरितम् आर्द्रम् किञ्चित् च्युतमुत्क्षिप्य हस्तेन स्तनो-त्तरीयं तरङ्गितमिव नखांशुपटलेन ( २१३ ) मग्नांशुकपटान्त-तनुताम्रलेखालाञ्छित-लावण्यकुक्षिकावर्जित-राजतराजहंसास्य-

---

कथाम्, परिपाट्या —परम्परया, बलानुबन्धेन—बलवत्तातत्वेन, धाराच्छन्नधारया पतनेन इत्यर्थे, विधुरे—कातरे। आपूर्यमाणे—क्रियमाणे, अश्रुभिरिति शेष ।

( २१० ) बाष्पेति ।—बाष्पेण—नेत्रोदकेन, आर्द्रः—क्लिन्नः गण्डः,—कपोलः, तेन गृहीता—धृता तत्र लग्नेत्यर्थः ताम्, बाष्पार्द्रकपोलपतितामिति यावत्, श्रवणेति ।—श्रवणशिखरं—कर्णाग्रं, कर्णोपरीत्यर्थः, आरोप्य—स्थापयित्वा शोक-लम्बा—शोकेन लम्बते इति तथोक्ताम्, शोकवशात् प्रसाधनसंयमनादिराहित्यात् लम्बमानामित्यर्थः, अलकलता—लतावत् लम्बमानं चूर्णकुन्तलम् ।

( २११ ) अध इति ।—अधः स्रस्ता—बन्धनशैथिल्यात् अधः पतिता, विलोला—विघूर्णन्ती बालिकया—कयाचित् बालया, व्याकुलिता—आकुलायिता ताम्; यद्वा —बालिकया—कर्णभूषणेन, व्याकुलिता—विपर्यस्ता ताम्, आलम्बित केशानां कर्णभूषणे आबद्धत्वादिति भावः, ( "बालिका । बालाया वालुका पत्रकाद्यन्ते कर्णभूषणे" इति मेदिनी ) तिरश्ची—वक्रा, भङ्गिमतीमिति भावः, ["ऋन्नेभ्यो" (४।१।५ वा०) इति ङीप्] चिकुरसटा—केशराशिः, समुत्सार्य—अपनीय, मुखादिदर्शनादिति भावः ।

( २१२ ) अश्रुप्रवाहेति ।—अश्रूणां—नयनाम्बूनां, प्रवाहेण—स्रोतसा, पूरितं—पूर्णम्, अत एव आर्द्रं—क्लिन्नं, च्युतं—स्खलितं, स्वस्थानादिति भावः, उत्क्षिप्य उत्तोल्य, यथास्थाने संस्थाप्य इत्यर्थः । स्तनोत्तरीयं—स्तनावरणभूतं उत्तरासङ्गं ताम् । तरङ्गितमिव—सञ्जाततरङ्गमिव, आकुञ्चितमिवेत्यर्थः । नखांशु-पटलेन—नखरप्रभासमूहेन । [ "नखांशुपटलेन" इति पाठस्तु क्वचित् पुस्तके न दृश्यते, तत्र तु अश्रुप्रवाहपूरितत्वेन स्खलनत्वेन च तरङ्गितमिवेति व्याख्येयम् ]।

( २१३ ) मग्नेति ।—मग्नस्य—अश्रुप्लुतयोः कपोलयोः संसक्तस्य, अंशुकपटान्तस्य—उत्तरीयवसनाञ्चलस्य, तनूनाम्—अवयवानाम्, तनूनामिवेति भावः, ताम्रलेखाभिः,—रक्तरेखाभिः, लाञ्छित—चिह्नितं, लावण्यं—कान्तिः, यस्य, तथाभूता, या

भृङ्गारकास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुखकमलं, (२१४) कलमूकलोककरविधृते धौतवासःशकले शुचिनि समुन्मृज्य पाणी, (२१५) सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनः आयतं निश्वस्य अवादीत्,—"वत्स! नासि (२१६) न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येन एव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च

---

कुब्जिका—चलनघटपरिचारिकाविशेषः, तया आवर्जितस्य—आनीतस्य, मुखीकृतस्येत्यर्थो वा राजतस्य—रौप्यमयस्य, राजहंसास्यभृङ्गारकस्य—राजहंसमुखाकाररचितस्य "गाडु" इति ख्यातस्य जलाधारविशेषस्य इत्यर्थः, आस्य—मुख तस्मात् समुद्गीर्णेन—निर्गतेन, ["भृङ्गारक समुद्गीर्णेन" इत्यत्र "मधुपकपटाश्ततनुताम्रशिखाखाञ्छितलावक कुब्जिकावर्जितराजतराजहंसास्यसमुद्गीर्णेन" इति पाठे,—मधु,—आच्छन्न, दलेति भावः, मधुकपटाश्नस्य तनुना ताम्रशिखाभि लाञ्छित लावकस्य यस्य तथाभूतस्य, तया कुब्जिकया—"चाबि" इति ख्यातेन मधुपात्रघटनयनभेदनेत्यर्थः, आवर्जित,—आयत्तीकृत, उद्घाटित इत्यर्थः, राजत,—रौप्यनिर्मित, य राजहंस,—राजहंसाकृतिजलाधारविशेष, तस्य आस्यसमुद्गीर्णेन इत्यर्थः] पयसा—जलेन।

(२१४) कलेति।—कलमूक,—अन्धमूक, लोक,—जन, तस्य करेण—पाणिना, विधृत—स्थापित तस्मिन्, ["कलमूकलोककरविधृते" इत्यत्र "कलमूक लोकविधृते" इति पाठान्तरम्] धौतवासःशकले—प्रक्षालितवसनखण्डे [पुस्तकान्तरे "धौत" इति पाठो न दृश्यते]। शुचिनि—धवले पवित्रे वा, पाणी—हस्तौ, समुन्मृज्य—शोधयित्वा निर्जलीकृत्येत्यर्थः।

(२१५) सुतेति।—सुतस्य—पुत्रस्य, वदने—मुखे, विनिहितम्—अर्पितं, निभृत—निश्चल निर्निमेषमित्यर्थः, नयनयुगल—नेत्रद्वयं यया तथाभूता, अविरहितदयात् निमेषाल्पपक्ष्मपङ्क्तिरिति भावः। आयत—दीर्घम्।

(२१६) नप्रिय,—अप्रिय, द्वेष्य इत्यर्थः, [इह नञ्शब्देन "सह सुपा" (२।१।४ पा०) इति समासः, समासे च कृते परत नञ अकारभावस्य वैकल्पिकत्वात् भव तदभावपक्ष एवाद्दत]। स्तन्येन—स्तनदुग्धेन। प्रभूतेति।—प्रभूतेन—समधिकेन, प्रभुप्रसादेन—स्वामिकृपया, अन्तरिता—व्यवहिता,

पुत्रक ! (२१७) पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणाकरुणा वा न अस्मि लक्ष्मीः क्षमा वा । (२१८) कुलकलत्रम् अस्मि चारित्रधना धर्मधवले कुले जाता । (२१९) किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केशरिणीं गृहिणीम् ? वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्य्यात् ? एवंविधेन पित्रा ते भरत-भगीरथ-नाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः ।

---

यदा,—निरतिशयस्वाम्यनुरागेण तिरस्कृता, यद्वाऽस्य तेन परित्यक्ततया तदनुगमनाभिलषितेत्यर्थः ।

(२१७) पुरुषान्तरेति ।—पुरुषान्तरस्य—अपरपुरुषस्य, भर्तृव्यतिरिक्तस्य इत्यर्थः, विलोकने—दर्शने, व्यसनिनी—अत्यासक्ता, राज्योपकरणेति ।—राज्यस्य—राजत्वस्य, उपकरणे—उपकारक्रियायाम्, अकरुणा—निर्दया । ["राज्योपकरणाकरुणा" इत्यत्र "राज्योपकरणमकरुणा" इति पाठे,—राज्योपकरणम्—राज्यस्य अङ्गीभूता इत्यर्थः ग्राम्यविशेषणमिति भावः, "लक्ष्मीः क्षमा वा" इत्यन्वयः ] क्षमा—पृथिवी, लक्ष्मीः क्षमा च यथा नित्य चला—पुंश्चली इव बहुपुरुषासक्ता, राज्ञो जीवनरक्षणरूपोपकारकरणे च निर्दया, तथाभूता अहं नास्मि इति भावः ।

(२१८) कुलकलत्रम्—कुलाङ्गना, सत्कुलप्रसूता इति भावः । चारित्रधना—विशुद्धपतिपरायणसदाचारसम्पन्ना पातिव्रत्यमेव धनवत् सततं रक्षणीयमिति मनसि विभावयन्ती इत्यर्थः, तस्य ऐहिकपारलौकिकाक्षयसौख्यसाधनत्वादित्याशयः । धर्मधवले—अमलस्वतोधर्मोज्ज्वले इति भावः ।

(२१९) किं विस्मृत ? कस्य पुत्री, कस्य पत्नी, कस्य जननी इति विस्मरणमापन्न किम् ? समरशतशौण्डस्य—शतशतसङ्ग्राममत्तस्य, अनेकसङ्ग्रामयुद्धविजयिन इत्यर्थः, पुरुषप्रकाण्डस्य—पुरुषश्रेष्ठस्य, केशरिणः,—सिंहस्य, केशरिणी—सिंहीम् । वीरजा—वीरप्रसूता, वीरकन्या इत्यर्थः । वीरजाया—वीरपत्नी । वीरजननी—वीरपुत्रा । पराक्रमक्रीता—वीर्यशुल्का । अन्यथा—अन्यप्रकारम्, लोकविधमारीजनगर्हिताचरणमित्यर्थः भर्तुरभावेऽपि जीवनधारणरूपमिति भावः । एवंविधेन —समरशतशौण्डेन पुरुषप्रकाण्डेन इत्यर्थः । भरत-भगीरथ-नाभागनिभेन—भरतादिसदृशेन, लोकपालदुर्धर्षप्रभावशालिना चक्रवर्त्तिना इति भावः, नरेन्द्रवृन्दारकेण—

(२२८) प्रत्ययदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः? मरणाच्च मे जीवितम् एव अस्मिन् समये साहसम्। (२२९) अतिशीतलः पतिविरहशोकानलात् अक्षयस्नेहेन्धनात् अस्मात् अनलः। (२३०) कैलासकल्पे प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते? अपि

---

यास्यति यथा कस्यापि आगमनं प्रापयति, तथा अहं तव पितुर्वीरस्य आगमनम् अपत तासां निवेद्य मह सन्मान लाभं लप्स्ये इति भावः।

(२२८) प्रत्ययेति।—प्रत्ययम्—अभिनवम् अननुभूतपूर्वमिति यावत्, दृष्टम्—इदानीमनुभूतं, यत् दारुणं—भीषणं, दुःखं—क्लेशः, भर्तृपीडाजनितः शोक इति यावत्, तेन दग्धायाः,—भस्मीभूतायाः, ["प्रत्ययदृष्ट—" इत्यत्र "प्रत्यक्षदृष्ट—" इति पाठे,—प्रत्यक्ष—साक्षात्, दृष्टम्—अवलोकितम्, इत्यर्थो भेदः] धक्ष्यति?—भस्मीकरिष्यति? धूमध्वजः,—वह्निः। साहसं—सहसा—बलेन कृतम्, मरणस्य तापनिवृत्तिकरत्वेनाक्लेशकरत्वात्, जीवनस्य तु महाक्लेशप्रदत्वेन निरतिशयक्लेशहेतुत्वात् जीवितुमिच्छा नास्तीति भावः।

(२२९) पतिविरहशोकानलात्—भर्तृवियोगशोकाग्नेः, ["पतिविरहशोकानलात्" इत्यत्र "पतिशोकानलात्" इति पाठान्तरम्] अक्षयेति।—अक्षयम्—अविनाशि स्नेहः,—प्रेम एव, इन्धनं—काष्ठं यस्य तथाभूतात्, अस्मात्—अनुभूयमानादित्यर्थः अनलः—लौकिकः अग्निरित्यर्थः, अतिशीतलः—अत्यर्थं शीतस्पर्शः, अचिरेणैव दग्धीकरणात् अनशीतलत्वादिति भावः। अत्र विरहशोकानलात् लौकिकानलस्यातिशैत्यकथनात् तदुत्कर्षप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते।

(२३०) कैलासकल्पे—कैलासपर्वततुल्ये, महासारत्वादतिनिश्चलाशये इति ध्वनिः, जीवितेश्वरे—प्राणनाथे ["जीवितेश्वरे" इत्यत्र "जीवेश्वरे" इति पाठान्तरम्] प्रवसति—परलोकं गमिष्यति इत्यर्थः, ["धातुसम्बन्धे प्रत्ययाः" (३।४।१ पा०) इति भविष्यति वर्तमानप्रयोगस्तत्वम्] जरदिति।—जरन्ती—जीर्णा शुष्का इत्यर्थः, या तृणकणिका—तृणलेशः, तद्वत् लघीयसि—अतितुच्छे जीविते—जीवने, लोभः,—स्पृहेत्यर्थः इति क्व—कुत्र घटते?—युज्यते? न कुत्रापीत्यर्थः, जीवितेश्वरापगमे जीवितस्य स्थितिः न कथमपि सङ्गच्छते, आत्मनाशे आत्मविनाशस्यान्वयव्यतिरेकसिद्धत्वात् इति भावः।

च जीवन्तीम् अपि मां (२३१) नरपतिमरणावधीरणमहापातकिनो न स्पृशन्ति पुत्र! पुत्रराज्यसुखानि। दुःखदग्धानाञ्च हृदि भूतिः अमङ्गला च अप्रशस्ता च निरुपयोगा च भवति। वत्स! (२३२) विश्वस्ताना स्थाणुना यशसा स्थातुम् इच्छामि लोके, न वपुषा। तत् अहमेव त्वां तावत् तात! (२३३) प्रसादयामि, न पुनः मनोरथप्रातिकूल्येन कदर्थनीया अस्मि" इत्युक्त्वा पादयोः अपतत्।

---

(२३१) नरपतीति।—नरपतेः—राज्ञः मरणं—मृत्युः तस्य अवधीरणम्—अवज्ञानं स्वजीवनरक्षणकामनया उपेक्षणमिति भावः, तेन यत् महत् पातकं—पापं तत् विद्यतेऽस्या इति तथाभूताम् स्वामिमरणेऽपि जिजीविषुमिति भावः न स्पृशन्ति—न आश्रयन्ति इत्यर्थः महापातकिसंसर्गनिषेधादिति भावः। पुत्रेति।—पुत्रस्य—तनयस्य राज्यं—राजत्वं पुत्रराज्यम् तत्र यानि सुखानि—आनन्दाः तानि स्वामिविरहे राजमाता भूत्वाऽपि नाहं सुखिनी भवेयम् अनायत्तत्वात् इति भावः। भूतिः—भस्मेत्यर्थः, यद्वा—भूतिः—ऐश्वर्यं भस्म च अमङ्गला—अशिवा, मङ्गलानुष्ठानादौ योगदानानर्हत्वादिति भावः अप्रशस्ता—प्रशंसानर्हा हीनत्वज्ञापिका इत्यर्थः [illegible]त्वादिति भावः। निरुपयोगा—निष्प्रयोजना कस्यापि उपकारादिकरणासामर्थ्यादिति भावः। भस्मापि अमङ्गलम् अप्रशस्तम् अप्रयोजनीयं च इति बोद्धव्यम्।

(२३२) विश्वस्ताना—विधवाना ("विश्वस्ता विधवे समे" इत्यमरः) स्थाणुना—स्थिरतरेण [स्थाजनस्य नुः (३।२।१३९ पा०) इति नुप्रत्ययः। "स्थाणुना" इति पाठस्तु पुस्तकान्तरे नास्ति] यशसा—कीर्त्या सह सहगमनजनितेन इति भावः स्थातुम्—वसितुम् अविनाशितया निरवच्छिन्नत्वात् इति भावः। वपुषा—देहेन "कीर्तिर्यस्य स जीवति" इति स्मरणात् अक्षय्ययशसैव जीवितुमिच्छामि न नश्वरदेहेन इति भावः।

(२३३) प्रसादयामि—प्रसन्नं कारयामि मरणानुमोदनरूपां प्रसन्नतां प्रार्थये इत्यर्थः। मनोरथप्रातिकूल्येन—अभीष्टव्याहत्या कदर्थनीया—क्लेशनीया। पादयोरपतदिति।—पुत्रस्य पदतले पतनं नौचित्यविगर्हितं तथापि तदानीं विवेकवैकल्यात् स्वाभिमतपतिविषये सहगमनेच्छातया भवतु [illegible] जीवनात् अत्यन्तम् आग्रहातिशयद्योतनार्थं तथा स्वाभिमतविषये प्रतिबन्धकाचरणाशङ्कया अनुनयनार्थं च मन्तव्यम्।

(२२४) स तु ससम्भ्रमम् अपनीय चरणयुगलम् अवनमित-तनुः उभयकरविधृतवपुषम् (२२५) अवनिगतशिरसम् उदनमयत् मातरम्। (२२६) दुर्निवारताञ्च शुचः समवधार्य, कुलयोषिदुचिताञ्च तामेव श्रेयसीं मन्यमानः क्रियां, कृतनिश्चयाञ्च तां ज्ञात्वा तूष्णीम् अधोमुखोऽभवत्।

(२२७) अभिनन्दति हि खेदकातराऽपि कुलीनता देशकालानुरूपम्। देवी अपि यशोवती परिष्वज्य समाघ्राय च तं शिरसि, निर्गत्य चरणाभ्यामेव च अन्तःपुरात् (२२८) पौराक्रन्दनिर्भराभिः उपरुध्यमाना इव दिग्भिः सरस्वतीतीरं ययौ। तत्र च कौतुकभावव्यातरैः दृष्टिपातैः

---

(२२४) स,—हर्षः। ससम्भ्रमं—सत्वरं, सव्यग्रमिति यावत्, अपनीय—अपसार्य। अवनमिततनुः,—प्रणमितकायः, उभयेति।—उभयाभ्यां—द्वाभ्यां, कराभ्यां—हस्ताभ्यां, विधृतं—गृहीतं, वपुः,—शरीरं यस्याः तथोक्ताम्।

(२२५) अवनिगतशिरसं—भूतलपतितमस्तकाम्। उदनमयत्—उत्थापयामास।

(२२६) दुर्निवारतां—दुःसहताम्। शुचः,—शोकस्य। कुलयोषिदुचिता—कुलाङ्गनासदृशीं तां क्रियाम्—अग्निप्रवेशरूपाम् इत्यर्थः, श्रेयसीं—प्रशस्ताम्। कृतनिश्चया—दृढसङ्कल्पामित्यर्थः, तां—मातरमित्यर्थः, ज्ञात्वा—विभाव्य, "न ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्" इत्यादि महाकविवाक्यात् इति भावः।

(२२७) अभिनन्दति—प्रशंसति, आद्रियते इत्यर्थः, अपितु न प्रतीपयतीति भावः। खेदकातरा—खेदव्याकुला, मातृवियोगशङ्कया विधुरापीति भावः, कुलीनता—सत्कुलजातता, देशकालानुरूपं—तत्तद्देशकालोचितम्, आचारम् इति शेषः, तत्काले तद्देशे च सत्कुलजातानां नारीणां पत्यनुगमनस्य सदाचारत्वेनावश्यानुष्ठेयतया अनिच्छन्नपि हर्षः मातुरग्निप्रवेशं प्रतिरोद्धुं न इयेष इति भावः। तं—हर्षम्। [पुस्तकान्तरे "तम्" इति पाठो न दृश्यते]।

(२२८) पौरेति।—पौराणां—पुरवासिनाम् आक्रन्देन—रोदनेन, निर्भराः,—आपूरिताः इत्यर्थः, ताभिः, उपरुध्यमाना इव—निरुध्यमाना इव, कौतुकभ-

(२३९) प्रविकसितरक्तपङ्कजपुञ्जे इव अर्चयित्वा भगवन्तं भानुमन्तमिव मूर्त्तिः ऐन्दवी चित्रभानुं प्राविशत्। (२४०) इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्, अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्तमानतारकं तारकराजमिव अस्तम् अभिलषन्तं जनयितारम्। (२४१) असह्यशोकोद्रेकाभिद्रुतश्च त्याजित इव पितृस्नेहेन धैर्यम्। (२४२) आश्लिष्य अस्य सकलदुर्मदभूपालमौलिमालालालितौ पादपद्मौ,

---

स्वभावादिति भावः। अत्र पौरजनानामाक्रन्दस्य दिगङ्गनासु आरोपात् कथम् अन्यथयस्यान्वयाधानमिति बिम्बप्रतिबिम्बभावतया समाधानात् निदर्शना छन्देऽलङ्कारम् इति सङ्क्षेपः।

(२३९) प्रविकसितेति।—प्रकर्षेण विकसितानाम्—सम्पूर्णप्रस्फुटितानां रक्तपङ्कजानाम्—रक्तपद्मानां पुञ्जे—राशौ इव, अविच्छिन्नरोदनेन चक्षुषी रक्तवर्णतया रक्तपङ्कजपुञ्जोपमे बोद्धव्यम्। भानुमन्तमिव—सूर्य्यमिव, [अत्र भानुमता सह चित्रभानोर्वैधर्म्यसाम्यात् उपमालङ्कारः] भानुमन्तम्—दीप्तिमन्तञ्च। ऐन्दवी—इन्दुः,—चन्द्रः तत्सम्बन्धिनी अमावस्यायाम् ऐन्दवी कला सूर्यं प्रविशतीति प्रवादात्। चित्रभानुम्—अग्निम् ("अग्निर्वैश्वानरो वह्निः । चित्रभानुर्विभावसुः॥" इत्यमरः)।

(२४०) इतर इति—हर्षः। स्वल्पेति।—स्वल्पः,—ईषत् अवशेषो यस्याः तथाभूता प्राणवृत्तिः,—जीवनव्यापारः, निश्वासप्रश्वासरूपं यस्य तथोक्तम्, परिवर्त्तमानतारकम्—परिवर्त्तमाने—ऊर्द्ध्वं नीयमाने विकृतिं नीयमाने इत्यर्थः, तारके—कनीनिके यस्य तथाभूतम् परिवर्त्तमानाः—रूपान्तरं नीयमानाः प्रभाविहीना इत्यर्थः, तारकाः—नक्षत्राणि यस्य तथाभूतम् तारकराजमिव—चन्द्रमिव, अस्तम्—नाशम् अस्ताचलञ्च। जनयितारम्—पितरम्।

(२४१) असह्येति।—"असह्य" इत्यादि "चिरं रुरोद" इति वक्ष्यमाणेनान्वयः। असह्यस्य—दुःसहस्य, शोकस्य—मन्योः, उद्रेकेण—आधिक्येन, अभिद्रुतः—अभिभूत इत्यर्थः पितृस्नेहेन—पितृप्रेम्णा अत्याधारपितृभक्त्या इति यावत्, [क्वचित् "पितृस्नेहेन" इत्यत्र "स्नेहेन" इति पाठान्तरम्] धैर्य्यम्—धीरत्वं, त्याजित इव,—मोचित त्यक्तधैर्य इत्यर्थः।

(२४२) अस्य—पितुः, पादपद्मौ—चरणकमले, ["वा पुंसि पद्मं नलिनम्"

रुदितमव्दायितश्रवणः प्रत्यभिज्ञाय शनैः शनैः अवादीत्,—"पुत्र! न अर्हसि (२४७) एवं भवितुम्। भवद्विधा न हि अमहासत्त्वाः। महासत्त्वता हि प्रथमम् अवलम्बनं लोकस्य, पश्चात् राजबीजिता। सत्त्ववताञ्च अग्रणीः सर्वातिशयाश्रितः क्व भवान्? क्व वैक्लव्यम्? (२४८) 'कुलप्रदीपोऽसि' इति दिवसकरसदृशतेजसस्ते लघूकरणमिव। 'पुरुषसिंहोऽसि' इति

---

दृष्टि —दर्शनशक्ति, नेत्रं वा ज्ञानं वा यस्य तथाभूत, ("दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इत्यमरः) चोरमाप्यजीवनशक्तिकात् इति भाव। [क्वचित् "अपि" इत्यनेन हीनः पाठ दृश्यते तत्र नार्थक्षतिरवम् अभवद्‌कारणीयमनप्रायगाधाभावात्]। अविरलेति।—अविरलम्—अविच्छिन्नं रुदितशब्द—रोदनध्वनिम् आयित—सृष्ट, श्रुतमित्यर्थं, श्रवणं—कर्णं यस्य तथाभूत यथाप्रकार—पुत्रोऽयं रोदिति इति बुद्ध्वा विज्ञाय इत्यर्थं चिरपरिचितकण्ठस्वरप्रकारज्ञानादिति भाव।

(२४७) एवम्—अधीर इति भाव। अमहासत्त्वा,—अमहानुभावा न हि—नैव, महानुभावसम्पन्ना एवेत्यर्थं महासत्त्वगुणसमन्विता हृदयविदा वा इति भाव। महासत्त्वता—महानुभावत्वं महासत्त्वगुणसमन्वितत्वं मनस्विता वा इत्यर्थं, प्रथम—मुख्यम् आद्य वा अवलम्बन—आश्रय, उदारचेतसा वसुधाकुटुम्बकत्वादिति भाव। राजबीजिता—राजा बीजी—बीजपुरुष यस्य तस्य भाव राजकुलत्वमित्यर्थं, पश्चात्—द्वितीयमवलम्बनमित्यर्थं, अहिसाधनत्वात् इति भाव केवलेन राजवंशजत्वेन लोकस्थिति कर्तुं न शक्यते, तेन तु महानुभावेन सता शक्यते एव इत्याशय। सत्त्ववताम्—सत्त्वगुणसम्पन्नानां मनस्विनां वा ["यतश्च—" (२।३।४१ पा०) इत्यादिना निर्धारणे षष्ठी] अग्रणी,—अग्रगण्य सर्वेति।—सर्वम् अतिशय,—अतिरिक्तो गुणगरिमेत्यर्थं तम् आश्रित, भवान् क्व? वैक्लव्य—व्याकुलत्वञ्च क्व? महासत्त्वेषु भवादृशेषु नैतद्‌ घटते युज्यते इति भाव। अत्र विरूपघटनारूप विषमालङ्कार कर्योन महदन्तरस्य सूचनात्।

(२४८) कुलप्रदीप,—वंशोज्ज्वलकर इत्यर्थं, इति, कथनमिति शेष, एवमुत्तरत्र, दिवसकरसदृशतेजस,—सूर्यसमप्रभावस्य, ते—तव, लघूकरणमिव—तुच्छीकरणमिव दिवसकरसदृशतेजस्त्वात् कुलप्रदीपोऽसि इति उक्तौ तव लाघवं प्रतिभाति, तदर्थे तेषां निष्प्रभत्वेन प्रतीयमानत्वात् इति भाव।

(२४९) शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव। 'चिनि, इयं तव' इति (२५०) लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तम् इव। 'गृह्यतां श्रीः' इति स्वयमेव (२५१) श्रिया गृहीतस्य विपरीतमिव। (२५२) 'अध्यास्यताम् अयं लोकः' इति उभयलोकविजिगीषोः अपुष्कलमिव। (२५३) 'स्वीक्रियतां कोषः' इति शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव।

---

(२४९) शौर्येति।—शौर्येण—शूरत्वेन, पराक्रमप्रदर्शनेनेत्यर्थः, पट्वी—निपुणा या प्रज्ञा—बुद्धिः, शौर्यातिशयशालिनी मतिरित्यर्थः, तया उपबृंहितः—वर्द्धितः पराक्रमः, विक्रमः, सामर्थ्यं वा यस्य तथाभूतस्य, ते इति शेषः, निन्दा इव—निन्दाकरणमिव, तस्य निर्विवेकप्रमापकत्वात् इतोऽपि अधिकोक्तिं त्वयि सहिष्यते इति भावः।

(२५०) लक्षणेति।—लक्षणैः—ध्वजादिचिह्नैः आख्यातं—कथितं, चक्रवर्तिपदं—साम्राज्यं यस्य तथाभूतस्य, ते इति शेषः पुनरुक्तमिव—लक्षणैरेव प्रागुक्तत्वात् आख्यातमिव विधात्रैव चक्रवर्तित्वे अभिषिक्तस्य तव तादृशवचनम् अनुवादमात्रत्वात् निरर्थकमिवेति भावः।

(२५१) श्रिया—लक्ष्म्या गृहीतस्य—स्वीकृतस्य, पतित्वेनेति भावः, विपरीतमिव—असदृशमिव इत्यर्थः, यतः प्राक् स्वयमेव स्वीकृतत्वेन तथाकथनम् प्रमत्तप्रियोक्तवत् इति भावः।

(२५२) अध्यास्यताम्—अधिष्ठीयताम्, अयं लोकः,—मर्त्यलोकः, राज्यसिंहासनमिति भावः, ["अधिशीङ्—" (१।४।४६ पा०) इत्यादिना आधारस्य कर्मत्वम् उक्तत्वात्] उभयलोकविजिगीषोः,—स्वर्ग-मर्त्ययोः जयाभिलाषिणः, अपुष्कलमिव—अपूर्णमिव स्वर्गस्यापि सिंहासनोचितस्य केवलमर्त्यसिंहासनारोहणोपदेशस्य सामान्यत्वेनानुचितत्वादिति भावः।

(२५३) स्वीक्रियतां—गृह्यतां, कोषः,—धनागारम्। शशीति।—शशिनः,—चन्द्रस्य, करनिकरः—मयूखनिचयः, तद्वत् निर्मलानां—स्वच्छानां, धवलानामित्यर्थः, यशसां—कीर्तीनां, सञ्चये—समूहे एकः,—केवलः अभिनिवेशः,—आग्रहः मनोयोगः विद्यते यस्य तथाभूतस्य, ते इति शेषः, निरुपयोगमिव—निष्प्रयोजनमिव, यशस्विनं प्रत्यर्थितया स्वत एव धनागमात्, कीर्तिकामत्वेन धनस्पृहाराहित्याद्वा इति भावः।

(२५४) 'आलोक्यतां राजकम्' इति गुणगणालोकित-जगतो *गतार्थमिव*। (२५५) 'उह्यतां राज्यभारः' इति भुवनत्रयभारोचितस्य अनुचितनियोग इव। 'प्रजाः परिरक्ष्यन्ताम्' इति (२५६) दीर्घदोर्दण्डाकलितदिङ्मुखस्य अनुवाद इव। 'परिजनः परिपाल्यताम्' इति लोकपालोपमस्य (२५७) आनुषङ्गिकमिव। 'शस्त्राभ्यासः कार्य्यः' इति (२५८) धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किम् आदिश्यते? (२५९) 'नियम्यतां चापलम्' इति नूतनतरवयसि

---

(२५४) आलोक्यताम्—अवलोक्यताम्, राजकम्—राजसमूहः, अकार्य्ये सम्पादितसम्भावनादिति भावः। गुणेति।—गुणानाम्—दयादाक्षिण्यादीनाम्, गणे,—समूहे, आलोकितम्—अवलोकितम्, जगत्—लोकः येन तथाभूतस्य तं इति शेषः, गतार्थमिव—व्यर्थमिव, राजकालोकनस्य जगदवलोकितत्वादिति भावः।

(२५५) उह्यताम्—अवलम्ब्यताम्, धार्य्यतामित्यर्थः। भुवनत्रयभारोचितस्य—त्रिजगद्भारवहनोचितस्य, अनुचितनियोग इव,—अयुक्तादेश इव, महाभारवहनोचितस्य अल्पभारवहनादेशे न्यूनत्वप्रतिपादनादिति भावः।

(२५६) दीर्घेति।—दीर्घेण—आयतेन दोर्दण्डेन—भुजदण्डेन, आकलित—विधृतमिति यावत्, दिङ्मुखम्—दिगन्तरालं येन तथोक्तस्य, तं इति शेषः, अनुवाद इव—भाषानुकरणमिव, आजानुलम्बितभुजेनैव प्रजापालनस्य प्रायशस्तदाया व्यक्तीभावादिति भावः।

(२५७) आनुषङ्गिकमिव—अनुषङ्गादागतमिव, [“ठगायस्थानेभ्यः” (४।३।७५ पा॰) इति ठक्] प्रधानान्तरकाम्यस्य उपदेश इव इत्यर्थः, लोकपालस्य स्वतःसिद्धत्वात् तदुपदेशस्य निष्फलत्वादिति भावः।

(२५८) धनुर्गुणेति।—धनुषः—चापस्य, गुणाः,—मौर्व्यः, ते, तदाकर्षणनिमित्तः किणः,—चर्म्मादिग्रन्थि स एव कलङ्कः,—चिह्नं, तेन कालीकृतः,—श्यामीकृतः, प्रकोष्ठः—कफोणिमणिबन्धयोः अन्तरभागः यस्य तथाभूतस्य, आदिश्यते—आज्ञायते निष्प्रयोजनार्थं इत्यर्थः, निरुपमनादिष्ट एव तत्कार्य्यकरणेन तदुपदेशस्य वैयर्थ्यापातादिति भावः।

(२५९) नियम्यताम्—निबध्यताम्, परित्यज्यतामित्यर्थः, चापलम्—चाञ्चल्यम्।

(२६४) भूपालाभावशोकशिखिना इव अन्तस्ताप्यमानः ताम्रतां प्रपेदे। मन्दं मन्दम् (२६५) अप्रियप्रश्नोत्तरपरिहारार्थमिव स्थितिमनुवर्त्तमानो लौकिकीम् अवातरद्दिवः। (२६६) दित्सुरिव जनेशाय जलाञ्जलिम् अपरजलनिधिसमीपमुपससर्प। (२६७) सद्योदत्तजलाञ्जलिः दुःखदहनदग्धमिव कायसकलम् आलोहितम् अधत्त।

---

(२६४) भूपालेति।—भूपालस्य—राज्ञः, सुतिश्रितुरधवस्य साम्यसेनस्य च इति भावः, अभावेन—निधनेन, यः शोकः—मन्युः, स एव शिखी—वह्निः तेन, अन्तः,—अभ्यन्तरे, ताप्यमानः,—दाह्यमानः ताम्रतां—रक्तवर्णतां प्रपेदे—लेभे।

(२६५) अप्रियेति।—अप्रियप्रश्नस्य—राजविनाशकथायाः अप्रीतिकरजिज्ञासायाः इत्यर्थः, उत्तरपरिहारार्थमिव—कथं राजा मृतः? केन रोगेण वा? इत्यादिजिज्ञासायाः उत्तरपरिजिहीर्षया इव, स्वदोषापाकरणाय किमितस्य कारणमिति तु प्राक् तत्त्वतः विहित्वा पुङ्खानुपुङ्खं दशरथसमीपे उत्तरदानार्थमिव इति वा, ["अप्रियप्रश्नोत्तरपरिहारार्थमिव" इत्यत्र "अप्रियप्रश्नार्थमिव" इति पाठे,—अप्रीतिकरजिज्ञासानिमित्तमिव कथं राजा मृत? इति ज्ञातुमिच्छयेवेति भावः। एतदुपेक्षयं तु पूर्व्ववत् नार्थमोदं परिवर्त्स्यति अन्यथावलोकिता साधिताम् अन्यतो जिज्ञासाऽनुपपत्तेः इति ध्येयम्] लौकिकी—लोकसम्बन्धिनीं स्थितिं—मर्य्यादां, व्यवहारमिति यावत्, अनुवर्त्तमानः,—अनुसरन्, यथा आत्मपरिजनेन आत्मना वा निहतकलाप इहा कश्चित् जनसमीपे तद्विशेषविवरणगोपनेच्छया तस्मात् अपसरन्, तथा सूर्य्योऽपीति भावः, ["अप्रियप्रश्नार्थमिव" इति पक्षे तु —यथा आत्मीयलोकाः कस्यापि विनाशमुपश्रुत्य तद्बन्धुसमीपे तद्विशेषप्रश्नायमायच्छन्ति, तद्वदिति भावः] दिवः,—अन्तरीक्षात्, उच्चस्थानात् इति अन्यते, लोकलोचनसमीपात् इति भावः, अवातरत्—अवातीर्णः।

(२६६) जनेशाय—नरपतये प्रभाकरवर्द्धनाय, जलाञ्जलिं—तर्पणजलपूर्णमञ्जलिं, दित्सुः,—दातुमिच्छुः, ["सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति सन्नन्तात् उ प्रत्ययः] अपरजलनिधिसमीपं—पश्चिमसागरान्तिकम्, उपससर्प—उपजगाम। राज्यवर्द्धन हर्षयोः आत्मानासम्भूतत्वेन तत्कृत्यमापिचित्जलाञ्जलिदानयोगत्वात्मिच्छयम् इत्यतिरथम्।

(२६७) सद्य इति।—सद्यः,—तत्क्षणं, दत्तः,—अर्पितः, जलाञ्जलिः,—युक्त-

(२६८) एवञ्च महानराधिपनिधननिधीयमानविपुलवैराग्ये इव प्रान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि, (२६९) समुपोह्यमानमहाजनाश्रुदुर्दिनार्द्रीकृते इव निर्वाति आतपे, (२७०) रोदनताम्रसकललोकलोचनरुचा इव लोहितायति जगति, (२७१) उष्णायमानानेकनरनिश्वाससन्तापपुष्टे इव च नीलायमाने दिवसे, (२७२) नृपानुगमनप्रचलितया

---

अपूर्णंगतम् इत्यर्थः येन तथाभूत, करलहस—कराणां—किरणाना, हस्तानाञ्च, सहस्र—दशशतसङ्ख्यक, बहुसङ्ख्यं वा, आलोकितम्—आरब्धम्, अध्वन—अध्वर, अस्तमयात इत्यर्थः ।

(२६८) "एवञ्च" इत्यस्य "नरेन्द्र कुलाश्रमसन्निकर्षया यमुनेवतामनीयत" इत्युत्तरेणान्वयः । महेति ।—महानराधिपस्य—महाराजस्य, निधनेन—मरणेन, निधीयमान—जन्यमान, विपुल—महत्, वैराग्य—संसारेषु वीतस्पृहत्वमित्यर्थः यस्य तथाभूते इव, प्रान्तवपुषि—लोहितवपुषि, निस्तेजसोऽपि भाव, गभस्तिमालिनि—अंशुमालिनि, सूर्य इत्यर्थः, गिरिगुहागह्वर—गिरेः—अस्ताचलस्य, गुहा—बिलम् एव, गह्वर—विवरम्, एतेन वीतरागाचार सूच्यते ।

(२६९) समुपोह्यमानेति ।—समुपोह्यमाने,—सम्बध्यमाने, शरीरेषु पतनात् धार्यमाणैरिति भाव, वर्द्धमानैरित्यर्थो वा, महाजनाना—साधुजनानाम्, अश्रुदुर्दिने,—अविरलधाराभिरश्रुवारिवर्षणे, आर्द्रीकृते [illegible]—आर्द्रता नीते इव, आतपे—सूर्यालोके, निर्वाति—निर्वाणं गच्छति ।

(२७०) रोदनेति ।—रोदनेन—क्रन्दनेन ताम्राणि—आरक्तानि, सकलाना—सर्वेषां, लोकाना—जनानां, यानि लोचनानि—नेत्राणि, तेषा रुक्—प्रभा तया इव, लोहितायति—अलोहित लोहितं भवति, {"लोहितादिडाज्भ्य क्यष्" ( ३।१।१३ पा०) इति क्यषि "वा क्यष" (१।३।९० पा०) इति पाक्षिकपरस्मैपदित्वात् शतृप्रत्यय }।

(२७१) उष्णेति ।—उष्णायमाने,—उष्णा इव आचरद्भि, अनेकधा—बहुना, नराणा—जनानां, निश्वासैः,—नासावायुभि, य सन्ताप,—सम्यक् तपन, तेन पुष्टे इव—दग्धे इव, नीलायमाने—कृष्णायमाने, तमोऽन्धकारागमनादिति भाव ।

(२७२) नृपेति ।—नृपस्य—राज्ञ, अनुगमन—पश्चात् प्रयाणं, सहगमनमिति

अनुमर्त्तुमिव उद्यतासु प्रहसितमुखीषु कुमुदलक्ष्मीषु, (२७९) अनवरतत्रिदशविमानकिङ्किणीक्वणिते इव श्रूयमाणे (२८०) शाखिशिखरकुलायनिलीयमानशकुनिकुलकलकूजिते, (२८१) नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव

---

इति मेदिनी)। केसरेति।—केसराणां—किञ्जल्कानां बकुलानाञ्च, ("केसरं किञ्जल्के क्लीबं किञ्जल्के न स्त्रियां पुमान्। सिंहच्छटायां पुन्नागे बकुले नागकेसरे" इति मेदिनी) माला—श्रेणी, स्रक् च, कलिता—रचिता, मुक्तमाला—मौर्वी-श्रेणिहारविशेष या..., तथाभूतासु अनुमर्त्तुं—सहमरणाय इवेत्यर्थः उद्यतासु—प्रवृत्तासु, ... प्रहसितमुखीषु—प्रस्फुटितासु इत्यर्थः प्रसन्नमुखीषु च, स्वामिविरहानन्तरमिति भावः, कुमुदलक्ष्मीषु—उत्पलश्रीषु राजमहिषीषु इति भावः।

(२७९) अनवरतेति।—अनवरतम्—अविच्छिन्नम्। ["अनवरत—" इत्यत्र "अनवरत—" इ... पा...—अनवरतं—अजस्रं, अविरामम् इति मेदि... ...] त्रिदशविमानस्य—देवयोमयानस्य, ...इत्यर्थः राज्ञः ... प्रसादम् आगतस्येति भावः किङ्किणीनां—क्षुद्रघण्टिकानां, क्वणिते इव—... इव यथा,—अनवरतम् त्रिदशविमानानां—राज्ञः पारलौकिकाय आकर्षणाय ... समरेशानां सुरपतीनां यानि आकाशयानानि तद्यानमित्यर्थः, किङ्किणीनां ...।

(२८०) शाखीति।—शाखिनां—वृक्षाणां, शिखरेषु—अग्रेषु, ये कुलायाः,—नीडानि, ("कुलायो नीडमस्त्रियाम्" इत्यमरः) तेषु निलीयमानानाम्—उपविशतां, निविशमानानामित्यर्थः वा, शकुनीनां—पक्षिणां, कुलस्य—वृन्दस्य, कलकूजितं—मधुरास्फुटध्वनि ... [ निलीयमानशकुनिकुलकलकूजिते" इत्यत्र "लीयमान-शकुनिकुलकूजिते" इति पाठे—तत्र लीयमानानां—श्लिष्यतां, मर्द्दितावद्धानामित्यर्थः, ... इति भावः, शकुनकुलानां कूजितम्—अव्यक्तशब्द इत्यर्थः इत्यर्थः ]।

(२८१) नाकपथेति।—नाकपथे—स्वर्गमार्गे, प्रस्थितः,—प्रचलितः, यः पार्थिवः—राजा ... प्रत्युद्गतः,—प्राप्तः, तदभिनन्दनार्थम् उपस्थित इत्यर्थः, यः पुरुहूतः—इन्द्रः, ("इन्द्रो मरुत्वान् मघवा ... पुरुहूतः पुरन्दरः" इत्यमरः) तस्य आतपत्रमिव—छत्रमिव आयतम्, अतिविस्मये इति भावः, [ ... भाव

पूर्वस्यां दिशि इत्यसाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैः गृहीत्वा शवशिबिकां शिविसमः सामन्तैः पौरैश्च पुरोहितपुरःसरे सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशनसत्क्रियया यशःशेषताम् अनीयत।

देवोऽपि हर्षः (२८२) पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलमभ्यन्तरेणाशेषेण शोकमूकेन परिजनेन च परिवृत, अन्तर्वर्तिनाऽपि पितृशोकानलतप्तेन स्वेदद्रवेण बहिरिव सिच्यमानः, निर्व्यञ्जनायां धरण्याम् उपविष्ट एव तां निशां

---

मनसी ] नरेन्द्रः—प्रभाकरवर्धनः [ उक्ते कर्मणि प्रथमा ] स्वयं समर्पितस्कन्धैः, —स्वामिभक्तिभावात् आत्मनैव दत्तस्कन्धैः। शवशिबिका—शववाहनीयानम्। शिविसमः—शिविनामनृपतिविशेषः तत्समः अर्थिभ्यः स्वमांसार्पितायथपूर्वजन्मयोगात् इति भावः। सामन्तैः—अधीश्वरैः। पुरोहितपुरःसरे—पुरोहितः—पुरोधाः, पुरःसरः—अग्रगामी और्ध्वदेहिककर्मसम्पादनाय इति भावः येषां तैः। सरितं सरस्वतीं—सरस्वतीनदीतीरमित्यर्थः। नरपतिसमुचितायां—राजयोग्यायां चन्दनकाष्ठादिविरचितायामिति भावः। हुताशनसत्क्रियया—अग्निसंस्कारेण, [ 'हुताशनसत्क्रियया' इत्यत्र "हुताशसत्क्रियया" इति पाठेऽपि स एवार्थः ] यशःशेषताम्—कीर्तिमात्रावशेषताम् अशरीरतामिति भावः [ नयतेः द्विकर्मकत्वम् कर्मणः गौणत्वाद् द्वितीया ज्ञेया ] अनीयत—प्रापित इत्यर्थः, दग्धदेहः कृत इति भावः।

(२८२) पुञ्जीभूतेन—एकत्र समवेतेन सकलेन—अखिलेन जीवलोकेनेव—भुवनवासिप्राणिनेव, लोकेन—प्रजाजनेनेति यावत्, राजकुलमभ्यन्तरेण—राजभवनमध्यगतेन अशेषेण—समस्तेन शोकमूकेन—शोकातिशयेन स्तब्धं, परिजनेन—परिवारवर्गेण [ क्वचित् "परिजनेन च" इति पाठो न दृश्यते। तत्र "लोकेन" सह विशेषणसम्बन्धः, राजकुलमभ्यन्तरेण परिजनेन इति भावः ] अन्तर्वर्तिना—अन्तःस्थितेन। [ "पितृशोकानलतप्तेन" इत्यत्र "शोकानलतप्तेन" इति पितृपदरहितोऽपि पाठः पुस्तकान्तरे विद्यते ] स्वेदद्रवेण—स्वेदरसेन, पितृभक्त्या इति भावः, सिच्यमानः—आर्द्रीक्रियमाणः, पितृशोकेन व्याकुलः इति भावः। यथा अत्युत्तापात् उष्णः सन् स्वेदवारि आपादमस्तकं निर्गमय्य बहिरपि सिक्तीकरोति, तथा सोऽपि महाशोकसन्तापज्वलितया अन्तर्वर्तिना अपि पितृ-

यिनीं भीमरथीभीमाम् अखिलां सराजकीं जजागार; अजनि च अस्य चेतसि,—"ताते (२८३) दूरीभूते अनाथीभूतः सम्प्रति एतावान् खलु जीवलोकः। तथा हि लोकस्य भग्नाः पन्थानः, मनोरथानां खिलीभूतानि भूरिस्थानानि, स्थगितानि आनन्दस्य द्वाराणि, सुप्ता सत्यवादिता, लुप्ता लोकयात्रा, (२८४) विलीना वाङ्मशालिता, प्रलीना प्रियालापिता,

---

अत्रा उच्छ्वसिततया नहि प्रकटितया अतीव विगलितहृदय अभवदित्याशय। निर्व्यवधानाया—निरालम्बायामिति यावत। निशीथिनी—रजनीम् [अत्र व्याप्त्यर्थे द्वितीया]। भीमरथीभीमा—भीमरथी—नरकनदी कालरात्रि वा, तद्वत भीमा—भयङ्करी ताम, किञ्च—"सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी। रात्रिर्भीमरथी नाम नराणामतिदुस्तरा॥" इत्युक्त्या सप्तसप्तत्यां वर्षेषु सप्तसङ्ख्यकमासेषु दिनेषु च षट्सु गतेषु एका सप्तमी रात्रिर्भवति सप्तसप्ततितमे वर्षे सप्तमे मासि सप्तमी रजनी एव सा वेदितव्या सा भीमरथीत्युच्यते तामतिक्रान्तो वयोऽतिवृद्धो नरो भवति इति भाष्यते। अखिला—सर्व्वाम। सराजक,—राजसमूहं परिवृत।

(२८३) दूरीभूत—परलोक गत सति, सम्प्रति—अधुना, एतावान खलु—सत्यमयम् एव सुविशाल इत्यर्थ, जीवलोक,—संसार, अनाथीभूत,—प्रभुशून्य, ["अनाथीभूत" इति पाठ पुस्तकान्तरे न दृश्यते] इत एव संसारसुखस्य अपगमात् लोकानामिति भाव। ["तथा हि" इति पाठ पुस्तकान्तरे नास्ति]। लोकस्य—जगत, भुवनस्येति यावत, ("लोकस्तु भुवने जने" इत्यमर) पन्थान,—स्थितिमार्गा, मर्य्यादा इत्यर्थ, भग्ना—विपर्य्यस्ता। मनोरथानाम्—अभिलाषाणा, भूरिस्थानानि—प्रभूता विषया ["भूरिस्थानानि" इत्यत्र "भूतस्थानानि" इति पाठ—समृद्धिविषया, उच्चाभिलाषा इत्यर्थ] खिलीभूतानि—अप्रहीभूतानि शून्यीभूतानि इति यावत् प्रार्थनापूरकाभावात शून्यानि इति भाव ("खिलस्तनप्रहृत क्लीब मार्गाङ्कित वेधसो" इति मालती)। आनन्दस्य—प्रमोदस्य, द्वाराणि—कपाटानि इति यावत, स्थगितानि—निरुद्धानि इति यावत। सत्यवादिता—सत्यभाषणशीलता सुप्ता—निद्रिता। लोकयात्रा—संसारयापन, सुखेन संसारस्थिति इति यावत लुप्ता—विनष्टा।

(२८४) वाङ्मशालिता—वाग्मीत्वमिति भाव, विलीना—विलय गता। प्रियालापिता—मधुराभाषण, प्रलीना—विच्छिन्ना।

(२८५) प्रोषिताः पुरुषकारविहारविकाराः, समाप्ता समरश्रौण्डता, (२८६) ध्वस्ता परगुणप्रीतिः, विश्रान्ता विश्वासभूमयः, अपदानि अवदानानि, निरुपयोगानि शास्त्राणि, (२८७) निरवलम्बना विक्रमैकरसता, कथाऽवशेषा विशेषज्ञता, (२८८) ददातु जनो जलाञ्जलिम् शौर्जित्याय, प्रतिपद्यतां प्रव्रज्या प्रजापालता, (२८९) बध्नातु वैधव्यवेणीं वरमनुष्यता, समाश्रयतु राजश्रीः आश्रमपदं,

---

(२८५) पुरुषेति।—पुरुषकारस्य—पौरुषस्य, विहार,—विलसित, तस्य विकारा,—विविधरूपता इत्यर्थ, प्रोषिता,—दूरं गता इति भाव। समरशौण्डता—रणमत्तता, आहवदक्षता वा, तद्गामि वीरत्वप्रकटनमित्यर्थ, समाप्ता—समाप्तिं गता।

(२८६) परगुणप्रीति,—अन्योत्कर्षाभिनन्दनमिति यावत्, ध्वस्ता—नाशं गता। विश्वासभूमय,—प्रत्ययस्थानानि, विश्रान्ता,—विश्रान्तिं गता। अवदानानि—प्रशस्तकर्माणि अनुष्ठितानि यशस्कराणि कर्माणि इत्यर्थ, [ "अवदानं कर्म वृत्तम्" इत्यमर। "अवदानानि" इत्यत्र "अपदानानि" इति पाठेऽपि स एवार्थ। ■ अवदानानामप्रकाशादपदत्वम् उत्प्रेक्षितम् इति ज्ञेयम् ] अपदानि—निराश्रयाणि। शास्त्राणि—आयुधानि, हिंसानुशासनग्रन्था इति यावत्, [ शास्त्रधातो 'सर्वधातुभ्य ष्ट्रन्' (उ० ४ पा० १५८ सू०) इति ष्ट्रनि रूपम् ] निरुपयोगानि—निष्प्रयोजनानि नेतृणामुपायज्ञानाभावेन शास्त्रविहितकर्माकरणादिति भाव।

(२८७) विक्रमेति।—विक्रमे—शौर्यप्रदर्शने एव, एक,—मुख्य, रस,—रागो येषां तेषां भावस्तत्ता, यद्वा—विक्रम,—शौर्यमेव, एक रस यस्य तस्य भाव तत्ता, निरवलम्बना—निराश्रया। विशेषज्ञता—विशिष्टज्ञानं, कथाऽवशेषा—कथामात्रशेषा, विनष्टा इत्यर्थ। अत्र "भग्ना प्रथान" इत्यारभ्य एतदवधि असम्बन्धे सम्बन्धरूपातिशयोक्ति, मार्गविच्छेदादीनाम् असम्भवात् सम्बन्धकल्पनप्रतिपादनात् इति द्रष्टव्य।

(२८८) जन,—लोक, शौर्जित्याय—ऊर्जितत्व—बलान्वितत्वम्, भाव शौर्जित्यं तस्मै तेजस्वितायै इत्यर्थ [ ऊर्ज्ज बलप्राणनयो इत्यस्य निष्ठायां भाव ष्यञि रूपम् ] जलाञ्जलिं—तर्पणाञ्जलिं, ददातु, शौर्जित्यं विनष्टमिति भाव। प्रजापालता—प्रजापालनक्षमा, प्रव्रज्या—संन्यासधर्मं, प्रतिपद्यताम्—आश्रयतु, स्वाश्रयाभावादिति भाव।

(२८९) वरमनुष्यता—मनुष्यश्रेष्ठता, वैधव्यवेणीं—विधवाधार्यं वर्णोरसं-

(२८०) परिधत्तां धवले वाससी वसुमती, वहतु वल्कले विलासिता, तपस्यतु तपोवनेषु तेजस्विता, (२८१) प्रावृणोतु चीवरे वीरता, (२८२) क्व गम्यतां पुनस्तस्य कृते कृतज्ञतया? क्व पुनः प्राप्स्यति तादृशान् महापुरुषनिर्माणपरमाणून् परमेष्ठी? शून्याः संवृत्ता दश दिशो गुणानां, जगत् जातम् अन्धकारं धर्मस्य, निष्फलम् अधुना जन्म शस्त्रोपजीविनाम्। तातेन विना (२८३) कुतस्त्या दिवसम् अभ्रमसमर-

---

मित्यर्थः, वध्नातु—प्रध्नातु। राजश्री,—राजलक्ष्मी, आश्रमपदं—तपोवनमित्यर्थ, समाश्रयतु—गच्छतु।

(२८०) वसुमती—पृथ्वी धवले—शुभ्रे, न तु रक्ते इति भाव, वाससी—वसने, परिधत्तां—धारयतु, वैधव्यादिति भाव। विलासिता—विलसनशीलता, वल्कले—तरुत्वचौ, वहतु—धारयतु, तपस्या करोतु इति भाव। तेजस्विता—प्रतापशालित्व, तपोवनेषु—आश्रमेषु तपस्यतु—तपश्चरतु।

(२८१) वीरता—वीरधर्म, चीवरे—वल्कलवस्त्रे, कौपीनं तदुचितमुत्तरीयञ्च इति भाव, प्रावृणोतु—आच्छादयतु परिदधातु इत्यर्थः।

(२८२) कृतज्ञतया—कृतोपकारवेदितया, तस्य—देवस्य, पितुरिति भाव, कृते—निमित्त, तन्मरणादेव कारणादित्यर्थ, पुन क्व गम्यताम्?—न कुत्रापि इति भाव, जगति स एक एव कृतज्ञ आसीत् भवत्सदृशाने कृतज्ञता निराश्रया जाता इति तात्पर्यम्। परमेष्ठी—विधाता तादृशान्—तथाभूतान् महेति।—महापुरुषनिर्माणस्य—नरश्रेष्ठरचनाया, परमाणून्—उपादानभूतानां क्षित्यादीनां चतुर्णाम् आरम्भकान् अतिमात्रसूक्ष्मान् भूतावयविशेषान् इत्यर्थ, क्व—कुत्र, पुन प्राप्स्यति?—न कुत्रापि इति भाव, तादृशमहापुरुष पुनर्नोत्पत्स्यते इति निष्कर्ष। गुणानां—दयादाक्षिण्यादीनां, दश दिश शून्या—रिक्ता, संवृत्ता,—जाता। धर्मस्य—सुकृतस्य, जगत्—लोक, अन्धकार—तमोमयमिति यावत, जात—भूतम्। अधुना शस्त्रोपजीविना—शस्त्रव्यवसायिना, जन्म—उत्पत्ति, निष्फल—निरर्थक, तन्निकष-रूपस्य सज्जनस्य अपायत्वेन तद्गुणपरीक्षाया अभावात्वादिति भाव।

(२८३) कुतस्त्या,—कुत आगता, न कुतोऽपि आगमिष्यन्तीति यावत, न पुन भविष्यन्तीति भावः। ["अव्ययात्त्यप्" (४।२।१०४ पा०) इत्यत्र "अमेहक्व-

रससमारब्धकलहकथाकण्टकितसुभटकपोलभित्तयो वीरगोष्ठ्यः ? अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनः तन्मुखसरोजम् ? जन्मान्तरेऽपि पुनः (२८४) परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम् ? लोकान्तरेऽपि (२८५) पुत्र ! पुत्र ! इति आलपतः श्रूयेत सा सुधारसमुद्गिरन्ती मथ्यमानक्षीरसागरोद्गारगम्भीरा भारती ?" इति। एतानि च अन्यानि च चिन्तयत एव अस्य कथमपि सा क्षयम् इयाय यामिनी।

---

तन्निदेश एव" (का०) इत्यन्वयेन तत्रैवान्वयः] दिवसम्—समस्त दिन भर [illegible] ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति सूत्रेण द्वितीया] असमेति।—असमेन—अतुल्येन अनुपमेनेव इत्यर्थः, समररसेन—युद्धानुरागेण, समारब्धा—उपक्रान्ता, या कलहकथा—विग्रहवार्ता, युद्धविषयकालाप इति भावः, तया कण्टकिताः—उद्‌गतलोमानः, सुभटानां—योद्धॄणां, कपोलभित्तयः—गण्डस्थलाः यासु ताः, वीरगोष्ठ्यः—वीरसभाः। इह [illegible] इत्यर्थः भावः। अपि—प्रश्ने। नाम—सम्भावनायाम्। दीर्घेति।—दीर्घे—आयते, रक्ते—रक्तवर्णे, नयने—लोचने यत्र तादृक्।

(२८४) परिष्वज्येत—आलिङ्ग्येत। तदिति।—तस्य—पितुः, लोहस्तम्भात्—आयसस्थूणात्, अभ्यधिकः—अतिरिक्तः, गरिमा—गौरवं, गर्भे—अभ्यन्तरे यस्य तथाभूतं, भुजयुगलम्—बाहुद्वयम्।

(२८५) ["पुत्र ! पुत्र !" स्थाने "पुत्र !" इति पाठः पुस्तकान्तरे दृश्यते, तत्रानन्वितसम्बन्धार्थत्वाभावान्न तथाऽर्थसौष्ठवम् इति ध्येयम्] आलपतः—आभाषमाणस्य, सुधारसम्—अमृतद्रवम्, उद्गिरन्ती—वर्षन्ती, मथ्यमानेति।—मथ्यमानस्य—विलोड्यमानस्य, क्षीरसागरस्य—क्षीरोदस्य, उद्गारवत्—निनादवत् इति यावत् [इहोद्गारशब्दस्य गौणार्थावलम्बनेन जुगुप्साव्यञ्जकत्वाभावात् अश्लीलत्वदोषस्य शङ्का न कार्येति] गम्भीरा—गभीरा, भारती—वाणी। अस्य—हर्षस्य, [अनादरे षष्ठी] हर्षमनादृत्येत्यर्थः, क्षयम्—अवसानम्, इयाय—जगाम, अतो महाशोकेन चिन्ताकुलतया निद्राविना निमेषमपि न निद्रां ययावित्याशयः।

(२८६) ततः शुचेव मुक्तकण्ठम् आरटत्सु कृकवाकुकुलेषु, गृहगिरितरुशिखरेभ्यः पातयत्सु आत्मानं मन्दिरमयूरेषु, परित्यक्तनिजनिवासेषु च वनाय प्रस्थितेषु पत्ररथकुलेषु, सद्यस्तनूभूते ताम्यति तमसि, (२८७) मन्दीभूतात्मस्नेहेषु अभावम् अभिलषत्सु प्रदीपेषु, (२८८) स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि, (२८९) प्रभातसमयेन समुच्चीयमानासु

---

(२८६) "ततः" इत्यस्य "चचाल देवो हर्षः" इत्यग्रेणान्वयः। शुचा इव—शोकेनेव, परमेतत् कृकवाकुप्रभृतिष्वपि समुच्चयबलात् अन्वेतव्यम्, वक्ष्यमाणसमुच्चयार्थकस्य च शब्देन योगात् सकृत्प्रयोगस्य सकृदर्थबोधकत्वेन सर्वैरन्वय यद्यप्युचितम्, तथाऽपि समुच्चयस्य तु वर्ण्यमाने सम्बन्धं विना चारितार्थ्याभावात् इति भेदम्, मुक्तकण्ठम्—स्फुटगलम् उच्चैरित्यर्थः, आरटत्सु—रुवत्सु। कृकवाकुकुलेषु—ताम्रचूडवृन्देषु, ('कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः)। गृहेति।—गृहं गिरिः तरवः—भवनपर्वतवृक्षाः, शिखराणि—अग्रभागाः तेभ्यः, आत्मानं—स्वं, पातयत्सु—निक्षिपत्सु, अवरोहत्स्विति भावः मन्दिरमयूरेषु—गृहमयूरेषु। परित्यक्तनिजनिवासेषु—उत्सृष्टनीडेषु, ["परित्यक्तनिजनिवासेषु" इत्यत्र "परित्यक्तनिवासेषु" इति पाठान्तरम्] वनाय—अरण्याय, अरण्यमित्यर्थः, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना अप्रयुज्यमानस्य तुमुन कर्मणि चतुर्थी] प्रस्थितेषु—चलितेषु, पत्ररथकुलेषु—पक्षिवृन्देषु, ["पत्ररथकुलेषु" इत्यत्र "पत्ररथेषु" इति पाठान्तरम्]। सद्यः,—तत्क्षणं, तनूभूते—विरलीभूते, ताम्यति—अवसादं गच्छतीत्यर्थः, तमसि—अन्धकारे।

(२८७) मन्दीभूतेति।—मन्दीभूतः,—ह्रासं गतः, आत्मनः,—स्वस्य, स्नेहः,—तैलम्, आत्मनि—स्वस्मिन्, स्नेहः,—प्रेम च, ममता इत्यर्थः येषां तेषु, अभावं—नाशम्, अभिलषत्सु—वाञ्छत्सु, तैलाभावात् आत्मवैराग्याच्च निर्वाणोन्मुखेषु इति भावः।

(२८८) स्फुरदिति।—स्फुरत्—उच्छलत् अरुणः,—सूर्यसारथिः, वल्कलमिव—त्वगिव स्फुरत्—दीप्यमानम्, अरुणं—रक्तवर्णं,वल्कलमिति च, तेन प्रावृतम्—आच्छादितं वपुः,—शरीरं यस्य तथाभूते, प्रव्रज्यामिव—सन्न्यासधर्ममिव, प्रतिपन्ने—प्राप्ते, नभसि—आकाशे, अरुणोदयवेलायामिति भावः।

(२८९) प्रभातसमयेन—प्रातःकालेन, समुच्चीयमानासु—एकैकशः गृहीता

पार्थिवास्थिशकलकान्तासु इव कलविङ्ककन्धराधूसरासु तारकासु, (३००) भूभृद्धातुगर्भकुम्भधारिषु (३०१) विविधसरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु, (३०२) ग्रावग्रचिसिक्थपटलपाण्डुरे पिण्डे इवापरपयोनिधिपुलिनपरिसरे

---

निःश्रेयिकाया सन्नीयमानासु इत्यर्थ, विनाश नीयमानास्विति भाव [ "समुन्नीय-मानासु" इत्यत्र "समुन्नीयमानासु" इति पाठे,—समवलम्ब्यमानासु इत्यर्थः, प्रभावा-धिक्येन तेजस्तिरस्करणात् अदृश्यता प्राप्यमाणासु इति भाव ] पार्थिवस्य—राज्ञः, अस्थि—कीकसानि ("कीकसं कुल्यमस्थि च" इत्यमरः) शकला —खण्डा इव, वा कला,—चन्द्रकला शान्तिवत्, यद्वा,—अस्थिशकलानां—कीकसखण्डानां, कान्ता,—सदृशा शोभितरूपेषा, कलविङ्कस्य—ग्रामचटकस्य, ("चटकः कल-विङ्कः स्यात्" इत्यमरः) कन्धरा—ग्रीवा इव, धूसरा,—ईषत्पाण्डुवर्णा तासु, [ "क्षुधिक्लिश" कित" (उ० १ पा० २ सू०) इति सरनप्रत्ययस्य कित्त्वात् बाहुलक-वचनेन गुणाभावात् कथम् ] तारकासु—नक्षत्रेषु। मन्त्राहात परलोकस्थितस्य महाय-मुख कात्यायनेन—"अपर्वग्नुमीष्टे वा यस्य सञ्चयन स्मृतम्। ततो यत्नीयकस्थीना मादायानादाय चालयेत ॥ दतन्कस्थीनि गङ्गायां प्रधानाङ्गोदयानिव ॥" इति।

(३००) भूभृदिति।—भूभृत,—पर्वतस्य, धातव,—गैरिकादय, गर्भे—मध्ये ययो तादृशौ, कुम्भौ—कपोलपिण्डौ, धरन्तीति तथोक्तेषु, अथवा,—भूभृत,—राज्ञ, धातव,—पूर्वीकानि दग्धिवास्थीनि, गर्भे—अभ्यन्तरे येषां तादृशान, कुम्भान—कलशान, धारयन्तीति तथाविधेषु, जलधिरिति भाव, मतास्थी कुम्भस्थौ स्थापमुक्त निर्णयसिन्धौ यथा,—"प्रक्षिप्य सम्यग् भाण्डे नवे स्वाच्छादने शुभे। गङ्गातो-यन्तोनि तद्वत् नीचा तीर्थे विसर्जयेत ॥" इति।

(३०१) विविधेति।—विविधानि—बहूनि इत्यर्थ, सरांसि—सरोवरा, सरित,—नद्य, तीर्थानि—पुण्यक्षेत्रविशेषाणि तेषाम्, अभिमुखा,—सम्मुखाः तेषु, तानुद्दिश्य इत्यर्थ, प्रस्थितेषु वनकरिकुलेषु—वन्यगजयूथेषु।

(३०२) ग्रावेति।—ग्राव—धूसर, ग्रचि—ग्रद, सिक्थ—मधूच्छिष्ट, तस्य पटल—समूह, तद्वत् पाण्डुर—शुभ्र तस्मिन, अथवा,—ग्राव,—ग्रावसम्बन्धी, ग्रचि—ग्रद, यत् सिक्थपटल—भक्तपाकसमूह, ("सिक्थौ भक्तपुलाके ना मधूच्छिष्टे नपु-सकम्" इति मेदिनी) पाण्डुर,—गौर यत तथाभूत तस्मिन, पिण्डे इव—प्रेत-दैवतोद्देशाकारके इव, अपरपयोनिधिपुलिनपरिसरे—पश्चिमसमुद्रस्यैकतटदेशपाय-

पात्यमाने शशिनि क्रमेण (२०३) नृपचितानलधूमविसर धूसरीकृततेजसि इव नरपतिशोकपावकदाहकिणकलङ्ककाली- कृतचेतसि इव (२०४) प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्र वृन्दोद्वेगविद्राणवपुषि इव (२०५) प्रथमास्तमितरोहिणी- रणरणकविमनसि इव च अस्तमुपगते रजनिकरे, राजतीव देवे दिवस आरूढे सवितरि परिहृते राज्ये इव रजनीप्रबन्धे, (२०६) प्रबुद्धराजहंसमण्डलप्रबोध्यमाने पङ्कजाकर इव

---

क्रमेण पात्यमाने—क्षिप्यमाणे क्षीयमाणे च शशिनि—चन्द्रमसि अस्तोन्मुखे च चन्द्रमसि इति भावः

(२०३) नृपेति ।—नृपस्य—राज्ञः चितानलस्य—शवदाहनवह्नेः धूमविसरेण—धूमनिवहेन धूसरीकृतम्—ईषत्पाण्डूकृतं तेजः—प्रभा यस्य तथाभूते इव नरपतीति ।—नरपतेः—राज्ञः शोकः—मन्युः पावकः इव—अग्निरिव तस्य दाहेन —सन्तापेन यः किणकलङ्कः—व्रणप्रणचिह्नं तेन कालीकृतम्—मालिनीकृतं चेतः—हृदयम् अन्तर्दग्धम् इति भावः यस्य तथाभूते इव ।

(२०४) प्रोषितेति —प्रोषितानाम्—पतिशोकात् परलोकं प्रस्थितानां समस्तानाम्—समग्राणाम् अन्तःपुरपुरन्ध्रीणाम् अन्तःपुरमहिलानां मुखानि आननानि चन्द्र वृन्दानि इव—शशधरसमूहा इव तेषाम् उद्वेगः—त्रासः तेन विद्राणम्—पलायमानं [विद्रातं निद्रायाः "संयोगादेरातो—" (८।२।४३ पा०) इत्यादिना निष्ठातस्य नत्वे "अट्कुप्वाङ्—" (८।४।२ पा०) इत्यादिना णत्वम्] वपुः—शरीरं यस्य तथाभूते ।

(२०५) प्रथमेति ।—प्रथमम्—प्राक् अस्तमिता—अस्तं गता या रोहिणी—नक्षत्रविशेषः स्वप्रणयिनी च यावत् तस्याः रणरणकेन—उत्कण्ठया विमनाः वा विमना — विकृतमनो यस्य तथाभूते इव रजनिकरे—चन्द्रे राजतीव—विराजमाने इव देवे— अमरे राजनि प्रभाकरवर्द्धने च दिवि—गगने स्वर्गे च ("द्यौः द्यौः स्वर्ग च गगने दिवं क्लीबं तयोः स्मृतम्" इति मेदिनी) सवितरि—सूर्ये जनके च। परिहृते— परित्यक्ते—विनष्टे तत्प्रायं विपद्यमाने इत्यर्थः रजनीप्रबन्धे—निशागमे ।

(२०६) प्रबुद्धेति —प्रबुद्धानां—जागरितानां प्रायिकेति अत्र राज्ञां— नृपाणां हंसानामिव—श्वेतच्छदानामिव मण्डलानि—समूहाः तैः अन्यत्र— प्रबुद्धानां राजहंसानां—"राजहंसास्तु ते चञ्चुचरणैः लोहितैः सिताः" इत्युक्तलक्षणानां

चचाल देवो हर्षः। (२०७) ततश्च नूपुररवविराममूकमन्द-मन्दिरहंसेषु, शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, (२०८) पतितयूथपे इव वनगजचये कक्षान्तरवर्त्तिनि पितृ-परिजने विषादिनि, उपरिरुदन्निषादिनि च स्तम्भनिषण्णे

---

क्रमविशेषाणां, मधुकरैः,—भ्रमरैः, प्रक्षोभ्यमाणः,—चाल्यमानः ; चचाल,—जगाम इत्यर्थः, पद्माकर इव—कासार इव, चचाल—चलितो, धराग्रहात् इति शेषः। इह नृपादिषु पद्माकरारोपनिबन्धं रूपकं, श्लिष्टपदनिबन्धनपदश्लेषसापेक्षम्।

(२०७) "ततश्च" इत्यस्य "दह्यमानहृदि निर्जगाम राजकुलात्" इत्युत्तरेण सम्बन्धः। नूपुरेति।—नूपुराणां—मञ्जीराणां, रवस्य—शब्दस्य, विरामेण—अपगमेन, नृपवियोग-शोकेन पुराङ्गनाभिः भूषणादिपरित्यागादिति भावः, मूकाः,—निःशब्दाः, हंसानां नूपुरध्वनिसमानुकारत्वं कविसमयीयवस्तुषु प्रसिद्धेरिति भावः, अत्र तदभावात् मूकत्वं बोद्धव्यम्, मन्दाः,—अपटवः मन्दिरहंसाः,—गृहमराला येषु तथोक्तेषु। शोकेति।—शोकेन—दुःखेन, आकुलानि—विह्वलानि, कतिपयानि—अल्पानि कञ्चुकि-मात्राणि—सौविदल्ला एव, ("मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे॥" इति मेदिनी) अवशेषाण्यन्ते इति अवशेषाः येषु तथाविधेषु, राजप्रियायाः सर्वासां चिताऽऽरोहणात् परिजनानां परिचारिकाणामन्यासाञ्च सर्वेषां सह गमनाय गमनादिति भावः, केवलमन्तःपुररक्षार्थमेव तेषां तत्र स्थापनादिति तु फलितम्, शुद्धान्तेषु—अन्तःपुरेषु।

(२०८) पतितेति।—पतितः,—विनष्टः इत्यर्थः, यूथपः,—यूथपतिः यस्य तादृशे इव, वनगजचये—आरण्यगजवृन्दे, ["वनगजचये" इत्यत्र "वनगजयूथ" इति पाठोऽपि स्यात्] अत्र वनगजेत्युक्तिः परिजनानां पशुत्वद्योतनार्थं भर्तरि एकान्तानुरक्तिप्रकटनार्थञ्च बोद्धव्या, कक्षान्तरवर्त्तिनि—प्रकोष्ठान्तरस्थिते, पितृ-परिजने—पितृपरिचारकवर्गे, विषादिनि—विषादवति। उपरीति।—उपरि—पृष्ठभागे, रुदन्—क्रन्दन्, निषादी—हस्तिपकः, हस्तिपाल इत्यर्थः यस्य तथोक्ते, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) स्तम्भनिषण्णे—आलान-स्तम्भमाश्रित्य स्थिते इत्यर्थः, ["सदिरप्रतेः" (८।३।६६ पा०) इति षत्वेन निषीदतेः निष्ठायां "रदाभ्याम्—" (८।२।४२ पा०) इत्यादिना नत्वं, पूर्वदकारस्यापि नत्वं, ततः प्रथमस्य "रषाभ्याम्—" (८।४।१ पा०) इत्यादिना द्वितीयस्य च "ष्टुना ष्टुः"

निष्पन्दमन्दे राजकुञ्जरे, (२०९) मन्दुरापालकाक्रन्दव्यथिते च अजिरभाजि राजवाजिनि, (२१०) विश्रान्तजयशब्दकलकले च शून्ये च महास्थानमण्डपे दह्यमानदृष्टिः निर्जगाम राजकुलात्; अगाच्च सरस्वतीतीरं, (२११) तस्यां स्नात्वा पित्रे ददौ उदकम्। (२१२) अपस्नातश्च अनिष्पीडितमौलिरेव परिधाय उद्गमनीयदुकूलवाससी, निश्वासपरः,

---

(पा४।४१ पा०) इति बलम्] निष्पन्दमन्दे—निश्चले इति यावत्, राजकुञ्जरे—राजहस्तिनि।

(२०९) मन्दुरेति।—मन्दुरा—अश्वशाला, ("वाजिशाला तु मन्दुरा" इत्यमर) तां पालयन्तीति ते मन्दुरापालकाः,—अश्वपालाः इति यावत्, तेषाम् आक्रन्देन—रोदननिनादेन, व्यथिते—सन्तप्ते, ["मन्दुरापालकाक्रन्दव्यथिते" इत्यत्र "मन्दुरापालकाक्रन्दक्वथिते" इति पाठे,—मन्दुरापालकैः,—अश्वरक्षकैः, आक्रन्द,—रोदनध्वनि, क्वथित,—व्याकुलीकृत यत्र तस्मिन्नित्यर्थः] अजिरभाजि—प्राङ्गणवर्त्तिनि, ("प्राङ्गणं चत्वराजिरे" इत्यमर) राजवाजिनि—राजघोटके।

(२१०) विश्रान्तेति।—विश्रान्त,—विरत, [विश्राम्यते स्मृते कर्त्तरि क्तप्रत्यय] जयशब्द,—जयध्वनिरेव, कलकल,—कोलाहलः यस्मिन् तथोक्ते, शून्ये—निर्जने इत्यर्थः, महास्थानमण्डपे—प्रशस्तसभागृहे, ("सभासमितिसंसदः। आस्थानी क्लीबमास्थानम्" इत्यमर) दह्यमानदृष्टिः,—भस्मीभूयमानेव, नित्यं जनकोलाहलमुखरितस्य पित्रा अधिष्ठितस्य सभागृहस्य एतस्मादृशस्य दर्शनाभावेन जनविरहिततया निस्तब्धत्वेन शून्यसिंहासनदर्शनेन च पितृशोकानलोद्दीपनादिति भाव। राजकुलात्—राजभवनात्, ("कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च ⋯ ⋯॥" इति मेदिनी)।

(२११) तस्या—सरस्वत्याम्। उदकं—तर्पणसलिलाञ्जलिं, ददौ—अर्पयामास।

(२१२) "अपस्नात" इत्यस्य "भवनमाजगाम" इत्युत्तरेण सम्बन्धः। अपस्नात,—प्रेतकार्यमुद्दिश्य कृतस्नान, अनिष्पीडितमौलि,—न निष्पीडित,—निर्जलीकृत, अप्रोञ्छित इत्यर्थः, मौलि,—केशचय येन तथोक्तः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रय." इत्यमर.) उद्गमनीये—धौते, ("तत् स्यादुद्गमनीयं यत्

निश्चामरः, निरातपत्रः, निरुत्सारणः, समुपनीतेऽपि सप्तौ चरणाभ्यामेव (३१३) नासाऽग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावशेषस्य अपि पितुर्दाहशङ्कया शोकाग्निमिव उद्गिरन्, अताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिसलयस्य इव स्वभावपाटलस्य अधरस्य अधरपल्लवस्य प्रभया मांसरुधिरकवलान् इव हृदयाभिघातात् उद्वमन् उष्णनिश्वासस्रोतैः भवनम् आजगाम।

---

धौतयोर्वस्त्रयोर्युगम्" इत्यमरः ) दुकूल—सिताम्बरे एव, ("दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सिताम्बरे" इति शब्दार्णवः ) वाससी—वस्त्रे परिधाय—परिहिते कृत्वा, निश्वसपर,—पुनःपुनरायत निश्वसन् इत्यर्थः, शोकदौःस्थ्यात् इति भावः। निश्चामर,—चामरव्यजनरहित, ["निश्चामर" इति पाठः अस्यामस्ति न दृश्यते, तथापि दुर्लक्ष्यत्वात् वक्ष्यमाणनिरातपत्रतयैव निश्चामरार्थप्रतीतेः इत्यवधेयम्]। निरातपत्र,—छत्रवर्जित, पित्रादिगुरुजनवियोगे छत्रचामरादिधारणनिषेधादिति भावः। निरुत्सारण,—उत्सारणा—लोकानामपसारणं, तद्रहित इत्यर्थः, राज्ञां गमनकाले रक्षिभिः पुरःस्थलोकाः अपसार्यन्ते इति नियमः, तदा तु सर्वेषामेव शोकविह्वलतया आश्रयदुःखतया नैवस्थानाभावात् सत्यामपि प्रभुताभावात् तत्र क्षमताभिति भावः। समुपनीते—समुपस्थापिते, सप्तौ—अश्वे, ("...सुरङ्गाश्वतुरङ्गमाः। ...हयसैन्धवसप्तयः॥" इत्यमरः) चरणाभ्यामेव—पादचारेणैव मातापितृवियोगे शास्त्रविहितनियमपालनाय पादचारेण गमनस्य प्राशस्त्यादिति भावः।

(३१३) नासाऽग्रासक्तेन—नासिकाऽग्रलग्नेन, रक्ततामरसताम्रेण—रक्तकमललोहितेन। हृदयावशेषस्य—हृदयमात्रावस्थितस्य, न तु बहिरङ्गस्य इति भावः। अताम्बूलस्य—अर्जितताम्बूलस्य, सुचिरप्रक्षालितस्य—बहुशःधौतस्य, कल्पतरुकिसलयस्य इव—कल्पवृक्षपल्लवस्य इव, स्वभावपाटलस्य—सहजरक्तस्य अधरपल्लवस्य—अधर,—हीन, पराभूत इत्यर्थः, पल्लव—किसलयं यस्मात् तथोक्तस्य, अधरस्य—निम्नोष्ठस्य, यद्वा,—अधरस्य—निम्नावस्थितस्य, अधरपल्लवस्य—अधरः पल्लव इव तस्य, मांसरुधिरकवलान् इव—पिण्डितरक्तग्रासान् इव, सरक्तमांसपिण्डानित्यर्थः, हृदयाभिघातात्—हृदये—चेतसि, अभिघातात्—आघातात्, शोकवज्रप्रहारजनित-

(२१४) राजवल्लभास्तु सत्याः सुहृदः सचिवाश्च तस्मिन् एव अहनि निर्गत्य, प्रिय पुत्रदारम् उत्सृज्य, उद्बाष्पैः बन्धुभिः वार्यमाणा अपि (२१५) बहुनृपगुणगणहृत-हृदयाः केचित् आत्मानं भृगुषु बबन्धुः, केचित् तत्रैव तीर्थेषु तस्थुः, केचित् (२१६) अनशनैः आस्तीर्णदर्भ-कुशा व्यथमानमानसाः शुचम् असमाम् अशमयन्, केचित् शलभा इव वैश्वानरं शोकावेगविवशा विविशुः, केचित्

---

बतादिति भाव । अनलनिपातसमीचे,—तन्निपातसमीपे, [ "इत्यभूततद्भावे" (२।३।२१ पा०) इति विभक्ते तृतीया ]।

(२१४) राजवल्लभा,—राजप्रिया । निर्गत्य—बहिर्गत्वा, भवनादिति शेष । पुत्रदारम् अपत्यकलत्रादि । [ इह समाहारद्वन्द्वविषयाणां पुत्रस्कारताद्धदीव, अदाषसमाधानन्तु 'गवाश्वप्रभृतीनि च' (२।४।११ पा०) इत्यत्र महाकविप्रयोगेषा-कृतिगणत्व प्रकल्प्य कथञ्चिद्विधेयात् ज्ञेयम् ] उद्बाष्पैः,—उद्गतनयनवारिभि । वार्यमाणा—निषिध्यमाना ।

(२१५) बह्विति।—बहुभि,—प्रभूतैः, नृपस्य—राज्ञ, गुणगणै,—दया-दाक्षिण्यादसमूहै, हृतानि—आकृष्टानि, हृदयानि—चेतांसि येषां तथाभूता, भृगुषु—प्रपातेषु उन्नतशृङ्गप्रदेशेषु इत्यर्थ, ("प्रपातस्तटो भृगु" इत्यमर) आत्मानं—स्व बबन्धु,—संयेमु, तत्र पतनाय हस्तपादादिबन्धना तस्थुरित्यर्थ । [ बबन्धु " इत्यत्र बभञ्जु " इति पाठ,—तत्र पतनेन आत्मानं चूर्णयामासुरित्यर्थ ]। तत्रैव—तेष्वेव, भृगुष्वेव इत्यर्थ, तीर्थेषु—पुण्यक्षेत्रेषु, यद्वा,—तत्रैव—राजपुरे एव, तीर्थेषु—पुण्यस्थलेषु न तु स्वदेशे स्थानान्तरे वा इति भाव । महाप्रभावस्य स्वभूत-छितविष राज्ञ लीलाचत्वात् तस्या पुण्यस्थलत्व बोद्धव्यम्।

(२१६) अनशनै —अभोजनै व्रतोपवासैरित्यर्थ, आस्तीर्णदर्भकुशा — आस्तीर्णा —आच्छादिता दर्भाणि—नलादीनि, कुशा,—दर्भाश्च ये तथाभूता, दर्भकुशास्तीर्णभूमौ स्थिता इत्यर्थ व्यथमानमानसा,—पीडितचित्ता असमाम्—अतुल्यां शुच—शोकम् अशमयन्—शमयामासु, वन गत्वा प्रायविसर्जनाय अनशने स्थिता इति भाव । शलभा इव—पतङ्गविशेषा इव, वैश्वानरम्—अग्नि, शोकेति। —शोक स्य—दुःख, आवेग,—सम्भ्रम उत्कण्ठा इत्यर्थ, तेन विवशा,—विह्वला ।

(३१७) दारुणदुःखदहनदह्यमानहृदया गृहीतवाचः तुषारशिखरिणं शरणं ययुः, केचित् (३१८) विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लवशयनशायिनः सन्तापम् अशमयन्, केचित् (३१९) सन्निहितान् अपि विषयान् उत्सृज्य सेवाविमुखाः परिच्छिन्नैः पिण्डकैः अटवीभुवः शून्या जगृहुः, केचित् पवनाशना धर्मधना धमनमनयो मुनयो बभूवुः, केचित् गृहीतकाषायाः

(३१७) दारुणेति।—दारुणेन—उत्कटेन, दुःखदहनेन—शोकाग्निना, दह्यमानम्—सन्तप्यमानम्, हृदयम्—चित्तं येषां तथाभूताः, गृहीतवाचः,—गृहीता—नियन्त्रिता, संयमिता इत्यर्थः वाक् यैः ते, मौनव्रतधारिण इत्यर्थः, ["स्त्रिया—" (६।३।३४ पा०) इत्यादिना पुंवद्भावे "शेषाद्विभाषा" (५।४।१५४ पा०) इति वैकल्पिककबभावः] तुषारशिखरिणम्—हिमाद्रिम्, शरणम्—आश्रयम्, ययुः,—गतवन्तः, आश्रितवन्त इत्यर्थः, यतिनो जाता इति भावः। दग्धा अपि दाहज्वाला प्रशमनार्थं शीतलस्थानमाश्रयन्ति।

(३१८) विन्ध्येति।—विन्ध्यस्य—तदाख्यगिरेः, उपत्यकासु—आसन्नभूमिषु, ('उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमरः।) वनेति।—वनकरिकुलानाम्—वन्यगजवृन्दानाम् कराः—शुण्डाः, तथा शीकरासारैः,—अम्बुकणधाराभिः, सिच्यमानाः,—आर्द्रीक्रियमाणाः, तनवः,—शरीराणि येषां तथाभूताः, पल्लवशयनशायिनः—किसलयशय्याशायिनः, सन्तापम्—चित्तदाहं शोकजमिति भावः, अशमयन्—निर्वापयामासुः, वानप्रस्थाश्रमं गृहीतवन्त इति भावः।

(३१९) सन्निहितान्—करस्थितानिति भावः, विषयान्—भोग्यवस्तूनि, उत्सृज्य—त्यक्त्वा, सेवाविमुखाः,—भोगपराङ्मुखाः, परिच्छिन्नैः,—परिमितैः, पिण्डकैः,—भक्ष्यार्थे तदुपकल्पिता इत्यर्थः, यद्वा—परिच्छिन्नैः,—परिमितैः, स्वल्पैरित्यर्थः, कर्शितैरिति भावः, पिण्डकैः,—शरीरैः, तदुपलक्षिता इत्यर्थः, शून्याः—जनविरलाः, अटवीभुवः,—वनभूमीः जगृहुः—आश्रिताः। पवनाशनाः,—वायुभोजिनः, धर्मधनाः,—धर्मसाधनकामा इत्यर्थः, धमनयः—धमन्यः,—काष्ठात् ताम्रस्य, स्फुरन्त्य इत्यर्थः, धमन्यः,—शिराजालानि येषां तथाभूताः, अनेन व्रतकार्श्यं सूच्यते। गृहीतकाषायाः,—गृहीतम्—अवलम्बितम्, काषायम्—कषायेण रक्तं वस्त्रं

कापिलं मतम् अधिजगिरे गिरिषु, केचित् (३२०) आचोटित-चूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे, अपरे (३२१) परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागम् उज्ज्वलं चक्रुः, अन्ये (३२२) तपोवनहरिण-जिह्वाऽञ्चलोल्लिह्यमानमूर्त्तयो जरां ययुः, अपरे पुनः (३२३) पाणिपल्लवप्रमृष्टैः आताम्ररागैः नयनपुटैः कमण्डलुभिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरुः।

---

ये तथाभूता, कापिलं—कपिलसम्बन्धि साङ्ख्यशास्त्रम्, अधिजगिरे—अधीतवन्तः, साङ्ख्यशास्त्रमधीत्य प्रकृतिपुरुषतत्त्वावगमात् योगिनो बभूवुरिति भावः।

(३२०) आचोटितेति।—आचोटिताः,—छेदिताः, [आङ्पूर्वकस्य चोटतेः णिचि निष्ठाया रूपम्] अपसारिता इति भावः, चूडामणयः,—चूडारत्नानि येभ्यः तथाभूतेषु, त्यक्तचूडारत्नालङ्कारेषु इति यावत्, शिरःसु—मूर्द्धसु, शरणीकृत-धूर्जटयः,—शरणीकृतः,—आश्रित इत्यर्थः, धूर्जटिः,—हरः यैः तथाभूताः, गृहीत-पाशुपतव्रता इत्यर्थः। जघटिरे—बबन्धुः।

(३२१) परिपाटलेति।—परिपाटलेन—परितो रक्तेन, प्रलम्बेन—आयतेन इत्यर्थः, चीवराम्बरेण—वसनखण्डेन, संवीताः,—आवृताः, आच्छादितदेहा इत्यर्थः, धृतमुनिवेशा इति भावः, स्वाम्यनुरागं—प्रभुभक्तिम्, उज्ज्वलं—भास्वरं, प्रशस्त-मिति यावत्।

(३२२) तपोवनेति।—तपोवनहरिणानाम्—आश्रममृगाणां, जिह्वाऽञ्चलैः,—रसनाप्रान्तैः, उल्लिह्यमानाः,—आस्वाद्यमाना इत्यर्थः, मूर्त्तयः,—शरीराणि येषां तथाभूताः, तापसाः सन्त इत्यर्थः, जरां—वार्द्धकम्।

(३२३) पाणीति।—पाणिः—करः, पल्लवः—इव—किसलयम् इव, तेन प्रमृष्टैः—प्रमार्जनं नीतैः, गृहीताश्च वै, आताम्ररागैः,—आरक्तप्रभैः, शोका-वेगजनितरोदनात् महापुरुषलक्षणत्वेन स्वभावसिद्धत्वाच्च इति भावः, नयनपुटैः,—नेत्रगोलकैः, कमण्डलुभिः,—जलपात्रविशेषैः, वारि—अश्रुजलं, तीर्थजलञ्च। गृहीतव्रताः,—व्रतधारिणः, मुण्डाः,—मुण्डितशिरसः, विचेरुः,—बभ्रमुः च। वीत-रागा अपि चिराभ्यस्तसंस्कारेण परलोकमध्येऽपि राजनि अत्यन्तानुरागा आसन् इति शोकातिशयशालिनी नरेन्द्रस्य काचिदसाधारणी भक्तिः समर्थ्यते इति वस्तुध्वनिः।

( २१८ ) असतन्नीकृतश्च तैः मनसाऽपि न अलभत शोकम् अनुप्रचरितुम्। अनुनीयमानश्च कथञ्चमपि आहारादिकासु क्रियासु आभिमुख्यम् अभजत। आवगतहृदयश्च अचिन्तयत्,—"अपि नाम तातस्य मरणं महाप्रलयसदृशम् इदमुपश्रुत्य आर्यो वाष्पजलस्नातो न गृह्णीयात् वल्कले? न आश्रयेद्वा राजर्षिः आश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? ( २१९ ) अवसन्निलनिर्भरभरितनयननलिनयुगलो वा न

आन्नित्यथ यैः सयोक्त, तद्विद इत्यर्थः। सत्तुता,—परिचिता, ("स्तव स्यात् परिचय" इत्यमरः) मस्करिण,—भिक्षव संन्यासिन इत्यर्थः, ('भिक्षु' परिव्राट् कर्मन्दी पाराशर्यपि मस्करी" इत्यमरः) अध्यहितात्‌ वैराग्यशास्त्रे अभ्यवपादितल लोकविड़ानिश्चात्ज। समेति।—सवे—सुखे, दुःख-दुखे—विषादे समौधी येषां ते, सुखदुःखयो समभावा इत्यर्थः, मुनयः,—तापसाः। ब्रह्मवादिन,—वेदान्तिकाः। पौराणिका,—पुराणपाठका, ते तु पुराणोक्तकालप्रवर्तिकाद्यर्थमेन शोकापनोदयितुमीहत। पर्यवारयत्—पर्यवेष्टयत्।

( २१८ ) तै,—कुलपुत्रादिभि. पौराणिकान्तैः सर्वैरित्यर्थः, असतन्नीकृत,—अस्वाधीनीकृत, स्ववमपि अनुक्त इत्यर्थ, शोक—पितृविनाशजनित मन्युम, अनुप्रचरितुम् —अनुवर्तितुम्, अनुभवितुमित्यर्थ, न अलभत—अविन्दत, अवसरमपि ईषत्। आभिमुख्य—आनुकूल्य, प्रवृत्तिम् इत्यर्थं। आवगतहृदय,—शोकापिहितहृदय, आवर्त मन्दस्य छलेत्यर्थ। अपि—प्रश्ने। नाम—सम्भावनायाम्। तातस्य —पितु। आर्य,—राज्यवर्धन, वाष्पजलस्नात,—अश्रुसमाप्लुत, वल्कले—तरुत्वचौ, वनवासिपरिधेये इति भाव, न गृह्णीयात—न स्वीकुर्यात? न त्यजेदेव? इत्यर्थः, पितृविरोगमाकर्ण्य शोकात् वल्कलद्वये परिधाय वनं यास्यति इति सम्भावयामीति निष्कर्ष। एवमुत्तरत्रापि अपि नाम इत्यन्वयस्य अर्थं अवगन्तव्य। राजर्षि,—राजा ऋषिरिव, गुणवत्त्वात् जितेन्द्रियत्वाद्वेति भाव, आश्रमपद—तपोवनम्। विशेत्—आश्रयेदित्यर्थ, [ सर्वत्र "सम्भावनेऽलमिति—" (३।३।१५५ पा०) इति सूत्रेण सम्भावनायां लिङ्]। पुरुषसिंह,—नरश्रेष्ठ।

( २१९ ) अवसेति।—अवसन्निलेन—वाष्पवारिणा, निर्भरम्—अतिमात्रं यथा तथा, भरित—पूरित, नयननलिनयुगल—नेत्रपद्मद्वयं यस्य तथाभूत, [ "न

पश्येत् अनाथां पृथिवीम्? (३३०) प्रथमव्यसनविषमविषविह्वलः न स्मरेत् आत्मानं वा पुरुषोत्तमः? (३३१) अनित्यतया जनितवैराग्यो वा न निराकुर्य्यात् उपसर्पन्तीं राज्यलक्ष्मीम्? (३३२) दारुणदुःखदहनप्रज्वलितदेहो वा न प्रतिपद्येत अभिषेकम्? दूरागतो वा राजभिः (३३३) अभिधीयमानो न पराचीनताम् आचरेत्? (३३४) अतिपिष्टपक्षपाती खलु आर्य्यः, सर्व्वदा तातआज्ञया माम् अभिधत्ते,—

पश्येत" इत्यत्र "पश्येत्" इति नञरहितपाठे—पश्येत किम्? नैव द्रष्टुं शक्नुयात् इति सम्भावयामीति भाव ]। अनाथा—निराश्रया पतिवियोगादिति भाव।

(३३०) प्रथमेति।—प्रथमम्—आद्यम्, अपूर्व्वमिति भाव, व्यसन—विपदेव विषम—दारुण, विषं—हलाहल, तेन विह्वल,—अधीर, आत्मान—स्व, वा न स्मरेत? आत्मघाती भवेदिति भाव। ["न स्मरेत" इत्यत्र "स्मरेत" इति नञरहितपाठे,—आत्मान स्मरेत वा? आत्मा अवश्यमेव रक्षणीय इति स्मरेत् किम्? नैव स्मरेत् इति सम्भावयामि, अत आत्मघाती भवेदिति भाव ]। नारायणोऽपि प्रथमाविर्भूतमहागरलघोरमतापेन विमूढ आत्मानं विसस्मार इति पौराणिका। अत्र पुरुषोत्तमपदस्वरसात् उपमाध्वनि शब्दशक्तिमूलक, पुरुषोत्तम इव पुरुषोत्तम इति प्रतीते।

(३३१) अनित्यतया—क्षणिकतया, जनितवैराग्य,—उत्पन्ननिर्वेद। उपसर्पन्तीम्—उपगच्छन्तीम्, आश्रयन्तीमित्यर्थ। निराकुर्य्यात्—त्यजेदित्यर्थ, शोकेन विरागवता विषयादिषु निःस्पृहत्वदर्शनात इत्याशय।

(३३२) दारुणेति।—दारुण—उत्कटेन, दुःखदहनेन—शोकाग्निना प्रज्वलित,—सन्तप्त, देह,—शरीरं यस्य तथाभूत, अभिषेक—राज्याभिषेकमित्यर्थ, न प्रतिपद्येत वा?—न स्वीकुर्य्याद्वा? ["न प्रतिपद्येत" इत्यत्र "प्रतिपद्येत" इतिमात्रपाठे—स्वीकुर्य्यात किम्? इति काकुलभ्याय, नैव प्रतिपद्येत इति सम्भावयामीति भाव ]।

(३३३) अभिधीयमान,—कथ्यमान, अनुरुध्यमान इति यावत्। पराचीनता—पराङ्मुखता, प्रातिकूल्य वा इत्यर्थं, राज्याभिषेके इति भाव। ("पराङ्मुखः पराचीन" इत्यमर )।

(३३४) अतिपिष्टपक्षपाती—अतिशयेन पिष्टवत्सल इत्यर्थ। तातआज्ञया—

(३३५) "तात! हर्ष! कच्चित् अभूत् भविष्यति वा पुनः काञ्चनतालतरुप्रांशु कायप्रमाणम् इदम्? ईदृक् च दिवसकरप्रीत्या दिवसम् उन्मुखविकसितं मुखमहाकमलम्? एतौ च (३३६) वज्रस्तम्भभास्वरौ भुजकाण्डौ? एते च (३३७) हसितमदालसहलधरविभ्रमा विलासाः? कोऽन्यो मानी विक्रान्तो वदान्यो वा?" इति। एतानि चान्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुः आगमनम् उदीक्षमाणः कथञ्चिदपि व्यनिष्ट इति।

इति श्रीबाणभट्टकृते हर्षचरिते महाकाव्ये ...

पञ्चम उच्छ्वासः ॥ ५ ॥

ताते—पितरि, वा आर्या—मातर, तथा, बहुधकमादीनां विनयसरणात् इत्यादयः। अभिषसे—वक्ति।

(३३५) तात।—वत्स।। कच्चित् अभव इति प्रश्ने। काञ्चनेति।—काञ्चनतालतरु,—सौवर्णतालवृक्ष, तद्वत् प्रांशु—उन्नत, कायप्रमाणम्—देह दैर्घ्यमापन? ईदृक—एवम्प्रकार, नास्तीत्यु असम्भवमिति भाव, दिवसकरप्रीत्या—सूर्यप्रेम्णा, मन्यप्रकया च, दिवसम्—वासर व्याप्य इत्यर्थ, [अत्यन्तसंयोगे द्वितीया] उन्मुख-विकसितम्—उन्मुखम्—उद्युक्त, सूर्यप्रीतिकरकार्ये प्रवृत्तमित्यर्थ, तादृशञ्च तत् विकसित—प्रफुल्लमित्यर्थ, भास्वरम् इति यावत, पक्षे—उन्मुखम्—ऊर्ध्वमुख, तत विकसित—प्रस्फुटित, मुखमहाकमलं—मुखमेव महत् पद्म, मुख महाकमलमिव वा, [रूपकितसमास]।

(३३६) वज्रेति।—वज्रस्तम्भौ इव—कुलिशमयस्तम्भौ इव, भास्वरौ—तेजस्विनौ, दृढत्वात् विशालत्वाच्च इति भाव, भुजकाण्डौ—भुजौ—बाहुयुगले, काण्डौ—दण्डौ इव तौ, बाहुदण्डौ इत्यर्थ, ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमर)।

(३३७) हसितेति।—हसितेन—हासेन मदालसस्य—मदविह्वलस्य, हल-धरस्य—बलदेवस्य, विभ्रमा इव विभ्रमा,—विचेष्टितानि येषु तथाविधा, विलासा,—लीलाविशेषा। [कथमस्य बन्धस्य विभ्रम दधातु इति इह बिम्बप्रतिबिम्ब-बोधात् तन्निदर्शनालङ्कार]। अन्य, मत्तुल्य इति शेष, मानी—मानी-श्रेष्ठ, विक्रान्त,—शूर, वदान्य,—दानशौण्ड, ["स्युर्वदान्यस्थूललक्षदानशौण्डा

# षष्ठ उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥ १॥

---

"भयमद" इत्यमरः)। दर्शनेति।—दर्शनाय—अवलोकनाय, आतुरिति भावः, उत्सुकम्—उत्कण्ठितं, साग्रहम् इति यावत्, हृदयं—चित्तं यस्य तथाविधः, उदीक्षमाणः,—प्रतीक्षमाणः।

इत्यग्रिमग्रामस्थाटवीश्वरचरणप्रणामनेन वाचस्पत्यप्रणेतृसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चास्यां व्याख्यायां
श्रीहर्षचरितव्याख्यायां पञ्चम उच्छ्वासः ॥ ५॥

---

कृतान्तावरणवर्णनव्यपदेशेन राज्यवर्द्धनस्य उपायबन्धनं सूचयति, उच्चित्येति।—कृतान्तः,—अन्तकः, अन्यत्र,—कृतान्तः,—कृतः अन्तः,—नाशः प्रतिवीरस्येति भावः येन तथाभूतः, शशाङ्कनामा गौडाधिपतिरिति भावः विजिगीषुः इव—विजयार्थी नृप इव, भुवि—पृथिव्याम्, उच्चित्य उच्चित्य—अन्विष्य अन्विष्य, प्रवरं प्रवरं विचित्य इति भावः, प्रहितनिगूढात्मदूतनीतानाम्—प्रहिताः,—प्रेषिताः, निगूढाः—गुप्ताः, अदृश्या इत्यर्थः, अन्यत्र—कपटचारिण इति यावत्, आत्मनः,—स्वस्य, दूताः,—किङ्कराः, अन्यत्र,—वार्तावहाः, गुप्तचरा इति यावत् तैः, नीताः,—वशं प्रापिताः, आनीता इत्यर्थः, स्वभवनमिति भावः तेषां, शूराणां—बलवतां, वीराणां मानवानामिति यावत्, अन्यत्र—शूराणां—राज्यवर्द्धनप्रमुखानां प्रधानराजपुरुषाणां, सङ्ग्रहम्—आयत्ततां, कुरुते—स्वायत्तं नयति, अन्यत्र,—स्ववशान् करोति इत्यर्थः। एतेन शशाङ्कः निजदूतैः अन्विष्य अन्विष्य शूराणां सङ्ग्रहं कृत्वा दूतमुखेन कन्याप्रदानप्रलोभितं राज्यवर्द्धनं स्वगृहानीतं विश्रब्धं भुञ्जानं छद्मना व्यापादितवानिति षष्ठोच्छ्वासार्थः सूचितः। अत्र विजिगीषुणा सह कृतान्तस्य साधर्म्यं साम्यप्रतीतेरुपमालङ्कारः, कृतान्त इव कृतान्त इत्युपमाध्वनिश्च, एतेन विजिगीषुः कालवत् कठोराशय इति वस्तु व्यज्यते। आर्या वृत्तम् ॥ १॥

निकटोपकरणकलापे, (४) नीतेषु तीर्थस्थानानि सह जनहृदयैः कीकसेषु, (५) कल्पितशोकशल्ये सुधानिचयचिते चिताचैत्यचिह्ने, (६) वनाय विसर्जिते च महाजिजिति राजगजेन्द्रे, क्रमेण मन्देषु आक्रन्देषु, विरलीभवत्सु च विलापेषु,

---

पाठे,—असनानि—आसनानि, राजन्यवस्त्रसौधभाजनादीन्यर्थः, "आसनमवष्टं भाजनम्" इत्यमरः ] पत्राणि—वाहनानि, रथाश्वगजवाहकादीनि इति यावत् ("पत्रं वाहनपक्षयोः" इत्यमरः) शस्त्राणि—खड्गाद्यस्त्रादीनि, एतानि आदीनि यस्य तथोक्ते, ["शेषाद्विभाषा" (५।४।१५४ पा०) इति समासान्तः पाक्षिकः कप्] नृपेति।—नृपस्य—राज्ञः, निकटानि—सततसन्निहितानि उपकरणानि—परिच्छदाः, तेषां कलापः,—समूहः तस्मिन् द्विजेभ्यः,—ब्राह्मणेभ्यः, दीयमाने—समर्प्यमाणे।

(४) कीकसेषु—अस्थिषु, ("कीकसं कुल्यमस्थि च" इत्यमरः) जनानां—लोकानां, हृदयैः—चित्तैः, सह—सार्द्धं, तीर्थस्थानानि—गङ्गादीनि, नीतेषु—प्रापितेषु।

(५) कल्पितेति।—कल्पितं—अर्पितं, शोकशल्यं—शोकः,—मन्युः, शल्यं—शङ्कुः, शल्यमिव इत्यर्थः, मर्मपीडाकरत्वादिति भावः येन तादृशे, दर्शनमात्रेण शोकोद्दीपके इति यावत्, चिताचैत्यचिह्ने—चितायाः—शवदाहार्थकाष्ठपुञ्जस्य, तदुपलक्षितस्थाने वा, चैत्यस्य—देवालयस्य, आयतनस्य वा ("चैत्यमायतनं तुल्ये" इत्यमरः) चिह्नं—लक्ष्म भस्मादिकं ज्ञापकरूपत्वार्थं तस्मिन्, सुधानिचयेन—चूर्णद्रवसमूहेन, चिते—व्याप्ते, लिप्ते इत्यर्थः, सुधाविधौते कृते इति भावः, यद्वा,—चिताचैत्यचिह्ने—चितायाः—चितोपरि, शवदाहस्थाने इत्यर्थः, यत् चैत्यं—चिह्नमेव चैत्यं, मृतकचैत्यमित्यर्थः, ("चित्यं मृतकचैत्ये स्यात्" इति मेदिनी) शवदाहस्थानस्योपरि मृतस्य स्मरणार्थम् आयतनविशेष इति यावत्, तदेव चिह्नं—मृतस्य ज्ञापकविशेषः तस्मिन्, सुधानिचयचिते—चूर्णलेपेन धवलीकृते इत्यर्थः, यद्वा—चिताचैत्यचिह्ने—मारकशरीरोपिताश्वत्थवृक्षादिके तस्मिन्, सुधानिचयचिते—तन्मूलदत्तमिष्टकया आवेष्ट्य दत्तचूर्णलेपे इत्यर्थः।

(६) महाजिजिति—उत्कटसङ्ग्रामजेतरि, राजगजेन्द्रे—राज्ञः—प्रभाकरवर्द्धनस्य, गजेन्द्रे—करिश्रेष्ठे, वाहनभूते इति भावः, वनाय—अरण्याय, विसर्जिते—प्रेषिते, बन्धनविमुक्तीकृते इत्यर्थः, शोकजनकत्वेन द्रष्टुमशक्यत्वादिति भावः। ["विसर्जिते च" इत्यत्र पुस्तकान्तरे "विसर्जिते" इति चकारहीनः पाठो दृश्यते। "क्रमेण"

(७) विश्राम्यति अश्रुणि, शिथिलीभवत्सु श्वसितेषु, अविस्पष्टेषु हा कष्टारवेषु, (८) उत्साह्यमानासु च असनशय्यासु, उपदेशश्रवणक्षमेषु श्रोत्रेषु, (९) अनुरोधावधानयोग्येषु हृदयेषु, गणनीयेषु नृपगुणेषु, प्रदेशवृत्तिताम् आश्रयति शोके, (१०) कृतेषु कविरुदितकेषु, जाते च स्वप्नावशेषदर्शने

---

क्वचित् "क्रमेण च" इति चकारयुक्तश्च पाठान्तरम्] आक्रन्देषु—रोदनेषु, मन्द —शिथिलीभवत्सु, विनाशेषु—छिद्यमानेषु, विरलीभवत्सु—ह्रासं गच्छत्सु, कालात्यये शोकस्य क्रमाद् ह्रासात् इति भावः।

(७) अश्रुणि—नेत्रवारीणि, विश्राम्यति—विरमति। श्वसितेषु—दीर्घनिश्वासेषु, शिथिलीभवत्सु—मन्दीभवत्सु। हा कष्टारवेषु—हा! कष्टम् इति शब्देषु, अविस्पष्टेषु—अस्फुटेषु प्रायेण अश्रुतेषु इत्यर्थः।

(८) असनशय्यासु—असनशय्यासु, यासु राज्ञा स्थितं, यासु वा पुरा राज्ञा शयितं तासु इत्यर्थः, मरणानन्तरमशौचकालिकस्वजनशय्यासु कम्बलास्तरणादिषु इति वा, उत्साह्यमानासु—अपसार्यमाणासु, यद्वा,—असनशय्यासु—असने—विपदि, राज्ञः पीडाकाले इत्यर्थः, या शय्या,—शयनीया, आकालमृत्युदेहतया निरन्तरं स्वजनैरध्यासिता शय्या इति यावत् तासु, उत्साह्यमानासु—अपनीयमानासु, शोकशय्यां विहाय पुनः स्वकर्मणि प्रवृत्तेषु परिजनेषु इति भावः। श्रोत्रेषु—श्रवणेन्द्रियेषु, उपदेशश्रवणक्षमेषु—उपदेशश्रवणयोग्येषु इत्यर्थः, अविमनायमानेषु जनेषु इति भावः।

(९) हृदयेषु—चेतःसु अनुरोधेति।—अनुरोधेन—निर्बन्धेन, आग्रहेणेत्यर्थः, यद्वा,—अनुरोधे—अनुवर्तने, कस्यचित् भावितेष्टसम्पादनेच्छायाम् इत्यर्थः, ("अनुरोधोऽनुवर्तनम्" इत्यमरः) अवधानं—मनोयोगः, तस्य योग्यानि—उचितानि तेषु। नृपगुणेषु—राजगुणेषु, गणनीयेषु—संख्येयेषु, वर्णनीयेषु इत्यर्थः, मरणानन्तरं शोकावेगेन विह्वले मनसि गुणानामस्मृतता क्रियते, क्रमेण शोकह्रासे स्मर्यन्ते इति भावः। शोके—शुचि, प्रदेशवृत्तिताम्—शयनगृहादिप्रदेशमात्रविषयताम्, आश्रयति—अवलम्बमाने, क्वचित् किमपि हृदा धृत्वा वा मनसः प्रदेशं सञ्जातशोके लोके इति भावः।

(१०) कविरुदितकेषु—सर्वं,—काव्यरचयितृ, रुदितानीव रुदितकानि—शोकगीतानि, रोदनवचनानि इति भावः तेषु, कृतेषु, जनैरिति शेषः, कवीनां रुदितं

इति (१४) वेपमानहृदयश्च पप्रच्छ प्रविशन्तम् अधिकतरप्रचारम् अन्यतमं पुरुषम्,—"भद्र! कथय किमार्यः प्राप्तः?" इति। स मन्दम् अब्रवीत्,—"देव! यथाऽऽदिशसि, द्वारि" इति। श्रुत्वा च (१५) सौदर्यस्नेहनिहितनिरतिशयमन्युस्फुटक्षतमनाः कथमपि न ववाम बाष्पवारिप्रवाहोत्पीडेन सह जीवितम्।

(१६) अनन्तरञ्च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेन

---

(१४) वेपमानहृदयः,—कम्पमानान्तःकरणः, चिरात् भ्रातुरप्रत्यागमनात् प्रियविरहशङ्कितेन, किं मामद्य प्रश्नः कथयिष्यन्ति दुःखदेन मा इति भावः। अधिकतरप्रचारम्—अधिकतर,—अतिशयित इत्यर्थः, प्रचारः,—गतिर्यस्य तथाभूतम्। भद्र! इति सम्बोधनम्। मन्दम्—मन्दं, मृदुस्वरेणेति यावत्। यथा—यदित्यर्थः, आदिशसि—आज्ञापयसि, कथयसीत्यर्थः, अनुमिनोषीव यावत्, तथैव शेषः, आर्यः प्राप्त इति भावः। द्वारि—द्वारदेशे वर्तते इति शेषः।

(१५) सौदर्येति।—सोदरस्य—सहोदरस्य अयं सौदर्यः, स स्नेहः,—प्रणयातिशयः, यद्वा—समाने उदरे शयितः सोदर्यः—भ्राता, ["सोदराद्यः" (४।४।१०९ पा०) इति यप्रत्ययः] तस्य स स्नेहः,—प्रेम, तेन निहितः,—जनितः, निरतिशयः,—अत्यन्तः, मन्युः,—शोकः प्रियमरणात् इति भावः, "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासः, तेन स्फुटक्षतं—कीलकीकृतम्, आर्द्रीकृतमित्यर्थो वा, मनः,—चित्तं यस्य तथाभूतः, अतिविरहखिन्न इत्यर्थः, विकलहृदय इत्यर्थो वा, कथमपि—अतिकष्टेनेत्यर्थः, बाष्पेति।—बाष्पवारीणां—नेत्रजलानां, प्रवाहेण—स्रोतसा, अविरतप्रवहन्नेत्रसलिलेनेत्यर्थः, यः उत्पीडः,—पीडनं तेन, जीवितं—जीवनं, न ववाम—न तत्याज, कथमपि जीवनं दधारेति भावः। इह बाष्पवारिषु प्रवाहत्वाध्यवसायेन उक्तिप्रसिद्धिमतिक्रम्य तथा अतिशयोक्तिरलङ्कार इति सङ्क्षेपः।

(१६) "अनन्तरम्" इत्यस्य "आस भ्रातरमपश्यत्" इत्यनेन सम्बन्धः। तं विशिनष्टि, द्वारेत्यादि।—द्वारपालेन,—दौवारिकेण, मुक्तेन—त्यक्तेन, त्यक्तमार्गेणेति यावत्, यद्वा—द्वारपालमुक्तेन—दौवारिकत्यक्तेनेत्यर्थः, द्वारपालत्यक्तेनेति यावत्, पूर्वं प्रायश्च तेषामेव दर्शनयोगात् इति भावः।

इव आक्रन्देन कथ्यमानं (१७) दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना (१८) भ्रष्टभृङ्गारग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन (१९) खञ्जत्खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण (२०) बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्,

---

आक्रन्देन—रोदनध्वनिना, कथ्यमानम्—आगतो राज्यवर्द्धन इति निवेद्यमानम्।

(१७) दूरेति।—दूरात—दीर्घमार्गादित्यर्थः, द्रुतागमनेन—शीघ्रोपस्थित्या, मुषित—विप्रनष्ट, त्यक्तमिति यावत् बाहुल्य—समवायः यस्य तेन, अल्पसङ्ख्यकेन इत्यर्थः, विच्छिन्नच्छत्रधारेण—पतितातपत्रच्छत्रधारिपुरुषेण, पश्चात्कृतच्छत्रधारिणेत्यर्थः, लम्बिताम्बरवाहिना—लम्बितं—वेगगमनात् स्रस्तमित्यर्थः अम्बरं—वसनं, वहति—धत्ते इति तथोक्तेन।

(१८) भ्रष्टेति।—भ्रष्ट,—दूरपतित भृङ्गारग्राही—कनकालुकापरपर्याय-जलपात्रविशेषवाही यस्य तेन, [ "शृङ्गार भृङ्गारौ" (उ० १ पा० १६६ सू०) इति भज धातुमुम् गुक हस्वे च रूपम्। "भृङ्गार कनकालुका" इत्यमरः ] च्युतेति। —च्युत,—स्खलित, पथि स्थित इति यावत्, आचमनधारी—आचमनार्थजलधारी यस्य तेन, ताम्यत्ताम्बूलिकेन—ताम्यन्—विमनस्कः क्लिश्यन् ताम्बूलिकः,—ताम्बूलदायी ताम्बूलग्राही वा यस्य तेन।

(१९) खञ्जदिति।—खञ्जन—द्रुतगमनेन विकलचरणः, खड्गग्राही—असिग्राही यस्य तेन, कतिपयेति।—कतिपये—अल्पे प्रकाशा,—अल्पसंख्यत्वात् दृश्यमाना इत्यर्थः, ये दासेरका —उष्ट्रा ["मृनेर्गादय" (उ०१ पा० ९२ सू०) इति दासेत एरक्, तत कन्] यद्वा —प्रकाशा,—मुख्यकाः, प्राधान्यात् मुख्या इति भावः ये दासेरका,—दासीपुत्रा ["क्षुद्राभ्यो वा" (४।१।१२१ पा०) इति ढक् तत कन्। "दासेरकस्तु करभे दासीपुत्रे च धीवरे" इति मेदिनी] तत्प्राय —बाहुल्य यस्मिन् तेन।

(२०) बह्विति।—बहूनि—अनेकानि वासराणि—दिवसान् व्याप्येत्यर्थः, अन्तरितेन—व्यवहितेन, परित्यक्तेन वा, अस्नातेनेत्यर्थः, स्नानेन—आप्लवेन भोजनेन —आहारेण, शयनेन—निद्रया च, श्याम—मलिन, क्षाम—क्षीणञ्च, वपु,—शरीरं यस्य तेन, परिजनेन—परिचरेण जनेन, परिवृत—परिवेष्टितम्।

(२९) पविविक्तामालावर्षिपेन्द्रनीलिकांशुश्यामायमानम् अचिर-श्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणपाशम् उद्वहन्तम्, (३०) अस्फुटाभिव्यक्तव्यञ्जनेन अपि अधोमुख स्तिमित नयन-नील तारक मयूख माला खचितेन शोकप्ररूढश्मश्रुश्यामलेन इव मुखशशिना लक्ष्यमाणं, (३१) केशरिणम् इव महाभूभृ-द्विनिपातविह्वलनिरवलम्बनं, दिवसमिव तेजःपतिपतनपरि-

---

ताम्बूलरागः,—पर्णभक्षणजनितरक्तिमा इति यावत् यस्मात् तथाभूतेन, पितृशोकात् त्यक्तताम्बूलेन विवर्णेन इति भावः।

(२९) पविविक्तेति।—पविविक्तामालार्थं—विशुद्धवालायस, उज्ज्वलतामात्र-मित्यर्थं, न तु अलङ्कारादिकमिति भावः अतएव यस्या तथाभूता, या इन्द्रनीलिका—नीलकान्तमणिविशेषः तस्या अंशुभिः,—किरणैः, दुःखातिरेकात् कर्णभूषणाना-मपसारणेऽपि इन्द्रनीलमणिमालावर्जिततया तदंशुभिरिति भावः, श्यामायमानं—श्याममिव आचरन्तम्, अत एव अचिरेति।—अचिरश्रुतस्य—अल्पदिनमात्रश्रुतस्य, पितृमरणस्य—जनकात्ययस्य, महाशोकाग्निना—प्रबलमन्युवह्निना, दग्धमिव—भस्मीभूतमिव, श्रवणपाशं—शोभनकर्णं, ["पाशः केशादिपूर्वः स्यात्सङ्घे कर्णपूर्वकः। सुकर्णे च ॥" इति मेदिनी। "श्रवणपाशम्" इत्यत्र "श्रवणमदाम" इति पाठान्तरम्] उद्वहन्तं—दधानम्।

(३०) अस्फुटेति।—अस्फुटम्—अस्पष्टम्, ईषदित्यर्थं, अभिव्यक्तं—प्रकाशितं, व्यञ्जनं—श्मश्रु, श्मश्रु इति यावत् येन तथाभूतेनापि, अधोमुखेति।—अधोमुखयोः—अवनतयोः स्तिमितयोः,—निश्चलयोः, नयनयोः,—चक्षुषोः, नीलाना—कृष्णाना तारकमयूखाना—तारारश्मीना, तारकमयूखानामिव तारक मयूखानाम् इति निदर्शना, मालया—परम्परया खचितः,—व्याप्तः तेन, अत एव शोकेति।—शोकेन——दुःखेन, प्ररूढ—सञ्जात, प्रवृद्धमित्यर्थः, चौरकर्माभावादिति भावः, यत् श्मश्रु—कूर्चं, मुखलोम इति यावत् तेन श्यामलः,—सकलङ्क इति यावत् तेन, मुखशशिना—वदनचन्द्रेण. [करणे तृतीया] लक्ष्यमाणं—दृश्यमानम्।

(३१) केशरिणमिव—सिंहमिव, महदिति।—महान्—पराक्रान्त इत्यर्थः, उन्नतश्च, भूभृत्—राजा, गिरिश्च, तस्य विनिपातेन—विध्वंसेन, एकत्र,—मरणेन,

म्लानमिव श्यामीभूतं, नन्दनम् इव भग्नकल्पपादपं विच्छायं, दिग्भागमिव प्रोषितदिक्कुञ्जरशून्यं, गिरिम् इव गुरुवज्रपातदारितं कम्पमानं (३२) क्रीतमिव क्रशिम्ना, किङ्करीकृतमिव कारुण्येन, दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचितव्येन, (३३) आत्मीकृतमिव आधिना, मूकीकृतमिव मौनेन, पिष्टमिव पीडया, खिन्नमिव सन्तापेन, उच्चितमिव चिन्तया, लुप्तमिव विलापेन, धृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसङ्ख्या·

---

अन्यत्र—पतनेन इत्यर्थः विह्वलं—व्याकुलं निरवलम्बनं—निराश्रयञ्च। दिवस मिव वासरमिव तेजः इति—तेजःपते—प्रतापशालो राज्ञः सूर्यस्य च पतनेन—मरणेन अस्तगमनेन च परिम्लाना—मालिना श्रीः—शोभा यस्य तम् अत एव श्यामीभूतं—मलिनकायम् अन्धकारमयीभूतञ्च। नन्दनमिव—देवोद्यानमिव भग्नकल्पपादपं—भग्नः—विनष्टः इत्यर्थः कल्पपादपः—कल्पवृक्षवत् मनोरथपूरकः पिता यस्य तं भग्नकल्पतरुञ्च अत एव विच्छायं विगतप्रभं छायाशून्यञ्च। प्रोषितेति।—प्रोषितः—विनष्टः प्रवासं गतश्च दिक्कुञ्जरः—दिग्गजवत् दृढ़ी पिता दिग्गजश्च तेन शून्यं—विरहितं तम्। गुर्विति।—गुरुः—पिता वज्र इव—कुलिशमिव अनुदारकर्तादिति भावः तस्य पातेन—नाशेन अन्यत्र—गुरुणा—महता वज्रपातेन—कुलिशपतनेन दारितं—पाटितम् अत एव कम्पमानं—वेपमानम्। मालोपमालङ्कारः।

(३२) कशिम्ना—कार्श्येन क्रीतमिव—वशीभूतमिव अत्यन्तकृशमित्यर्थः। कारुण्येन—शोकेन किङ्करीकृतमिव—दासीकृतम् इव अतिशोकातुरमित्यर्थः। दौर्मनस्येन—दुःखितमनस्कतया दासीकृतं—भृत्यीकृतं दैन्याश्रयमित्यर्थः। शिष्यीकृतमिव—अन्तेवासितां नीतमिव शोचितव्येन—शोकेन आत्मविस्मृताकारमित्यर्थः।

(३३) आत्मीकृतमिव—आयत्तीकृतमिव आधिना—मनःसन्तापेन अतीव मनःपीडितमिति निष्कर्षः। मूकीकृतमिव—निर्वचनीकृतमिव मौनेन—तूष्णीम्भावेन निरुद्धवाक्कारमित्यर्थः। पिष्टमिव—पेषणं नीतमिव खिन्नमिव—पक्वमिव शोकविवशमित्यर्थः। उच्चितमिव—गृहीतमिव सदा चिन्तापरमित्यर्थः। लुप्तमिव—अदृष्टमिव विलापेन—पारम्पर्येण अविरतमनुशोचनमित्यर्थः। धृतमिव—आश्रितमिव, वैराग्येण—निर्वेदेन, अनासक्तमेव भावः। प्रत्याख्यातमिव—

नेन, अवज्ञातमिव प्रज्ञया, (३४) दूरीकृतमिव दुरभिभवत्वेन, (३५) अबोध्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृत ज्येष्ठं भ्रातरम् अपश्यत्। (३६) आवेगोद्गतक्लान्तस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात्।

निराकृतमिव, प्रतिसंख्यानेन—विवेकिना मत्या, विवेकविमूढमिति भाव। अवज्ञातमिव—तिरस्कृतमिव, प्रज्ञया—बुद्ध्या, हतधियमित्यर्थः।

(३४) दुरभिभवत्वेन—दुरपनेयत्वेन हेतुना, यद्वा,—दुः—दुःखेन, अभिभवः,—पराजयः, यस्य भाव तत्त्वम्, दुर्जयत्वेनेत्यर्थः, दूरीकृतमिव—निराकृतमिव, सर्वाभिभवनीयाकारमिति भाव।

(३५) वृद्धबुद्धीना—स्थविरमतीनां, प्राचीनत्वात् बहुदर्शिनीनामिति भाव, अबोध्येन—प्रबोधयितुमशक्येन इत्यर्थः। साधुभाषितानां—सज्जनवचनानां, सदाभाषणानां वा, शान्तवचनानामित्यर्थः, असाध्येन—अनपनेयेन। गुरुगिरां—गुरुजनवचसाम्, अगम्येन—अविषयेण, अप्राप्येण इति यावत्, गुरुजनप्रबोधवचसामपि अप्रशमनीयेनेति भाव। शास्त्रशक्तीनां—शास्त्रज्ञानानामिति यावत् अशक्येन—असाध्येन, शास्त्रतत्त्वज्ञानसद्भावेऽपि धैर्यधारणं प्रतिपादयतेति भाव। अपथेन—अविषयेण, प्रज्ञाप्रयत्नानां—प्रज्ञाया—बुद्धेः प्रयत्नानां—प्रयासानाम्, विशिष्टज्ञाने सत्यपि अधर्यं बद्धयता इति भाव। अगोचरेण—अवशेन, बन्धुजनानुरोधेनापि अनपगच्छता इति भाव। अविषयेण—अगोचरेण, विषयोपभोगानां—स्रक्चन्दनवनितादुपभोगानाम्, विषयसम्भोगे अनासक्तिं जनयता इत्यर्थः। कालक्रमेति।—कालक्रमेण—समयानुसारेण, ये उपचयाः,—वृद्धयः तेषाम्, अभूमिभूतेन—अनास्पदेन, कालक्रमेण समुदितः शोकः तादृक् हृदयविदारको न भवति, यादृक् सपदि प्रवर्द्धित इति तात्पर्यं, सद्य एव प्रवर्द्धमानेन, न तु कालक्रमेण उपचयं गच्छता इति वा भाव। कवलीकृत—ग्रस्तम्।

(३६) आवेगेति।—आवेगेन—सम्भ्रमेण उद्गतः,—उद्दीप्तः, क्लान्तः,—समयः, खेदः,—प्रेमा, तेन च उत्कलिकाकलापः,—उत्कण्ठातिशयः, तेन उत्क्षिप्यमाणः,—

अथ दूरादेव (३७) दृष्ट्वा देवो राज्यवर्द्धनः चिरकाल-कलितं वाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन सङ्कलयन् इव सर्व्व-दुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितचीने वामे वक्षसि, पुनः कण्ठे, पुनः स्कन्धभागे, पुनः कपोलोदरे निधाय तथा तथा रुरोद, यथा सबन्धनानि इव उत्पाट्यन्त हृदयानि। (३८) मृतनृपतिना राजवल्लभे-नापि प्रतिशब्दनिभेन निर्भरमिव अरुद्यत। सुचिराच्च कथ-ञ्चिदपि निर्हृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव उप-

कण्ठे भीयमान, उच्चार्यमाण इत्यर्थः, काम,—हेत यस्य तथाभूत इव, मरवस,—विह्वल समुद्‌गत—समुन्नस्थो, समुन्नमान वा।

(३७) दृष्ट्वा, दर्शाममि मिव। चिरकालेति।—चिरकालकलित—चिरधृत, चिरनिबद्धमिति यावत वाष्पवेगम्—अश्रुभर, मुमुक्षु,—मोक्तुमिच्छु, [ 'सनाशंसभिक्ष उ" (३।२।१६८ पा०) इति सन्नन्तादुप्रत्ययः] सुदूरात—बहुदूरपदेन, प्रसारितेन—विस्तारितेन, दीर्घेण—महता, आयतेनेत्यर्थः दोर्दण्डद्वयेन—बाहुदण्डयुगलेन, सर्व्वदुःखानि—पितृशोकजनितसन्तापसमूहान, सङ्कलयन्निव—पिण्डयन्निव। मुक्त कण्ठम्—उच्चैरित्यर्थः। पतितचीने—पतित—स्खलित चीनम्—पट्टोत्तरीयं यस्मात् तथाभूते वामे—वीरे। निधाय—संस्थाप्य दर्शमिति शेषः, दर्शस्य वक्त्र्यादौ स्वमुखं संस्थाप्य इति वा। सबन्धनानि इव—सवन्धिरज्जूनि इव वन्धिबन्धन सहितानि [redacted] इत्यर्थः। उत्पाट्यन्त—उच्छेदं प्रापितानि इत्यर्थः, स्वजनैराच्छिद्यन्त इति भावः, [पाट्यते कर्मकर्त्तरि रूपम्]।

(३८) मृतेति।—मृत,—प्राणवियुक्तता नीत, लोकान्तरं गमितः इत्यर्थः नृपति,—राजा, प्रभाकरवर्द्धन इति यावत् येन तथाभूतेन, नृपतिं मारितेत्यर्थः, राजवल्लभेन—मृतस्य राज्ञः प्रियजनेन का कथा वल्लभजनस्य, सर्व्वरपि अविशेषत इत्यापकारार्थः। प्रतिशब्दनिभेन—प्रतिध्वनिसदृशेन, राज्यवर्द्धनरोदनस्येति भाव, निर्भरमिव—अतिमात्रमिव। सुचिराच्च इति चकारेण पूर्व्ववाक्ये सम्बन्धाभावेऽपि इत पुन राज्य-वर्द्धनस्यैव सम्बन्धवत्त्व स्थाप्यते, निर्हृष्टनयनजल,—निर्मृष्ट यथा तथा, हृष्टानि—पातितानीत्यर्थः, नयनजलानि—नयनयो,—नेत्रयो, जलानि—अश्रूणि येन तथाभूत, , यद्वा,—निर्हृष्टानि नयनयो जलानि अश्रूणि जलधरजलानीव येन, [ इत्युपमित-

शशाम। उपविश्य (३९) परिजनोपनीतेन तोयेन तत्कर-नखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि (४०) पक्ष्माग्रसङ्गलग्नबिन्दुवृन्दमन्दोन्मेषमुषित-दर्शनं कथञ्चन अपि चक्षुरक्षालयत्। (४१) ताम्बूलिकोप-स्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णवाष्पदग्धं वदनम् उन्ममार्ज। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिम् अगात्। तस्याञ्च स्थित्वा (४२) विभूषं विवस्त्रव्यस्तकुन्तलं मौलिम् अनादरात् निष्पीड्य, सावशेषमन्युस्फुरितेन

---

समास ] पर्जन्य इव—निःशेषनिर्झराम्बुमेघ इव इन्द्र इव वा, स हि वर्षं कारयति, ("पर्जन्यौ रसदब्देन्द्रौ" इति विश्वप्रकाशः) उपशशाम—शान्तिं लेभे, वर्षणव्यापारात् न्यवर्ततेत्यर्थः।

(३९) परिजनोपनीतेन—परिचारकसमुपस्थापितेन तोयेन—जलेन। तदिति। —तस्य—राज्यवर्द्धनस्य, करनखानां—हस्तनखराणां, मयूखपुञ्जः,—किरणराजिः, स्वच्छ इति भावः यस्मिन् तस्य भावः तत्ता तया हेतुना महाजले—जलराशौ, नेत्रसलिले इति भावः, प्लवेन—सन्तरणेन, जायमाना—उत्पद्यमाना फेनलेखा—फेनराजिः यस्मिन् तथाभूतमिव प्रमृष्टमपि—प्रमार्जितमपि।

(४०) पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नाम्, अग्रेषु,—प्रान्तेषु, सङ्गलग्नैः,—निःसृतैः, [redacted] बिन्दवः—पृषताः ("पृषन्तिबिन्दुपृषताः पुमांसः" इत्यमरः) तेषां वृन्दैः,—समूहैः, मन्दः,—अल्पः, यः उन्मेषः,—उन्मीलनं, तेन मुषितं—हृतं दर्शनम् —अवलोकनव्यापारः यस्य तत्। अक्षालयत्—प्राक्षालयत वेगवता नयनवारिधारा-प्रवाहेण दर्शनं कथञ्चित् साध्यमासीदित्याशयः।

(४१) ताम्बूलिकेन—ताम्बूलवाहिना, उपस्थापितेन—उपनीतेन, वाससा —वस्त्रेण, चन्द्रातपशकलेनेव—चन्द्रमयूखखण्डेनेव, वितानखण्डेनेव वा, सुधेव अत्यर्थं शीतलत्वम् इति भावः, उष्णेन—तप्तेन, बाष्पेण—अश्रुणा दग्धम्—उपहतम् ["उष्णवाष्पदग्धम्" इत्यत्र "उष्णोष्णवाष्पदग्धम्" इति पाठे—उष्णोष्णेन—अतितप्तेनेत्यर्थः ] वदनं—मुखम्, उन्ममार्ज—प्रमृष्टवान्।

(४२) विभूषं—भूषारहितम्। विवस्त्रेति।—विवस्त्राः,—उद्धे छिन्नाः, इत्यर्थः,

ज्जिजीविषता इव (४३) जलधौतसुभगम् आत्मानमपि चुचुम्बिषता इव अधरेण, चालितस्य चक्षुषः ( ४४ ) श्वेतिम्ना च शारदशशिकरविकसितविषदकुमुदवनदलावलिबलिविचेपैः इव दिग्देवताऽर्चनकर्म्म कुर्व्वाणः, ( ४५ ) चतुःशालवितर्द्दिकायां नीचापाश्रयविनिहितैकोपबर्हायां पर्य्यङ्किकायां निपत्य जोषम् अस्थात्।

देवोऽपि हर्षस्तथैव स्नात्वा ( ४६ ) धरणितलनिहितकुथा-

---

ग्रस्ता,—विगलता, कुन्तला,—केशा यत्र तथोक्तः, मौलि—शिरःस्थकेशान्, धम्मिल्लकलापान् इत्यर्थः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) अनादरात—अयत्नात् महागुरोर्निपातादिति भावः, निपीड्य—प्रोञ्छ्य, निर्जलं विधायेत्यर्थः, सावशेषमन्युस्फुरितेन—सावशेषेण—अवशिष्टेन मन्युना—शोकेन, स्फुरितः,—स्पन्दित इत्यर्थः तेन, जिजीविषता इव—जीवितुमिच्छता इव, शोकाग्निदाहक्लेशादिति भावः।

( ४३ ) जलेति।—जलेन—तोयेन, धौतः,—क्षालितः, अत एव सुभगः,—सुन्दरः तम्, आत्मानं—स्वम्, उत्तरोष्ठेन अधरोष्ठमिति भावः, चुचुम्बिषता इव—चुम्बितुमिच्छता इव।

( ४४ ) श्वेतिम्ना—धावल्येन, शारदेति।—शारदः,—शरत्कालिकः, शशिकरः,—चन्द्रकरः तद्वत् तेन वा विकसितानि—प्रस्फुटितानि, विषदानि—स्वच्छानि, धवलानि इत्यर्थः, कुमुदानि—उत्पलानि तेषां वनानि—समूहाः, तेषां दलावलयः,—पत्रराजय एव बलिविचेपाः,—पूजोपहारप्रक्षेपाः तैः इव दिग्देवताऽर्चनकर्म्म—दिग्देवतानां—दिगधिष्ठात्रीणां देवतानाम्, अर्चनकर्म्म—पूजनम्।

( ४५ ) चतुःशालवितर्द्दिकायां—चतुःशाले—चतुर्दिगवस्थितगृहमण्डल्यां, या वितर्द्दिका—वेदिका तस्यां, ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः) नीचेति।—नीचेषु—निम्नेषु, तलभागेष्विति यावत्, अपाश्रयस्य—चन्द्रातपस्य, विनिहितः,—स्थापितः, एकः,—अद्वितीयः, यद्वा,—एकः,—केवलः, न तु आस्तरणादिकं किञ्चिदासीदिति भावः, उपबर्हः,—उपधानं यस्यां तथोक्तायाम्। ("उपधानन्तूपबर्हः" इत्यमरः) जोषं—तूष्णीं, ("तूष्णीमर्थे सुखे जोषम्" इत्यमरः) अस्थात्—स्थितः। अत्र यथावद्गुरुजनतिरोधाने महापुरुषकर्त्तव्यवर्णनदर्शनात् स्वभावोक्तिरलङ्कृतिः।

( ४६ ) धरणीति।—धरणितले—भूतले, निहितायां—स्थापितायां, कुथायां

प्रसारितमूर्त्तिः अदूरे एव अस्य तूष्णीमेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसम् अग्रजन्मानं समस्फुटदिव अस्य सहस्रधा हृदयम्। (४७) औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्व्वस्मिन् एव नगरे न केनचित् (४८) अपाचि, न केनचित् अस्नायि, न अभोजि, सर्वत्र सर्वेण अरोदि। केवलम् अनेन क्रमेण अतिचक्राम दिवसः। (४९) स च प्रत्यग्रत्वष्टृटङ्कतष्टतनुः इव वहद्बहलरुधिररसमांसच्छविः अपर-

---

—वर्णकम्बली, चित्रितकम्बलविशेषे इत्यर्थः, ("कुथे स्त्रीपुंसयोर्वर्णकम्बली पुंसि वर्हिषि" इति मेदिनी) प्रसारिता—विस्तारिता, मूर्त्तिः,—तनुः येन तथाभूतः। अदूरे—निकटे। दूयमानमानसं—क्लिश्यमानचित्तम्। अग्रजन्मानं—ज्येष्ठम्। समस्फुटदिव—अदीर्यदिव, विदीर्णमभवदिवेत्यर्थः।

(४७) औरसदर्शनं—सहोदरदर्शनमिति भावः, यौवनं—प्रवृद्धोपक्रमिति भावः, शोकस्य—पितृमरणजस्य मन्योः। दारुणः,—भीषणः, क्लेशकर इत्यर्थः। स दिवसः,—राज्यवर्द्धनागमनदिवस इत्यर्थः।

(४८) अपाचि—रन्धनं कृतम्। अस्नायि—स्नातम्। अभोजि—भुक्तम्। अरोदि—रोदितम्। क्रमेण—विधानेन, प्रकारेणेत्यर्थः, शोकविलापेनेति भावः, अतिचक्राम—गतः।

(४९) स च—प्रसिद्ध इत्यर्थः प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवं यथा तथा, त्वष्ट्रा—विश्वकर्म्मणा देवशिल्पिना इत्यर्थः, ("देवशिल्पिन्यपि त्वष्टा" इत्यमरः) टङ्केन—पाषाणदारणास्त्रविशेषेण, ("टङ्कः पाषाणदारणः" इत्यमरः) तष्टा—घृष्टा, तनूकृता इत्यर्थः, [तक्षतेः कर्म्मणि निष्ठाया रूपम्। "तष्टं त्वष्टं तनूकृते" इत्यमरः] तनुः,—शरीरं यस्य तथाभूतः इव निस्तेजा इवेत्यर्थः, पुरा विश्वकर्म्मणः सुता संज्ञा सूर्य्यगृहिणी पत्युस्तेजोऽतिरेकम् असहमाना विसोढुं पितरम् उपेत्य न्यवेदयत। स तु कन्यायाः क्लेशपरिजिहीर्षया सूर्य्यं जामातरं भ्रमियन्त्रे निधाय चौणतेजसम् अकरोत् इति पुराणवार्त्ता अत्र अनुसन्धेया, वहदिति।—वहन्—निःसरन् बहलः,—बहुलः, रुधिररसः,—रक्तद्रवः यस्मात् तादृशः, यः मांसः—पिशितः, तस्येव छविः,—कान्तिर्यस्य तथोक्तः, रक्तवर्ण इति यावत्, अतोऽबकार इति भावः,

धावकाण श्रियः। (५३) प्रकटकलङ्कम् उदयमानं विशङ्कट-विषाणोत्कीर्ण-पङ्क-सङ्कर-शङ्कर-शक्कर-ककुद-कूटसङ्काशम् अकाशत आकाशे शशाङ्कमण्डलम्।

अस्याञ्च (५४) वेलायाम् अनतिक्रमणीयवचनैः उपसृत्य प्रधानसामन्तैः विज्ञाप्यमानः कथङ्कथमपि अभुङ्क्त। (५५) प्रभातायाञ्च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवम् उवाच,—"तात! भूमिरसि गुरुनियोगानाम्। (५६) शैशव एव अग्राहि गुणवत्पताका इव भवता तातस्य

---

श्रिय,—लक्ष्म्याः, शोभाया इति भाव, माक्षिकेति।—माक्षिकस्य—रसविशेषस्य, काञ्ची—रसना, तस्या किङ्किणीजाल—क्षुद्रघण्टिकानिचय, धावकाणीव—रटन्तीव। तदानीं प्रदोषस्यागमात् कुमुदानां विकासेन लक्ष्म्याः आविर्भावोऽभूत्, तेन हि तस्याः किङ्किणीरणनमुत्प्रेक्षितमिति बोद्धव्यम्।

(५३) प्रकटकलङ्क—प्रस्फुटलाञ्छनम्, उदयमानम्—उद्गच्छत, विशङ्कटेति।—विशङ्कट—विशाल ("विशङ्कट पृथु बृहत् विशाल पृथुल महत्" इत्यमर) विषाण—शृङ्ग, तेन उत्कीर्ण,—उद्धृत, य पङ्क,—कर्दम, तेन सङ्कर,—मिश्र यस्य तथाभूत शङ्करस्य—हरस्य, शक्करशङ्करस्य—दान्तवृषभस्य, यत् ककुदकूटम—अंसविशेषाग्रभाग पीनास्थमांसपिण्डमित्यर्थं, "भुंटी" इति वङ्गभाषया प्रसिद्ध, ("प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमर) तत्सङ्काश—तत्सदृश, मध्ये श्यामत्व धवलवृषभककुदमिवेति भाव, शशाङ्कमण्डल—चन्द्रबिम्बम्, आकाशे—गगने, अकाशत—व्यद्योतत।

(५४) वेलायाम्—समये। अनतिक्रमणीयवचनै,—अलङ्घ्यवाग्भि। विज्ञाप्यमान,—अनुरुध्यमान। कथङ्कथमपि—अतिकष्टेन इत्यर्थ, आत्मच्छाया सत्यामपि माननीयस्य पितु प्रियसामन्तस्य शासनमनुल्लङ्घ्य इति भाव।

(५५) शर्वर्या—निशायाम ("अथ शर्वरी। निशा निशीथिनी रात्रि" इत्यमर) प्रभातायाम्—भातु प्रवृत्तायाम्, अवसानायामिति भाव। राजसु—मित्रनृपसमूहेषु सामन्तराजवृन्देषु च। उवाच, राज्यवर्द्धन इति शेष। तात—वत्स! भूमि,—पात्रम्। गुरुनियोगाना—गुरुजनादेशानाम्।

(५६) शैशवे—बाल्ये, अग्राहि—गृहीता, निर्दिष्टेति यावत्, गुणवत्पताका

चित्तवृत्ति। यतो भवन्तमेवविधं (५७) विधेयं विधिविधानोपनतनैर्घृण्यम् इद किमपि विभर्षिषति मे हृदयम्। (५८) न अवलम्बनीया बालभावसुलभा प्रेमविलोमा वामता। (५९) वैधेय इव मा कृथा प्रत्यूहम ईहितेऽस्मिन्। न खलु न जानासि लोकवृत्तम्। (६०) लोकत्रयत्रातरि मान्धातरि मृते किं कृतं पुरुकुत्सेन? (६१) भूतलादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा?

---

व्रत—गुणशालिनी वहयन्ती इव तामस—पितुः चित्तवृत्ति—मनोऽभिप्राय, हृदयस्थितं वा निरस्य तदनुमताचाराद्यनुवर्तनात् इति भावः।

(५७) विधेय—वचनेस्थित ("विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः) विधिविधि—विधि—दैवस्य विधानेन—विलसनेन उपनतम्—उपस्थितं नैर्घृण्यं—निष्करुणत्वं वैराग्यमिति भावः यस्य तथाभूतम् इदं मे—मम, हृदयं चित्तं किमपि—यत्किञ्चित् द्रव्यं विभर्षिषति—भर्तुमिच्छति।

(५८) बालभावसुलभा—शैशवसहजा। प्रेमविलोमा—प्रेम्णः—आत्मवात्सल्यस्येति भावः विलोमा—विरोधिनी वामता—प्रतिकूलता स्वाभाविकत्वम्, न अवलम्बनीया—न ग्रहणीया।

(५९) वैधेय इव—मूर्ख इव ("मूर्खवैधेयबालिशाः" इत्यमरः) ईहिते—इष्टे ईहिते—वाञ्छिते प्रत्यूहं विघ्नं ("विघ्नोऽन्तराय प्रत्यूहः स्यात्" इत्यमरः)। लोकवृत्तं—लोकाचारं न जानासि—न वात्स खलु—निश्चये इति न, जानास्येवेत्यर्थः। निषेधद्वय नकारद्वय वाममानाभिसम्मतम इति ज्ञेयम्।

(६०) लोकत्रयत्रातरि—त्रिलोकीत्राणक्षमे इति भावः मान्धातरि—तदाख्ये प्रसिद्धनृपतौ पुरुकुत्सेन—तत्पुत्रेण इत्यर्थः किं कृतम्?—राज्यमेव गृहीतं न तु वनमाश्रितमिति भावः। एवमुत्तरत्रापि बोध्यम्।

(६१) भूतलात्—भूतलात्—भूमण्डलात् भावः आदिष्टानि—शासनानि अष्टादशद्वीपानि येन तथाभूते अष्टादशद्वीपाधिपतौ इति भावः ननु सप्तद्वीपा हि धरा श्रूयते तत्कथमष्टादश सप्तम समुद्रे पारस्याटलान् जम्बूप्रभृतीन् भरतादीनि भवन्तीति सत्यमेव द्वीपानामष्टादशत्वं महाकविप्रयोगे यथा हि—"अष्टादशद्वीपनिखातयूप" इति रघौ कालिदास, दिलीपे—तदाख्ये इक्ष्वाकुवंशीयराजनि मृते इति शेषः रघुणा—तत्पुत्रेण किं कृतम्? इति पूर्ववदन्वयः।

(६२) महासुरसमरमध्याध्यासितत्रिदशरथे दशरथे वा रामेण ? (६३) गोष्पदीकृतचतुरुदन्वदन्ते दुष्मन्ते वा भरतेन ? तिष्ठन्तु तावदेते, (६४) तातेनैव शतसमधिकाध्वरधूमविसरधूसरितवासववयसि (६५) सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं न अकारि राज्यम् ? यश्च किल शोकः (६६) समभिभवति, तं कापुरुषम्

---

(६२) महासुरेति।—महासुराणाम्—दैत्यप्रवराणाम्, समरमध्ये—रणाभ्यन्तरे, अध्यासित,—स्थापित, अधिष्ठित इत्यर्थः, त्रिदशरथ,—देवरथ येन तथाभूते, इन्द्रसाहाय्यार्थम् असुरान् हन्तुम् अध्यासितदेवरथे इति भावः दशरथे, मृते इति शेषः, रामेण—तत्सुतेन इत्यर्थः, किं कृतम् ? इति पूर्वेणान्वयः।

(६३) गोष्पदीति।—गोष्पदीकृता,—गोः पदं, प्रमाणं, गावः पद्यन्ते यस्मिन् देशे इति वा गोष्पदं—गोः पदजातं गर्त्तं इत्यर्थः, ["गोष्पदं—" (६।१।१४५ पा०) इत्यादिना प्रमाणसेवितार्थयोरत्र निपातनम्] अगोष्पदं गोष्पदं कृता गोष्पदीकृता,—गोष्पदवत् तुच्छीकृता इत्यर्थः, अवहेलयैव लङ्घिता इति भावः, चतुर्णाम् उदन्वताम्—समुद्राणाम्, अन्ता,—सीमा येन तथाभूते, ससागरधराऽधीश्वरे इत्यर्थः, दुष्मन्ते—चन्द्रवंशीयप्रसिद्धनृपविशेषे, मृते सति इति शेषः, भरतेन—तत्सुतेन इति यावत्, किं कृतम् ? इति पूर्वेणान्वयः। तिष्ठन्तु—दूरे सन्तु, बहुदीर्घकालिकत्वादेतेषामिति भावः, एते—मान्धात्रादयः।

(६४) तातेन—पित्रा, प्रभाकरवर्द्धनेन इति भावः, शतेति।—शतात्—शतसङ्ख्याकेभ्यः, समधिकाः,—अतिरिक्ताः, अध्वराः,—यज्ञाः, अश्वमेधादयः इति यावत्, तेषां धूमविसरैः,—धूमावस्तारैः, यज्ञाग्निसमुत्थधूमराशिभिरित्यर्थः, धूसरित —मलिनीकृत इत्यर्थः, वासवः—इन्द्रः एव, वयः,—पक्षी येन तथाभूते ("वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी) धूमोद्गमेन इतरस्याः पक्षिणः धूसरीक्रियन्ते अस्य तु यज्ञानां तथा धूमोद्गतिः जाता, यथा स्वर्गाधिपतिरपि धूसरताम् अयासीत् इति भावः।

(६५) सुगृहीतनाम्नि—सुष्ठु गृहीतं, जनैरिति शेषः, नाम यस्य तथाभूते, प्रातः स्मरणीये इत्यर्थः, तत्रभवति—पूज्ये, पितरि—अस्मत्पितामहे इति भावः, परासुताम्—पञ्चत्वं, गते—प्राप्ते सति राज्यं किं न अकारि ?—न कृतं किम् ?

(६६) समभिभवति—परिभवति, आयत्तीकरोतीत्यर्थः। कापुरुषम्—पुरुषा॰

भाचक्षते शास्त्रविदः। स्निग्धो हि विषयः शुचाम्। तथाऽपि किं करोमि, स्वभावस्य सेयं कापुरुषता वा, (६७) स्त्रैणं वा, यदेवम् आसन्नं पितृशोकहुतभुजो जातोऽस्मि। मम हि (६८) भूभृति पर्य्यस्ते निरवशेषतः प्रस्रवणानि इव स्रुतानि अश्रूणि, अस्तमिते (६९) महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्टः प्रज्ञालोकः, प्रज्वलितं हृदयम्, (७०) आत्मदाह-भीत इव स्वप्नेऽपि न उपसर्पति विवेकः, बलीयसा सन्तापेन (७१) जातुषमिव विलीनम् अखिलं धैर्य्यं, (७२) पदे पदे दिग्धशरोपाहता इव हरिणी मुह्यति मतिः, पुरुषद्वेषिणी इव

श्रमम्। विषय —देश, पात्रमित्यर्थः, शुचा—शोकानां स्निग्ध एव शोकविषया भवितुमर्हन्ति न तु पौरुषभूषिता पुरुषा इति भाव। तथाऽपि—स्नेहोनानैव शोक-विषयत्वे सत्यपि। स्वभावस्य—प्रकृते। कापुरुषता—नीचता।

(६७) स्त्रैण—स्त्रीसुलभत्वम्। आसन्न—प्राप्त, दीनमित्यर्थः। पितृशोक-हुतभुज —पितृशोकानलस्य।

(६८) भूभृति—राज्ञि, पर्व्वते च पर्य्यस्ते—विध्वस्ते, निरवशेषत,—कार्त्स्न्येन, प्रस्रवणानि इव—निर्झरा इव, स्रुतानि—गलितानि।

(६९) महति—प्रभूते, तेजसि—तेज सम्पन्ने पितरि सूर्य्ये च। अन्धकारी-भूतदशाशस्य—अन्धकारीभूता —ध्वान्तसमाच्छन्ना इत्यर्थ, दश आशा,—दिशो यस्य ताह्शस्य, ममेति पूर्व्वेणान्वय, दशापि दिशोऽन्धकारमयो इव पश्यामि इत्यर्थ। प्रनष्ट,—अदर्शनं गत, विलुप्त इत्यर्थ, प्रज्ञा—बुद्धि एव आलोक,—उद्योत।

(७०) आत्मेति।—आत्मन,—स्वस्य, दाहात्—ज्वलनात्, भीत,—जाता-सङ्क, प्रज्वलितहृदये उपस्थिता इति भाव। उपसर्पति—उपगच्छति, आवि-र्भवतीत्यर्थ, विवेक,—पृथगात्मता, इदं तथ्यमिदमतथ्यम् इत्यादि विचारवती बुद्धिरित्यर्थ।

(७१) जातुषमिव—लाक्षानिर्म्मितमिव, [जतुनो विकार अण् पुगागम। "लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामय" इत्यमर] विलीन—विद्रुय गतम्।

(७२) पदे पदे—प्रतिपदं, प्रत्येकशब्दोच्चारणे, प्रत्येकपदक्षेपणे च इत्यर्थ, दिग्धेति।—दिग्धेन—विषाक्तेन, शरेण—इषुणा, शरेणेत्यर्थ, ("कलम्बमार्गणशरा:

दूरत एव भ्रमन्ती परिहरन्ति स्मृति, अम्बा इव तातेनैव सह गता धृति, (७३) वार्द्धुषिकप्रयुक्तानि इव वित्तानि प्रतिदिवसं वर्द्धन्ते दुःखानि, (७४) शोकानलधूमसम्भारसम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरम्। सर्वं (७५) पञ्चजनः पञ्चत्वमुपरतः प्रयाति, वितथमेतद्वदति बालो

पक्षी रोप इत्युभयो" इत्यमरः) यद्यपि बाध वियात दिग्धः लिप्तकौ" इत्यमरवचनात् दिग्धशब्देनैव विषाक्तो बाणो लभ्यते तथाऽपि पुनः रोपग्रहणं तस्य अतिभीषणत्वद्योतनायमिति बोद्धव्यम्। आहतेव—विद्धेव मुह्यति—मोहं गच्छति। पुरुषहरिणी इव—पुरुषं दृष्ट्वा पलायनपरा कातरनेत्रा इवेत्यर्थः। भ्रमन्ती—चलन्ती पलायमाना इत्यर्थः। परिहरति—परित्यजति मामिति शेषः। अम्बा इव—माता इव। धृतिः—सन्तोषः।

(७३) वार्द्धुषिकेति।—वृद्ध्या—व्याजादौ प्रयुक्तेभ्यः धनेभ्यः लाभरूपया जीवतीति वार्द्धुषिकः—वृद्ध्याजीवः कुसीदजीविवणिक् इत्यर्थः ["प्रयच्छति गर्ह्यम्" (४।४।३० पा०) इति ठक् ठकि "वृद्धेर्वृधुषिभावो वक्तव्यः" (वा०) इति वृधुषिरादेशे रूपम्। "कुसीदको वार्द्धुषिको वृद्ध्याजीवश्च वार्द्धुषिः" इत्यमरः] तेन प्रयुक्तानि—कालं धृत कार्ये ऋणादरूपे नियुक्तानि इव वित्तानि—धनानि। वर्द्धन्ते—वृद्धिं गच्छन्ति।

(७४) शोकेति।—शोकानलस्य—शोकाग्नेः धूमसम्भारेण—धूमनिवहेन, सम्भूतः—सञ्जातः योऽम्भोधरः—मेघः तथा हि मेघदूते—"धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः" इति कालिदासः तेन भरितमिव—आपूरितमिव, शरीरं—देहः अनेन विशेषणेन तात्पर्यबलात् गगनमस्तीति च आयातम्, एतेन शरीरस्य उत्साहशक्त्यादिशून्यता व्यज्यते। नयनवारिधाराविसरं—बाष्पधारासन्तानं, वर्षति—मुञ्चति [इहोत्प्रेक्षोत्थापितपूर्वपदार्थस्य उत्तरवाक्यगतेन पदार्थहेतुत्वं काव्यालङ्कारमुत्प्रेक्षाङ्गमिति सङ्करः]।

(७५) पञ्चजनः—पञ्चभूतनिर्मितो मानवः ("स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इत्यमरः) उपरतः—मृतः सन् पञ्चत्वं—पञ्चानां क्षित्यादीनां भावः तत्त्वं पञ्चसु पृथिव्यादिषु विलयरूपतामित्यर्थः ("पञ्चत्वं पञ्चतां भावे प्राणानामत्ययेऽपि च" इति मेदिनी) प्रयाति—गच्छति। वितथम्—असत्यम्। बालः,—मूर्खः अज्ञः इति यावत् ("मूर्खेऽर्भकेऽपि बालः स्यात्" इत्यमरः)।

लोकः; (७६) तात! हुताशनतामेव केवलमापन्न, येनैवं दहसि माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य स्थितः शोको दुर्निवारः बाडव इव वारिराशिं, पविरिव पर्वतं, क्षय इव क्षपाकरं, राहुरिव रविं, दहति दारयति तनूकरोति कवलयति। न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य महापुरुषस्य विनिपातम् अश्रुभिरेव केवलैः अतिवाहयितुम्। राज्ये (७७) विष इव चकोरस्य मे विरक्तं चक्षुः।

---

(७६) कथं विलपति? इत्यत आह तात इति।—तात,—पितः, [केचित् "तात" इत्यत्र "तत" इति पठित्वा "पञ्चसु पृथिव्यादिषु लयात् पुरुष तादृश्यं प्रतिपन्ने इत्यन्वोक्ते सति, तत,—इत्याद्यभिमानप्राप्तवस्त्वाद्यवाद्विल्य" इति व्याचक्षु] हुताशनताम्—अग्नित्वमेव, न तु पृथिव्यादित्वमित्येवकारार्थः आपन्न,—प्राप्त केवलं हुताशने एव लयं गत इत्यर्थः, येन—हुताशनभावेन हेतुना। इह दाहस्य साधकत्वापन्नत्वज्ञानात् अनुमिनोमि इति प्रतीयमानोत्प्रेक्षायाः चमत्कारातिशयात्। असाम्परायिकमिव—अयुद्धमिव असाहाय्यकं वा, यथा,—असाम्परायिकं—साम्परायिकं—युद्ध ("युद्धमायोधनं । समीकं साम्परायिकम्" इत्यमरः) तेनाऽर्हति इति साम्परायिकं युद्धार्हं तदभावमित्यर्थः, इह हृदयं—चित्तम्, अवष्टभ्य—आक्रम्य स्थितः,—विशेषेण स्थितः, शोकः—मन्युः दुर्निवारः,—दुर्निवार्यः, यो हि भीतः, स कथं स्थितं निवारयितुमर्हत्? इति भावः, बाडव इव—वडवानल इव वारिराशिं—समुद्रं पविरिव—वज्रमिव, ("ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमरः) क्षय इव—राजयक्ष्मा इव क्षपाकरं—चन्द्रं दहति—ज्वलयति दारयति—भिनत्ति, द्विधा विदारयति वा तनूकरोति—कृशीकरोति कवलयति—ग्रसति, सर्वत्र माम् इति शेषः। "बाडव" इत्यादिवाक्येषु "दहति" इत्यादिक्रियाणां क्रमेणान्वयः। सुमेरुकल्पस्य—सुमेरुपर्वतनिभस्य, सत्त्वगुरुत्वात्, आश्रिताभीष्टपूरकत्वाच्चेति भावः। अतिवाहयितुं—यापयितुं क्षपयितुमित्यर्थः, व्याख्यानयितुमिति वा, शोकप्रवाहैः न महागिरीन्द्राः परिप्लावनीया इत्याशयः।

(७७) विष इव—गरले इव, ["इवेन समासो विभक्त्यलोपश्च" (वा०) इति एकपदीभावः, सन्धिरेव केवलं पाठान्तरे दृश्यते इति] चकोरस्य—पक्षिविशेषस्य,

(८१) अतस्त्वम् अन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पुरुः आज्ञया गुरोर्गृहाण मे राज्यचिन्ताम्। (८२) त्यक्तसकलबालक्रीडेन हरिणा इव दीयताम् उरो लक्ष्म्यै। परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय खड्गग्राहिणी हस्तात् आदाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम्।

---

मलानसं वास मुह्यति, तथा निष्कामाराधनमेव मे कल्मषनाशकं भविष्यतीत्याशयः।

(८१) अत,—आश्रमगमनाभिलाषात् ["अत" इत्यत्र "यत" इति पाठे,—यस्मात् इत्यादात्, यस्मादभिलाषादित्यर्थ]। अन्तरितेति।—अन्तरित—व्यवहितं, दूरीकृतमित्यर्थः, यौवनसुखं—तारुण्योचितविषयोपभोगानन्दः यस्याः तथाविधां, वर्जितयौवनोचितविषयसम्भोगसुखामित्यर्थः, एकत्र,—प्रजानां हितचिन्तायां राज्यरक्षणचिन्तायाञ्च सदा व्यवधानतोचित्यात्, अन्यत्र—योवनाबाधानुकृतया उपभोगसामर्थ्याभावादिति भावः अत एव अनभिमताम्—अनभिलषिताम्, अप्रियामित्यर्थः, जरामिव—वलिपलितादिना कायशैथिल्यापादकदशाविशेषमिव वार्द्धकमित्यर्थः यावत्, पुरुः,—ययातिनृपते कनीयान् सुत, स इव, गुरो,—ज्येष्ठस्य भ्रातुः, पितुश्च। राज्यचिन्ता—राज्यभारम्। पुरा ययाति शुक्राचार्यसुतां देवयानीम् अवमत्य, तस्याः दासीभूतां वृषपर्वणोऽसुरराजस्य कन्यां शर्मिष्ठां निभृतं कामयमानो दुहितृनिर्बन्धेन शुक्रेण, "जरां प्राप्स्यसि" इति शप्त विषयभोगार्थं ज्येष्ठान् सुतान् यदुप्रभृतीन् 'मदीयां जरां गृह्णीत' इत्यादिश्य तैः अवमत कनीयसे पुत्राय पुरवे जरां दत्तवान्, स तु पुरुः पितुराज्ञया तां जरां प्रतिपेदे इति भारती वार्त्ता।

(८२) त्यक्तेति।—त्यक्ता—उत्सृष्टा सकला—समग्रा, बालक्रीडा—शैशवोचितकेलिः येन तथाभूतेन बालभावं परित्यजता इत्यर्थः। हरिणेव—विष्णुनेव, हरिरपि द्वापरे कृष्णजन्मनि कंसवधानन्तरं वृन्दावनं त्यक्त्वा उग्रसेनं संस्थाप्य शासनलोकव्याघ तत्रैव स्थित्वा सर्वां वृन्दावनलीलां बाल्योचितां परिजहार, ततः प्रभृति रुक्मिणीं च उरसि अस्थापयत्, लक्ष्म्यै—राजश्रियै, कमलायै च, उरः,—वक्षःस्थलं, दीयताम्—समर्प्यताम्। निस्त्रिंशम्—असिं, ["संख्याया अतच्छब्दस्य बाच्य" वा०) इति निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति विग्रहे डच् प्रत्ययः। "खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय" इत्यमरः] उत्ससर्ज—परित्याज।

अथ तच्छ्रुत्वा (८३) निशितशिखेन शूलेन इव आहतः प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत्,—"किं नु खलु माम् अन्तरेण आर्य्यः केनचित् असहिष्णुना किञ्चिद्ग्राहितः कुपितः स्यात्? उत अनया दिशा परीक्षितुकामो माम्? उत (८४) शोकजन्मा चेतसः समाक्षेपोऽयमस्य? आहोस्वित् आर्य्य एव अयं न भवति? किं वा आर्य्येण अन्यदेवाभिहितम् अन्यदेव अश्रावि मया (८५) शोकशून्येन श्रवणेन्द्रियेण? आर्य्यस्य वा अन्यदेव विवक्षितम् अन्यदेव आपतितं मुखेन? अथवा सकलवंशविनाशाय विनिपातनोपायोऽयं विधेः? मम वा (८६) निखिलपुण्यपरिचयोपक्षेपः? कर्म्मणाम्

---

(८३) निशितशिखेन—तीक्ष्णाग्रेण। माम् अन्तरेण—विना, मयि असन्निहिते इत्यर्थः। असहिष्णुना—मामसौ सौभ्रात्रं सोढुमसमर्थेन इत्यर्थः। ग्राहितः,—अवबोधितः, किञ्चित् मद्दुश्चेष्टितमिति भावः। उत—अथवा, अनया दिशा—अनेन पथा इत्यर्थः, परीक्षितुकामः,—परीक्षार्थी आत्मानं प्रति मदीयाभिप्रायं ज्ञातुमिच्छुरित्यर्थः।

(८४) शोकजन्मा—शोकप्रभवः। समाक्षेपः,—समाकर्षणं, समाकुलता वा, विक्लवतिरिति यावत्। आहोस्वित्—अथवा।

(८५) शोकशून्येन—शोकेन शून्यं, शून्यं—स्वव्यापारहीनमित्यर्थः, विमनस्कतया स्वव्यापारविरहितमिति भावः तेन। विवक्षितम्—वक्तुम् इष्टम्। आपतितम्—उपस्थितं निर्गतं वा। सकलेति।—सकलस्य—कृत्स्नस्य, वंशस्य—कुलस्य, अस्माकमिति भावः, विनाशाय—ध्वंसाय, अस्मान् निर्वंशीकर्त्तुम् इत्यर्थः, आर्य्ये वनं गते अहमप्यवश्यमेव तमनुगमिष्यामि, मय्यपि गते वंशोऽयं कर्णधारविहीना नौरिव विपर्य्यासं प्राप्स्यति, तेन च अस्य लोपः अवश्यम्भावीति भावः। विनिपातनोपायः,—ध्वंसप्रकारः, ["विनिपातनोपाय" इत्यत्र "निपातनोपाय" इति पाठोऽपि स एवार्थः] विधेः,—नियतेः, प्रतिकूलस्य दैवस्य इति भावः परमेष्ठिनो वा, विधातुर्वा इत्यर्थः, ("विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी)।

(८६) निखिलेति।—निखिलानां—समग्राणां पुण्यानां—श्रेयसां, परिचयः,—प्रचयः, तस्य उपक्षेपः,—प्रसङ्गः।

(८७) अननुकूलसमग्रग्रहचक्रवालविलसितं वा? अथवा (८८) तातविनाशनिःशङ्ककलिकालक्रीडितम्? येन अयं यः कश्चित् इव यत्किञ्चनकारिणं माम् अपुण्यभूतिवंशसम्भूतमिव, अताततनयमिव, (८९) अनात्मानुजमिव, अभक्तमिव, दृष्टदोषमिव,

(८७) अननुकूलेति।—अननुकूला,—प्रतिकूला, समग्रा,—सर्व, यद्वा, —समस्ता इति यावत, तथा चक्रवालस्य—समूहस्य, विलसितं—विजृम्भितं, विचेष्टितमिति यावत अननुकूले ग्रहमण्डले कथमेव घटेत? इत्याशयः।

(८८) तातेति।—तातस्य—पितुः, विनाशेन—उपरमेण, निःशङ्कं,—निर्भयं यः कलिकालः—चतुर्थयुगं तस्य क्रीडितं—विलसितं, जीवति ताते अस्मत्सीमानां प्रविशति तत्प्रतापभयात् कलियुगं तस्मात् अस्माभिः विसर्जितवत्र्मनि प्रवर्त्तितं स्वप्रभावं विस्तारयितुं न प्राभवत्, इदानीं तस्य परलोकगमनात् निर्भयस्य निर्भरकलिकालस्य स्वप्रभावविस्तारफलमिदं भवेत्? इति भावः, येन—कलिक्रीडितेन इत्यर्थः, कलिप्रभावेण इति यावत् अयम्—आर्यः यः कश्चिदिव—साधारणजन इव, यत्किञ्चनकारिणम् यथेच्छकारिणम् पूर्वाजितगुरुजनशासनमित्यर्थः, यः गुरुजनादिशासनमतिक्रम्य यथेष्टमाचरति ■ एव ईदृशकठोरवाक्यताडनं प्राप्नुमर्हति, न मद्विधः गुरुजनानुरक्त इति भावः, यद्वा—यत्किञ्चनकारिणम्—यत्किञ्चनम्, अल्पबुद्धिसाध्यं तुच्छमिति यावत, कार्य्यमुत्तमभोजनाद्यनुष्ठानम्, अत एव राज्यशासनादिदुष्कराचारानभ्यस्तत्वात् अयोग्यमिति भावः। अपुण्यभूतिवंशसम्भूतमिव—पुण्यभूतिः,—तन्नामा आदिराजः, तस्य वंशे—अन्ववाये असम्भूतमिव—अनुत्पन्नमिव यः तादृशस्य पुण्यवतः पुण्यभूतेः वंशे समुत्पन्नः स कथमीदृशमनयमाचरितुं प्रभवेदिति भावः। अताततनयमिव—अतातस्य—तातभिन्नस्य अन्यस्य तनयमिव—पुत्रमिव, [ "बलिभिरुक्तिमिश्च कथम्" ( उ० ४ पा० ८८ सू० ) इति तने कथन ] प्रह्लादधार्मिकस्य पितुः पुत्रो भूत्वा ईदृशो धर्मविगर्हितं कर्मापि प्रकृतिं मे कदाऽपि न सम्भवदिति भावः।

(८९) अनात्मानुजमिव—अनात्मनः,—आत्मभिन्नस्य, अनुजमिव—कनिष्ठभ्रातरमिव एव निःस्पृहस्य अस्य भ्रातुर्मे ईदृशी दुराकाङ्क्षा अत्यन्तं दुरेति भावः। अभक्तमिव—अनुरक्तमिव, अननुरक्ते एवंविधम् अप्रियमवश्यं वक्तुं युज्यते, न सर्वथाऽनुरक्ते मयि इति भावः। दृष्टदोषमिव—कृतापराधमिवेत्यर्थः, अपराधिनः भ्रातुः एवं प्रियमन्याय कदाचित् युज्यते, न निर्दोषस्य ममेति भावः।

( ८० ) श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव नीचोपसर्पणे, सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्मणि समादिष्टवान् ? ( ८१ ) तदेतत् तावत् अनुरूपं यत्, शौर्योन्माद मदिरोन्मत्त समस्त सामन्त मण्डल समुद्र मथन मन्दरे तादृशि पितरि मृते तपोवनं वा गम्यते ? वल्कलानि वा गृह्यन्ते ? तपांसि वा सेव्यन्ते ? या तु मयि ( ८२ ) राज्याज्ञा, सा दग्धे-

---

( ८० ) सुरापाने—मद्यपाने, श्रोत्रियमिव—छान्दसमिव, वेदपारगमित्यर्थः, ("श्रोत्रियश्छान्दसौ समौ" इत्यमरः) केनचित सुरां पातुमादिष्टेन श्रोत्रियेण यथा तत् कर्म अतिदुष्करं भवति, तथेति भावः । स्वामिद्रोहे—प्रभोरनिष्टाचरणे, सद्भृत्यमिव—उत्तम किङ्करमिव, प्रभोरनिष्टाचरणे केनचित नियुक्तेन प्रभुभक्तदासेन यथा तत् कर्म न सुकरं भवति, तथेति भावः । नीचोपसर्पणे—हीनानुगमने, प्राकृतजनसेवायामित्यर्थः, सज्जनमिव—साधुजनमिव, केनचित् बलात् नीचसेवायां प्रवर्त्तितेन उत्तमप्रकृतिकेन यथा तत् कर्म न सुकरं भवति तथेति भावः । व्यभिचारे—परपुरुषप्रसक्तौ, सुकलत्रमिव—सतीं स्त्रियम् इव केनचित बलात् व्यभिचारे नियोजितया पतिव्रतया यथा तत् कर्म जीवनसंशयेऽप्यनाचरणीयं भवति, तथेति भावः । अतिदुष्करे—अतिदुर्घटे, दुःखेनापि कर्तुमशक्ये इत्यर्थः, ज्येष्ठक्रमोल्लङ्घनरूपे इति भावः, कर्मणि—राजपद-ग्रहणरूपकार्ये, कनिष्ठानर्हराज्यचिन्तायामिति भावः । इह सन्दर्भे मद्यपसुराऽपेय-त्वसंदैन्यविनीतादीनां प्रस्तुता विपरीतायत्नविषयकरतिभावस्याङ्गम् इति भाव-शबलोऽलङ्कारः ।

( ८१ ) एतत्—वल्कलग्रहणतपोवनगमनादिरूपं कर्म इत्यर्थः, अनुरूपं—युक्तम् । शौर्येति ।—शौर्योन्मादेन—पराक्रमजनितौद्धत्येन, मदिरोन्मत्ताः इव—सुरापानमत्ता इव ये समस्ताः,—सर्वे, सामन्ताः,—अधीश्वराः, तेषां मण्डलम्—चक्रवालम् एव, समुद्रः,—सागरः, तस्य मथने—विलोडने, मन्दरः,—मन्दराख्यो गिरिः तस्मिन् तादृशि—प्रख्याते वीरे, समुद्भवराजन्यमण्डलविजेतरि इत्यर्थः, अत्याश्चर्यान्तर्हितसाररत्न-समुच्चयानामुद्धर्तरि इत्यर्थः एतेन उन्मत्तोन्मादमञ्जनपुरःसररत्नाविष्कारः, विजिगीषोः परलोकसुखमूपायस्य लोकोपकारार्थकः, न तु हिंसार्थकः इति व्यज्यते । सेव्यन्ते—चर्य्यन्ते ।

( ८२ ) राज्याज्ञा—राजकार्य्यादेशः । दग्धे—सन्तप्ते, पितृशोकेन प्रखरसूर्य्यः

अपि दाहकारिणी मयि अवग्रहग्लपिते धन्वनि इव अङ्गार-वृष्टिः। तत् असदृशम् इदम् आर्यस्य। यद्यपि च (८३) विभुः अनभिमानः, द्विजातिः अनेषणः, मुनिः अरोषणः, कपिः अचपलः, (८४) पण्डितः अमत्सरः, वणिक् अतस्करः, रम्यजानिः अकुहनः, साधुः अदरिद्रः, (८५) द्रविणवान् अखलः, कीनाशोऽनभिगतः, मृगयुः अहिंस्रः, (८६) पाराशरी

---

विरचीन च इति भाव। अवग्रहग्लपिते—अवग्रह,—प्रतिबन्ध, निरुद्धवर्षणमित्यर्थः, वृष्टिरोधः, ("अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी) तेन ग्लपिते—ग्लानिं नीते, अवग्रहे विशुष्के च इति भाव। धन्वनि इव—मरौ इव, ("समानौ मरुधन्वानौ" इत्यमरः) अङ्गारवृष्टि,—अग्निस्फुलिङ्गवर्षणम्। असदृशम्—अयुक्तम्, अनुचितमित्यर्थः, दाहकदाहनमनवोजनमित्याशय।

(८३) विभु—प्रभु अनभिमान,—निरहङ्कार। द्विजाति—ब्राह्मण, अनेषण,—भिक्षाभ्रमण अयाचक इत्यर्थ, अधिगतार्थविरक्तमतौ इत्यर्थो वा। मुनि—तापस अरोषण—अक्रोधन। कपि,—वानर, अचपल,—अचञ्चल, धीर इत्यर्थ।

(८४) पण्डित,—विद्वान, ["पण्डित" इत्यत्र "कवि" इति पाठोऽपि स प्रमाद] अमत्सर,—अन्यशुभद्वेषरहित। वणिक्—व्यवसायी, अतस्कर,—अचौर। रम्यजानि—रम्या—मनोहारिणी सुन्दरीत्यर्थ, जाया—भार्या यस्य तथोक्त सुन्दरभार्य इत्यर्थ, ["रम्यजानि" इत्यत्र 'प्रियजानि' इति पाठ—प्रिया—प्रियदर्शना सुन्दरीत्यर्थ] अकुहन—नास्ति—कुहना—ईर्ष्या प्रद्वा वा यस्य तथाभूत, ('कुहना दम्भ चर्यायामीर्ष्यालौ' इति मेदिनी) परपुरुषभयवर्जित इत्यर्थ स्त्रिया पुरुषान्तरा-लोकनदायश्च "भार्या रूपवती शत्रु" इत्यादिप्रमाणात् इति भाव। साधु,—सुजन, खलतावर्जित इत्यर्थ, अदरिद्र,—धनी।

(८५) द्रविणवान्—धनी, अखल,—अदुर्जन, सुजन इत्यर्थ। कीनाश—क्षुद्र नीचाशय इत्यर्थ कृतान्त वा, ("कृतान्ते पुंसि कीनाश क्षुद्र कार्षिकयोस्त्रिषु" इत्यमर) अनभिगत,—अद्वेष्य, प्रिय इति यावत् ("द्वेष्ये त्वभिगत" इत्यमर) मृगयु,—व्याध, [मृगं यातीत्यर्थे "मृग्वादयश्च" (उ० १ पा० ३८ सू०) इति कुप्रत्यये निपातनम्] अहिंस्र,—हिंसावर्जित इत्यर्थ।

(८६) पाराशरी—भिक्षु, ("भिक्षु परिव्राट् कर्मन्दी पाराशर्यपि मस्करी"

ब्राह्मण्यः, सेवकः सुखी, कितवः कृतज्ञः, (९७) परिव्राट् बुभुक्षुः, नृशंसः प्रियवाक्, अमात्यः सत्यवादी, (९८) राजसूनुः अदुर्विनीतश्च जगति दुर्लभः, तथाऽपि मम आर्य एव आचार्यः। को हि नाम (९९) तद्विधे निपतिते राजगन्धकुञ्जरे जनयितरि, (१००) ईदृशे च विफलीकृतविशालशिलास्तम्भोरुभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति, (१०१) सकललोकलोचनजलपातप्लाविते

---

इत्यमरः) ब्राह्मण्यः,—ब्राह्मणोचितानुष्ठानरतः। सेवकः,—भृत्यः। कितवः,—धूर्तः, द्यूतकृदित्यर्थः, ("धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत् समाः" इत्यमरः) कृतज्ञः,—कृतोपकारवित्।

(९७) परिव्राट्—यतिः बुभुक्षुः,—भोजनार्थी, प्रायः दृश्यते ब्रह्मसमाधिमग्नानां भोजनाभिलाषः कादाचित्कः आश्रितसेवकानुरोधेन, न तु स्वेच्छयेत्याशयः। ["परिव्राट् बुभुक्षुः" इत्यत्र "परिव्राडबुभुक्षुः" इति पाठे,—परितो व्रजति गच्छतीति परिव्राट्—पर्यटकः, दूराद्विहरणशील इत्यर्थः, अबुभुक्षुः,—अभोजनेच्छुः, अक्षुधित इत्यर्थः]। नृशंसः,—निष्ठुरः, प्रियवाक्—मधुरभाषी। अमात्यः—सचिवः, राजकार्यभारधारीति यावत्, सत्यवादी—सत्यभाषणशीलः, प्रायशस्तस्य सर्वत्र सत्यशीलत्वेन न कार्यसिद्धिः इत्याशयः।

(९८) राजसूनुः—राजतनयः अदुर्विनीतः,—सुशील इत्यर्थः, राजपुत्राः प्रायः दुर्विनीता इति भावः। आचार्य्यः,—गुरुः, उपदेष्टा इत्यर्थः, आर्यः यथा मार्गं प्रदर्शितवान् तथैव मया शिक्षितमिति भावः।

(९९) तद्विधे—तादृशे निरुपमप्रतापशालिनि इति भावः, राजेति।—राजा एव गन्धकुञ्जरः,—गन्धद्विपः तस्मिन्, जनयितरि—पितरि।

(१००) ईदृशे—एवम्भूते, विफलीकृतेति।—विफलीकृतौ—व्यर्थीकृतौ इति यावत्, विशालौ,—विपुलौ, महाभारौ इत्यर्थः, शिलास्तम्भौ—प्रस्तरस्तम्भौ याभ्यां तादृशौ, उरू—महान्तौ, भुजौ—बाहू यस्य तथाभूते, भूभुजि—भूपतौ। ज्यायसि—अग्रजे। नववयसि—यौवने।

(१०१) सकलेति।—सकलानां—सर्वेषां, लोकानां—जनानां, लोचनजलस्य—अश्रुवारिणः, पातेन—वर्षणेनेत्यर्थः, आप्लाविते—समन्तात् व्याप्ते, पङ्किले इति

(१०७) निवासं गिरिगुहां कः पाति पृष्ठतः? प्रतापसहाया हि सत्त्ववन्तः। (१०८) कः चपलां लक्ष्मीं प्रति अनुरोधोऽयम् आर्यस्य,—यत् इयमपि चीरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगी इव न नीयते जराजालिनी? किं वा मम अनेन वृथा बहुधा

---

(१०७) निवासं—वासभूमिम्। पृष्ठतः—पश्चात् स्थितामिति भावः, पाति?—रक्षति? स्वप्रतापपराजितपराक्रान्तप्रतिपक्षभूपतिचक्रे आर्ये तपोवनं गते तन्निवासभूतामिमां राजधानीं को रक्षति? इति ध्वनिः। पदार्थहेतुककाव्यलिङ्गालङ्कृतिः अपद्या इति चमत्कारातिशयः। सत्त्ववन्तः,—महानुभावाः, प्रतापसहायाः,—प्रतापः,—कोषदण्डजतेज एव सहायः,—अनुकूलः येषां तथोक्ताः, सत्त्ववन्तो हि किञ्चिदसहायाऽपि स्वप्रभावेणैव सर्वान् वशमानेतुं प्रभवन्ति इत्यर्थः। यतेन किमन्यकुर्वन्त्यपि कश्चित् मम स्थितिः एव राज्यं सुरक्षितं स्यादिति, अन्यथा एतस्य रक्षणं दुष्करमिति व्यज्यते।

(१०८) चपलाम्—चञ्चलाम्, लक्ष्मीं—राजश्रियं, प्रति आर्यस्य—भवदीयस्यैव, अयम्—एषः, अनुरोधः,—उपरोधः आग्रहः इत्यर्थः, कः?—कीदृशः? यत्—यदि, इयं—लक्ष्मीः, चीरान्तरितकुचा—चीरं—वल्कलं जीर्णवसनखण्डं वा, तेन अन्तरितौ—आवृतौ, कुचौ—स्तनौ यस्याः तथाभूता, [ "यत् इयमपि चीरान्तरितकुचा" इत्यत्र "यदि इयमपि न चीरान्तरितकुचा" इति पाठान्तरम् ] कुशेति।—कुशाः,—दर्भाः, कुसुमानि—पुष्पाणि, समिधः,—काष्ठानि, पलाशाः,—पत्राणि, तेषां पूलिका—समूहः तां, तापसीसुलभामिति भावः, अन्यपि यद्वेच एतत् सर्वं वहति, वहन्ती—दधाना, तत्रैव तपोवने—आर्याधिष्ठिताश्रमे, न नीयते—न प्राप्यते, स्वयमेव न गम्यते इत्यर्थः, यदीयं लक्ष्मीर्नानुसरति इति भावः, यद्वा,—न नीयते—नेतुं न शक्यते, आर्येणेति शेषः, ["न नीयते" इत्यत्र "नीयते" इति पाठान्तरम्] जराजालिनी—जरायाः जालं—केशशुक्लतादिकम् अस्याः अस्ति इति तथाभूता, पलितकेशिनी इत्यर्थः, पुरुषपरम्परया भोगतत्वेन सनातनी इति भावः, मया दुर्वहा चिरन्तनी इयं लक्ष्मीः तपोवने यदि न आर्यमनुसरति, तस्मात्तु तथा प्रकृतेः अभावात् तदा तस्याः पालने कोऽयम् आग्रहः समभवत? इत्याशयः। यदि सा आर्यं नापेक्षते, तदा आर्येणापि तदपेक्षा निष्प्रयोजना इति निष्कर्षः।

(१०९) विकल्पितेन? तूष्णीमेव आर्य्यम् अनुगमिष्यामि। गुरुवचनातिक्रमकृतञ्च किल्बिषम् एतत् तपोवने तप एव अपास्यति" इति अवधार्य्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखः तूष्णीम् अवातिष्ठत।

(११०) अत्रान्तरे पूर्व्वादिष्टेन एव वदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, (१११) निर्द्दयकरतलताड़नभिया इव क्वापि गतहृदये रटति राजस्त्रैणे, (११२) तारम् अब्रह्मण्यम् ऊर्द्धदोष्णि विरुदति विप्रजने,

---

(१०९) विकल्पितेन—पर्य्यालोचितेन, अनुचिन्तनेन इति यावत्। तूष्णीमेव—मौनमास्थाय एव इत्यर्थः, किमप्युत्तरमदत्त्वैवेति यावत्। गुर्व्विति।—गुरोः,—ज्येष्ठस्य, वचनातिक्रमेण—वाक्यलङ्घनेन, राज्यग्रहणरूपादेशाचरणेनेत्यर्थः, कृत—जनितं, किल्बिष—पापं, ("पापं किल्बिषकल्मषम्" इत्यमरः) तप,—चान्द्रायणादिकं व्रतं, ("... ...तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः॥" इति मेदिनी) अपास्यति—खण्डयिष्यति, अपनेष्यति इत्यर्थः। अवधार्य्य—निश्चित्य। प्रथमतरं—ज्येष्ठस्य गमनात् अतिपूर्व्वमित्यर्थः। अवातिष्ठत—अवर्त्तत।

(११०) "अत्रान्तरे" इत्यस्य "सवादकी नाम · सदसि आत्मानमपातयत्" इत्यनेनान्वय। पूर्व्वादिष्टेन—पूर्व्वमाज्ञप्तेन, वस्त्रकर्म्मान्तिकेन—परिच्छदाधिकारिणा, समुपस्थापितेषु—समीपमानीतेषु, वल्कलेषु—तरुत्वक् तापसोचितपरिधेयेषु इति यावत्।

(१११) निर्द्दयेति।—निर्द्दय—निष्करुणम्, उत्कटमित्यर्थः, तत् यथा तथा, करतलेन—पाणितलेन, यत् ताड़नम्—आघातः, तस्मात् भीः,—भयं तया इव। गतहृदये—गत—चलितं, हृदयं—चित्तं यस्य तथाभूते, शून्यमनसि इत्यर्थे, अचेतनप्राये इति भावः, ["गतहृदये" इत्यत्र "गते हृदये" इति पाठान्तरम्] रटति—रुदति, सशब्दं रुदतीत्यर्थः राजस्त्रैणे—राजान्तःपुरिकाजने।

(११२) तारम्—उच्चैः यथा तथा, ऊर्द्धदोष्णि—उत्क्षिप्तबाहौ। अब्रह्मण्यम्—अवध्योक्तिविशेषः तत् ("अब्रह्मण्यम् अवध्योक्तौ" इत्यमरः। समुद्घोषयेत्यध्याहृतक्रियायाः कर्म्मपदं द्वितीयान्तम्) मा अस्मान् परित्यागेन जहीत्येवरूपं वचनपूर्व्वकमित्यर्थः, विरुदति—विशेषेण क्रन्दति।

(११३) पादप्रणतिपरे फूत्कुर्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परिजने, परिजनावलम्बिते वेपमानवपुषि पर्य्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे, (११४) निराशेषु नखलिखितमणिकुट्टिमेषु अवाङ्मुखेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्व्वासु प्रजासु, सहसा एव प्रविश्य (११५) शोकविक्लवः प्रचरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सरसि आत्मानम् अपातयत्।

---

(११३) पादप्रणतिपरे—चरणपतनपरायणे, पौरवृन्दे—पुरवासिवर्गे, फूत्कुर्वति—चीत्कारं कुर्वति इत्यर्थः मुक्तकण्ठं रुदतीति यावत्। चिरन्तने—पुरातने, वंशपरम्परागते इत्यर्थः, ["सायंचिर—" (४।३।२३ पा०) इत्यादिना ट्युः तुडागमश्च] परिजने—परिचारकवर्गे विद्रुतचेतसि—विचलितमनसि विद्राति—धावति, परिजनावलम्बिते—परिवारगृहीतहस्ते इत्यर्थः, वार्द्धक्यात् स्वयमागन्तुमसामर्थ्यादिति भावः, वेपमानवपुषि—कम्पमानदेहे, पर्य्याकुलवाससि—विस्रस्तवसने, निवारणव्यग्रतया सत्वरमागमनादिति भावः, शोकेति।—शोकेन—मन्युना, गद्गदम्—अस्पष्टनिर्गमं बाष्पावरुद्धकण्ठत्वादिति भावः, वचः—वचनं यस्य तथाभूते, गलितनयनपयसि—क्षरितनेत्रवारौ, निवारणेति।—निवारणाय—प्रतिषेधाय, तपोवनगमनादस्येति भावः, उद्यत—प्रवृत्तं, कृतोद्यमामित्यर्थः, मनः—चित्तं यस्य तथाभूते, वर्षीयसि—अतिस्थविरे, ["वृद्धशब्दात्" "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना वृद्धस्य वर्षादेशः] बन्धुवर्गे—ज्ञातिसमूहे।

(११४) नखेति।—नखैः,—करजैः, लिखितानि—अङ्कितानि, कृतरेखाणीत्यर्थः, मणिकुट्टिमानि—रत्नखचितगृहाभ्यन्तरतलानि यैः तथोक्तेषु, अवाङ्मुखेषु—अधोमुखेषु, निश्वसत्सु—निश्वासं त्यजत्सु आयतमिति शेषः, सामन्तेषु—अधीनमित्रराजेषु, निराशेषु—हताशेषु। प्रस्थितासु—प्रस्थानमुद्यतासु इत्यर्थः।

(११५) शोकविक्लवः,—मन्युविह्वलः, प्रचरितेति।—प्रचरितं—प्रकर्षेण स्रुतं, नयनसलिलं—नेत्रजलं यस्य तादृशः। राज्यश्रियः,—तदाख्यायाः राज्यवर्द्धन-

अथ (११६) सम्भ्रान्तो भ्राता सह स्वयं देवो राज्यवर्द्धनः तं पर्य्यपृच्छत्,—"भद्र! भण भण, किम् अस्मद्व्यसनव्यवसायवर्द्धनबद्धधृतिः (११७) अवनिपतिमरणमुदितमतिः अधृतिकरम् अपरम् अधिकतरम् इतः समुपनयति विधिः?" इति। स कथञ्चिदपि अकथयत्,—"देव! पिशाचानामिव (११८) नीचात्मना चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति, यतो यस्मिन् अहनि अवनिपतिः उपरत इति अभूत् वार्त्ता, तस्मिन्नेव देवो ग्रहवर्म्मा दुरात्मना मालवराजेन जीवलोकम् आत्मनः सुकृतेन

---

भगिन्या। प्रज्ञाततम,—अतिपरिचित इत्यर्थः, इतः पूर्वं प्रभाकरवर्द्धनस्यैव परिचारकत्वादिति भावः। विमुक्ताक्रन्द,—उच्चैः रुदन्नित्यर्थः। सदसि—सभायाम्।

(११६) सम्भ्रान्त,—सभयोद्वेगः। पर्य्यपृच्छत्—पर्य्यनुयुङ्क्त। अस्मदिति।—अस्माकं व्यसनानि—विपद एव व्यवसायाः,—वाणिज्यानि, तेषां वर्द्धने—अभ्युन्नतिकरणे, बद्धा—निश्चला, धृतिः,—धैर्य्यं सन्तोषो वा येन तथाभूतः, अस्मद्विपद्वर्द्धनैकपर इत्यर्थः।

(११७) अवनीति।—अवनिपतेः,—राज्ञः प्रभाकरवर्द्धनस्य, मरणेन—मृत्युना, मुदिता—प्रहृष्टा मतिः—बुद्धिः यस्य तथाविधः तस्मृत्यावे स्वप्रभावं प्रकटयितुं मग्न इति भावः, विधिः,—देवम् इतः—अस्मात्, पितृव्यसनादिति भावः, अधृतिकरम्—असन्तोषकरम् अधैर्य्यकरं वा समुपनयति?—समुपस्थापयति? इह प्रतिपक्षगतबलवत्त्वात्मगतदुर्बलत्वयोः समुन्मेषात् प्रत्यनीकालङ्कारः।

(११८) नीचात्मना—क्षुद्रचेतसाम्, दुरात्मनामित्यर्थः, चरितानि—स्वभावाः, छिद्रप्रहारीणि—छिद्रेषु—रन्ध्रेषु, प्रहरेषु इति भावः, प्रहरन्ति—आघातयन्तीति तथाविधानि, अन्यदा प्रहारसाहसाभावात् इत्याकूतम्। अवनिपतिः,—राजा, प्रभाकरवर्द्धन इत्यर्थः, उपरतः,—मृतः। वार्त्ता—जनश्रुतिः, ("वार्त्ता इत्तौ जनश्रुतौ" इत्यमरः)। ग्रहवर्म्मा—प्रभाकरवर्द्धनस्य जामाता। जीवलोकः—प्राणिपूर्णं जगत् इहलोकमित्यर्थः। आत्मनः,—स्वस्य, मालवराजस्येति यावत्, सुकृतेन—पुण्येन, येन सुकृतेन स एतावन्तं कालं जीवितोऽस्ति, ग्रहवर्म्मविनाशेन तस्य

सह त्याजितः। (११८) भर्तृदारिकाऽपि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गना इव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च, यथा किल अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिः एतामपि भुवम् आजिगमिषति, इति विज्ञापिते प्रभुः प्रभवति" इति।

ततश्च तादृशम् (१२०) अनुपेक्षणीयम् असम्भावितम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य, अश्रुतपूर्व्वत्वात् परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया

---

तत् सुकृतमपि क्षयं गतं, क्षीणपुण्यस्य तस्य अचिरेणैव भविष्यद्विनाशसम्भावनादिति ] भाव। त्याजित,—हापित, परलोकं प्रापित इत्यथ।

(११८) भर्तृदारिका—राजसुता, ("राजा भट्टारको देवस्तत्सुता भर्तृदारिका" इत्यमरः)। कालेति।—कालायसनिगडयुगलेन—कृष्णलौहनिर्म्मितशृङ्खलाद्वयेन, चुम्बितौ—वेष्टितौ, चरणौ—पादौ यस्याः तथाभूता, चौराङ्गना इव—तस्करनारीव संयता—बद्धा, कान्यकुब्जे—तदाख्यतद्देशीयप्रधाननगरविशेषे, कारायां—बन्धनागारे। किंवदन्ती—जनश्रुतिः। अनायकम्—अराजकं, साधनं—सैन्यं, ("साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ" इति मेदिनी)। जिघृक्षुः,—ग्रहीतुमिच्छुः। एतामपि भुवं—राज्यं, श्रीकण्ठजनपदमित्यर्थः, आजिगमिषति—आगन्तुमिच्छति। विज्ञापिते—निवेदिते, मयेति शेषः। प्रभवति—समर्थो भवति, सोदरप्रियपक्षव्यसनप्रतिशोधने, भर्तृदारिकाया उद्धारे राज्यरक्षणे च यत् कर्त्तव्यं, तत् कर्त्तुमर्हतीति इति भावः।

(१२०) अनुपेक्षणीयम्—अनवधीरणीयं, नावहेलनीयमित्यर्थः, असम्भावितम्—अतर्कितम्, आकस्मिकं—सहसा उपस्थितं व्यतिकरं—व्यसनं, विपदमित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)। परिभवस्य—अननुभूतस्य अवमानस्य इत्यर्थः, अश्रुतपूर्व्वत्वात्—पूर्व्वं कदाऽपि अश्रुतत्वादित्यर्थः, ["भूतपूर्व्वे चरट्" (५।३।५३ पा०) इत्यत्र पूर्व्वनिपातनिर्द्देशात् सप्तम्यन्तात् पूर्व्वशब्दस्य पूर्व्वनिपातनम् इति ज्ञेयम्]। परेति।—परात्—शत्रोः, अन्यस्मात्, वा, परिभवः,—तिरस्क्रिया, अवमाननमित्यर्थः, ("परिभवः परीभावः तिरस्क्रिया" इत्यमरः) तस्य असहिष्णुतया—असहनशीलतया। दर्पबहुलतया—

इव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिः अपरः। (१२५) श्लाघ्यग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिविधुतसिन्दूरधूलिः इव कपिलः कपोलयोः अदृश्यत रोषरागः। (१२६) समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव च समारुरोह वामम् ऊरुदण्डम् उत्तानितः चरणो दक्षिणः। (१२७) निष्ठुराङ्गुष्ठकपणनिष्ठुरत·

कालाधीनीकरणार्थञ्च केशाकर्षणं, तस्मै उत्कण्ठा—उद्वेग इत्यर्थ तयैव, स्त्रियाः केशाकर्षणस्य विगर्हिततया तत् कर्त्तुमुद्यतस्य कम्पोऽजनीति वेदितव्यम्, यथा,—कामिनीकचग्रहणं प्रति उत्कण्ठायाम् कन्दर्पवशस्य स्त्रियाश्च कम्पते इति लोके दृश्यते। समुत्ससर्प—उपजगाम, अग्रहीतुम् इति शेष। कृपाण—खड्गम्। अपरः,—दक्षिण। क्रोधस्थायिनः रौद्रस्य तदनुभावस्य स्वेदोद्गमस्य सात्त्विकविकारस्य सम्भावनया शृङ्गारानुकूलतोक्तौ परिपन्थिरसाङ्गपरिग्रहणो रसदोष, "रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि" इत्यालङ्कारिकानुशासनात् इति ध्येयम्।

(१२५) श्लाघ्येति।—श्लाघ्यस्य—श्लाघ्ये इत्यस्य, श्लाघ्ये खड्गस्य इति भाव, ["सर्व्वधातुभ्य इन्" (उ० ४ पा० ११८ सू०) इति इन्] ग्रहणेन—धारणेन, मुदिता—हृष्टा, खड्ग नायकत्वाभवात् इति भाव, या राजलक्ष्मी,—राजश्री, मेघवी इति भाव तया क्रियमाणा—विधीयमाना, या दिष्टवृद्धि,—आनन्दोत्सव, तथा विधुता—विक्षिप्ता, सर्व्वतः व्यस्ता इत्यर्थ, या सिन्दूरधूलि,—नागसम्भवपराग, स्वनामप्रसिद्ध लौहकौतुकरक्तवर्णचूर्णविशेष इति यावत, ("सिन्दूर नागसम्भवम्' इत्यमर ) सा इव, कपिल,—पाटल, रोषराग,—कोपजनितलोहिमा।

(१२६) समासन्नेति।—समासन्नानाम—समुपस्थितानाम, सकलानाम—सर्व्वेषाम, महीपालानाम—राज्ञाम, चूडामणय,—शिरोरत्नानि, तेषाम् चक्रेण—समूहेन, आक्रमणम्—पदन्यास, प्रणिपातावसरे इति भाव, तेन जात,—उत्पन्न, य अहङ्कार,—गर्व्व स इव, मूर्त्तिमानहङ्कार इत्यर्थ, उत्तानित,—उत्तोलित इत्यर्थ, दक्षिण,—अपसव्य, चरण,—पाद, वाम—सव्यम्, ऊरुदण्डम्—ऊरु,—सक्थि, दण्ड इव—यष्टिरिव त, समारुरोह—आचक्राम, आश्रितवान् इत्यर्थ, वामोरौ दक्षिणं चरणमवस्थाप्य आसाचक्रे राज्यवर्द्धन इति भाव। अनुनिज्जये नि समयत्वख्यापिका वीरत्वव्यञ्जिका च महासत्त्वपुरुषसाधारणी प्रौढासनमुद्रेयम्।

(१२७) निष्ठुरेति।—निष्ठुर—दृढं यथा तथा, अङ्गुष्ठस्य—पादाङ्गुष्ठस्येत्यर्थं,

धूमलेखो निर्वीरोर्वीकरणाय विमुक्तशिख इव लिलेह मणि-कुट्टिमम् इतर पादपद्म। (१२८) दर्पस्फुटितसरसव्रणो-च्छलितरुधिरच्छटाऽवसेकै शोकविषप्रसुप्तं प्रबोधयन् इव परा-क्रमम् अनुजमवादीत्,—'आयुष्मन्! इदं राजकुलम्, अमी बान्धवा, परिजनोऽयम्, इयं (१२९) भूमिः, भूपतिभुजपरिघ पालिताश्च एता प्रजाः, गतोऽहमद्यैव मालवराजकुल-

कषण—घर्षण भूमौ इति भाव तेन हेतुना निकूणता—निर्विशा उद्गता इति यावत्, धूमलेखा—धूमराजि रजोनिकर इति भाव येन तथाभूत निर्वीरो र्वीकरणाय—पृथ्वी निर्वीरा कर्तुमित्यर्थ विमुक्तशिख —विमुक्ता—विसृष्टा शिखा—ज्वाला येन तथोक्त धीरा किल रोषेण केशसंयमन मलो चापरिभवविरक्तात न कुर्वन्ति इति भाव इतर —वाम इत्यर्थ पादपद्म —चरणकमलम् तथा तेजोवत्तया चापकत्व इति भाव ["वा प्रसि प्रथम" इत्यमरानुशासनात् पद्मशब्दो न पुंलिङ्ग प्रयुक्त। कोषकारसम्मतोऽपि पाल्य पद्मशब्द कवीन्द्रे न क्वापि प्रयुक्त कविसमय न सहृविप्रतिपत्त्यामेन केनाप्यप्रयुक्तानामपयोगेऽपि च दोष अप्रयुक्ताकृत अमाविति इत्यवधेयम्] म कुट्टिम—मणिखचितगृहतल लिलेह—सञ्चषप।

(१२८) दर्पात —दर्पण—क्रोधवशज्ञानतेन सरभस इत भाव स्फुटितेभ्य —स्वयम प्राप्तेभ्य विदीर्णेभ्य इत्यर्थ अत एव सरसेभ्य —आर्द्रेभ्य व्रणेभ्य —क्षतेभ्य भूतपूर्वसङ्ग्राम प्रतियोगिप्राहतप्रसाघातज नतेभ्य इति भाव उच्छलितानां —ऊर्ध्व निर्गच्छतानां रुधिराणां—रक्तानां छटाभि —धाराभ ये अवसेका —आसेचना तै शोकेवा।—शोक —मन्यु एव विष—गरल तेन प्रसुप्त —आच्छन्न इत्यर्थ विमोहं गत इति यावत त पराक्रम—शौर्यमित्यर्थ प्रबोधयन्निव—जागरयन्निव रुधिरसम्पर्कसेचनै अपनीतमोह कुर्वन् इत्यर्थ शोक विषण विगतसंज्ञस्यत पर क्रमस्य प्रत्युज्जीवनार्थ शोणितच्छटाभर अपक्व पराक्रमशो य र अकारीत भाव इस्यते हि विषवमुग्धस्य उपर शीतलजल सेचनमात अनुज इव मन्यप शोके विषत्वारोपण रुधिरच्छटाश्रमनसकल्पारोपात परम्परित रूपकमलङ्कार प्रबोधयन्निवात क्रियोत्प्रेक्षा सङ्कीर्यते।

(१२९) भूमि —देश राज्यमित्यर्थ। नृपतेति —भूपते —राज्ञ पितुरिति भाव भुज —बाहुरेव परिघ —लौहमुद्गरविशेष तेन पालिता — रक्षिता प्रजा, प्रजातपुत्रा इत्यर्थ. स्थिता इति शेष राजकुलाद्दक्रमतत भव

प्रलयाय। (१३०) इदमेव तावत् वल्कलग्रहणम्, इदमेव तपः, आकाशगमनोपायश्च अयमेव, यत् अलब्धाविनीतारिनिग्रहः। (१३१) सोऽयं कुरङ्गकैः केसरिग्रहः केसरिणः, भेकैः करपातः कालसर्पस्य, वत्सकैः बन्दिग्रहो व्याघ्रस्य, अलगर्द्दैः गलग्रहो गरुडस्य, दारुभिः दाहादेशो दहनस्य, तिमिरैः तिरस्कारो रवेः, यो मालवैः परिभवः पुष्पभूतिवंशस्य। (१३२) अन्तरितः तापो

इदम् आश्चर्यं दुष्करमिदमपि स्थितं, तस्मिन्नविनीतम् मनुष्यो रक्षितः यथायथ शासितमनुष्यत्वस्य इति भावः। मालवैः—मालवराजान्वयैः—मालवाधिपानाम्, कुरङ्ग—मृगस्य, [illegible] इत्यर्थः।

(१३०) इदमेव—अविनिश्चयनिश्चयार्थः, वल्कलग्रहणम्—वल्कलधारणम्, ब्रह्मचर्यविशेष इत्यर्थः। तपः—तपश्चरणम्। आकाशगमनोपायः—आकाशगमनसाधनम्। अलब्धः—अप्राप्तः—असिद्धिकम्, अविनीतस्य—दुर्विनीतस्य, शत्रोः, अरिः—शत्रुः, निग्रहः—अपराधनम्, [illegible] इति भावः।

(१३१) सोऽयम्—मालवकृतपरिभव इत्यर्थः, कुरङ्गकैः—मृगशावैः, केसरिणः—सिंहस्य, केसरग्रहः—केशाकर्षणम् [illegible] अनुचितम्। भेकैः—दर्दुरैः, करपातः—हस्तक्षेपः, कालसर्पस्य—कृष्णसर्पस्य [illegible] "करपातस्तु [illegible]" इति [illegible]। वत्सकैः—[illegible], व्याघ्रस्य—शार्दूलस्य [illegible] बन्दिग्रहः—कारागृहप्रवेश [illegible]। अलगर्द्दैः—जलव्यालैः, [illegible] विषहीनसर्पैरिति भावः, ("अलगर्द्दो जलव्यालः" इत्यमरः) गलग्रहः—कण्ठग्रहणम्, कण्ठावमर्दनमित्यर्थः। गरुडस्य—वैनतेयस्य [illegible] इति भावः, दाहादेशः—दाहस्य आज्ञापनम्। तिमिरैः—अन्धकारैः रवेः—सूर्यस्य, [illegible] तिरस्कारः—[illegible] आच्छादनमात्र भावः। [illegible] परिभवः—तिरस्कारः [illegible]। [illegible] पुष्पभूतिवंशस्य मालवैः परिभवः [illegible] इति शेषः।

(१३२) अन्तरितः, अन्तर्हितः, अपसारित इत्यर्थः, तापः, [illegible]

मे महीयसा मन्युना। तिष्ठन्तु सर्वे एव राजानः करिणश्च त्वया एव सार्द्धम्। अयमेको (१३३) भण्डिः अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्" (१३४) इत्यभिधाय च अनन्तरमेव प्रयाणपटहम् आदिदेश।

(१३५) तञ्च तथा समादिशन्तम् आकर्ण्य जामिजामातृवृत्तान्तविज्ञानप्रकोपाध्मानदूयमाने मनसि (१३६) निवर्त्तनादेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः,—"क्षमिव

---

ज्वलनम्। महीयसा—अतिमहता, मन्युना—क्रोधेन। तिष्ठन्तु, सर्वेऽपि इह। राजानः—भूमहीपालमण्डलभूपाः। करिणः,—गजाः। सार्द्धं—सह विपक्षे चेत् राजधानी आक्रान्ता भवेत् तदा तद्रक्षणायेत्याशयः।

(१३३) भण्डिः,—राज्यवर्द्धनस्य मातुलपुत्रः। अयुतमात्रेण—दशसहस्रसङ्ख्यामात्रेण सहितः इति शेषः तुरङ्गमाणाम्—अश्वानां, दशसहस्राश्वारोहिसैन्यसमेतो भण्डिरित्यर्थः। अनुयातु—अनुसरतु, अभिमता परिज्ञाता सेनया परिच्छदस्वरूपतया नियोग, न सहायतायेति निगूढाशयः।

(१३४) इति—इत्थम् अभिधाय—आख्याय अश्वारोहान् विनियोगे परत्र सव्यवस्थात इति सहैव। प्रयाणपटहं—युद्धार्थे यात्रासूचकं वाद्यविशेषम्।

(१३५) तं—राज्यवर्द्धनं तथा—पूर्वोक्तप्रकारं, स्वराजकादिरक्षाविषये समेतस्य हर्षस्य तदेवावस्थानमित्यर्थं समादिशन्तम्—आज्ञापयन्तम्। जामीति।—जामि—स्वसा भगिनीत्यर्थः ("जामिः स्वसृकुलस्त्रियोः" इत्यमरः) जामाता—तनोति [जाया माति इति विग्रहे "नप्तृनेष्टृ—" (उ० २ पा० ९६ सू०) इत्यादिना तृच्] भर्तेति इत्यर्थः तत्र कन्याकापतिसम्बन्धाभावात् तथा, यद्वा—जामिः,—भगिनी तस्याः जामाता—धवः, पतिरित्यर्थः, भगिनीपतिरिति यावत्, ("जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान्" इति मेदिनी) तयोः वृत्तान्तस्य—कारावासोपरमरूपवार्त्तायाः, विज्ञानेन—अवगत्या यः प्रकोपः—प्रबलक्रोधः, तस्य आध्मानेन—आधिक्येन दूयमाने—सन्तप्यमाने तस्मिन् मनसि—चित्ते, चित्तस्य तादृशावस्थायामित्यर्थः।

(१३६) निवर्त्तनादेशेन—निवर्त्तनम्—अनुगमननिवृत्तिः, तस्य आदेशेन—आज्ञया, दूरेति।—दूरम्—अत्यन्तं यथा तथा, प्ररूढा—जाता, प्रणयपीडा—

दीर्घं पश्यति आर्यो मम अनुगमनेन ? (१३७) यदि बाल इति,—नितरां तर्हि न त्याज्योऽस्मि। (१३८) रक्षणीय इति,—भवद्भुजपञ्जरं रक्षास्थानम्। (१३९) अशक्त इति,—क्व परीक्षितोऽस्मि ? संवर्द्धनीय इति,—वियोगः तनूकरोति। (१४०) अक्लेशसह इति,—स्त्रीपक्षे निक्षिप्तोऽस्मि। सुखम् अनुभवतु इति,—त्वया एव सह तत् प्रयाति। महान् अध्वनः

---

प्रादेशमात्र, अभिमानबहु खमिन्धनं यस्य तथाभूत, स्वोदरैकशरणस्य आत्मन स दुःखमीकार्यतादृशाया धातुश्चयाविधौदासीन्यमूलकादीर्घदर्शनात् ज्ञातायधिकाभिलाष इत्यर्थ।

(१३७) यदि बाल,—शिशु, इति—इति हेतोः इत्यर्थः अनुगमने निवर्त्तयसि आर्यो इति शेष, तर्हि—तदा मम बालत्वे सति इति भाव, नितराम्—अतिशयेन, अवश्यमेवेति भाव, न त्याज्योऽस्मि—त्यागयोग्योऽस्मि, भवता इति शेष, बालकं मा परित्यज्य पितृस्नेहीव भवता कुत्रापि न गन्तव्यमिति भाव, सदैव नेतव्योऽहम् इति फलितम्।

(१३८) रक्षणीय,—पालनीय, इति—इति हेतो, चेदिति शेष, तदपि न गन्तव्यमिति भाव, यत भवदिति।—भवत,—तव, भुजपञ्जरं—बाहुपिञ्जर, पञ्जरमध्ये अवस्थितस्य विहगस्येव भयाभावादिति भाव, रक्षास्थानं—शरणास्पदं भवद्भुजपञ्जरे इव स्थितिरेव मम रक्षेति भाव, त्वयि गते को मां रक्षिष्यति ? अत, त्वया सहैव मे गन्तव्यमिति निष्कर्षः।

(१३९) अशक्त—दुर्बल, इति चिन्तयेति चेत ? तत्रोत्तर—क्व—कुत्र, विषये इति शेष, परीक्षितोऽस्मि—समर्थो वा असमर्थो वा इति निरूपितोऽस्मि, भवतेति शेष न कुत्रापि विषये अशक्तोऽहमिति परीक्षितवान् आर्य इति भाव। संवर्द्धनीय—पोषणीय देहस्य पुष्टि सम्पादनीया इत्यर्थ इति, चिन्तयसि चेत वियोग,—भवद्विच्छेद इत्यर्थ, तनूकरोति—कृशीकरोति, निरन्तरं करोति वा, मामिति शेष, त्वद्वियोगात् जीवनसंशये कुतो वर्द्धनमिति भाव।

(१४०) अक्लेशसह,—न क्लेशं सोढुं शक्त इति—चिन्तयसि चेत् ? तदोत्तरं,—स्त्रीपक्षे नारीस्थाने निक्षिप्तोऽस्मि—पातितोऽस्मि, क्लेशासहतया नारीरूपत्वेनाहं भवता परिगणितोऽस्मीति भाव। सुखम्—आनन्दम् अनुभवतु—भुङ्क्ताम्, इति

क्लेश इति,—विरहोऽविषह्यतरः। (१४१) कलत्रं रक्षतु इति,—श्रीस्ते निस्त्रिंशेऽधिवसति। पृष्ठतः तिष्ठतु इति,—तिष्ठति एव प्रतापः। (१४२) राजकम् अनधिष्ठितमिति,—तत् सुबद्धम् आर्यगुणैः। न बाह्यः सहायो महतः इति,—व्यतिरिक्तमिव मां गणयति। प्रलघुपरिकरः प्रयामि इति,—

---

धिगिति चेत्? तत्रोत्तरम्—तत्—दुःखम्, त्वयि गते नाहं सुखेन स्थास्यामि, अहं त्वदनुगमनायैव तव समनुज्ञामिच्छामि इति भावः। क्लेश,—पथः। विरह,—तव विच्छेदः अविषह्यतरः अतिशयेन सोढुमशक्यः दुःसहः, त्वद्विश्लेषक्लेशात् अनुगमनक्लेशः अतीव सुसह इति भावः।

(१४१) कलत्रम्—स्त्रियम्, स्त्रीलोकमित्यर्थः। श्रीः,—लक्ष्मीः स्त्रीति भावः, निस्त्रिंशे—असौ [अधिपूर्वकात् वसतेरधिकरणस्य कर्मत्वानुशासनात् "निस्त्रिंशं" इत्यस्य कर्मत्वापत्तिः अत्र तद्व्यवहारः व्याकरणस्मरणदौर्बल्येन तु-दुष्करत्वरूप दोष विशेषः] अधिवसति—तिष्ठति, [illegible] खड्गबलेनैव तव सुरक्षिता भवति न तत्र मम किमपि उपयोगित्वं सामर्थ्यं वा इति भावः। पृष्ठतः—पृष्ठरक्षणाय इति भावः। प्रतापः—कोषदण्डजं तेजः अरातिपरिभावित्वमनुत्कर्षो वा, तिष्ठति एव येन पृष्ठरक्षकं दूरात् निरस्यन्ते इति भावः, ततश्च न मे कापि आवश्यकता इति फलितम्।

(१४२) राजकम् राजन्यवर्गः, अनधिष्ठितम्—अनाश्रितम्, अनायकमिति यावत् त्वया मदनुगामिना इति शेषः अनायत्तमापद्यतीति भावः इति विचाद्यते चेत्? तत्रोत्तरम्—तत्—राजकम् आर्यगुणैः,—आर्यस्य—भवतः इत्यर्थः गुणाः,—शौर्यदाक्षिण्यादयः तैः सुबद्धम्—सुसंयतम् अतिशयेन वशीभूतमिति यावत्, इत्यानुरागरूपाभ्युपगतप्रतापसमवायस्थतया परिभवचेतनायदापि न यास्यति इत्याशयः। महतः—महानुभावस्य, बाह्यः,—बहिः स्थितः सेवक इत्यर्थः सहायः—सहकारीत्यर्थः, न, उपयुज्यते इति शेषः स्वेनैव सर्वार्थसाधनादिति भावः, इति—इत्युच्यते चेत्? तत्रोत्तरम्—व्यतिरिक्तमिव—भिन्नमिव अनात्मीयमिव, मां गणयति विचारयति, आर्यः इति शेषः, नाहम् आर्याद् भिन्नः, तवैवात्मभूत इति भावः। प्रलघुपरिकरः—स्वल्पपरिच्छदः, स्वल्पपरिजन इति यावत्, आडम्बराधिक्ये गमनविघ्नादिति भावः, प्रयामि—गच्छामि, इत्यादिश चेत्

पादरजसि कोऽतिभार. ? (१४३) द्वयोः गमनम् असाम्प्रतमिति,—माम् अनुगृहाण गमनाज्ञया। कातरो भ्रातृस्नेह इति,—सदृशो दोष:। (१४४) का इयम् आत्मम्भरिता भुजस्य ते, यत् एकाकी क्षीरोदफेनपटलपाण्डरम् अमृतमिव यशः पिपासति ? (१४५) अवञ्चितपूर्व्वोऽस्मि प्रसादेषु।

तवोत्तर —पादरजसि—चरणधूलौ, तवांदश मयि इति भाव, अतिभार —गुरुत्वबोध इति यावत्, पादसंसक्त रज यथा नातिभारभूत भवति, तद्वत् अहमपि ज्ञातव्य त्वयेति भाव ।

(१४३) द्वयो,—उभयो भ्रात्रोरिति भाव । असाम्प्रतम्—अयुक्त, नगरस्य रक्षिअभावादिति भाव । अनुगृहाण—अनुकम्पस्व, मामेव गमनाय अनुमन्यस्व, त्वमिहैव तिष्ठ इति समुदितवाक्यार्थ । उत्तरमिदम् आत्मन एव मायनिकाभियानप्रार्थनरूपमित्यवधातव्यम । एतेन सिंहासनादिरक्षा भवत्प्रतापेन सुसाध्या, तत्र हि विपक्षनिग्रह ममैवानायासलभ्य इति व्यज्यते। कातर —भीत, विपदाशङ्कया आकुल इत्यर्थ, विपत्सङ्कुल रणक्षेत्रे त्वां नैव विसृजामि इति चेत् इति भाव सदृश —तुल्यसम्बन्धवत सोदरद्वयस्य इत्यर्थं, भावाभावयो उभयत्र समानसुखदु खदायकत्वात इति भाव, यद्वा,—सदृश,—तुल्य दोष —दूषणम, अनिष्टशङ्का इत्यर्थ, मयि आतरि जहात तव यादृशी दोषाशङ्का त्वयि भ्रातर्यपि सहजभक्तिभावात् ममापि तादृशी एव अनिष्टाशङ्का इति भाव ।

(१४४) [ "का इयम्" इत्यत्र "का चेयम्" इति पाठान्तरम् ]। आत्मम्भरिता —स्वार्थैकपरतेति भाव । [ "फलेग्रहिरात्मम्भरिश्च" (३।२।२६ पा०) इत्यात्मनो नुमागम भृञ इन निपात्यते ] क्षीरोदेति।—क्षीरोदस्य क्षीरसागरस्य फेनपटल—फेनराशि तद्वत पाण्डुर—शुभ्र यश,—कीर्त्ति, अमृतमिवातिमनोहरमिति भाव, एकाकी—एक एव, पिपासति ?—पातुमिच्छति ? अनुजीविजन वञ्चयित्वा एकाकी एवाहं तादृशयशःपीयूषं पास्यामि इति पिपासुता तव भुजस्य अतीव स्वार्थपरता इत्यहो ! ईदृशी स्वार्थपरता तु नोचिता इति भाव ।

(१४५) भवत्वेकाकिन एव पिपासुता. तत्र को दोष ? इत्यत्राह, अवञ्चितेति।—प्रसादेषु—अनुग्रहेषु अवञ्चितपूर्व्व,—अप्रतारितपूर्व्व, प्राक त्वया कदाऽपि न प्रतारित इत्यर्थ, इत पूर्वं सदैव तव प्रसादमुपभुज्य कृतार्थो.भवम्, इदानीमपि तदधिकारात् मा वञ्चयस्व इति भाव ।

तत् प्रसीदतु आर्य्यः, नयतु मामपि" इत्यभिधाय क्षितितल-विनिहितमौलिः पादयोः अपतत्।

(१४६) तम् उत्थाप्य पुनः अग्रजो जगाद,—"तात! किमेवम् अतिमहाराज्यपरिग्रहेण गरिमाणम् आरोप्यते भवान्? अतिलघीयानपि अहितः? (१४७) हरिणार्थम् अतिक्षेपणः सिंहसम्भारः। तृणानाम् उपरि कति कवचयन्ति आशुशुक्षणयः? अपि च तव (१४८) अष्टादशद्वीपाष्टमङ्गलक-मालिनी मेदिनी अस्ति एव विक्रमस्य विषयः। न हि कुल-

---

(१४६) तम्—हर्षम्, उत्थाप्य—उत्तोल्य। अग्रजः—ज्येष्ठः, राज्यवर्द्धन इत्यर्थः। तात!—वत्स! अतीति।—अतिमहान्—भूयान् इत्यर्थः आरम्भः,—उद्योगः, तस्य परिग्रहणम्—आश्रयणं तेन अतिलघीयानपि—अतिक्षुद्रोऽपि, अहितः—शत्रुः, गरात्—बहुमानमित्यर्थः, गरिमाणमिति भावः, गरिमाणम्—गौरवम्, आरोप्यते—नीयते, त्वयेति शेषः, महारम्भेण वधुत्वे महत्प्रतिभटता समारोपिता भवेत् इति निगूढाशयः।

(१४७) हरिणार्थे—मृगवधार्थमित्यर्थः, सिंहसम्भारः,—सिंहस्य—मृगेन्द्रस्य, सम्भारः—विविधप्रयास इत्यर्थः अतिक्षेपणः,—अतिव्यर्थः, क्षुद्रहरिणवधार्थं सिंहस्य आयासग्रहणम् यथा अत्यावश्यक निष्प्रयोजनञ्च तथा अतिलघुमानव-विनाशाय उद्यमोऽपि अनावश्यक निष्प्रयोजनञ्चेति निष्कर्षः। कति—कियन्मात्राः ["किम—" (५।२।४१ पा०) इत्यादिना सङ्ख्यापरिमाणार्थे डतिप्रत्ययः] आशुशुक्षणयः,—अग्नयः, ("अग्निर्वैश्वानरो वह्निः। शिखावानाशुशुक्षणिः॥" इत्यमरः) कवचयन्ति—सन्नह्यन्ति, दाहार्थमिति शेषः, स्फुलिङ्गमात्रसंयोगेनैव दह्यानि भवन्तीत्यर्थः, अनल्पेन आयासेनापि क्रियन्ते, अत्र तृणवल्लघुमानवविनाशाय विपुलायोजनं तीव्रतेजसस्तेऽ भवतश्च निरर्थकमेवेति भावः।

(१४८) अष्टादशेति।—अष्टादशद्वीपान्येव अष्टमङ्गलकानि—कण्ठाभरणीपि माङ्गल्यानकारि भूषणम् इति भावः, तेषां माला—श्रेणिः विद्यतेऽस्याः तथाभूता, यद्वा—अष्टादशद्वीपानि, "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः॥" इत्युक्तानि अष्टमङ्गलकानि च, तेषां माला विद्यते यस्याः तादृशी। विषयः—स्थानम्, अष्टादशद्वीप अष्टमङ्गल-

(१५१) दुर्निवारायाम् अस्यां विपक्षचपलक्षुधि क्षुभितायां क्षम्यताम् अयम् एकाकिनः कोपकवल एकः। तिष्ठतु भवान्" इत्यभिधाय च तस्मिन् एव वासरे निर्जगाम अभ्यमित्रम्।

अथ (१५२) तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च भगिनीपतौ, मृतायाञ्च मातरि, संयतायाञ्च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कायद्वयमपि एकाकी कालं तम् अनैषीत्। (१५३) अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः

---

मोचम् इति राज्यवर्धनवाक्याशयः। सन्दर्भेऽस्मिन् हरिणाद्यर्थे सिंहशरभादीनाम् अप्रस्तुतानां समुपन्यस्तानां प्रस्तुते ममारिनिधनरूपे एव कार्ये पर्यवसानात् निमित्तकार्य-व्यापारमलत्कलितनिबन्धनाऽप्रस्तुतप्रशंसाऽलङ्कृति साश्वातिवस्तुपमया सङ्कीर्णत्वमाभास्यम्।

(१५१) दुर्निवारायाः—कथमपि निवारयितुमशक्यायाः, क्षुभितायाम्—उद्दीप्तायां, विपक्षचपलक्षुधि—शत्रुविध्वंसनरूपायां क्षुधायाम्, एकाकिनः,—अद्वितीयस्य, मम इति शेषः, एकः,—एकमात्रः कोपकवलः,—क्रोधग्रासः, क्षम्यताम्—सह्यताम्, एकमात्रं ममैव कोपकवलविषयी शात्रवकुलपातनं भवतु, न तव सममभ्यावश्यकम् आकलयामि इति भावः। वासरे—दिवसे। अभ्यमित्रम्—अभिशत्रु, शत्रुं प्रति इत्यर्थः। ["लक्षणेनाभिप्रती—" (२।१।१४ पा०) इत्यादिना समासः]।

(१५२) तथा—युद्धायमिति यावत्। उपरते—मृते। भगिनीपतौ—ग्रहवर्मणि इत्यर्थः, ["भगिनीपतौ" इत्यत्र "जामातरि" इति पाठेऽपि ■ एवार्थः, व्याख्यानात् ज्ञेयः। दुहितृपत्यर्थे प्रयुक्तस्य जामातृशब्दस्य भगिनीपत्यर्थे प्रयोगस्य यद्यपि न समीचीनता तथाऽपि असाधारणपारम्पर्यकतया लोकव्यवहारदर्शनात् तथाविधप्रयोगो न दोषाय इति समाधानीयम्, ज्येष्ठभ्रातुः पितृतुल्यत्वात् तथाविधप्रयोगो वा इति] प्रोषितजीविते—गतासौ इत्यर्थः। स्वसरि—भगिन्यां राज्यश्रीनाम्न्यां, संयतायां—काराबद्धायाम्। स्वयूथभ्रष्टः—निजसङ्घच्युतः, वन्यः करीव—आरण्यगज इव। अनैषीत्—अतिवाहयामास।

(१५३) अतिक्रान्तेषु—अतीतेषु। तथैव—प्रागनुभूतवदेवेत्यर्थः, भ्रातृगमनपथे यद् दुःखमनुभूतं, तेनैव दुःखेनेत्यर्थः, भ्रातृगमनदुःखासिकया—भ्रातुः,—सोदरस्य, गमनं—प्रयाणं, स्वपरित्यागेन इति भावः, तेन या दुःखासिका—

त्रिभागशेषायां त्रियामायां यामिकेन गीयमानाम् इमाम् आर्यां शुश्राव,—

द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ २ ॥

(१५४) तां च श्रुत्वा सुतराम् अनित्यताभावनया दूयमानः

---

दुःखावस्थाम् तेन, दर्शयति।—ईषत्,—अल्पम् इत्यर्थः, जागर,—दीर्घजागरणं यस्य तथाभूतः, त्रिभागेति।—त्रिभाग,—तृतीय अंशः, चरमप्रहर इत्यर्थः, शेष,—अवशिष्टं यस्याः तथाभूतायां, त्रियामायां—रात्रौ "त्रियामा रजनी प्रोक्ता त्यक्ताद्यन्तचतुष्टयम्" इति समयनिर्णयकाराः, यामिकेन—प्रहरिणा प्रहरपालकेन इति यावत्। इमां—वक्ष्यमाणामित्यर्थः।

यामिकेन मङ्गलार्थं पठितं विधिविलसितवर्णनात्मिकां राजकुलस्य भावि अशुभं सूचयन्तीम् आह, द्वीपेति।—विधिः,—दुर्दैवम् इति यावत्, पवन,—प्रतिकूलवायुरिति भावः, पोतमिव—यानमिव, अर्णवयानमिव इत्यर्थः, ["इविन्दयिण्—" (उ० ४ पा० ५६ सू०) इति पुनाते पवते इत्यस्य वा तन्] द्वीपेषु—जलमध्ये स्थितेषु भूभागविशेषेषु, ("द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरानुशासनात्) अन्तर्जलस्थ स्थलभागार्थकतया उभयतः अम्बुवलितभूभागेषु इत्यर्थः, ["द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति सूत्रेण अपस्य ईत्, तथा हि, द्विर्गता आपो यस्मिन्निति शेषम्] तथा समरेषु घट्टादिषु वा इति भावः, उपगीता—कीर्तिता, गुणाः,—शौर्यदाक्षिण्यादयः, अथ च रज्जवः, यस्य तथाभूतमपि समुपार्जितरत्नराशिसारमपि—समुपार्जित —पराक्रमेण जयेन लब्धं, वणिग्व्यापारितत्वात् लब्धमपि अर्जितं इत्यर्थः, रत्नानां—मणीनां समूहानां, सारः,—उत्कृष्टांशः, उभयत्रापि समानं येन तथाविधमपि पुरुषं—नरश्रेष्ठमिति यावत्, अकाण्डे—सहसा, निपातयति—विनाशयति। एतेन राज्य-मण्डलस्य मरणं सूचितम्। इह पोतेन सह पुरुषस्य साम्यबोधनात् उपमा। द्वीपोपगीतगुणादिरूपविशेषणस्य श्लिष्टत्वात् श्लेषसङ्कीर्णा, अकाण्डे इत्यादिना उक्त्या राज्य-मण्डलस्यापि पतनम् आशु भविष्यति इत्यलङ्कारोत्थापितं वस्तु व्यङ्ग्यम् इति सङ्क्षेपः। आर्या वृत्तम् ॥ २ ॥

(१५५) ताम्—आर्याम्। सुतराम्—अतिशयेन, अनित्यताभावनया—

हृदयः प्रदोषभूयिष्ठाया क्षपाया क्षणमिव निद्राम् अलभत; स्वप्ने च अभ्रंलिह लोहस्तम्भं भज्यमानम् अपश्यत्। (१५५) उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत, अचिन्तयच्च,—"किं नु खलु माम् एवम् अमी सततम् अनुबध्नन्ति दुःस्वप्नाः? स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणम् अदक्षिणम् अक्षि। (१५६) सुदारुणाश्च अक्षुद्रक्षितिपक्षयम् आचक्षाणा क्षणमपि न शाम्यन्ति पुनरुत्पाताः। प्रत्यक्षं (१५७) राज्ञः अविकल-

---

समारोऽयम् अनित्य, तेन हि अवस्था सर्व नियतमेव जराव्याध्यादिभि पीड्यन्ते, सति च महापुरुषा अकाल कालकवलिता भवन्ति, नास्ति तैषामियत्ता, न केचिदपि अत्र स्थिरा इत्यादि चिन्तया, धूयमानहृदय —सन्तप्यमानमानस, प्रदोषभूयिष्ठाया—प्रायेण अय मतायामित्यर्थ अल्पत्वमेवावशिष्टायामिति भाव, क्षपाया—रात्र्या, क्षणमिव—अल्पकालमिव, [ व्याप्त्यर्थं द्वितीया ] इवशब्दोऽत्र वाक्यालङ्कारे। अभ्रंलिह —गगनचुम्बिनम, अत्युन्नतमित्यर्थ, मेघमार्गभेदितया गगनस्पृशमति यावत। [ "वहाभ्रे लिहः" ( ३।२।३२ पा० ) इति खश्प्रत्यय ] भज्यमान —खण्ड्यमान द्विधा क्रियमाणमित्यर्थ, केनापि इति शेष। एतद्धि दुःस्वप्नदर्शन भाव्यनिष्टसूचकमिति ज्ञेयम्।

(१५५) उत्कम्पमानहृदय —वेपमानवक्षा इत्यर्थ। प्रत्यबुध्यत—अजागः। किं नु—वितर्के। एवम्—अनेन प्रकारेण। अनुबध्नन्ति—अनुसरन्ति। दिवानिशम्—अहोरात्रम, अकल्याणेति।—अकल्याणम—अशुभम, आख्यान—कथन, तत्र विचक्षण—निपुणम, अशुभसूचकमित्यर्थ, अदक्षिण—वाम, प्रतिकूलञ्च, अक्षि—चक्षुः, स्फुरति च—स्पन्दते च।

(१५६) पुन,—पक्षान्तरे, अपि चेत्यर्थश्च वा सविशेषपर्यालोचनानुभूतत्वात् पितृपरलोकवासात् प्राक् पर्यवेक्षणाच्च इति ज्ञातव्य सुदारुणा,—अतिभयङ्करा, अक्षुद्रेति।—अक्षुद्रस्य—महत, श्रेष्ठस्य इत्यर्थ, क्षितिपस्य—राज्ञ, क्षय,—नाशम, आचक्षाणा,—कथयन्त, सूचयन्त इत्यर्थ, उत्पाता,—उत्पतन्ति—अशुभसूचनार्थम् आविर्भवन्तीति तथोक्ता, अशुभनिदानभूता भूकम्पोल्कापातादय इत्यर्थ न शाम्यन्ति—न विरमन्ति।

(१५७) राज्ञ,—सिंहिकासुत, अविकलेति।—न विकल,—विपन्न;

(१६७) जीवितधारणलज्जया इव अवनतमुखं, नासावंशस्य अग्रे ग्रथितदृष्टिं, (१६८) दुःखदूरप्ररूढलोम्ना मूकेनापि मुखेन (१६९) स्वामिव्यसनम् अविच्छिन्नैः अश्रुबिन्दुभिः विज्ञापयन्तं, कुन्तलं नाम बृहदश्ववारं राज्यवर्द्धनस्य प्रसादभूमिम् अभिजाततमं ददर्श। दृष्ट्वा च (१७०) जाताशङ्कः चक्षुषि सलिलेन, मुखशशिनि श्वसितेन, हृदये हुताशेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवणसमये सममिव सर्व्वेषु अङ्गेषु अगृह्यत लोकपालः।

---

(१६७) जीवितेति।—जीवितस्य—प्राणानां, धारणं—रक्षणमित्यर्थं, तेन या लज्जा—त्रपा तया इव, प्रभोर्जीवनरक्षणासामर्थ्यात् तस्मिन् विपन्नेऽपि स्वजीवनापरित्यागाद्धेति वा भावः। नासावंशस्य अग्रे—नासिकाग्रभागोपरिभागे, ग्रथितदृष्टिं—निबद्धचक्षुषं, महालज्जया किमप्यन्यदपश्यन्तमिति भावः।

(१६८) दुःखेति।—दुःखेन—क्लेशेन हेतुना, दूरम्—अत्यन्तं, प्ररूढानि—जातानि क्षौरकर्माकरणात् प्रवर्द्धितानि इति भावः, लोमानि—श्मश्रुराजयः यस्मिन् तेन ["दुःखदूरप्ररूढलोम्ना" इत्यत्र "दुःखदूरप्ररूढरोम्णा" इति पाठेऽपि स एवार्थः, [illegible] ] मूकेनापि—वाग्व्यापाररहितेनापि, किमपि अवदतापीति भावः।

(१६९) स्वामिव्यसन—स्वामिनः—प्रभोः, राज्यवर्द्धनस्येति यावत्, व्यसनं—विपत्तिं, विनाशम् इत्यर्थं, ("व्यसनं विपदि भ्रंशे" इत्यमरः)। अविच्छिन्नैः—अविरलप्रवृत्तैः धाराकारैरित्यर्थं। बृहदश्ववारं—महान्तमश्वारोहिसैनिकनियन्तारं, भूतपूर्वप्रकृष्टरणकौशलदर्शनजनितपरितोषप्राप्ताधिकारमित्याशयः। प्रसादभूमिं—कृपापात्रम्। अभिजाततमं—महाकुलसम्भूतम्।

(१७०) जाताशङ्कः—भीतः। सलिलेन—जलाधिपतिना वरुणेन इत्यर्थं, सलिलस्य जडतया कस्यचिद्ग्रहणस्यासम्भवात्, अन्यमत्या स्वाधीश्वरदिक्पुरुषप्रेरणादिव चक्षुषि अङ्गीकृता इति सङ्क्षेपः, अविच्छिन्नधाराभिरश्रुभिः रुरोद इति तात्पर्यम्। श्वसितम्—निश्वासवायुना। हुताशेन—वह्निना। उत्सङ्गे—क्रोडे, देहे इति भावः, भुवा—पृथिव्या। दारुणेति।—दारुणस्य—भीषणस्य, कठोरस्येत्यर्थं, अप्रियस्य—अशुभवार्तायाः, श्रवणसमये—श्रवणकाले, सममिव—युगपदिव। लोकपालः,—राजा, हर्ष इत्यर्थं। ["लोकपाल" इत्यत्र "लोकपालः" इति

(१७४) रोषाग्निम् उद्वमन्, अनवरतस्फुरितेन पिबन् इव सर्वतेजस्विनाम् आयूंषि रोषनिर्भुग्नेन दशनच्छदेन, (१७५) लोहितायमाननोचनालोकविक्षेपैः दिग्दाहान् इव दर्शयन्, रोषानलेन अपि (१७६) असह्यसहजशौर्य्योष्मदहनदह्यमानेन इव वितन्यमानखेदसलिलशीकरासारदुर्दिनः, (१७७) स्वावयवैः अपि अदृष्टपूर्वप्रकोपभीतैः इव कम्पमानैः उपेतः, हर इव (१७८) कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः,

---

द्योतक इति ज्ञेयम्, अन्यथा उत्तमप्रकृतिकधीरोदात्ते कोऽपि विरोधारोप स्यात् इत्यवधातव्यम्।

(१७४) रोषाग्निं—क्रोधानलम्, उद्वमन्—उद्गिरन्। अनवरतस्फुरितेन—अविरतस्पन्दितेन, रोषनिर्भुग्नेन—क्रोधदष्टेन इत्यर्थ क्रोधवक्रीकृतेन वा, दशनच्छदेन—ओष्ठेन, सर्वतेजस्विना—सकलप्रतापवता, प्रतिपक्षवीरसमूहानामित्यर्थ, आयूंषि—जीवितकालान्।

(१७५) लोहितायमानेति।—लोहितायमानयो,—रक्ततामापद्यमानयो,लोचनयो',—नयनयो, आलोकविक्षेपै,—प्रभाविसरणै। दर्शयन्—प्रकटयन्।

(१७६) असह्येति।—असह्यस्य—सोढुमशक्यस्य, सहजस्य—स्वाभाविकस्य, शौर्य्यस्य—वीर्य्यस्य उष्मा—सन्ताप, अस्य इत्यस्य स एव दहन,—अग्नि, तेन दह्यमान,—प्रज्वल्यमान तेन इव, वितन्यमानेति।—वितन्यमान,—विस्तीर्य्यमाण, खेदसलिलाना—घर्म्मजलाना, शीकरासार,—बिन्दुधारासम्पात एव, दुर्दिन—वर्षा यस्मिन् तथाभूत, स्वय क्रोधानलोऽपि तस्य वीर्य्यवह्निना दह्यमान स्वदाहज्वाला-शमनार्थं तस्मात् खेदसलिल मिशाय्यं तेन आत्मान सिञ्चति इव इति भाव, इत्यते च लोके दह्यमान जलेनात्मानम् अभिवर्षति इति खेदाप्लुतकलेवरो जात इति निष्कर्ष।

(१७७) स्वावयवै,—निजाङ्गै, अदृष्टेति।—अदृष्टपूर्वात्—पूर्व्वमदृष्टात कदापि क्रोधाकरणादिति भाव, प्रकोपात्—प्रबलरोषात्, भीता,—शङ्किता ते इव, उपेत,—युक्त, क्रोधकम्पितकलेवर इत्यर्थ।

(१७८) कृतेति।—कृत,—जनित इत्यर्थ, भैरव,—भीषण, आकार,—मूर्त्ति, अन्यत्र—कृत,—धृत, भैरवस्य—शम्भुविभेदस्य, आकार येन तथाभूत। प्रकटितेति।—प्रकटित—प्रकाशित, नरसिंहस्य—नर सिंह इव इत्युपमितसमासात्

(१७८) सूर्यकान्तशैल इव अपरतेजःप्रसरदर्शनप्रज्वलित, (१८०) उदयदिवस इव उद्गतद्वादशदिनकरदुर्निरीक्ष्यमूर्तिः, महोत्पातमारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव (१८१) विवर्द्धमानविग्रहोत्सेध, महाऽऽशीविष इव दुर्नरेन्द्राभिभवरोषित, (१८२) पारिक्षित इव सर्वभोगिदहनोद्यत,

प्रायशो नर नरसिंह तस्य, (तथा चामरः—"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इति) यद्वा—वपुषि नर मुखे च सिंह इव तस्य, नृसिंहाकारमूर्तिभेदस्य च, [नीलोत्पलादित्वत् समासः] रूपम्—आकार, येन तथोक्त।

(१७९) सूर्यकान्तशैल इव—सूर्यकान्तमणिमयपर्वत इव, अपरेति।—अपरस्य—विपक्षस्य सूर्यस्य च इति भाव, तेजसः—प्रतापाग्नेः, प्रभायाश्च, प्रसरस्य—विकासस्य, दर्शनेन—अवलोकनेन, प्रज्वलित,—प्रदीप्त, सूर्यकान्तमपि सूर्यकिरणसम्पर्केण प्रज्वलति इति प्रसिद्धं।

(१८०) उदयदिवस इव—कल्पान्तदिनमिव, ("उदय उन्नतौ उद्गमे" इत्यमरः)। उद्गतेति।—उद्गतानाम्—उदयं गतवता, द्वादशानाम्—द्वादशसङ्ख्यकाना दिनकराणां—सूर्याणामिव, दुर्निरीक्ष्या—निरीक्षितुमशक्या, तीव्रेति भाव, मूर्ति,—आकार यस्य तथाभूत। महोत्पातमारुत इव—प्रलयकालवात इव, सकलेति।—सकलानाम्—सर्वेषा, भूभृताम्—राज्ञा, पर्वतानाञ्च, कम्पकारी—वेपथुकृत्, भयात् सञ्चालकश्चेति भाव।

(१८१) विवर्द्धमानेति।—विवर्द्धमान,—विशेषेण वृद्धिं गच्छन्, क्रोधेन उन्नमनेन च इति भाव, विग्रहस्य—सङ्ग्रामस्य, देहस्य च, उत्सेध—उदयोग इति भाव, उच्छ्राय यस्य तथाभूत। महाऽऽशीविष इव—महान् भुजङ्ग इव दुर्नरेन्द्रेति।—दुर्नरेन्द्रस्य—दुर्विनीतस्य राज्ञ, गौडाधिपतेः इत्यर्थं अनभिज्ञस्य विषवैद्यस्य च, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी) अभिभवेन—पराभवेन, भावचपलेन, गारुडादिमन्त्रप्रयोगरूपेण च इति भाव, रोषित,—कोपित।

(१८२) पारिक्षित इव—परिक्षित नाम्न पुत्रात् पारिक्षित,—जनमेजय स इव, ["तस्यापत्यम्" (४।१।९२ पा०) इत्यण्] सर्वेति।—सर्वेषा—समस्ताना, भोगिनाम्—सुखभोगरतानां परिपन्थिराजानामसर्वं, सर्पाणाञ्च, ("भोगी भुजङ्गमेऽपि स्यात् ग्रामपाले नृपे पुमान्" इति मेदिनी) दहने—भस्मीकरणे, प्रज्वालने

(१८३) वृकोदर इव रिपुरुधिरपानतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, (१८४) पूर्व्वागम इव पौरुषस्य, उन्माद इव मदस्य, (१८५) आवेग इव अवलेपस्य, तारुण्यावतार इव तेजसः, सर्व्वोद्‌योग इव दर्पस्य, (१८६) युगागम इव यौवनोष्मणः, राज्याभिषेक इव समररसस्य, नीराजनदिवस इव असहिष्णुतायाः परां भीषणताम् अयासीत्।

---

सर्पमेधयज्ञेन च इति भाव, उपात,—प्राप्त। पुरा पितरि परिक्षिति तक्षकेण नागेन दष्टे मृते च सति क्रुद्धो जनमेजय सर्पकुलजिघांसया सर्पमेधयज्ञमन्वतिष्ठत् इति वार्त्ता भारतीया अत्र अनुसन्धेया।

(१८३) वृकोदर इव—भीमसेन इव, रिपुरिति।—रिपौ,—शत्रौ, कौरवाधिपस्य द्रौपद्या वेण्या कर्षकस्य दुःशासनस्य च इत्यर्थः, रुधिरपाने—रक्तपाने, तृषित,—तृष्णान्वित, अनुरागी इति यावत्। ["रिपुरुधिरपानतृषित" इत्यत्र "रिपुरुधिरतृषित" इति पाठे,—रिपौ रुधिराय—रक्तपानायेत्यर्थं, तृषित,—पिपासित, जाताकाङ्क्ष इत्यर्थं]। सुरगज इव—ऐरावत इव, प्रतिपक्षेति।—प्रतिपक्षस्य—शत्रो, वारणाय—दमनाय, प्रतिपक्षवारणाय—प्रतिद्वन्द्विगजाय च, प्रधावित,—चलित। अत्र भूयसा साम्यप्रदर्शनात् श्लिष्टा मालोपमाऽलङ्कार।

(१८४) पौरुषस्य—पुरुषकारस्य, पराक्रमस्य इत्यर्थं, पूर्व्वागम इव—प्रथमोपस्थिति इव, प्रथम मूर्त्तिमान् पराक्रम इव इत्यर्थं। मदस्य—सौभाग्ययौवनादिजनितावलेपस्य, उन्माद इव—उन्मत्तभाव इव समुद्गतो मद इव इत्यर्थ।

(१८५) अवलेपस्य—गर्व्वस्य, आवेग इव—त्वरा इव, विग्रहवान् गर्व्वप्रसर इव इत्यर्थं। तेजस,—प्रतापस्य, तारुण्यावतार इव—यौवनाविर्भाव इव, अभिनवोत्पन्न मूर्त्तिमान् प्रताप इव इत्यर्थं। दर्पस्य—अहङ्कारस्य सर्व्वोद्‌योग इव—पूर्णोद्यम इव, सर्वथा समुद्यतस्य मूर्त्तिमतो दर्पस्य प्रयत्नसह इव इत्यर्थं।

(१८६) यौवनोष्मण —यौवनस्य—तारुण्यस्य, उष्मा—उत्ताप तस्य, युगागम इव—नवयुगावतार इव, देहधारी यौवनगर्व्व इवेत्यर्थं। समररसस्य—सङ्ग्रामानुरागस्य, ["समररसस्य" इत्यत्र "रणरसस्य" इति पाठेऽपि स एवार्थ] राज्याभिषेक इव—राजकर्म्मणि अभिषेचनमिव, नवे राज्येऽभिषिक्त सङ्ग्रामरस इव कायवान् इत्यर्थं। असहिष्णुताया,—अक्षमाया, शत्रुनिधने कालविलम्बासहनशीलताया: इत्यर्थं, नीराजनदिवस इव—शान्तिकर्म्मविशेषवासर इव तनुमान् इन्द्राम्य, रघो

अवादीच्च,—(१८७) "गौडाधिपम् अपहाय कः तादृशं महापुरुषं तत्क्षण एव (१८८) निर्व्याजभुजवीर्यनिर्जित-समस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिः ईदृशेन (१८९) सर्वलोकविगर्हितेन मृत्युना शमयेत् आर्य्यम् ?

---

युद्धयात्राकाले नीराजना क्रियते इति व्यवहारः, विजिगीषो यात्राकाले तद्दिने यथा शौर्यं दृश्यते, तादृशीव इत्यर्थः, परा—महती, भीषणता—भयङ्करताम्। इह बहूनामनुप्रेक्षितानाम् एकस्मिन् वस्तुनि सम्बन्धवत्त्वात् यथायथं जातिदृश्यगुणकपीमेषा, स्नेहसलिलमोक्षणसारेण दुर्दिनासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, अत भैरवाकारादिविशिष्टपदार्थयोगात् श्लेष इति, क्रोधोत्साहादय अयज्जविप्रकानुरागाङ्ग-भूता इति रसाभासः, एतेषां पारस्परिकाश्रयाश्रयिभावेन स्थिततया सङ्करः, बहुरत्न-कुटीयलौन्दर्यवत् चमत्कृत्यतिशयपोषक इति सङ्क्षेपः।

(१८७) गौडाधिप—गौडाड्नामधेयम्, अपहाय—परित्यज्य, तं विना इत्यर्थः। तत्क्षण एव—तदानीमेव, दृष्टिपातक्षणे एव इत्यर्थः, आयास विनैवेति भावः।

(१८८) निर्व्याजेति।—निर्व्याजेन—अकपटेन, कूटव्यवहारविमुखेन इति भावः, भुजवीर्येण—बाहुबलेन निर्जितं—पराभूतं समस्तं—सकलं, राजकं—राजन्यवर्गः, एकत्र,—बाल्यादिप्रतिपक्षराजा, अन्यत्र,—दुर्योधनादिराजगणः येन तथाभूतं, मुक्तशस्त्रं—त्यक्तायुधं निरस्त्रमित्यर्थः युद्धोपरमात् पुत्रशोकाच्च इति भावः कलशयोनिमिव—कुम्भयोनिमिव द्रोणाचार्यमिव इत्यर्थः ("कुम्भयोनिरगस्त्ये स्याद्वसिष्ठे द्रोणके पुमान्" इति मेदिनी) कृष्णवर्त्मप्रसूतिः,—कृष्णस्य—कृष्णवर्णपापस्य, अन्यायस्य इत्यर्थः, वर्त्म—मार्गः दुराचार इत्यर्थः, तस्य प्रसूतिः—योनिः, उत्पत्तिहेतुरित्यर्थः, ("स्त्रियां क्तिन्" (३।३।९४ पा०) इति क्तिन्) अन्यत्र—कृष्णवर्त्मा—वह्निः, ("कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे" इति मेदिनी) प्रसूतिः—योनिः यस्य सः, यज्ञाग्निसमुद्भूतः धृष्टद्युम्न इत्यर्थः, कुत्रचित् कारणात् द्रोणाचार्येणावमानितेन द्रुपदेनानुष्ठितस्य यज्ञस्य फलभूततया द्रोणघातकः होमकुण्डात् उत्थित असौ इत्यामनन्ति पौराणिकाः।

(१८९) सर्वलोकविगर्हितेन—सज्जननिन्दितेन, विश्वासघातपूर्वकमुपायं हननादिति भावः, मृत्युना—मरणेन, कूटधर्मयुक्तेन इति भावः, शमयेत् ?—निर्वापयेत् ? लोकान्तरं नयेत् ? इत्यर्थः, नीचाशय विश्वासहन्तारं गौडाधिपं विना इह भूतले पापकारी कोऽपि नास्ति इति समुदितार्थः। अत्र स्फुटावगतं निःशङ्कोक्त

( १८० ) अनार्य्यञ्च तं मुक्त्वा भागीरथीफेनपटलपाण्डुराः केषां ( १८१ ) मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृतिकृतो न कुर्य्युः आर्य्यशौर्य्यगुणाः पक्षपातम् ? ( १८२ ) कथमिव

---

पुराणमसमनुपन्यस्यते, तथा हि—पुरा द्रोणेन निर्जितः पञ्चालाधिपतिर्द्रुपदः तत्कृतावमाननाप्रतिक्रियार्थं द्रोणनाशनं यागमन्वतिष्ठत्, सम्पूर्णे च यज्ञे यज्ञकुण्डात् सकवच पुरुष एक कन्या चैकापरा उदतिष्ठताम्, स च पुमान् धृष्टद्युम्न कन्या च द्रौपदीति नाम्ना विख्यातौ बभूवताम्। ततश्च प्रवृत्ते कुरुक्षेत्रसमरे सेनापतिना द्रोणाचार्य्येण महता रणेन पाण्डवसैन्ये हन्यमाने हरे कृष्णेन प्रेरितो युधिष्ठिर अनिच्छन्नपि "अश्वत्थामा हत" इति उच्चै "इति गज" इति च अनुच्चै समवादीत। स च "इति गज" इति वाक्यस्य मृदुस्वरेण उच्चरितत्वात् श्रोतुमशक्नुवन् सत्यवादिनो युधिष्ठिरस्य प्रथमोक्तेन वचनेन पुत्रमरणं दृढमत्यय द्रोणाचार्य्यं शोकात् अस्त्र परित्यज्य रथस्योपरि विषण्ण उपविवेश। धृष्टद्युम्नश्च तदा तत्रागत्य त खड्गेन निजघान इति।

( १८० ) अनार्य्यम्—असज्जन, नीचमित्यर्थ, अविद्यो अपि पापाचरणादिति भाव, त—गौडाधिप शशाङ्क मुक्त्वा—विहाय, त विना इत्यर्थ, भागीरथीति।—भागीरथ्या,—गङ्गाया, फेनाना—डिण्डीराणा, पटलानि—पुञ्जा, तद्वत् पाण्डुरा,—शुभ्रा।

( १८१ ) परशुरामेति।—परशुरामस्य—भार्गवस्य, य पराक्रम,—शौर्य्यं, तस्य स्मृति,—स्मरण, ता कुर्वन्ति—जनयन्तीति तथोक्ता, शौर्य्यविशेषेण जामदग्न्यस्मारका इत्यर्थ, आर्य्येति।— आर्य्यस्य—श्रेष्ठस्य, शौर्य्याणि—पराक्रमा एव, गुणा,—उत्कर्षा, मनःसु—चित्तेषु, निर्मलाशयत्वात् इति भाव, सरःसु—जलाशयेषु, राजहंसक्रीडास्थलेषु च मानसाख्येषु इति भाव, राजहंसा इव "भागीरथी—" इत्यादि "परशुराम—" इत्यादि च विशेषणद्वयं राजहंसेऽपि योजनीयम्, पुरा भगवत शङ्करात् धनुर्विद्यामधीयानेन परशुरामेण किल कैलासैकदेशे क्रौञ्चशिखरिणि स्कन्दस्य स्पर्धया अतिनिशितविशिखमुखेन तत्पिण्डभेद भित्त्वा हंसमार्गः कृत इति श्रूयते, अत हंसाना तत्पराक्रमस्मृतिकृत्त्वमुक्तमित्यवधेयम्,, पक्षपातम्—अनुराग, पक्षै,—पतत्रै, पात,—पतनम्, उड्डीय क्रौञ्चरन्ध्रपथेन मानसे सरसि गमनमित्यर्थश्च।

( १८२ ) कथमिव—केन प्रकारेण इव, [ "किमश्च" ( ५।३।२५ पा० ) इति थमु-

अत्युग्रस्य अस्य आर्य्यजीवितहरणे निदाघरवेरिव (१८३) कमलाकरसलिलशोषणेऽनपेक्षितप्रीतेः प्रसूताः क्रूराः? कां नु (१८४) गतिं गमिष्यति? कां वा योनिं प्रवेक्ष्यति? कस्मिन् वा नरके निपतिष्यति? श्वपाकोऽपि क इदम् आचरेत्? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। (१८५) किं वा अङ्गीकृत्य कार्य्यम् आर्य्यः तेन क्षुद्रेण अनुप्रविश्य विगतघृणेन घुणेन इव (१८६) सकलभुवनाह्लादनचतुरः चन्दनस्तम्भः क्षयम् उपनीतः?

---

प्रश्न ] अत्युग्रस्य—अतिदारुणस्य, अतिप्रखरस्य च, अस्य—गुप्ताख्यस्य, आर्य्येण। —आर्य्यस्य—पूज्यस्य, जीवितम्—जीवनं, तस्य हरणे—मोषणे, दृष्टान्तयति निदाघरवेरिव—ग्रीष्मसूर्य्यस्येव।

(१८३) कमलाकरसलिलशोषणे—पद्मयुक्तसरोवरजलशोषीकरणे, अनपेक्षितप्रीतेः।—न अपेक्षिता—आदृता, प्रीतिः,—स्नेहः, एकत्र,—सौर्य्य ताहृश प्रियदर्शनत्वादिगुणसम्पन्नस्य इत्यादि, अन्यत्र—सौरभादिगुणसम्भूततया स्वप्रियाया पद्मिन्या आश्रयभूतत्वात् इति भावः येन तथाभूतः, क्रूराः,—हिंस्राः किरणाश्च, प्रसूताः,—प्रकटाः। एतेन निदाघरविसाम्येन गौडाधिपतेः भीषणत्वं क्रौर्य्यस्याल्पस्वकार्य्यसाधने निष्करुणत्वं च व्यज्यते।

(१८४) गतिम्—दशाविशेषम्। कां वा योनिं प्रवेक्ष्यति—मनुष्यस्य कीदृशीं हीनतामाप्स्यतीति इत्यर्थः। "गमिष्यति" इत्यादौ "निपतिष्यति" इत्यन्तवाक्येषु ■ इति कर्तृपदमूहनीयम्। श्वपाकः,—चाण्डालः। पापमलेन—पापम्—निन्दितं कर्म्म एव, मलम्—पङ्कम्, मालिन्यजनकं वा तेन, जिह्वया पापकारिणो नामोच्चारणात् तत्सम्पर्केण तस्या मलालिप्तत्वम्, "कथाऽपि खलु पापानामलमश्रेयसे यतः" इत्यादावनुमोदितानुभाषणकारणात् इत्याशयः।

(१८५) किं वा कार्य्यम् अङ्गीकृत्य—आश्रित्य कस्य कार्य्यस्य व्यपदेशेन इति भावः। क्षुद्रेण—नीचेन, क्रूरेण, अणुना च तेन—गौडाधिपेन गुप्ताख्येन, अनुप्रविश्य—अभ्यन्तरं प्रविश्य, विश्वासं दत्त्वा, अपरत्र गत्वा च। विगतघृणेन—निर्दयेन, घुणेन इव—घुणाख्यकाष्ठक्षतकीटविशेषेण इव।

(१८६) सकलेति।—सकलानाम्—समग्राणां, भुवनानाम्—जगताम्, आह्लादने

(१९७) नूनं न अनेन सूदेन मधुरसास्वादलुब्धेन मधु इव आर्य्यजीवितम् आकर्षता भावी दृष्टः शिलीमुखसम्पातोपद्रवः। (१९८) निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिव अतिमलिनं केवलम् अयशः सञ्चितं गौडाधमेन। न तु (१९९) आग्र एव अस्तम् उपगतवत्यपि त्रिभुवनचूडामणौ सवितरि (२००) वेधसा आदिष्टः सत्पथगवोः अन्धकारस्य निग्रहाय ग्रह-

---

—प्रीयते, एकत्र,—दयादाक्षिण्यपरोपकारित्वादिगुणेन, अन्यत्र,—सौगन्ध्यस्निग्धत्वदर्शनीयत्वादिगुणेन इत्यर्थः, चतुर,—प्रवण, चन्दनस्तम्भ,—चन्दनतरुनिर्मिता गृहावलम्बनभूता स्थूणा इत्यर्थः, अयम् उपनीत,—आम्र मनित न जाने, किं कार्य्यमुद्दिश्य निरस्तः विश्वस्य आर्य्यं तेन पापेन गौडाधमेन इत्यर्थः घातित, यद्वी। नैवुग्यमिति समुद्दतार्थं।

(१९७) नूनं—निश्चितम् वितर्के वा। मधिवति।—मधुन —पुष्परसस्य, रस,—माधुर्य्यमित्यर्थं, तस्य आस्वादे—स्वादग्रहणकर्म्मणि लुब्ध,—लोलुप तेन आकर्षता—आच्छिन्दता, विनाशयता सङ्कलता च इत्यर्थं। भावी—भविष्यन्, कियदनन्तरमेवास्मिन् उपरि प्रपतिष्यन् इत्यर्थः, शिलीमुखेति।—शिलीमुखानां—बाणानाम, अन्यत्र, भ्रमराणाम्‌ इत्यर्थं, ("अलिवाणौ शिलीमुखौ" इत्यमर) सम्पात,—सम्पतनमेव, उपद्रव,—अत्याचार, दृष्ट,—अवलोकित, तर्कित इति यावत, स्वार्थलोलुपतया मूढमनसा न भविष्यदत्याहितमाम एवं इति निष्कर्षः।

(१९८) निजगृहदूषणं—स्वगृहदूषणहेतु इत्यर्थं मत्कोपेन तस्य राजभाग्याः अचिरादेव विनष्टुमापन्नत्वादिति भाव, स्वगृहस्य शोभानाशनम् इत्यर्थश्च जालमार्गप्रदीपकेन—जालस्य—दम्भस्य, कपटजाला इत्यर्थं, ("जालं दम्भगवाक्षयो। आनायदम्भेषु—" इति रभस) मार्गे—पन्थान व्यवहारमिति यावत, प्रदीपयति—प्रकाशयति य तेन कूटकर्म्मप्रवर्त्तकेन गवाक्षमार्गस्थितेन दीपेन इत्यर्थश्च। केवलम् अयशः,—अकीर्त्तिमात्र, न तु कृतस्य कर्म्मणः किमपि इष्ट फलमिति भाव, तस्य अचिरादेव मया यमसदनप्रापणादिति हृदयम्।

(१९९) त्रिभुवनचूडामणौ—त्रिलोकीशिरोरत्ने, एकत्र—जगत्प्रकाशकत्वात्, अन्यत्र—शौर्य्यौदार्य्यादिगुणोत्कर्षादिति भाव, सवितरि—सूर्य्ये, तत्सदृशे तेजस्विनि राज्यवर्द्धने च इति भाव, आग्र—शोत्रम्, अन्यकालमनेत्यर्थ, अस्तम्—अदर्शनम्, नाशञ्च, उपगतवति प्राप्तवति।

(२००) वेधसा—विधात्रा, सत्पथगवो,—सन्—शोभन विद्यमानो वा,

मत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरिनखरः। तादृशाः (२०२) कुवैकटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः ? क्व इदानीं यास्यति दुर्बुद्धिः ?"।

(२०३) इत्येतत् अभिदधत एव अस्य पितुरपि मित्रं, सेनापतिः, समग्रविग्रहप्राग्रहरः, (२०४) हरितालशैलावदातदेहः,

---

—दुष्टगजस्य, क्रूरग्राहस्येति च प्रसुतः, विनयाय—दमनाय, शासनायेत्यर्थः।

सकलेति।—सकलानां—सर्वेषां, मत्तानां—मदोत्कटानां, मातङ्गानां—हस्तिनां, कुम्भस्थलमेव—शिरःस्थोभयपार्श्वस्थमांसपिण्डभाग एव, स्थिरः,—कठिनः, दुर्भेद्य इति भावः यः शिरोभागः,—मूर्द्धदेशः, यद्वा,—मत्तमातङ्गानां यत् कुम्भस्थलं, तथाभूतः यः स्थिरः शिरोभागः, तस्य भिदुरः,—विदारणे स्वयं विपाटनपटुः इति वा अर्थः, "[विदिभिदि—" (३।२।१६२ पा०) इत्यादिना कर्त्तरि कुरच्, मुख्यकर्त्तर्यपि स्वीकृत इति, तथा हि काशिका,—"विदादिभ्यो धातुभ्यस्ताच्छीलादिषु कर्त्तृषु कुरच् प्रत्ययो भवति, विदुरः पण्डितः, भिदुरं काष्ठं, छिदुरा रज्जुः। भिदिच्छिद्योः कर्म-कर्त्तरि प्रयोगः" इति] खरतरः,—अतितीक्ष्णः, केसरिनखरः,—सिंहनखः, केसरिनखरसदृशः इत्यर्थः इति च प्रस्तुतम्। अत्र हि अप्रस्तुतेन प्रस्तुतस्य प्रतीतेः पूर्व्ववदप्रस्तुतप्रशंसाऽलङ्कारः।

(२०२) कुवैकटिका इव—कुत्सिता वैकटिका—मणिविक्रयकारिण इव, "कुत्सिताः स्वर्णकारा इव" इति केचित्, "वैकटिको रत्नपरीक्षकः" इत्यपरे, तेजस्विरत्नविनाशकाः,—तेजस्विनां—प्रभाववतां, दीप्तिमतां चेत्यर्थः, रत्नानाम्—उत्कृष्टवस्तूनां, ("जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इति कोषः) विनाशकाः—विध्वंसकारिण इत्यर्थः, कस्य न वध्याः ?—मारणीयाः ? सर्व्वस्यैव वध्या इति भावः, रत्नविनाशकाः गुणानामपरीक्षकाः मूढा इव कपटपरिखापितमहातेजसः शीघ्रं वध्य-मपि न मर्षणीया इत्याशयः।

(२०३) "इत्येतत्" इत्यस्य "सेनापतिः ... सिंहनादनामा ... समरसम् आनयन् विज्ञापितवान्" इति अग्रेण सम्बन्धः। अभिदधतः,—कथयतः, विलपतः इत्यर्थः। सेनापतिं विशिनष्टि, समग्रेति।—समग्राणां—सकलानां, विग्रहाणां—युद्धानां, तथाविधेषु युद्धेषु वा, प्राग्रहरः,—श्रेष्ठः, सेनानीतया समरादयायी इत्यर्थः।

(२०४) हरीति।—हरितालस्य—स्वनामख्यातोपरसविशेषस्य, शैलः—पर्व्वतः, तद्वत् अवदातः,—गौरः, देहः,—शरीरं यस्य तथाभूतः, कमनीयसुगौरकान्ति

परिणतप्रगुणसालप्रकाण्डप्रकाश: प्रांशु:, अतिशौर्याभिमया इव परिपाकम् आगत:, गतभूयिष्ठे वयसि वर्त्तमान:, (२०५) बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवम् अतिदीर्घेण आयुषा, (२०६) दुरभिभवशरीरतया जरयाऽपि भीतभीतया इव प्रकटितप्रकम्पया परामृष्ट:, कथमपि (२०७) सारमयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुहछटालां

---

रित्यर्थ । परिणतेति।—परिणत —प्रवृद्ध, प्रगुण,—शोभन, सालप्रकाण्ड —सालप्रधानस्कन्ध इव, प्रकाशते—दीप्यते इति तथोक्त, प्रांशु,—उन्नत, आजानु इव समुन्नतशरीर इत्यर्थ । अतिशौर्याभिमयेव—अतिशौर्येण—पराक्रमातिशयेन, भ इदया—अत्र सारस्य सफल तेन इव, परिपाक —परिणति, प्राचीनत्वमित्यर्थं आगत, —प्राप्त, इदमुत्प्रेक्षाय इति भाव । गतभूयिष्ठ —अतीताधिकांशे, अभ्यार्धाधिष्टे इत्यर्थ, वयसि—जीवनकाले इत्यर्थ, अतिवार्द्धके इति यावत।

(२०५) बहिति।—बहव —अनेके शरा —बाणा, शरप्रक्षिप्ता इति भाव, तै शयन -शराघातेन भूमौ पतनमिति भाव, तेन सुप्त —पूर्वं मोहं गत इति यावत्, पश्चात् उत्थित,—तज्जन्यवेदनाम् अपनीय पुनर्युद्धायसुद्यत इत्यर्थ, अथच —बहव,—प्रचुरा, शरा,—इषव एव शयन –शय्या, तत्र सुप्त —निद्रित, उत्थित,—प्रबुद्ध तम, इति विभक्ति विपरिणामेन योजनीय शान्तनवं –भीष्म हसन्निव —परिहासास्पद कुर्वन्निव, भीष्मस्तु शरशयने स्थित एव निधन गत, अयन्तु तस्मात् उत्थित पुन संग्रामाय अग्रसर इति हासकारणमिति भाव । इहोपमेयस्य उपमानादाधिक्योत्कर्षात व्यतिरेकसहोक्तिरलङ्कार इति ध्येयम्।

(२०६) दुरभिभवशरीरतया -दुर्जयदेहतया जरयाऽपि—विस्रसयाऽपि, इन्द्रियशिथिलतादिना कायशक्त्यापादकावस्थाभेदेनापीत्यर्थं वार्द्धकेनापीति भाव, भीतभीतया —अतिभीतदेहया अत एव प्रकटितप्रकम्पया—प्रकटित —आविष्कृत, प्रकम्प —वेपथु यया तथोक्तया, भीतत्वात् कम्पितदेहया इत्यर्थं, वार्द्धकात्तज्जन्यकम्पमान देहतया इति भाव, परामृष्ट,—स्पृष्ट, तस्य कम्पितकायत्वोत्प्रेक्षणात् अतिवार्द्धके स्थित इत्यर्थ ।

(२०७) सारमयेषु—दृढेषु केशपतनाभावात् इति भाव, शिरोरुहेषु—केशेषु शशीति।—शशिन —चन्द्रस्य, करनिकरा —किरणचया, तद्वत् सिता—शुभ्रता काशस्तबकशोभा इत्यर्थं, सरला—अकुटिला, शिरोरुहछटा—

सैंहीमिव (२०८) निष्कपटपराक्रमरसरचिता सङ्क्रान्तो जीवन्नेव जातिम्, (२०९) अपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षया इव भ्रूयुगलेन (२१०) वलितशिथिलप्रलम्बचर्मणा स्थगितदृष्टि, (२११) धवलस्थूलगुञ्जापिञ्छप्रच्छादितकपोलभागभास्वरेण वमन् इव विक्रमकालम् अकालेऽपि (२१२) विकाशिकाशकाननविशदं शरदारम्भं भीमेन मुखेन,

---

शिरस्त्राणस्य विद्यमानत्वात् इति तदोक्ता, सैंहीमिव— सिंहस्य इयं सैंही तामिव, सिंहसम्बन्धिनीमित्यर्थ ।

(२०८) निष्कपटेति।—निष्कपट —कापट्यरहित, यथार्थ इति भाव, य पराक्रम,—शौर्य्यं तस्मिन् रसम—अनुरागेण, रचिता—निर्मिता ताम्, जातिम्—सिंहत्वामित्यर्थं जीवन्नेव—प्राणन् एव इत्यर्थं सङ्क्रान्त,—अधिगत । केशरीयम-कथकलापेन सिंहविक्रमतया च सादृश्य सिंह इव विराजमान इत्युत्प्रेक्षा ।

(२०९) अपरेति।—अपर —अन्य प्रभाकरवर्द्धनव्यतिरिक्त भाव, स्वामी—प्रभु तस्य मुखदर्शन—मुखावलोकनमेव, महत्—घोर, पातक—पाप, तस्य परिजिहीर्षयैव—तत्परिहर्त्तुमिच्छया इत्यर्थ ।

(२१०) वलितेति।—वलित—वलियुक्तम् आकुञ्चितमिति भाव शिथिल—श्लथीभवत् प्रलम्ब—लम्बमान, चर्म—त्वक् यस्य तथाभूतेन। स्थगितदृष्टि,—आवृतनेत्र अतीव प्रभुभक्त लोलचर्मा च इति भाव ।

(२११) धवलेति।—धवला—शुभ्रा स्थूला—पीवरा, घना दीर्घा चेत्यर्थ वा गुञ्जा—उत्तरोष्ठस्योपरि रोमराजि "गोंफ" इति वङ्गभाषया प्रसिद्धा इति भाव तस्या पिञ्छ—पङ्क्ति परम्परा वा तेन प्रच्छादित —आवृत य कपोलभाग,—गण्डदेश, तेन भास्वरेण—प्रदीप्तेन मुखेनेत्यनेनान्वय । वमन्निव—उद्गिरन्निव। विक्रमकाल —पराक्रमप्रदर्शनोचितसमय, शरदारम्भमित्यस्य विशेषण, तत्र विजिगीषुभि युद्धयात्रा क्रियते इति शास्त्रात्। अकालेऽपि—असमयेऽपि, शरदारम्भस्य इतरे अपि, शरदतिरिक्ते ग्रीष्मादिऋतौ अपि भाव ।

(२१२) विकाशीति।—विकाशिना—विकस्वरेण, काशकाननेन—पीटगतास्थलधवलविशिष्टवनेन, काशानाम् भूयसाम् शरदि कुसुमानि विकसन्ति, विशद—धवल, शरदारम्भ—शरत्कालागमम्। भीमेन—भीषणेन, [विभेत्यस्मात् इति

स्तमपि (२१३) हृदयस्थितं स्वामिनम् इव सितचामरेण वीजयन् नाभिलम्बेन कूर्चकलापेन, परिणामेऽपि धौतासिधाराजलपानतृषितैः इव विवृतवदनैः वहद्भिः व्रणविदरैः विषमितविशालवक्षाः, (२१४) निशितशस्त्रटङ्ककोटिकुट्टितबहुदीर्घव्रणाक्षरपङ्क्तिनिरन्तरतया च (२१५) सकलसमरविजयपर्वगण-

---

पञ्चम्या "भीत्रार्थानां भयहेतुः" "भीमादयोऽपादाने" (३।४।७४ पा०) इति भिय अपादाने नक्] काशकुसुमगुच्छशोभितवदनेन शरदिवास अनयमित्यर्थः ।

(२१३) हृदयस्थितम्—अन्तर्वर्तिनं, गुणावर्जितहृदयत्वादिति भावः, स्वामिनं—प्रभाकरवर्धनमिति यावत्, सितचामरेण—श्वेतवालव्यजनेन, सितच्छत्रचामरादीनां सम्राडुचितोपकरणत्वादिति भावः । नाभिलम्बेन—नाभिदेशपर्यन्तविलम्बिना, कूर्चकलापेन—श्मश्रुनिचयेन, ("कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी)। परिणामेऽपि—वार्धकेऽपि, धौतेति।—धौता—निर्मोचिता, शाणिता इति भावः, असिधारा—खड्गस्य निशितमुखम् एव, जलं—सलिलं, तस्य पानाय तृषिता,—पिपासाऽऽकुला तैरिव, विवृतवदनैः,—व्यात्तमुखैः, व्रणविदरैः,—क्षतसम्भवस्फोटैः, ("विदरः स्फुटनं भिदा" इत्यमरः) विषमितम्—उन्नतानतम्, बन्धुरितम्, विशालं—विपुलं, वक्षः,—उरःस्थलं यस्य तथाभूतः । बाल्यादभ्यस्तशस्त्रसन्तानेन सुशोभितकायस्य सेनापतेः व्रणानि यद्यपि प्राक् धृतासिधाराभिक्रमते एवमनुमीयते यत् सङ्ग्रामे प्रभूणि व्रणे उदरवर्ते पिपासिते अपि जलपानार्थं विवृतमुखे अद्यापि स्थीयते इति समुदितार्थः, यतो सङ्ग्रामस्य विजयी आसीत्, तथा चाभिषेतमस्यैव वार्धकेऽपि अनिर्वापितरणोत्साहस्य भवति इति भावः । इह धौतासिधाराया जलत्वेन केवलं रूपणात् निरङ्गं रूपकम् इत्यतः छायान्तरितत्वेन उत्प्रेक्षाया चमत्कृतातिशय प्रतिपादित इति सङ्क्षेपः ।

(२१४) निशितेति।—निशितानि—तीक्ष्णानि, शस्त्राणि—आयुधान्येव, टङ्काः,—पाषाणदारणास्त्रविशेषाः, तेषां कोटिभिः,—कोणैः, अग्रैः इत्यर्थः ("कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः) कुट्टितानि—दलितानि, बहूनि—अनेकानि, दीर्घाणि—आयतानि इत्यर्थः, व्रणानि एव—क्षतानि एव, अक्षरपङ्क्तयः,—वर्णावलयः, तासाम् निरन्तरतया—व्याप्ततया इत्यर्थः ।

(२१५) सकलेति।—सकलेषु—सर्वेषु, समरेषु—सङ्ग्रामेषु, विजया एव—जयलाभा एव, पर्वाणि—क्षणाः, उत्सवा इत्यर्थः, ("तिथिभेदे क्षणे पर्व"

नाम् इव कुर्व्वन्, पूर्व्वपर्व्वत इव पादचारी, (२१६) विविध-वीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन् इव, (२१७) प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्षयन् इव, (२१८) अब्धिभ्रमणेन अनादरश्रीसमाकर्षणविभ्रमेण मन्दर-

---

इत्यमरः) तेषाम्, यद्वा—सकलसमरविजयानां पर्व्वभिः,—ग्रन्थिभिः अङ्गुलिग्रन्थिभिरिव गणनाग्रन्थिभिरिति भावः गणनामिव—संख्यानमिव, बहुसमरविजयो इति भावः। पूर्व्वपर्व्वत इव—उदयगिरिः इव, पादचारी—चरणसञ्चरणशील, अभ्युन्नतकायत्वात् तदाभोमिव उदितत्वाच्चेति भावः, पूर्व्वपर्व्वतोऽपि बहुभि पादैः,—प्रत्यन्तपर्व्वतैः, चरति—भुवं समाश्रित्य तिष्ठति इत्यर्थः, ("पादाः प्रत्यन्तपर्व्वताः" इत्यमरः)।

(२१६) विविधेति।—विविधानां—बहुप्रकाराणां, वीररसानाम—उत्साह-स्थायिभावानाम् उत्तमप्रकृतिकसमास्वाद्यमानवस्तुविशेषाणां, प्रकारभेदेन बहु-भेदाख्यापनाभीप्सिततया अत्र रसबहुत्वोक्तिः न दोषाय इत्यवधातव्यम्; यद्वा—विविधस्य—नानाप्रकारस्य वीररसस्य, पक्षे,—विविधाः—अनेके वीराः,—भीमद्रोणादयः यतः तेषां तथा रसस्य च—युद्धानुरागस्य च, वृत्तान्तेन—प्रक्रियया, अनुष्ठानेनेत्यर्थः, प्रस्तावेन च, विवरणेन च इत्यर्थः, ("वृत्तान्तः प्रक्रियायां स्यात् कार्त्स्न्यवार्त्ताप्रभेदयोः। प्रस्तावे •॥" इति मेदिनी) रामणीयकं—रमणीयत्वं तेन करणेन। लघयन्निव—लघूकुर्व्वन्निव महाभारतवर्णितवीररसादपि अधिकवीरकर्म्मानुष्ठायीति भावः।

(२१७) प्रतिपक्षेति।—प्रतिपक्षाणां—शत्रूणां, क्षपणे—संहारे, अतिनिर्बन्धेन—अत्याग्रहेण, परशुराम—परशुधारी रामः स भार्गवमित्यर्थः ["शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" (वा०) इति समासः] शिक्षयन्—उपदिशन्, परशुरामस्यापि शत्रुनिर्य्यातनाभ्यासविषये आचार्य्यकल्पं कुर्व्वन् इत्यर्थः, अयमाशयः,—तथा हि, भो भृगुनन्दन! त्वमेकविंशतिवारं क्षत्रियान् हत्वाऽपि तान् निःशेषान् कर्त्तुं नाशक्नोः, तेन हि तव तत्रैव रणकर्म्मणि अनभिज्ञता प्रतिभाति, अहं यथा समूलघातं शत्रून् विनाशयामि, तत इदं पश्यतु शत्रूणां समूलोन्मूलनकौशलं शिक्षयतु भवान् इति वदन् इवेति।

(२१८) अब्धिभ्रमणेनेति—अब्धिभ्रमणम—अब्धिः अप्सु वा भ्रमणं, समुद्रयात्रा इत्यर्थः, युद्धार्थे साङ्ग्रामिकपोतमारुह्य द्वीपान्तरस्थशासनाय इति भावः, जलदस्युकृतकठोरोत्पात-प्रशमनाय वा इत्याशयः, जले पुनः पुनः आवर्त्तनञ्च तेन, अनादरेति।—अनादरेण—

मपि मन्दयन् इव, (२१८) वाहिनीनायकमर्य्यादाऽनुवर्त्तनेन अम्भोधिमपि अभिभवन् इव, (२२०) स्थैर्य्य-कार्कश्योन्नतिभिः अचलानपि क्षेपयन् इव, (२२१) सहज-प्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्व्वन्निव,

---

अवहेलन, यस श्रीसमाकर्षणं—श्रिया,—राजलक्ष्म्याः, कमलायाश्च, समाकर्षणं—बलादायत्तीकरणं, समुद्रस्यच, अनुभ्य समुद्रात्र इति भाव, तेन (विभ्रमं),—विलसित यत्र तेन, मन्दर—मन्दरगिरिं समुद्रमन्थनदण्डभूतमिति भाव, मन्दयन्—लघयन मन्दरगिरि असकृदेव अम्बु परिभ्रम्य एका श्रियं समाजहार, असौ पुन सकृत् तथा कृत्वा सहसा राजा श्रियं समाजहार इति भाव। अन्यस्य श्रियो हरणासमर्थेऽपि श्रीरिव श्री कृता इति बिम्बप्रतिबिम्बभावबोधात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, उपमानाधःकरणात् राजादेरि श्रीत्कर्षप्रतीतेश्च व्यतिरेकालङ्कारश्च, तत्तयो सङ्कीर्णम्।

(२१८) वाहिनीति।—वाहिनीनां—सेनानां, तरङ्गिणीनाञ्च, नदीनाञ्चेत्यर्थं, ("वाहिनी स्यात् तरङ्गिण्यां सेना सैन्यप्रभेदयोः" इति मेदिनी) नायकमर्य्यादा—पति सम्मानना, सेनापतित्व सरित्पतित्वञ्च इति यावत, तस्या अनुवर्त्तनेन—अनुगमनेन अम्भोधि—सागरमपि, अभिभवन्निव—जयन्निव. नदीनां परिमिततया सेनानान्तु अपरिमिततयेति भाव, यद्वा,—नदीनां यथेष्टप्रस्थानशक्त्यभावात् सेनानां यथेप्सितं यत्र तत्र प्रस्थान-शक्तिमत्त्वेन इत्याशय। अत्र सरित्पतित्व सत्याधिक्यप्रतिपादनात पूर्ववत् व्यतिरेकालङ्कार।

(२२०) स्थैर्य्येति।—स्थैर्य्ये—सङ्ग्रामादपरावर्त्तित्वमित्यर्थ एकत्रावस्थायित्वञ्च, कार्कश्य—काठिन्यम्, अस्त्रेति भाव, उभयत्रापि समानम्, यद्वा—कार्कश्य—सर्व्वो निर्दयत्वम्, उन्नति,—उच्छ्राय ताभि, अचलानपि—पर्व्वतानपि, क्षेपयन्निव—लज्जयन्निव। अचलादपि स्थैर्य्यादिमाधिक्यमिति इति व्यतिरेक।

(२२१) सहजेति।—सहजस्य—स्वाभाविकस्य, प्रचण्डस्य—उग्रस्य, तेजःप्रसरस्य—तेजसां—प्रभावाणां प्रसरस्य—विस्तारस्य परिस्फुरणेन—सद्योतनेन, तृणीकुर्व्वन्निव—तुच्छीकुर्व्वन्निव, सवितु तेजसा प्रसर दिवा एव, अस्य तु रात्रिन्दिवमपि इति स्वतेजसामधिककालिकत्वमेव तृणीकरणे हेतुरिति भाव, यद्वा,—तत्र दाहिका शक्तिरेवाधिक्यप्रतीति, इह तु दाहिकाह्लादिकयोरुभयोरपि समानीत्कर्षवत्त्वम् इत्यतिशय विस्पष्टमेव।

तुला शौर्यशालिना, सीमान्तदृश्वा शस्त्रग्रामस्य, निर्वोढा प्रौढवादानां, (२२५) संस्तम्भयिता भग्नानां, पारगः प्रतिज्ञायाः, मर्मज्ञो महाविग्रहाणाम्, आघोषणापटहः समरा- र्थिनां, सन्निधावेव समुपविष्टः सिंहनादनामा स्वरेणैव दुन्दुभिघोषगम्भीरेण (२२६) सुभटानां समररसम् आनयन् विज्ञापितवान्,—

"देव! (२२७) न क्वचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानम्

---

ध्वनि यावत्। तुला—उपमा महावीराणां सङ्ग्रामे प्राय सर्वाधिकौपम्यत्वात् इति भाव। शस्त्रग्रामस्य—आयुधसमूहस्य सीमान्तदृश्वा—पारदृश्वा सर्वशस्त्रकोविद इत्यर्थ। प्रौढवादानां—प्रगल्भवचनानां प्रतिज्ञातानामपि भाव निर्वोढा—निर्वाहक समुचितप्रतिकारक इत्यर्थः।

(२२५) भग्नानां—शत्रुभयात् पलायितानां संस्तम्भयिता—आश्वासयिता। प्रतिज्ञायाः—शपथस्य पारगः,—पारगामी अवश्यपालक इति भाव। महाविग्रहाणां—महतां सङ्ग्रामाणां मर्मज्ञः—सारवित् कस्मिन् केन विधिना सङ्ग्रामे कृते अवश्यमेव जयो भवेत् इत्यादिनिर्धारणे कुशल परपक्षच्छिद्रोद्घाटननिपुण इति भाव। आघोषणापटहः—युद्धयात्राया ताड्यमानवाद्यविशेष इत्यर्थ युद्धोत्साहक इति भाव यथा आघोषणापटह समरोत्साहमुद्दीपयति तथा अयमपीति भाव। सन्निधौ एव—इष्टे निकट एव। गम्भीरे।—दुन्दुभिः—भेरी तस्य घोषः—शब्दः तद्वत् गम्भीरः,—गभीरः तेन, घनाहतभेरीघोषमन्द्रस्वरसमेन इत्यर्थ।

(२२६) सुभटानां—सुयोद्धॄणां समररसम्—सङ्ग्रामोत्साहम् आनयन्—जनयन् उद्दीपकवाक्यैः वर्द्धयन् इत्यर्थ।

(२२७) न क्वचिदिति।—न क्वचित्—कुत्रापि कृताश्रयया—चापल्यात् चिरं कुत्रापि कस्मिन्नपि कियत्कालमाश्रयन्त्या इत्यर्थ काकाः—काककुलानि इपरवत् कुत्रापि अनाश्रितया इत्यर्थ मलिनया—पापया इत्यर्थः कृष्णवर्णया इत्यर्थः। मलिनतराः—अतिकृष्णाः इत्यर्थः अतिकृपणवर्णा इत्यर्थः कापुरुषाः,—नीचपुरुषाः, हतलक्ष्म्या—दुष्टया श्रिया, विप्रलभ्यमानम्—प्रताड्यमानम्।

आत्मान न चेतयन्ते । (२२८) श्रियो हि दोषान्धतादय कामला विकारा । (२२९) छत्रच्छायान्तरितरवयो विस्मरन्ति अन्य तेजस्विन जडधिय । किं वा करोतु वराक, येन अतिभीरुतया नित्यपराङ्मुखेण न तु दृष्टानि एव

चेतयन्ते—अवबोधयन्ते [ ज्ञानार्थकतया चेतने णिचि कर्मणिकस्य आत्मन कर्मत्व बोध्यम ] कोकिलया प्रसवानन्तरमेव निजशावका काकीनीडे सम्स्थाप्य ताभि पोष्यन्ते, काक्य अपि वर्णसाम्यात स्वशावकाधिया तान पालयन्ति अतस्तेषां परे प्रतिपाल्यमान परभृदिति संज्ञा समजनि । तत जाते तु उड्डयनसामर्थ्य शावका तत्समाजाद्‌पसृत्य स्वसमाजे सङ्क्रमन्ते इत्य काकीना कोकिलया विप्रलब्धत्व लोके प्रसिद्धमेव ।

(२२८) कस्मात तान इतलक्ष्मीविप्रलभते ? इत्याह, श्रिय इत ।—श्रिय —लक्ष्म्या दोषान्धतादय —दोषै —कुपुरुषानुरागादिभि वातादिभिश्च इति व्यज्यते, अन्धतादय —अन्धता एव आदिर्येषा तै, मदसत्कार्य्यानालोचनादय इति यावत, दृष्टिहीनत्वादयश्च इति व्यज्यते कामला —कमलसम्बन्धिन, कमलात आगता वा, विकारा —लक्ष्म्या कमलालयत्वात नियतकमलवासेन आश्रयदोषात जाता रोगा इत्यर्थ "कामला" इति प्रसिद्धा पाण्डुरोगभेदश्च इत्यपि व्यज्यते तस्मिन रोगे जाते सति रुग्णस्य चक्षुषो पीतत्वादिभानम अन्धतादयश्च दोषा जायन्त कमलस्य यथा दोषा—रात्रौ [ अव्ययमेतत "दोषा रात्रौ च तन्मुखे" इति अव्ययवर्गे मेदिनी ] अन्धतादय —सूर्य्यस्यासमागमात सङ्कोचादय विकारा जायन्त, तथा लक्ष्म्या अपि तन्निवासात समुत्पन्ना दोषान्धतादय —दोषा एव अन्धतादय —सत्पुरुषासम्पर्कयो विचाराक्षमत्वम इति भाव ।

(२२९) छत्रेति ।—छत्रस्य—आतपत्रस्य छायया—आतपप्रतिपक्षभूतया अनातपेनेत्यर्थ अन्तरित —व्यवाहित तिरस्कृतो वा छत्रान्तरितत्वाम्नास इति भाव, रवि —सूर्य्य यै तथोक्ता [ "अच इ" (उ० ४ पा० १३८ सू० ) इति गन्धर्वकारुधातो इ ] जडधिय,—मूर्खा, लक्ष्मीमदमत्ततया दृष्टानष्टानभिज्ञा इति भाव तेजस्विन —प्रतापवन्तम अन्यम—अपर पुरुष विस्मरन्ति—न चिन्तयन्ति न पश्यन्तीति भाव, आत्मानमेव एकमात्र तेजस्विन मन्यन्त नान्य कमपि छत्रस्य महाप्रभावत सूर्य्याकिरणानामपि तिरस्करणात कोऽन्येषा कथाप्रसङ्ग इति तात्पर्य्यम्, एवम् अनुश्रूयते यथा—घनाच्छन्नदृष्टि अर्कमपि घनाच्छन्नमिति मन्यते। वराक —तपस्वी दुर्बलप्रकृति, इति यावत्। येन—वराकेण, गौडेश्वरेण जडाधिपत्येन । नित्यपराङ्मुखेण—

(२३०) सर्वातिशायिशौर्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानाति एवं, यथा (२३१) अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयम् उपहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताडिताः तेजस्विनः। (२३२) सकलवीरगोष्ठीबाह्यस्य तस्यैव इदम् उचितम् अनुत्तारनिरयनिपातनिपुणं

---

नियतविमुखेन, साहसकर्म्माणि कदाऽप्यप्रवृत्तत्वेन युद्धारम्भे एव पलायनात् प्रदर्शितपृष्ठेन इति भाव, न तु दृष्टानि—अवलोकितानि द्रष्टुं पारितानि इत्यर्थः।

(२३०) सर्वेति।—सर्वातिशायिना—सर्वपरिभाविना, शौर्यातिशयेन—पराक्रमाधिक्येन, श्वयथु,—स्फीति वर्द्धमानत्वं, विकास इति यावत्, दैवस्य प्राज्यवदनस्य महावीराणां वा इति भाव येषु तथाविधा, कपिला,—आरक्ताः, ये कपोला,—गण्डदेशा, तेषां पुलकम्—रोमहर्षेण, अमातक्रुद्धाश्रमिवसमुत्कर्षपुलितमुखोदयात् इति भाव, पल्लवित,—विस्तृत, प्रकटीभूतो वा, कोपानल,—क्रोधवह्नि येषु तानि। तेजस्विना—महाप्रतापानाम्, अपराभूतात्मनामिति विजिगीषुनृपाणां वा इति भाव।

(२३१) अभिचारा इव—आथर्वणा मारणादयो विधय इव, विप्रकृता,—निकृता, अवमानिता इति यावत्, ("निकृत स्याद्विप्रकृत" इत्यमर) विप्रै,—ब्राह्मणै, कृताश्च, मनस्विन,—प्रशस्तमनस, महावीरा इत्यर्थं, ["अस्मायामेधास्रजो विनि" (५।२।१२१ पा०) इति विनिप्रत्यय] सद्य —अचिरादेव इत्यर्थ, सकलकुलप्रलय—सर्वंशविनाशम, उपहरन्ति—उपाऽऽनीकुर्वन्ति, जनयन्ति इति यावत्। जलेऽपि—सलिलेऽपि, आत्मसम्भूतेऽपीति भाव, "आकाशाद्वायु, वायोरग्नि अग्नेराप अद्भ्य पृथिवी" इति स्मरणात्, जडेऽपि च, ताडिता,—वधुता प्रहृताश्च तेजस्विन —अग्नय, प्रतापवन्तश्च। अत्र मनस्विभि तेजस्विभिश्च सह सकलकुलप्रलयजनन-ज्वलनत्वादिधर्म्मै स्वस्य बिम्बप्रतिबिम्बभावसम्बन्धात दृष्टान्तालङ्कार, 'दृष्टान्तस्तु सधर्म्मस्य वस्तुन प्रतिबिम्बनम्" इति दर्पणलक्षणात्।

(२३२) सकलेति।—सकलाना—कृत्स्नाना वीराणा—शूराणा, गोष्ठी—समाज, तस्या बाह्य,—बहिष्कृत, ततो निष्कासित इत्यर्थ तस्य कापुरुषतादिदोषे वीरसमाजेषु अप्रवेशस्य इति भाव, गोष्ठीबाह्यत्वात् अनुपासितवृद्धत्वात धर्मं न जानाति, अतएव तथाभूतस्य निरङ्कुशचित्तमिदं कथं युज्यते इति सङ्गति,

कर्म। (२३३) मनस्विना हि प्रधनप्रधानधने धनुषि म्रियमाणे, सति च कमलाकलहंसकेलिकुवलयकानने कृपाणे, कृपणोपाया पयोधिमथनप्रसृतयोऽपि श्रीसमुत्थानस्य, किं पुन रीदृशा ? (२३४) येषाञ्च धाता धरित्री त्रातु नियुक्ताः

तस्य—गौडाधमस्य अनुत्तारणि।—नास्ति उत्तारः—उद्धारः यस्मात् तादृशं निरये—नरके निपातं—निपतनं तव तस्य वा निपुणं—सम्यक् साधयतामस्य इदं—विश्वस्तहननरूपं कर्म साधयत—सदृशं "मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः। ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ॥" इत्युक्तं। उपायं कुत्रयोगेण महाराज राज्यवर्द्धनस्य विश्वस्तं वीरस्य हन्तुरस्य गौडाधमस्यैवानुरूपम्, इति तस्य सामाजिकसहार भावभाव एव तथाविधानुष्ठाने हेतु इति पूर्वपदार्थस्य हेतुभूततया निर्देशात् पदार्थहेतुकं काव्यलिङ्गम् इति मयम।

(२३३) मनस्विना—वीराणां हि इत्यवधारणेऽर्थे प्रधने त।—प्रधनस्य—युद्धस्य (युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः) प्रधानं—श्रेष्ठं धनं—महामूल्यवस्तु साधनमिति भावः तस्मिन् धनुषि—कार्मुके म्रियमाणे—ध्रियमाणे। कमलेति।—कमला—लक्ष्मीरेव कलहंसी—राजहंसी कमलायां कलहंस्याश्च उभयोरेव कुवलयवनसञ्चारिणाभेदारोपात् रूपकालङ्कारः, रूपकः समहिषी वा। ("कलहंसस्तु कादम्बः राजहंसः नृपोत्तमे" इति मेदिनी) तस्याः केलिः—क्रीडा यत्र तादृशं कुवलयकाननं—नीलोत्पलवनं तत्सदृशं तद्भूते इत्यर्थः, निशितानां कृपाणानां नीलोत्पलप्रभावत्त्वादिति भावः कृपाणे—करवाले इति च—विद्यमाने च म्रियमाणे इत्यनुवर्तमानयोर्वा तेन म्रियमाणे सतीत्यर्थः, वीराणां कृपाण एव कमला प्रतिष्ठिता भावः श्रीसमुत्थानस्य लक्ष्मीसमाहरणस्य पयोधिमथनप्रसृतयोऽपि—मन्दरगिरिणा क्षीरसागरविलोडनादयोऽपि कृपणोपाया—दीनचेष्टाः कापुरुषाचारा इति भावः। एतेन क्षीरसागरविलोडनचेष्टा तु इदैव पौरुषमेव लक्ष्मीलाभे हेतु इति पौरुषस्य सर्वोत्कृष्टत्वप्रतिपादनात् व्यतिरेकालङ्कारः व्यज्यते। ईदृशा—विश्वस्तहननादयः इत्यर्थः किं पुनः ?—दीनोपाया इति किं वक्तव्यम् ? इत्यर्थः विश्वासहननादयः कापुरुषाचारा एवेति भावः।

(२३४) येषां—मनस्विनां वीराणामित्यर्थः [सम्बन्धविवक्षया षष्ठी] धाता—ब्रह्मणा, धरित्री—पृथ्वी, त्रातु—रक्षितु, नियुक्ता,—आदिष्टा इत्यर्थः गिरीषु

स्वयम् असमर्था इव (२३५) कुलिशकर्कशभुजपरिघप्रहरणहेतोः उद्गिरन्ति गिरयोऽपि लोहानि, ते कथमिव बाहुशालिनो मनसाऽपि विमलयशोबान्धवा ध्यायेयुः अकार्यम्? (२३६) सर्वग्रहाभिभवभास्वराणां हि सुभटकराणाम् अग्रतो दिग्ग्रहणे पल्लवः पतङ्गकराः।

---

शीघ्रसंहत्त्वादिति भावः, असमर्था इव—अक्षमा इव, अचलत्वादिति भावः। ["असमर्था इव" इत्यत्र "असमर्था एव" इति पाठान्तरम्]।

(२३५) गिरयः—पर्वता अपि, पर्वतनप्रस्तरमया अपीति भावः, कुलिशेति।—कुलिशवत—वज्रवत, कर्कश,—कठिन, भुज,—बाहु, तत्र यत परिघप्रहरणं—मुद्गरास्त्र तस्य हेतो,—तन्निमित्त, परिघनिर्माणार्थमित्यर्थः, लोहानि—तदाख्यधातुविशेषान् उद्गिरन्ति—उद्वमन्ति, प्रसुवन्ते इति यावत, बाहुशालिन,—प्रशस्तबाहव, भुजवीर्यसमन्विता इत्यर्थः, विमलेति।—विमलानि—प्रशस्तानि, यशांसि—कीर्त्तय एव, बान्धवा,—मित्राणि येषा तथाभूता पूतयशोधना इत्यर्थः ते—योधासर्वे अचलता बाहुविरहिता गिरयोऽपि लोहानुद्गीर्य धर्मानुसारेण पृथिवी बात सहायका कुर्वन्ति, तादृशा राजान इत्यथ, विनैषां परिघप्रहरणार्थोद्गिरणसम्बन्धेऽपि इह सम्बन्ध प्रतिपादित इत्यतिशयोक्ति असमर्थत्वरूपगुणोत्प्रेक्षाऽङ्गम्, कथमिव—किमर्थमित्यर्थ, मनसाऽपि—चेतसाऽपि, किं पुनर्बहिरनुष्ठानेनेति भाव, अकार्यं—दुष्कार्यं, ध्यायेयु?—चिन्तयेयु? नैव कदाऽपि चिन्तयन्ति इत्यथ, येषा किञ्चिदपि बाहुबलमस्ति, ते मनसाऽपि न एतादृश गर्हितमाचरन्तीति भाव।

(२३६) सर्वेति।—सर्वस्य—सकलवस्तुन, ग्रहाभिभव,—ग्रह—बलात् ग्रहणमेव, अभिभव,—तिरस्कार, वस्तुस्वामिनामिति भाव ग्रहा—सर्वे ग्रहा,—चन्द्रादय, तेषामभिभव,—महसा तेजसा निष्प्रभताजननरूपतिरस्कार तेन भास्व • , भास्वरा,—उज्ज्वलाश्च, इति लिङ्गविपरिणामेन "पतङ्गकरा" इत्यत्र योजनीयम्, सुभटकराणा—वीरबाहूनाम् अग्रत,—पुरत, पतङ्गकरा,—सूर्यकिरणा, ("पतङ्गौ पक्षि सूर्यौ च" इत्यमर) करा—हस्ताश्च इति ध्वनि, दिग्ग्रहण—दशो,—पूर्वपश्चिमात्मिकयो दिशो, ग्रहण—ग्रहणे, अवलम्बने वा पल्लव,—चचला, दिगवरोधाक्षमा, दिग्ग्रहणासमर्था वा इत्यथ, तासा ग्रहणेन महावीरसदृशीमदशाव ध्वनितम्, यदा महावीरा अस्त्राणां दृष्टिभि गगनमाच्छादयन्त,

मेव केवलम्। (२४२) अप्रतिहतशासनाक्रान्त्युपभोगसुखरसन्तु रसाया (२४३) दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति। (२४४) रविरिव उन्मुखपद्माकरगृहीतपादपल्लवः सुखेन अखण्डिततेजा दिवसान् नयति शूरः।

---

प्रभुः अथवाह इत्यर्थः पृथ्वीभारधारीत भावः। य—भुजङ्गाधिपस्य भोगस्य—देहस्य फणमण्डलस्य वा ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) केवलं मणिपुरमेव—मणिकारागृहमेव विभाग—अस केवलं सात्त्वकवहनाय मनाहक प्रयासो न तस्य उचितः इत्यर्थः अथवाऽसहमानः सारक्लिष्टभावधारिण्या पायव्याः धारणाय तस्य सहस्रफणावहनश्रमस्वीकारः तथैव यतो अस्यासौ परित्रात एव तावत् इति भावः।

(२४२) रसाया—भुवः ("भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः) अप्रतिहतेति—अप्रतिहतेन—प्रतिघातवर्जितेन अनतिक्रमणीयेन इत्यर्थः, शासनेन—आज्ञया प्रतापेनेति यावत् या आक्रान्तिः—आक्रमणं प्रभावविस्तार इत्यर्थः तया च उपभोगः—सम्भोगः तेन च सुखरसः—सुखास्वादः तम्।

(२४३) दिक्—रति।—दिक्कुञ्जरस्य—दिग्गजस्य करभारः—शुण्डाभोगः तद्वत् भास्वराः—दीप्यमानाः प्रकोष्ठाः—कूर्परमणिबन्धयोः अभ्यन्तरभागाः येषां तथाभूताः ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) वीरबाहवः—वीराणाम्—सुभटानां बाहवः—भुजा एव जानन्ति—अनुभवन्तीत्यर्थः वीरभोग्या एव वसुन्धरा न तु अथवाऽसहस्रकापुरुषः निमर्षाईमपि तथाविधनायकत्वेन रक्षणीया इति भावः।

(२४४) रविरिति।—शूरः—वीरपुरुषः रविः इव—सूर्य इव अखण्डित तेजाः—अखण्डितम्—अप्रतिहतं तेजः—प्रतापः ज्योतिश्च यस्य तथाभूतः सन् एव उन्मुखेति।—उन्मुखया—उत्सुकया तत्परया इत्यर्थः सानुरागयेति भावः पद्मया—लक्ष्म्या करेण—हस्तेन गृहीतः—स्वीकृतः पादपल्लवः—चरणपल्लवः अन्यत्र—उन्मुखैः—ऊर्ध्वमुखैः पद्माकरैः—कमलसमूहैः पद्मशोभया वा गृहीताः—स्वविकाशकत्वेन प्राप्ता इत्यर्थः पादपल्लवाः—किरणसञ्चया यस्य तथाभूतः दिवसान्—वासरान् नयति—अतिवाहयति प्रापयति च करोतीत्यर्थः, रवेः दिवसकरत्वात् अखण्डिततेजसो वीरा भवादृशा एव निर्भरं सुखेन स्यातु

(२४९) शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्यस्य। (२५०) रिपुरुधिरशीकरासारेण भूरिव श्रीरपि अनुरज्यते। (२५१) बहुनरपतिमुकुटमणिशिलाशाणकोणकषणेन चरणनखराजिः इव राजताऽपि उज्ज्वलीभवति।

---

इत्यर्थः, शस्त्रेति।—शस्त्रेण—शौर्याभिमानिना अभिमानेन इत्यर्थः, विद्रुता—पलायिता, दिशः—ककुभः येन तथाभूतानि तत्र यथायथात्तैव ... च पलायिष्यते, अतस्तूर्णं जिगीषुभिः अन्यथा न सम्यक् कार्यसिद्धिः, पलायने यथोचितप्रतिशोधदानाप्रसङ्गात् इति भावः, यद्वा,—दर्पस्य—शौर्योचितगर्वातिरेकस्य, द्वाराणि—प्रवेशस्थानानि, तन्मार्गा इत्यर्थः, शस्त्रेति।—शस्त्रेण—दर्पभङ्गाभिमानिना, विद्रुता,—विद्रुता सन्तः अपहृता दिशः—दिगन्ताः येन तथाभूतानि, भवन्ति दर्पद्वाराणि महाशौर्यभूपकाद्धृते अद्य निर्गन्तु काराऽपि न सम्भवति, अत शौर्यदर्प एव प्रागासन्नीय इति तात्पर्यम्।

(२४९) शस्त्रेति।—शस्त्राणाम्—आयुधानाम् [ शसति "सर्वधातुभ्य ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रन् प्रत्ययः ] आलोकेन—उद्योतेन, प्रकाशिताः,—उद्भासिताः, शौर्यस्य—शौर्यप्रकटनस्य दिशः—ककुभः, पन्थान इति यावत्, शून्याः,—अनाहताः, जनरहिता इत्यर्थः, तवाक्रमणवार्त्तां श्रवणेनैव पलायितप्रतिपक्षत्वादिति भावः, निशितशस्त्रप्रभाभिर्विना शौर्यरूपा दिशो दिशो न ज्योतिष्मत्यो उद्भासिता भवन्ति इति तात्पर्यम्।

(२५०) रिपुरिति।—रिपूणाम्—शत्रूणाम्, रुधिराणि—शोणितानि तेषां शीकरासारः,—बिन्दुधारासम्पातः तेन, भूरिव—रणभूमिरिवेत्यर्थः, श्रीरपि—लक्ष्मीरपि, अनुरज्यते—अनुरक्ता भवति, रक्तवर्णा भवतीति भावः, अनुलिप्ता भवति इत्यर्थः अतएवमेव विजयलक्ष्मीस्त्वामाश्रयिष्यतीत्याशयः, रिपूणां रुधिरानुलेपनेनैव श्रीरनुरक्ता भवति तात्पर्यम्। वीरानुरक्ता हि राजश्रियः भवन्ति इति उपमया ध्वन्यते।

(२५१) बह्विति।—बहूनाम्—अनेकेषाम्, नरपतीनाम्—राज्ञाम्, चरणपतितानामिति भावः, मुकुटेषु—किरीटेषु,—या मणिशिलाः,—रत्नानि इत्यर्थः, ता शाणाः,—निकषशिला इव, ("शाणस्तु निकषः कषः" इत्यमरः) तासां कोणैः —अश्रिभिः, कषणम्—घर्षणम् तेन, चरणनखराजिरिव—पादनखश्रेणिरिव, राजताऽपि—राजत्वमपि, साम्राज्यमिति भावः, उज्ज्वलीभवति—उज्ज्वलतामापद्यते इत्यर्थः,

(२५८) न च स्वप्नदृष्टनष्टेषु इव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। (२५९) स्थायिनि यशसि शरीरधीः वीराणाम्। (२६०) अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावञ्च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशति एव तेजस्विनं शोकः। (२६१) स त्वं सत्त्ववताम् अग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानां, प्रष्ठोऽभि-

---

(२५८) प्रबुद्धाः,—प्रकृष्टज्ञानिनः, सौगतसिद्धान्तविदः वा, "यत्सत् तत् क्षणिकम्" इत्यादौ यत् सत्, तत् क्षणिकमिति क्षणभङ्गवादस्य तेषां सिद्धान्तेन निर्णीतमानत्वात् इति भावः, जाग्रदिताश्च स्वप्नेति।—स्वप्नेषु—निद्रावस्थायां विषयानुभवेषु, दृष्टानि—अवलोकितानि, नष्टानि—तदनन्तरम् एव अदर्शनं गतानि इत्यर्थः तेषु इव, क्षणिकेषु—क्षणमात्रस्थायिषु, कियत्कालव्यवधानेनैव भङ्गुरेष्वित्यर्थः, बन्धुबुद्धिम्—आत्मीयत्वज्ञानम्, निबध्नन्ति—स्थापयन्ति, स्वप्नदृष्टानीवाचिरस्थायीनि न खलु भवन्ति शरीराणि, अतो ममत्वबुद्ध्या नश्वरशरीरनाशभयात् त्वयेदानीं त्वरया आत्मघातिता नैषिता इति भावः।

(२५९) स्थायिनि—अविनश्वरे, चिरस्थायिनि इति भावः, ["स्थेश्वरभासपिसकसो वरच्" (३।२।१७५ पा०) इति स्थाधातोः णिनिः]। शरीरधीः,—देहबुद्धिः, वीराः यश एव शरीरमेव आत्मत्वबुद्ध्या रक्षितुं यतन्ते, न पाञ्चभौतिकं क्षणिकमिति भावः। इह भवादृशानां वीरव्रतचर्योपार्जितयशःशरीराभिरक्षणमेव श्रेयस्करी इति विवेके वक्तव्ये साधारणवीरलक्षणसामान्यमभिहितम् इत्यप्रस्तुतप्रशंसाभेदोऽलङ्कारः।

(२६०) अनवरतेति।—अनवरत—सतत, प्रज्वलितेन—तैलपूरतयाऽपि भास्वता, तेजसा—प्रतापेन, ज्योतिषा च, प्रसरेण—प्रकाशेन, भास्वर—दीप्तिमान्, स्वभावः—प्रकृतिः यस्य तथाभूतम्, तेजस्विनं—प्रतापवन्तं प्रज्वलन्तञ्च मणिप्रदीपमिव—रत्नदीपमिव, स्वभावोज्ज्वलमिति भावः कलुषः,—दारुणः पापपरिणामभूतश्च, तमोबहुल इत्यर्थः कज्जलमलः,—कज्जलम—अञ्जनम्, अग्निशिखोद्भूत धूमकृष्णवर्णम् इत्यर्थः, तदेव मलः,—मालिन्यम्, कज्जलवत् मलः—मलिन इत्यर्थश्च। न स्पृशति—नाशयति प्रतिकारस्पृहायाः अभावात् शोकप्रतिपक्षकोपोद्रेकाच्च इति भावः, अन्यत्र,—मणिमयत्वेन धूमसम्बन्धाभावादिति भावः।

(२६१) स त्वं—सर्वविभवसम्पन्नो भवान् इत्यर्थः, एतेन सर्वकार्याणामनु-

जातानाम्, अग्रेसरः तेजस्विनाम्, आदिः असहिष्णूनाम्। (२६२) एताश्च सततसन्निहितधूमायमानकोपाग्नयः सुलभासिधारातोयवृष्टयो विकटबाहुवनच्छायोपगूढा धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानाम् उरःकवाटभित्तयः।

---

धारसाधनसमत्व इत्यर्थ सूचितम्। सत्त्ववतां—महाप्राणशालिनाम अग्रणी,—अग्रगण्य। प्राज्ञानां—प्रकृष्टबुद्धिशालिनां, ग्रामण्य,—प्रधानं, वरिष्ठ इति यावत, ('क्लीबे प्रधाने । मुख्यश्चर्थवरिष्ठाश्च ०। नराङ्गाग्रामग्रहर० ॥" इत्यमर)। धनवतां—धनिमतां, प्रथम,—आद्य। अभिजातानां—महाकुलीनानां श्रेष्ठ—श्रेष्ठ, ("श्रेष्ठास्त्वग्रपदी श्रेष्ठे" इति मेदिनी)। तेजस्विनां—प्रतापवताम्, अग्रेसर —मुख्य, ["तत्पुरुषे कृति बहुलम" (६।३।१४ पा०) इति सप्तम्या अलुक्]। असहिष्णूनाम—परिहतविक्रमासहनशीलानामिति यावत आदि,—प्रथम मुख्य इत्यर्थ, एतादृशस्य सर्वगुणवतश्च ते विपक्षदमने न कालातिक्रम करणीय इत्याशय।

(२६२) एताश्चेति।—एता,—परिदृश्यमाना, त्वत्कार्याधिमवक्ष्या इति यावत, सततेति।—सततसन्निहिता,—निरन्तरसमीपावस्थिता, धूमायमाना,—धूमदुद्गमन्त इत्यर्थ, कोपात्प्रभवदिङ्गितानुकूलपवनाभावेन असम्यग्ज्वलिततया निर्व्वाणोन्मुखा इति भाव, कोपाग्नय —कोपानला यासु तथोक्ता, भवदभिलापमात्रेणैव युद्धाय प्रस्थानैषिण इति भाव, सुलभेति।—सुलभा—सुप्राप्या, ईप्सिता इति यावत असिधारातोयेन—प्रभुनिपातितनिम्निशधाराजलेन, वृष्टि,—सौहृत्य, पिपासानिवृत्तिरित्यर्थ, आनन्द इति यावत् यासां तथाविधा रणाङ्गने शत्रूणाम् असिप्रहारान् आकाङ्क्षमाणा इति भाव, विकटेति।—विकटानि—विशालानि दुरवगाहनीयानि, बाहव एव—भुजा एव, वनानि—अरण्यानि, तेषां छायाभि,—अनातपै इत्यर्थ, बाहुवीर्य्यैरिति भाव, उपगूढा,—आलिङ्गिता, सङ्गता इत्यर्थ, धीरताया —धैर्य्यशालिताया, निवासेति।—निवासस्य—अवस्थानस्य, शिशिरभूम्य,—शीतलप्रदेशा, न केवलम उद्दामवीर्य्यशालिन, किन्तु धीरा अपि इत्यर्थ, दुष्प्रधर्षबलसम्पन्नत्वेऽपि विवेकवन्त, न तु हठकारिण इति भाव, सुभटानां—महायोद्धृणाम उर इति।—उरांसि—वक्षःस्थलानि एव, कवाटभित्तय,—कवाटवत् दृढप्रशस्तवक्षःस्थलानीत्यर्थ, स्वायत्ता,—स्वस्य—आत्मन,भवत, इति भाव, आयत्ता,—अधीना।

ऽभिमानमहासन्निपातान्। (२७५) सदय सततसेवाऽञ्जलिमुकुलितकरसम्पुटोष्मभि इष्वसनगुणकिणकार्कश्यानि। (२७६) येन एव ते गतः पिता पितामहः प्रपितामहो वा, तमेव मा हासीः त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरी इव कुरङ्गीं राजलक्ष्मीम्। देव। देवभूयं गते नरेन्द्रे, (२७७) दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्द्धने, वृत्तेऽस्मिन् महाप्रलये

---

स्विषदभिमाना,—दर्पा गर्वा, अहितानामिति भावः, त एव सन्निपाताः —वाताधिरोग विशेषाः तान् जय—पराभव चरणयोः इत्यर्थः मस्तक चरणयो निपात्य निरभिमाना क्रियन्तामिति भावः। सामपाने शिरसो गौरवं भवति, तच्च अङ्गनाद्विना प्रशाम्यति इति ध्वन्यते।

(२७५) सततेति।—सतत —निरन्तर क्रियमाणा इत्यर्थः सेवाया —परिचर्याया, अवपरणयोरिति शेषः, ये अञ्जलि —युतौ करौ इत्यत्र, ('तौ युतावञ्जलि पुमान्' इति करविवरणे अमरः) तेन मुकुलितस्य —मुकुलवत् यतस्य सहतस्य इत्यर्थः, करसम्पुटस्य —युक्तकरद्वयस्य इत्यर्थः उष्मभि —सन्तापैः, सततकरसम्पुटसंलग्नतैरिति भावः इष्विति।—इषव,—शराः अस्यन्ते —क्षिप्यन्ते अनेन इति इष्वसन —धनु, तस्य गुण —मौर्वी, तेन ये किणा —कर्कशविकारानि अविरतघाताऽऽकर्षणेन इति भावः तेषां कार्कश्यानि—काठिन्यानि, अनुकरायाम् इति शेषः, सदय —शिथिलय, कोमलानि कुरु इत्यर्थः, उष्मस्वेदन।कार्कश्यकारकत्वस्य अपनोदनं इति प्रसिद्धिः, अद्भुत धनुर्ज्याऽऽस्फालनव्यापारमेव सेवस्व, त्यक्तस्वकुविवात भावः। इह कियाद्भूमाद्यविधानेन विषयाणां साम्यकालिकस्य वलनश्रापारदृश्यमानात् इयस्य सन्ताप अपाधारम्याधिकमचालित मदक्षितम इति सूचये।

(२७६) येन, यथा इति ध्रुवः। त्रिभुवनस्पृहणीय—जगत्मनोभिलाष पन्थान—मार्गं वीरोचितमिति भावः, मा हासी,—मा त्याक्षी। कुपुरुषोचिता—कापुरुषयोग्या, शुच—शोकम अपहाय—परित्यज्य, केसरी—सिंह कुरङ्गीमिव—मृगीमिव कुल क्रमागता—वंशपरम्पराप्राप्ता राजलक्ष्मी प्रतिपद्यस्व—गृहाण। नरेन्द्र—राजनि प्रभाकरवर्द्धने इति यावत् विषवैद्ये च ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुरुषम्" इति मेदिनी) देवभूय—देवत्वम्।

(२७७) दुष्टेति।—दुष्ट —दृप्त क्रूरश्च, गौड,—गौडाधिप एव भुजङ्ग,—आशीविष, तेन जग्ध—भक्षितं, निहत्य दष्टश्चार्थः, जीवितं—जीवनं यस्य तथाभूते।

धरणीधारणाय अधुना त्वं शेषः। (२७८) समाश्वासय अशरणाः प्रजाः। (२७९) क्ष्मापतीनां शिरःसु शरत्सविता इव ललाटन्तपान् प्रयच्छ पादन्यासान्। (२८०) अहितानाम् अभिनवमेघादोघाद्‌ खमन्तश्यामधूममण्डलैः नखमयूखैः प्रचलित-चूडामणिचक्रवालज्वालातपेषु आयाहि कल्मापपादताम्।

महाप्रलये—महासङ्कटे, समरक्षये इति भावः, कल्पान्ते च, इह—उपस्थिते, धरणीधारणाय—पृथ्वीपालनाय पृथ्वीभारवहनाय च शेषः,—अवशिष्टः, अनन्तनागश्च। इह श्लिष्टपदैः पक्षाभेदाभेदकाप्रतीतेः श्लेषानुप्राणितं रूपकम्।

(२७८) समाश्वासय—सान्त्वय। अशरणाः—निराश्रयाः, प्रभाकरवर्द्धन-राज्यवर्द्धनयोः अकाले कालेन दुरात्मना कवलनात् सम्प्रति निरवलम्बा इत्याशयः।

(२७९) क्ष्मापतीनां—राज्ञां विद्विषामिति भावः, शीर्षाणाम्, पञ्चतानामित्यर्थः। शरत्सविता इव—शारदीय सूर्य इव ललाटन्तपान्—भालतापिन पादन्यासान्मालनात् शिरःपीडाकरानित्यर्थः, अतिप्रचण्डानित्यर्थः, ["असूर्यं ललाटयोर्दृशि तपः" (३।२।३६ पा०) इति खश्, "अरुर्द्विषत्—" (६।३।६७ पा०) इत्यादिना मुमागमश्च] पादन्यासान्—चरणरूपन्यासवन्ति लघुचरणपातानित्यर्थः, किरणवर्षेषाञ्च प्रयच्छ —निधेहि सर्वान् विद्विषः स्वचरणे प्रणतान् कुरु इत्यर्थः। अत्र विशेषणश्लेषान् श्लिष्टः उपमालङ्कारः।

(२८०) अहितानां—शत्रूणाम् अभिनवति।—अभिनवाः,—अपूर्वाः अननु-भूतपूर्वा इति भावः या मेघाः —चरणवाहनानि ता एव दीप्ताः —अवयवकं व्य-ञ्जनविशेषाः तासु यत् ग्रहणं—क्रम आक्रमण इति भावः तेन सञ्जाताः—उत्पन्नाः, श्यामधूमानां—मिश्राणां ताम्रश्यामकल्पानां, द्रव्यविशेषाणामित्यर्थः मण्डलानि— अनूहा तैः नखमयूखैः —नखाग्र—पादनखर निति यावत् मयूखैः—सपत्नीति भावश्चा तैः ["मिमन्धि च" (३।२।२४ पा०) इति खश्] प्रज्वलितानि तत्कालमञ्जल-श्वासवायुसंयोगात् चूडामणिसमूहातपतापसम्बन्धाज्जात भावः प्रचलितेति।—प्रचलितानां —प्रलुण्ठितानां चूडामणीनां—शिरोरत्नानां पादपतितानाम् अहितानामिति भावः, चक्रवालानि—मण्डलानि, तेषां ज्वालातपः —नवादितसूर्यकिरणकल्पाभासा तत्र, कल्माषपादता—चित्रचरणत्वं धूमेन श्यामेन च योगात् कृष्णपाण्डुरचरणत्व-मित्यर्थः, ("चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" "कल्माषो यातुधाने च कृष्ण-पाण्डुरवर्णयोः" इत्यमरमेदिन्यौ) तदाख्यराजर्षयवत्त्वञ्च। इह श्लोकोत्थपूर्ते चरण

अपि च (२८१) हते पितरि एकाकी तपस्वी मृगैः सह संवर्धितः, सहजब्राह्मण्यमार्दवसुकुमारमनाः, कृतनिश्चयः, (२८२) चण्डचापवनाटनिटाङ्कारनादनिर्मदीकृतदिग्गजं, (२८३) गुञ्जज्ज्याजालजनितजगज्ज्वरं समयम् उद्यतम् एकविंशतिकृत्वःकृत्तवंशम् उत्खातवान् राजन्यकं परशुरामः।

---

इतिजनपतिचूडामणिचक्रवालवालपैव धूमनैमलिनतया महाडम्बरभासुरतया च विबुधरपात्र प्रदनेन खड्गधाराधारापूर्वक अनुकूलगुणवादीऽभूत् इति तद्भु भाषदार।

(२८१) पितरि—जमदग्नौ, हते—व्यापादिते, कार्तवीर्येण इति शेषः, एकाकी—असहायः, साधनविवर्जित इति यावत्, ["एकादाकिनिचासहाये" (५।३।५२ पा०) इत्याकिनिच्] तपस्वी—तापसः, शान्तात्मा इति भावः। संवर्धितः—पालितः, स्वभावमेवकुरङ्गसहवासात् प्रकृत्या शान्तोऽपीति भावः, सहजेति।—सहजस्य—स्वाभाविकस्य, ब्राह्मण्यस्य—ब्राह्मणानां भावो ब्राह्मण्यं तस्य, ब्राह्मणवंशस्य विनयस्य वा, मार्दवेन—मृदुत्वेन ब्राह्मणगुणभेदेन, सुकुमारम्—अतिकोमलं मनः—चित्तं यस्य तथाभूतः, कोमलप्रकृतिरिति यावत्, कृतनिश्चयः—पितृघातात् निर्गम्य एकीत कृतप्रतिज्ञः सन्।

(२८२) चण्डेति।—चण्डानां—उग्रदर्शनानां, भीतिप्रदानामित्यर्थः, चापवनानां—धनुःसमूहानाम् अटनयः—कोटयः, अग्रभागा इत्यर्थः ("कोटिरस्याटनि" इति धनुरग्रस्य नाम) तासां टङ्कारेण—टङ्कारध्वनिना, गुणाकर्षणकालिकेनेत्यर्थः, निर्मदीकृताः—मदशून्यीकृताः, दिग्गजाः—ऐरावतादयः येन तथाभूतं, दिग्गजमदघोषणधनुष्टङ्कारमिति यावत्, महाशूरमिति भावः।

(२८३) गुञ्जदिति।—गुञ्जत्—शब्दायमानं ज्याजालं—धनुर्मौर्वीनिचयं आकर्षणजनितैरिति भावः, जनितः—उत्पादितः, जगतां—भुवनानां, ज्वरः—सन्तापः येन तथाभूतं समयम्—सङ्गरम्, उद्यतम्—सङ्ग्रामप्रवणमित्यर्थः, एकेति।—एकविंशतिकृत्वः—एकविंशतिवारम्, ["संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति संख्यावाचकाच्छब्दात् अभ्यावृत्तिगणनेऽर्थे कृत्वसुच्] कृत्तः—छिन्नः, वंशः—कुलं यस्य तथाभूतं, राजन्यकं—क्षत्रियसमूहम्, उत्खातवान्—उन्मूलितवान्। पुरा कार्तवीर्यार्जुनो हैहयाधिपतिः तपोवनं मृगयाप्रसङ्गादागतः जमदग्निना मुनिना कामधेनुप्रभावेण सत्कृतः। दृष्ट्वा च नृपतिः अतीव प्रीतः कामधेनुं ग्रहीतुमना मुनिं ययाचे। मुनिस्तु देवतापितृतिथिक्रियार्थं ता

किं पुनः (२८४) नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्धन्यो देवः? तदद्य एव (२८५) कृतप्रतिज्ञो गृहाण गौडाधमजीवितध्वस्तये जीवितसङ्ग्रहणाकुलकाला-काण्डदण्डयात्राचिह्नध्वजं धनुः। न हि अयम् (२८६) अराति-रक्तस्यन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानल-

---

न जातुसैरोत। तेन हि दृष्टो राजा बलात्ता जहार। मुनिरपि जीवितमिव सत्व बाधमजनयत्, एवमत्याऽयत्रो महर्षे समुपने राजा मुनि निहत्य धेनुं ता बलात् स्वगृहमानिनाय। प्रवासप्रत्यागत परशुराम सुता तु पितृनिधन महारोषकषायित-चेता हैहयाधिप कार्तवीर्य्यं प्राक् निहत्य एकविंशतिवार पृथिवीमक्षत्रियां कृत्वा पितृ रुधिरप्रवाहेण पितृन् तर्पयामासेति पौराणिकी वार्त्ताऽनुसन्धेया।

(२८४) नैसर्गिकेति।—नैसर्गिकेण—स्वाभाविकेन, कायकार्कश्येन—देहकाठिन्येन, कुलिशायमान—कुलिश—वज्र, तद्वदाचरत, अतिकठिनतया कुलिशोपममिति भाव, मानसम्—चित्त यस्य तथाभूत, अभिघातादिति भाव मानिनाम्—मानवताम्, मानधनाना-मिति यावत् मूर्धन्य,—शिर स्थित इत्यर्थ,मुख्य इति यावत्, यदि तादृश स्वभावकोमल-श्वभाव परशुरामोऽपि अमर्षात् घातकान् ससून् निःशेषमुन्मूलितवान्, तर्हि किं पुनः प्रकृतिकठोरचित्तः प्रभूतस्य भवत मानस्य ब्रह्यथाम? अचिरमेव भवता गौड पाण्डवादयः शत्रव समूलघात हन्तव्या इत्याशय। एतेन परशुरामादपि आधिक्यप्रतिपादनात् व्यतिरेकालङ्कार।

(२८५) कृतप्रतिज्ञ,—गृहीतसन्ध, शत्रुहत्या व्यापारविषये इत्थेव विहिताङ्गी-कार इत्यर्थ, गौडेति।—गौडाधमस्य—गौडाधमदस्य जीवितध्वस्तये—जीवननाशनाय, जीवितेति।—जीवितानाम्—प्राणानाम्, प्राणिनामिति भाव, सङ्ग्रहणाय—सङ्ग्रहणाय, आकुल,—आतुर य काल,—अन्तक यम इत्यर्थ, तस्य अकाण्डे सहसा, दण्डयात्रा—युद्धप्रयाण, तस्या चिह्न—लक्षणभूत, ध्वज—पताका तत्स्वरूपमित्यर्थ, दृश्यते हि भटा युद्धयात्रायां पताकादिभिरुपशोभिता भवन्ति भवान् अस्मिन्काले धनुर्भि प्रतिदिश सम्प्रयुक्त, यथा जनाना भवत धनुष्काण्डेषु प्राणिप्राणहरणपटीयस: यमस्य किङ्करा प्रायप्रयाणे विजयपताकामानिभेदितीति तात्पर्य, धनु—कार्मुक, गृहाण—प्रतिपद्यस्व, अचिरमेव तस्य प्रयाणं भाव्य इति समुद्दिष्टार्थः।

(२८६) अरातीति।—अरातीनाम्—विद्विषाम्, शत्रूणामित्यर्थ, रक्तानि—रुधिराणि

संज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजच्छटेषु अस्नायि", इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत्,—"करणीयमेव इदम् अभिहितं (२८९) मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायादृष्टिः ईर्ष्यालोः भुजस्य। (२९०) उपरि गच्छति इच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेषु अपि करग्रहम् अभिलषति दातुं करः।

---

संज्वरा —सन्तापा, ते सुखायमाना,—सुखं वेदयमाना, सुखं निरन्तरमुत्पादयन्त इत्यर्थः, सुखप्रदा इति भावः, ["सुखादिभ्यः कर्तृवेदनायाम्" (३।१।१८ पा०) इति सुखशब्दात् कर्तरि क्यङि शानचि च रूपम्] स्पर्शेन शीतलाश्च—हिमस्पर्शाश्च तेषु, [तृतीयासमासोत्तरं विशेषणसमासः] क्षत्रियेति।—क्षत्रियाणां—राजन्यानां, क्षतजानि —रुधिराणि, तेषां छटा,—अगाधजलाशयाः तत्र अगाधशोणितपूर्णसरसीष्वित्यर्थः तेषु अस्नायि—स्नातं, स्वभावकोमलब्राह्मणोऽपि परशुरामः प्रज्वलितरोषः स्वपितुः परिभवप्रतीकारं कृतवान्, कठोरप्रकृतिक्षत्रियेण मया तदवश्यकर्तव्यमेव इत्यत्र न कोऽपि विचिकित्सा इति तात्पर्यम्। व्यरंसीत्—विरराम, मौनमवलम्बितवानित्यर्थः।

(२८९) मान्येन—मान्यवरेण। इतरथा हि—अन्यथैव करणीयत्वोपदेशाभावेऽपि इति भावः, यद्वा—इतरथा हि—अन्यथाऽपि अपरिमितपराक्रमसमन्वितत्वादित्यर्थः, गृहीतभुवि—भूभारवाहिनि इत्यर्थः, भोगिनाथे—शेषनागे, नरनाथे च दायादृष्टिः,—दायं—पैतृकं धनं आदत्ते इति दायादः,—पैतृकधनहर इत्यर्थः, तस्मिन्निव दृष्टिः —विरुद्धदर्शनमिति यावत् ममैतस्मिन्नपि अत्यन्तरोषः अस्ति इति प्रतिपक्षबुद्धिरिति भावः ईर्ष्यालोः,—परोत्कर्षासहिष्णोः, ममास्य विद्वेषरित्यर्थः [ईर्ष्यां करोति इति विग्रहे "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" (३० १ पा० २८ सू०) इति कृदन्तादालुच् निपात्यते]।

(२९०) उपरीति।—उपरि—ऊर्ध्वदेशे आकाशे इत्यर्थः, गच्छति—चरति, ग्रहगणे—ज्योतिर्गणेऽपि, निग्रहाय—कथं मे उपरि गच्छतीति रोषेण दण्डदानाय, भ्रूलता—भ्रूवल्ली चलितुम्—कुटिलीभवितुमित्यर्थः, इच्छति—अभिलषति मामतिक्रम्य इन केन भावेन कश्चिदपि गमिष्यति इति न तु सहते एवेति भावः। शैलेषु—पर्वतेषु, अनमत्सु—नतिमकुर्वत्सु इत्यर्थः प्रणतिरूपाचारेण न चाभिवादितेषु

शोकक्रियाकरणस्य। अपि च (२८४) हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा मूत्कर्तुम्। (२८५) अकृतरिपुजनवनिताविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम्?

---

पुनः वक्तव्यमिति शेषः, भवदुपदिष्टात् ईदृग्दुर्घटनापातात् प्रागेव मे एवंविधः अभिलाषः प्रादुर्भूतः अधुना ईदृग्दुर्जातजननानन्तरं तत्साधने किं पुनर्वक्तव्यम्? अवश्यमेव तत् साधयिष्यामि इति भावः। जातामर्षनिर्भरे—अमर्षेणापूरिते इत्यर्थः। शोकक्रियाकरणस्य—शोकसूचककर्माचरणस्य, अवकाशः—अवसरः, नास्त्येव—न किञ्चिदपि वर्तते, अथवा,—किं पुनः इति पदं अत्र अन्वेतव्यम्, तथा च—ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि शोकक्रियाकरणस्य अवकाशः नास्त्येव इत्यन्वयः किं पुनः वक्तव्यं, प्रागेव तथाविधः अभिलाषः जातः, अधुना भ्रातुर्मरणाच्छोचनीयवस्तुना सर्वानेव दुर्विनीतान् दण्डयिष्यामि नास्ति मे शोकावसरः, क्रोध एव शोकस्थानमध्यकार्षीत् इति भावः।

(२८४) हृदयविषमशल्ये—मर्मविदारकव्यथाजनके, यद्वा—हृदये—चेतसि, विषम—दुःसहमित्यर्थं, शल्य—शङ्कुः यस्मात् तथाभूते मनःपीडादायके इत्यर्थः, हृदयनिखातविषमशल्यभूते इत्यर्थो वा अतिदारुणशल्यायमाने इति यावत्, मुसल्ये—मुसलम्—अयोऽग्रेण, अस्त्रविशेषेण इत्यर्थः, वध्ये,—नाश्ये इत्यर्थः ["विध्यो विषयो वध्यो मुसल्यो मुसलेन च" इत्यमरः। मुसलम् अर्हति इति विग्रहे "दण्डादिभ्यो यत्" (५।१।६६ पा०) इति यत्] जाल्मे—पामरे, ("जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु" इति मेदिनी) जगद्विगर्हिते—त्रिभुवननिन्दिते इत्यर्थः, गौडाधिपाधमचण्डाले—ईदृशश्वपचसदृशे गौडराजे जीवति—प्राणिति सति, पोटेव—पुरुषलक्षणयुता स्त्रीव, श्मश्रुप्रभृतिमती नारीवत्यर्थः, ("पोटा स्त्रीपुंसलक्षणा" इत्यमरः) शुचा—शोकेन, मूत्कर्तुम्—मूत्कारम्—अस्फुटशब्दविशेषं कर्तुमित्यर्थः जिह्रेमि—लज्जे तादृशमूत्कृत्यादिभिः शोकसूचकाव्यक्तध्वनिविकाराः क्रियन्ते अलसैः पुरुषैः, न तु वीरैरिति हृदयम्।

(२८५) अकृतेति।—न कृतं—न जनितं रिपुजनवनितानां—शत्रुसैनिकाङ्गनानां विलोलानां—चञ्चलानां, लोचनानां—नयनानां उदकैः,—अश्रुभिः, दुर्दिनं—मेघाच्छन्नसमयः येन तथाभूतस्य, रिपुरमणीनां नयनासारजनितमेघा

(२८६) अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमपि अश्रुसलिलम्? श्रूयतां मे प्रतिज्ञा,—शपामि आर्यस्यैव पादपांशुस्पर्शेन, यदि परिगणितैः एव वासरैः (२८७) सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं, ततः तनूनपाति पीतसर्पिषि पतङ्ग इव

---

कृष्णाञ्जलीत्यर्थः, मे—मम, [कर्तरि षष्ठी] करयुगलस्य—भुजद्वयस्य, [शेषे षष्ठी, जलाञ्जलिना सहास्यान्वयः] जलाञ्जलिदानं—तर्पणार्थम् उदकाञ्जलिदानं, भावे इति भावः, कुतः? न कुतोऽपि जनात् तस्मादस्मादित्यर्थः, रिपुनारीणां हतभर्तृकाणां नयनसलिलैरेव अञ्जलिं पूरयित्वा भ्रातरं तर्पयिष्यामि इति भावः।

(२८६) अदृष्टेति।—न दृष्टं—नावलोकितं, गौडाधमस्य—पापगौडाधिपस्य, चिताधूममण्डलं—शवदाहार्थविरचितप्रज्वलत्काष्ठपुञ्जोद्गतधूमसमूहः येन तथाभूतस्य चक्षुषः,—नेत्रस्य, मे इति शेषः, स्वल्पमपि—किञ्चिदपीत्यर्थः, अश्रुसलिलं—बाष्पवारि, कुतः? इति पूर्वेणान्वयः, अतो यावद्गौडमहं नैव पश्यामि तावत् अश्रुजलं किमपि पातयिष्यामीत्यर्थः। [अत्र "अश्रु नेत्राम्बु रोदनं चास्रमश्रु च" इत्यमरोक्तेः अश्रुशब्देनैव गतार्थत्वात् सलिलपदमधिकमिति अधिकपदत्वं दोष इत्यवधेयम्]। पादपांशुस्पर्शेन—चरणरजःस्पर्शेन, तत्स्पर्शं कृत्वेत्यर्थः, शपामि—शपथं करोमि, [अत्र "शप उपालम्भे" इति वार्त्तिकबलात्, आक्रोशार्थकात् शपतेः आत्मनेपदमेव नियमितम्, इह तु तद्विपरीतमिति व्याकरणशास्त्रविरोधेन च्युतसंस्कारत्वं दोष इत्यवधेयम्] परिगणितैः,—सङ्ख्यातैः, अल्पसङ्ख्यया सम्मितैरित्यर्थः, वासरैः,—दिवसैः ["अपवर्गे तृतीया" (२।३।६ पा०) इति सूत्रेण बोधितत्वात् कालवाचकात् वासरशब्दात् अत्र तृतीया ज्ञेया]।

(२८७) सकलेति।—सकलानां—समग्राणां, चापचापलेन—धनुश्चापल्येन, धनुर्धरा एव वयमित्यभिमानेनेति भावः, दुर्ललितानां—दुर्विनीतानां, नरपतीनां—राज्ञां, चरणेषु—पादेषु, रणरणायमानाः,—रणरणशब्द इव आचरन्तः, रणरणशब्दं कुर्वन्त इत्यर्थः, [रणशब्दस्य "नित्यवीप्सयोः" (८।१।४ पा०) इति द्वित्वे पश्चात् 'कर्तुः क्यङ् सलोपश्च' (३।१।११ पा०) इति उपमानात् कर्तुः रणरणशब्दात् क्यङि शानचि च रूपमेतदिति ज्ञेयम्] निगडाः,—लोहशृङ्खलानि यस्यां तथाभूताम्, तथा निर्गौडां—निहतगौडपतिं, गौडाधिपवर्जितामित्यर्थः, दुष्टगौडेश्वरं निहत्य सर्वानेव अन्यान् दुर्विनीतान् नृपान् विजित्य च लौहशृङ्खलनिगडितपादान् यदि तान् कारागारे

(३००) आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखर-कुहरकुक्षेः अस्तगिरेः, (३०१) आ गुह्यकगेहिनीपरिमल-सुगन्धिगन्धपाषाणवासितगुहागृहात्‌ गन्धमादनात्‌ सर्वेषां राज्ञां,—(३०२) 'सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रह-

स्थितादिति शेषः, त्रिकूट सुवेलगिरिवन्नैव गिरेर्विषयकतया, भगवती रामस्य विजय-माला या त्रिकूटगिरिगात्रे टङ्केन चङ्क्रमिता सा सुवेलगिरावपि, तेन दक्षिणस्यां दिशि श्रीरामचन्द्रविजयमालाङ्कितसुवेलगिरिपर्यन्तमिति समुदितार्थः । तथा च वाल्मीकीये "ततस्तमक्षोभ्यबलं लङ्कायां नृपतेश्चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥" रा० यु० ३१ स० १ श्लो० ।

(३००) वारुणीति ।—वारुणी—सुराभेदः, तस्याः मदेन—तत्पानजनित-विकारविशेषेण, स्खलिता,—मत्ततया प्रस्खलच्चरणा इति भावः, या वरुणस्य—पश्चिम-दिक्पालस्य, वराः,—उत्तमाः, नार्यः,—स्त्रियः, तासां नूपुररवैः—चरणनिहितानां मञ्जीराणां निनादैः, मुखरं,—सशब्दं, कुहरकुक्षि,—गह्वराभ्यन्तरं यस्य तथाभूतात्, अस्तगिरेः,—अस्ताचलात्, पश्चिमदिग्वर्त्तिपर्वतादिति भावः, यस्मिन्नस्तगिरौ पश्चिमाशा-ऽधिपतेः वरुणस्य वरवनिताः वारुणीं सुरां निपीय मत्ततया पतित्वा सतत मञ्जीररवैस्तं मुखरयन्ति, पश्चिमायां दिशि तदस्ताचलपर्यन्तमिति समुदितार्थः ।

(३०१) गुह्यकेति ।—गुह्यकानां—देवयोनिविशेषाणां, निधिरक्षकयक्षविशेषाणा-मित्यर्थः, याः गेहिन्यः—जायाः, तासां परिमलेन—चित्ताकर्षकसौरभेण, गात्रानुलेपन-घृष्टकुङ्कुमादिगन्धेनेत्यर्थः, ("क्वाऽऽपि परिमलोऽप्रतमर्दातिमनोहरगन्धयोरपि" इति मेदिनी) सुगन्धयः,—सौरभवन्तः, ये गन्धपाषाणाः,—गन्धप्रधानाः शिलाः, गन्धकशानुगन्ध शिलाः ताभिर्वासितानि—सुरभितानि, गुहाः —कन्दराः, गृहाणीव—भवनानीव यस्य तथाभूतात्, गन्धमादनात्—तदाख्यपर्वतात्, उत्तरस्यां दिशि गन्धमादनपर्वतपर्यन्तमित्यर्थः [सर्वत्र आङ्योगे पञ्चमी] । भवानयमर्थः,—गन्धमादनशैले हि निसर्गगन्धवन्ति शिलाभिः शिलाभिः सन्त्येव, तथापि गुह्यकगेहिनीनां गात्राणां अनुलेपनभूतघृष्टकुङ्कुमादिसमुद्भूतेन त्रिभुवन-विलासजनितेन वा परिमलेन गुहागृहाण्यपि नितरां सुगन्धीनि कुर्वन्तीति, अपूर्वविलास-भूमिरेव भवति हि तेन तत्पर्यन्तमिति भावः, सर्वेषां राज्ञां—समस्तानां नराधिपानां, ["षष्ठी शेषे" (२।३।५० पा०) इति सम्बन्धमात्रविवक्षायां षष्ठी] विज्ञाप्यताम् इति योजना, एवमिति शेषः ।

(३०२) किं तत् प्रतिज्ञातमुपदिश्यते इत्याशङ्कायामाह, सज्जीत्यादि ।—

णाय वा ; गृह्यन्तां द्विषः चामराणि वा ; नम्यन्तां शिरांसि धनूंषि वा ; कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा ; (२०३) शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा ; घटन्ताम् अञ्जलयः करिघटाबन्धा वा ; (२०४) मुच्यन्तां भूमयः दयन्तो वा ; समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा ; (२०५) सुदृष्टः क्रियताम् आत्मा मच्चरणनखेषु

करा,—हस्ता, करदानाय—राजभागदानाय (इति सन्धिपक्षाय), शस्त्रग्रहणाय—युद्धकरणार्थमिति भाव, (इति विग्रहपक्षाय) सज्जीक्रियन्ता—प्रवर्त्त्यन्ता, उद्यन्तामित्यर्थ, सर्वे एव मदधीनता स्वीकृत्य समाजे मम कर ददतु, तदन्यथा चेत युद्ध कुर्वन्तु इति समुदिताय, मा सखादत्वेन न स्वीकुरुत चेन तदा युद्धे युष्मान विजित्याचिरादेव मदधीनता नेष्यामीत्याशय। एवमुत्तरत्रापि। द्विष,—शत्रव गृह्यन्ता—राज्य विहाय पलाय्य चामीयन्ता, चामराणि वा—वालव्यजनानि वा, गृह्यन्ता—धार्य्यन्ता मत्सेवाय मिति भाव, युष्माभिरिति शेष। शिरासि—मस्तकानि, नम्यन्ता—मच्चरणयो प्रणिपात्यन्ता धनूषि—चापा वा नम्यन्ता—ज्यारोपणेन आकृष्यन्ता तानि युद्धाय सज्जितानि क्रियन्ताम इत्यर्थ युष्माभि इति शेष। आज्ञा,—आदेशा मदीया इति शेष, कर्णपूरीक्रियन्ता—श्रवणाभरणीक्रियन्ता, कर्णभूषण यथा सतत कर्णे स्थित शोभते तथा मदीयाज्ञा नित्य कर्णस्थित आदर शिरोधार्यमिति भाव, अथवा मौर्व्य,—शिञ्जिन्य धनुर्गुणा इत्यर्थ ("मौर्वी ज्या शिञ्जिनी गुण" इत्यमर) कर्णपूरीक्रियन्ताम—आकर्णमाकृष्यन्ता, युद्धाय इति भाव। इह आज्ञाया मौर्व्याश्च कर्णपूरीकरणयो सन्धिविग्रहोपधायकयोरैक्यात् कर्णपूरकत्वाविरोध, स चैकदेशस्थयोरपर्यवसान तुल्ययोगिताया मौर्वीकर्णपूरीकरणयो द्वयोरपि तेन तयोरैक्यमेव कर्तुमशक्यत्वात सन्देहस्यैव पर्यवसानतया विकल्पालङ्कृति इत्यवधातव्य।

(२०३) पादरजांसि—पदधूलय मदीयानीति भाव शेखरीभवन्तु—शिरोभूषण भूतानि भवन्तु शिरस्त्राणि वा—युद्धकाले शरीररक्षार्थं शिरोरक्षणविशेषा वा शेखरी भवन्त्वित्यन्वय युष्माकमिति शेष। अञ्जलय —हस्तपुटा, युक्तकरद्वयम इत्यर्थ, घटन्ता—जायन्ता प्रणतये करद्वय संयोजयन्ताम इत्यर्थ, करिघटाबन्धा वा—हस्तिव्यूहरचना वा घटन्ता—भवन्तु इत्यर्थ।

(२०४) भूमय,—राज्यानीति यावत दयन्त —शरा वा, मुच्यन्ता—त्यज्यन्ताम। वेत्रयष्टय,—वेत्रलता, समालम्ब्यन्ता—गृह्यन्ता नद्ध्युपु मत्सेवार्थ ग्रह्यतामिति भाव, कुन्तयष्टय,—कुन्ताख्यास्त्राणि वा, समालम्ब्यन्ता, युष्माभिरिति शेष।

(२०५) मच्चरणनखेषु—मम पादनखरेषु सुस्वच्छतया दर्पणदर्पविजि

(२०८) ततश्च निजाधिकारापहारभीत इव भगवति अपि क्वापि गते गततेजसि अहिमभासि, तामरसवनेषु अपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, (२०९) विहगगणेषु अपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भिया इव

त्यर्थः । अगलत्—अतिचक्राम आयचीदित्यर्थः सायमभवत इति यावत् । इषप्रहर इव—अहर्द्वारावग इव । सुतप्रातक्षस्य—अपथ सुतवत इत्यर्थ । प्राच्य उषा—प्राच्यम—अपराक्षम यर्वीन्मुख इत्यर्थः उषा—तेज यौवाव यस्य तथाभूत, ( उषो चन्द्रस्तु च ज्यष्ठ पुमानुषा स्त्रिया लिपि' इति कोषात ) उषाशब्दो नाम्नो ऽदन्तश्च दृश्यते तेन भानस्वोषमन्द्याय प्रयोग इति अयम् । यो हि राज इवस्य एव दयार्द्दीन वचनमश्रौषीत तस्य गव्य सपदि विलुप्तोऽभूत का कथा अन्यथा क्षय दिवसोऽपि स्वाभाविकसुख विहाय भयात म्लानमात त्वाप्यम् ।

(२०८) "ततश्च" इत्यस्य "प्रदोषास्थाने नाविचर तस्थौ" इति परेण सम्बन्ध । निजेति ।—निजस्य—आत्मन अधिकारस्य—स्वामित्वस्य जगत्प्रतपनरूपे कम्मणि इति भाव अपहारात्—अपहरणकारणात् भीते इव—त्रस्त [illegible] एवं विलोक्या दर्पान्मूलनाय यद्दुरकर इति भाव गततेजसि—निष्प्रभ इत्यर्थः, अहिमभासि—उष्णरश्मौ रवौ इत्यर्थः क्वापि गते—अदर्शन प्राप्ते इत्यर्थः अस्तमिते इति भाव । निगूढेति ।—निगूढा —गुप्ता नायकस्य प्रभाकरस्य अस्तगमनमवलोक्य विरहदुःखादिव पद्मानां मुकुलीभावेन तद्गर्भपतिता भ्रमराणां सपद तत्रावरुद्धत्वादिति भाव शिलीमुखानां—भ्रमराणां आलापाश्च ( अलि बाणौ शिलीमुखौ इत्यमरः ) आलापा —गुञ्जनानि इत्यर्थ येषु पाठान्तरे इत्यर्थः येषु तथाभूतेषु तामरसवनेषु —पद्मकाननेषु ( अथ तामरसं पद्म तास्रकाञ्चनयोरपि इति मेदिनी ) त्रासादिव —भयादिव सङ्कुचत्सु—निमीलत्सु, अत्राशय स्थिता गुप्तभावेन मलिनाकारणात् कथमपि एव जल्पन्ति किमेषा मनसि वर्त्तते इति विविच्य इति भाव भ्रमरा अरपतनभयादिव कमलाभ्यन्तरमन्यमहमद्यापि [illegible] लोकेऽपि गृहाभ्यन्तरे प्रच्छन्न मन्त्रयता केषाचित कथञ्चित् गुञ्जनमाकर्ण्य गृहाधिकारी भयात् सङ्कुचितो भवतीत्यपि दृश्यते ।

(२०९) विहगगणेषु—विहायसा—आकाशमार्गेण गच्छन्ति इति विहगा [ "ड [illegible] विहायसो विहादेशो वक्तव्य" (वा०) इति ड ] तेषां गणा तेषु पक्षिवृन्देषु इत्यर्थ, समुपेति ।—समुपसंहृत —सङ्कुचित इत्यर्थ निजपक्षाणां स्वपत्त्राणां,

अप्रकटोऽभवत्, भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले, (२१०) स्वपदच्युतिचकितदिक्पालदीयमानार्गलविह्वलोहप्राकारवलयासु इव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने न अतिचिरं तस्थौ। (२११) नमन्नृपलोकलोलांशुकपवनकम्पितशिखैः दीपिकाचक्रवालैः अपि प्रणम्यमान इव प्राहिणोत् लोकं, प्रतिषिद्धपारिजनप्रवेशश्च शयनगृहं

---

विधेय,—चान्तर्निभृय ये तथाभूता, अत एव निभृता,—अचञ्चला, स्थिरा इत्यर्थः तेषु, [ विशेषणसमासः ] अन्यत,—समुपसङ्गत,—समाप्ति यत, सपदि स्वयमेव विनष्ट इत्यर्थः, सद्य इव स्वस्याभ्युदय इहेति भाव, निजपक्षाणाम्—आत्मसहायाना, य विपक्ष,—प्रसार इत्यर्थ, तन निभृता: तथाभूतस्तु इत्यथ, स्थितिरेव—तत्स्थितिरेव, इत्यादि भाव, एकत्र,—स्वपक्षचेष्टाभावात्, अन्यत्र—स्वसहायाभावात् इति भाव, अप्रकटोऽभवत्—अप्रकाशतां गच्छत्। भुवनव्यापिनी—समस्त जगदावरणकारिणी, जगति व्याप्तिशालिनीमित्यर्थः, प्रतिज्ञामिव—शपथमिव, स्वर्भस्य इति भाव। मानयति—पूजयति, आद्रियमाणे इत्यर्थ। नतशिरसि—प्रणतमस्तके इत्यर्थ। घटिताञ्जलिवने—कृताञ्जलिसमूहे, सन्ध्यागमनात् शिरसि अञ्जलि बद्धा उपासितु प्रवृत्ते इत्यर्थ.।

(२१०) दिक्षु—आशासु, स्वपदेति।—स्वस्य—आत्मन, पदात्—अधिकारात्, लोकपालकलकृपात् इति भाव, च्युति,—भ्रंश, तस्मात् तेन वा चकिता,—शङ्किता, ये दिक्पाला,—दिग्धिपतय इन्द्रादय, तै दीयमान—निधीयमानम्, अर्गलिव—गगनस्पर्शि, [ "वहाम लिह" (३।२।३२ पा० ) इति खश् ] लोहप्राकारवलयम्—अयसुवर्णमयमण्डल यासु तथाविधासु इव, ( "प्राकारो वरण साल" इत्यमर ) बहलत।—बहलया—प्रभूतया तिमिरमालया—अन्धकारपटलेन तिरोधीयमानासु—आच्छिद्यमानासु सतीषु, प्रदोषास्थाने—रजनीमुखीयसभाभवने, सायमुपवेशनार्हसभामण्डपे इत्यर्थः।

(२११) नमदिति।—नमता—प्रणिपतता, नृपलोकाना—राजजनाम् [चञ्च]लस्य—चञ्चलस्य, सञ्चमनमनचेष्टाभावादिति भाव, अंशुकस्य—वसनस्य, पवनेन—वायुना कम्पिता,—सञ्चालिता, शिखा,—ज्वाला येषा तै, दीपिकाचक्रवालै,—दीपमण्डलै। लोक—परिजनमिति भाव, प्राहिणोत्—विससर्ज, स्वसमीपादिति

प्राविशत्, उत्तानश्च मुमोच अङ्गानि शयनतले। दीपद्वितीयश्च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्श अग्रजम्। (३१२) उपर्युपरि भ्रातृजीवितान्वेषिण इव प्रसस्रुः श्वासाः। धवलांशुकपटान्तेन इव च अश्रुजलप्रवेन मुखम् आच्छाद्य निःशब्दम् अतिचिरं ररोद; चकार च चेतसि,—(३१३) "कथं नाम आकृतेः तादृश्या युक्तः परिणामोऽयम् ईदृशः ? पृथु-शिलासङ्घातकर्कशकायबन्धात् तातात् अचलात् इव लोहधातुः

शिप यथास्थान वा। प्रतिषिद्धेति।—प्रतिषिद्ध,—निवारित, परिजनानां—भृत्यानामिति यावत, प्रवेश —अन्तर्गमन येन तथाभूत। उत्तान,—ऊर्द्ध्वमुखशायी, ("उत्तानस्त्वगभीरे स्यादूर्द्ध्वास्यशयिते त्रिषु" इति मेदिनी) शयनतले—शय्यायां, मुमोच—प्रसारितवान्। दीपद्वितीय—दीपमात्रसहचरमित्यर्थं, एकाकिनमिति भाव, तं—हर्षं, अभिसर इव—दस्युरिव, लब्धावसर,—प्राप्तावकाश, एकाकित्वादिति भाव, तरसा—बलेन जग्राह—आचक्राम, तदानीं भ्रातृशोक समुदियाय इति भाव। भैरवो दस्यु यथा कमप्येकाकिन दृष्ट्वा बलादाक्रामति, तदैव शोक सपदि तद्वदनर्थकारी समुदितवानित्यर्थः।

(३१२) उपर्युपरि—अविरतमित्यर्थं, ["उपर्य्यध्यधस सामीप्ये" (८।१। पा०) इति सामीपिकद्वित्वे निर्वचन] भ्रातृजीवितान्वेषिण इव—भ्रातृजीवनस्यानु-सन्धायिन इव श्वासा —निश्वाससमूह, अन्वेषणप्रयत्नेनेति भाव, प्रसस्रु,—निर्जग्मुरित्यर्थ। धवलांशुकपटान्तेन इव—श्वेतवसनाञ्चलेन इव, अश्रुजलप्रवेन—बाष्प-वारिपूरेण, अश्रुजलमेव तस्य क्रन्दनकालिकमुखाच्छादनमकृत्य चकार इति भाव, शोकोऽपि अतिशयक्रन्दनादवीक्ष्यमाणेन मुखमाच्छाद्य रोदिति इति बुध्यते।

(३१३) नाम—वितर्के। तादृश्या,—रमणीयाया, सुन्दराया इत्यर्थं, ईदृश,—एवंविध, शोच्य इत्यर्थ, परिणाम,—विपाक, अवसानमित्यर्थ, युक्त,—उचित। पृथ्विति।—पृथु,—विशाल, ["प्रथिम्रदि—" (उ० १ पा० २८ सू०) इत्यादिना कु सम्प्रसारणञ्च] शिलासङ्घात,—पाषाणस्तूप इत्यर्थ, तद्वत्, तेन च कर्कश,—कठिन, कायबन्ध,—कलेवरघटन यस्य तथाविधात्, तातात्—पितु, अचलात्—पर्वतात्, लोहधातुरिव—लोहनामा खनिज पदार्थविशेष इव,

कठिनतरः आसीत् आर्य्य.। कथञ्च अस्य मे (२१४) हत हृदयस्य आर्य्यविरहे सकृदपि युक्तम् उच्छ्वसितुम् ? (२१५) इयं सा प्रीतिर्भक्तिः अनुवृत्तिर्वा ? बालिशोऽपि कः सम्भावयेत् आर्य्यमरणे मज्जीवितम् ? (२१६) तत् तादृशम् ऐक्यम् एकपद एव क्वापि गतम् ? अयत्नेन एव हतविधिना पृथक् कृतोऽस्मि। (२१७) दग्धरोवान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया ॥ सर्वथा (२१८) लूतातन्तुच्छटाच्छिदुराः तुच्छाः प्रीत्यः प्राणिनाम्।

---

कठिनतरः,—अतिकठिनः, पाषाणोऽप्यम्भसि लौह पाषाणादपि कठिनं भवतीति प्रथर्षामिति भावः, अथवाद्रुतोऽपि शीतधातुयथा वतोऽपि कठिनतरः इष्यते, तथैव निठुरपि अयज्ञ हृदकाय आसीदिति तात्पर्यम्।

(२१४) हतहृदयस्य—अपारक्लस्य, आर्य्यसमसायवधितत्वादिति भावः, सकृदपि—एक क्षणमपि उच्छ्वसितु—प्राणितुम्।

(२१५) इयमिति।—का प्रीतिः,—बयाविध इतवर उभयो प्रणयः, का भक्तिः,—पूज्यतया अकपट अनुराग, का अनुवृत्ति —आनुगत्यम् इयम्—ईदृशभाव मापितेत्यर्थः। बालिशोऽपि—मूर्खोऽपि। सम्भावयेत् ?—अनुमनुत ?।

(२१६) तत्—तातजीवद्दशायां परीवर्षमागतम् वा बाल्यादिकत्र प्रथमावताडिता प्रकृतमिति भावः तादृशं—सम्बन्धोकादिदितविषयं, ऐक्यम्—एकीभाव, आत्मभाव इत्यर्थ, एकपद एव—तत्काल एव आर्य्यस्य मरणादनन्तरमेवत्यर्थं, ("एकपद तत्काल नपुंसक वत्मनि स्त्री स्यात्" इति मेदिनी)। अयत्नेन—यत्न विना एव, अनायासेनेत्यर्थं, हतविधिना—दुर्दैवेन, पृथक् कृतः,—विभिन्न कृत वियोजित इति भावः।

(२१७) दग्धेति।—दग्धेन,—दुष्टेन अतिदुर्धैर्येनेति भाव दीर्घ्य—अत्यति प्रति कोपिन, अन्तरिता—व्यवहिता तिरोहितेति यावत शुक—श्लोक यस्य तथा भूतेन, यदाभिनिषमाय कौशादयात श्लोक विष्तरतत्यर्थ, गतघृणेन—निर्दयेन ("घृणा दयाऽनुकम्पा स्यात्" इत्यमर) मया मुक्तकण्ठम्—उच्चै, सुचिरं—दीर्घकाल, न रुदितमपि—न क्रन्दितमपि।

(२१८) प्रीतय,—प्रणया, लूतेति।—लूतातन्तुच्छटा—लूता—ऊर्णनाभ,

(३१८) लोकयात्रामात्रनिबन्धना बान्धवता, यतोऽहमपि नाम पर इव आर्य्ये स्वर्गस्थे स्वस्थ इव आसे। किञ्च दैवहतकेन फलम् आसादितम् ईदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते ? (३२०) तथा चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य स्नेहचितामय इव आर्य्यस्य त एव दहन्ति गुणाः।" इत्येतानि च अन्यानि च

---

जाज्वल्यमान कोटिविशेष इति यावत्, ("सूना स्त्री तन्तुवायोपनाभमर्कटका, स्मृताः" इत्यमरः) तथा तनुच्छटा—सूर्यकिरण, तद्वत् छिद्रा,—अल्पेन छिद्राः इत्यर्थः, अत एव तुच्छा,—तथा, असारत्वेन अङ्गीया इत्यथ ।

(३१९) लोकयात्रामात्रनिबन्धना—लोकव्यवहारमात्रफला, संसारयापनैकमात्रप्रयोजना इति यावत् बान्धवता—बन्धुत्वम्, स्वार्थसाधनार्थमेव लोके बन्धुत्वमित्यत, न तु अविकृतगाढानुरागेण परोपकारार्थम् इति भावः । नाम—कुत्सायाम्, विस्मये वा। पर इव—अन्य इव सोदरभिन्न इव इत्यर्थः । स्वस्थ इव—प्रकृतिस्थ इव, यथावत् निष्क्रियाकरणात् सुखित इव इत्यर्थः आसे—तिष्ठामि। ईदृशि—एवम्प्रकारे, परस्पराम्—परस्परेषाम्—अन्योऽन्येषाम्, प्रीतिबन्धेन—प्रणयबन्धनेनेत्यर्थः, निर्वृत—सुस्थ सुखितमिति यावत् ('निवृति स्वस्थितावस्त गमने च सुखे स्त्रियाम्' इति मेदिनी) हृदय—चेतः यस्य तथाभूते, सुखभाजि—सुखभोगनिरते, भ्रातृमिथुने—सोदरयुगले विघटिते—विच्छिन्ने, जाते सति इति शेषः, दैवहतकेन—दग्धविधिना, किं फलम्—को लाभ, आसादितम् ?—प्राप्तम् ? अस्माकम्ताभ्याम् सम्पाद्य नाशिते कः फललाभोऽभूत् इति भावः, दुर्जना हि स्वप्रयोजनमन्तरेणापि केवलं परस्य अनिष्ट सम्पादने प्रवर्त्तन्ते इति तात्पर्यम्। स्त्रीपुंसौ मिथुन द्वन्द्वम् इत्यमरोक्तेः मिथुनशब्दस्य स्त्रीपुरुषाभिधायकतया, अत्र भ्रात्रोर्युगलार्थे प्रयोग इत्याचक्षते दोषमाह, यत इति विभाव्यम्।

(३२०) लोकान्तरीभूतस्य—परलोकप्रस्थितस्य मृतस्येत्यर्थः आर्य्यस्य—ज्येष्ठस्य, चन्द्रमया इव—इन्दुमयूखव्याप्ता इव मृताप दिहर्षेण प्रीणनादिति भावः, तथा—तादृशाः, स्नेहलोकानुभूता इत्यर्थः, जगदाह्लादिन,—भुवनवासिनाम् आनन्ददायका इत्यर्थः, ते एव—ज्येष्ठे आर्य्ये ये तदीया गुणाः सन्तापनाशकाः सु, ते एवाद्य, गुणाः,—वात्सल्यसौजन्यदाक्षिण्यादयः, दहन्ति।—दहन्ति,—दहन्ति, चितामय,—चितानलाः, मृतस्य तस्य दाहकारिका इति भावः येषु तथाभूता इव,

दुःखेन पर्यदेवयत्। प्रभातायाञ्च (२२१) शर्वर्यां प्रातरेव प्रतीहारम् आदिदेश अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुम् इच्छामि इति।

(२२२) अथ युगपत् प्रधावितबहुपुरुषपरम्पराऽऽहूयमानः, समन्दिरात् (२२३) अप्रतिपालितकरेणुः चरणाभ्यामेव सम्भ्रान्तः, ससम्भ्रमैः दण्डिभिः उत्सार्यमाणजानपदः,

---

चिताग्निभिः सह संयुता इव इति यावत्, दहन्ति—भस्मीकुर्वन्ति, इदानीमिति शेषः। सर्वलोकजीवनभूता दारुणाशना शीतस्पर्शा जलादयोऽपि अग्निसम्पर्कादुष्णा यथा दहन्ति, तथा तदपरिलाटः सतस्तस्य साध्वस्यापि गुणाः चितानलसम्पर्कादुष्णाः सन्त इदानीं निरतिशयं मां दहन्तीति भावः, तस्य गुणराशीनां स्मृत्या शोकाः अतीव प्रज्वलिताः सन्तः मां सन्तापयन्तीति तात्पर्यम्। पर्यदेवयत्—परिदेवितवान्, विललापेत्यर्थः।

(२२१) शर्वर्या—रात्रौ। प्रतीहारम्—दौवारिकम्, [“उपसर्गस्य—” (६।३।१२२ पा०) इत्यादिना पाक्षिको दीर्घः अमनुष्ये इति निषेधात् कथमिह प्रयुक्तः? इत्याशङ्कायाम् उदाहृतः श्रानेन्द्रसरस्वतीभिः—“अथ द्वाः दौवारिकैः प्रतीहारमप्यनीश इति चेत्, अत्राहुः,—प्रतिहारो द्वार, तारस्यास्तीति” ]। अशेषगजसाधनाधिकृतम्—समस्तगजारोहिसैन्याध्यक्षम्।

(२२२) “अथ” इत्यस्य “स्कन्दगुप्तः विवेश राजकुलम्” इति परेण सम्बन्धः। तं विशिनष्टि, युगपदित्यादि।—युगपत्—समकालं, प्रधाविताना—ससम्भ्रमं गतानां, बहूनाम्—अनेकेषां, पुरुषाणां—भृत्यजनानामिति यावत् परम्पराभिः,—श्रेणीभिः, आहूयमानः,—आकार्यमाणः, महाराजाज्ञायाद्गौरवात् इति भावः।

(२२३) अप्रतिपालितकरेणुः,—अनपेक्षितगजवाहनः इत्यर्थः सम्भ्रान्तः,—सत्वरः। ससम्भ्रमैः,—सत्वरैः, आदरातिशयवद्भिः, गजवलनाऽधिपतौ सम्मान-प्रदर्शनार्थमिति भावः, दण्डिभिः,—यष्टीकैः, सेनापतेः शरीररक्षिभिः सनिकटस्थैः यावत्, उत्सार्यमाणजानपदः,—उत्सार्यमाणाः,—अपसार्यमाणाः जानपदाः,—जनपदाः, पुर वनागताः इति भावः यस्मात् यस्य वा तथोक्तः। [“उत्सार्यमाणजानपदः” इत्यत्र “उत्सार्यमाणजनपदः” इति पाठोऽपि स एवार्थः, “जनपदो जानपदोऽपि जनदेशयोः” इति मेदिनीवचनात् ]।

(३२४) पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान् वरवारणानां विभावरीवार्त्ताः पृच्छन्, (३२५) उच्छ्रितशिखिपिच्छलाञ्छितवंशलतावनगहनगृहीतदिगायामैः विन्ध्यवनैः इव (३२६) वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिः अनायत्तमण्डलैः आधोरणगणैश्च, (३२७) मरकतहरितघासमुष्टीश्च दर्शयद्भिः, नवग्रहगजपतींश्च प्रार्थ्यमानैश्च,

(३२४) पदे पदे—प्रतिपदमेवेत्यर्थः। प्रतिदिशम्—दिशि दिशि, चतसृभ्य दिग्भ्यः समागतान्, चतुर्दिगवस्थितान् वा इति भावः इभभिषग्वरान्—गजवैद्यप्रवरान्, वरवारणानां—श्रेष्ठगजानां, विभावरीवार्त्ताः,—रात्रिवृत्तान्तान्, रात्रौ ते कीदृशाः आसन् इत्यादिप्रकारानित्यर्थः, पृच्छन्—जिज्ञासमानः, रात्रिवृत्तजिज्ञासया गजेन्द्रचन्द्रादिनचर्य्याविरतम् आप्रदोषं तस्य सम्यक् ज्ञातमेवेति गम्यते, एतेन चास्य स्वकर्त्तव्यकर्म्मणि अनौदासीन्यं प्रकटीकृतम्।

(३२५) उच्छ्रितेति।—उच्छ्रितानि—उन्नतानि, शिखिनां—मयूराणां पिच्छैः,—बर्हैः, लाञ्छितानि च—मण्डितानि च वंशलतावनानि—वेणुवल्लीकाननानि मयूराणां सर्वदा तत्र सञ्चारादिति भावः येषु तथाविधैः, गहनैः,—घनैः, गृहीता,—अधिकृता, व्याप्ता इत्यर्थः, दिशां—ककुभाम्, आयामाः—आभोगाः यैः तादृशैः, विन्ध्यवनैरिव—विन्ध्याचलकाननैरिव, परिदृश्यमानैरिति शेषः, कृष्णवर्णोन्नतदेहत्वात् निबिडश्मश्रुादिधारित्वाच्चेति भावः।

(३२६) वारणेति।—वारणानां—हस्तिनां बन्धे—धारणे रोधने इति यावत्, बन्धाय इति वा यो विमर्द,—प्रयासः, तस्य उद्योगात्—उपक्रमात्, उद्योगाय वा, आगताः,—उपस्थिताः तैः, हस्तिनां वशीकरणार्थं सङ्ग्रहार्थं वा देशान्तरात् समागतैरिति समुदितार्थः, पुरः,—अग्रतः, प्रधावद्भिः,—प्रद्रवद्भिः, अनायत्तमण्डलैः,—न आयत्त—वशीभूतं, मण्डलं—सङ्घः येषां तैः, अनधीनानुचरैरित्यर्थः, अचिरागमनादिति भावः, ["अनायत्तमण्डलैः" इत्यत्र "अनायतमण्डलैः" इति पाठे—अनायतम्—न दीर्घं मण्डलं—सङ्घश्च गमनादव्यवस्था येषां तथाविधैः, सम्भ्रमविपर्यस्तपरिक्रमात् इति भावः] आधोरणगणैः,—निषादिसङ्घैः, हस्तिपालकवृन्दैरित्यर्थः, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः)।

(३२७) मरकतेति।—मरकतवत्—तदाख्यहरिद्वर्णमणिवत्, हरितानां—श्यामलानां, घासानां—यवसानां, मुष्टीः,—कवलान्, मुष्टिगृहीतघासानित्यर्थः, दर्शयद्भिः,—ईक्षयद्भिः, इदृश्यो घासमुष्टीर्दन्तुं भक्ष्यन्ते न वा इति जिज्ञासुभिरिति भावः।

(३३२) विरलब्धान्तरैः उच्छ्रितकरैः कर्मण्यकरेणुका-सद्वयनाकुलैः, (३३३) उल्लासितपल्लवचिह्नाभिः अरण्य-पालपङ्क्तिभिश्च निष्पादितनवग्रहनागनिवहनिवेदनोद्यताभिः उत्तम्भिततुङ्गतोववनाभिः, (३३४) महामात्रपेटकैश्च प्रकटितकरिकर्मचर्मपुटैः, (३३५) अभिनवगजसाधन-

—गणिका—वशी गजाना प्रलोभनार्था हस्तिनीत्यर्थः, यया प्रलोभ्य हस्तिनो ध्रियन्ते इति भावः ("गणिका यूथीवेश्याभीयकारीषु—" इति मेदिनी) तस्या अधिकारिगणाः,—अध्यक्षवर्गा तैः।

(३३२) विरलब्धान्तरैः—विरैश—दीर्घकालानन्तरमित्यर्थः, लब्ध—प्राप्तम्, अन्तरम्—अवकाशः, करेणुकावार्ताविज्ञापने स्कन्दगुप्तदर्शने वा इति भावः यैः तथोक्तैः, उच्छ्रितकरैः,—उद्धृतहस्तैः करेणुसान्त्वनाय स्कन्दगुप्ते सम्मानप्रदर्शनाय वा इति भावः। कर्मण्येति।—कर्मण्या—करिग्रहणकुशला या करेणुका—हस्तिनी, तस्याः सद्वयने—समालपने, आकुलैः—व्याकुलैः वै गजसेनापतिना स्वत्र करेणु विषयकालापपरैरित्यर्थः।

(३३३) उल्लासितेति।—उल्लासिताः,—उद्धृताः पल्लवा एव—किसलयान्येव, चिह्नानि—लक्षणानि, वयमारण्यपाला इति सूचकानीति भावः याभिः तथोक्ताभिः, निष्पादितेति।—निष्पादितः,—सम्पादितः, यः नवग्रहणः—नवधृतानाम्, नागानाम्—गजानाम् निवहः—समूहः, तस्य निवेदने—विज्ञापने उद्यताभिः—प्रवृत्ताभिः, उत्तम्भितेति।—उत्तम्भितम्—उल्लासितम् तुङ्गम्—उन्नतम्, तुदति अनेनेति तोत्रम्—वैणुकम्, हस्तिप्रासनचमदण्डविशेष इति भावः ("तोत्रं वैणुकम्" इत्यमरः) ['दाम्नी—' (३।२।१८२ पा०) इत्यादिना ष्ट्रन् "तितुत्र—" (७।२।९ पा०) इत्यादिना इडभावः] तदर्थं वनम्—अरण्यजातं दारु इत्यर्थः याभिः तथोक्ताभिः, यद्वा,—उत्तम्भितानि—ऊर्ध्वमुखीकृतानि तुङ्गतोत्रवनानि—अत्युच्चवेणुकारण्यानि, प्रभूतत्वादिति भावः याभिः तादृशीभिः अरण्यपालपङ्क्तिभिः—गजबन्धनार्थं वनरक्षिवर्गैरित्यर्थः।

(३३४) प्रकटितेति।—प्रकटितानि—आविष्कृतानि, प्रदर्शितानीत्यर्थः करिणा—हस्तिना, कर्मणे—युद्धादिव्यापाराय इत्यर्थः, चर्मपुटानि—चर्मनिर्मिता हस्त्याकारा यैः तथोक्तैः महामात्रपेटकैः,—हस्तिपकाधिपकदम्बकैः,प्रधानहस्तिपकवृन्दैरित्यर्थः,("महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे" "पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इत्युभयत्र मेदिनी) :

(३३५) अभिनवेति।—अभिनव—नूतन, गजानाम्—करिणाम्, साधन—वशी-

समुद्रान् आस्रापयन् इव, (२४०) शृङ्गारगैरिकपङ्काङ्गराग-सङ्ग्रहाय गिरीन् मुष्णन् इव, (२४१) दिग्गजाधिकारं ककुभाम् ऐरावतमिव अपहरन्, हरेर्हरपदभरनमितकैलासगिरि-गुरुभिः पादन्यासैः गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव,

---

कर्णेषु—श्रवणमूलेषु इत्यर्थः, या शङ्खाः,—कम्बवः पत्र भङ्गनिर्मितालङ्काराः एवेत्यर्थः, सम्पद,—भूषणानीति भावः तासां सम्पादनाय—सङ्ग्रहाय, समुद्रान्—सागरान्, आस्रापयन् इव—चालयन् इव, शङ्खकर्णशोभासम्पादनाय नूनं स्वगर्भस्थितान् शङ्खान् उद्धृत्यानेतुं समुद्रानपि आस्रापयन्निव इति भावः। एतेन अस्य समुद्रेभ्योऽपि गाम्भीर्यवत्त्वं सूचितम्। अस्तङ्गतायाः करिण्याः कर्णेषु पत्राकृत्य शङ्खाः अस्य तेन विनि बद्धिताः यथा समुद्रगाम्भीर्यता शङ्खानयनाः निःसृता एवाभूवन्नित्युत्प्रेक्षितम्।

(२४०) शृङ्गारेति।—शृङ्गारः—गजमण्डनम्, हस्तिनामलङ्करणार्थमित्यर्थः, [ 'शृङ्गारः सुरते नाट्यरसे च गजमण्डने' इति मेदिनी। 'शृङ्गार भृङ्गारौ' (उ० ३ पा० ११६ सू०) इति शृधातो आरन् गुम् गुक् ह्रस्वे च रूपम्] स, गैरिकपङ्कः,—गैरिकद्रवः, स [illegible] अङ्गरागः—गजानामङ्गरञ्जनार्थं लेपविशेषः, तस्य सङ्ग्रहाय—सञ्चयाय, गिरीन्—पर्वतान् मुष्णन् इव—अपहरन् इव, गैरिकाणीति शेषः गजाङ्गरागसम्पादनाय गिरेरपि गैरिकधातोःस्थानि इति भावः, एतेन तस्य पर्वतादपि दैर्घ्यदाढ्यं सूचितम्। सर्वेषां गजानामातिशय्यद्योतनाय एवमुत्प्रेक्षितमिति ज्ञेयम्।

(२४१) ककुभां—दिशां, दिग्गजाधिकारं—दिग्गजाधिकारित्वं, सर्वदिग्गजश्रेष्ठ-मित्यर्थः ऐरावतम्—अभ्रमातङ्गं पूर्वदिग्गजमिति यावत्, अपहरन्निव—मुष्णन् इव, गजवीर्येण तत्सम्पदा च ऐरावतमपि अतिक्रामन्निवेत्यर्थः, यद्वा—केवलसप्तगजाधिकारित्वम् ऐरावतम् अस्य गजेन्द्राधिकारप्रदानेन न्यकुर्वन् इव इत्याशयः। हरेति।—हरस्य—शिवस्य पदभरेण—चरणभारेण चरणस्थापनप्रसङ्गेनेत्यर्थः, नमितः—आवनितः, भाराक्रान्ततया अधोगत इत्यर्थः यः कैलासगिरिः,—कैलासपर्वतः, तद्वत् गुरुभिः,—भारवद्भिः पादन्यासैः,—पदविक्षेपैः, हरेः—वराहरूपिणः नारायणस्य इति भावः, उर्व्याः—पृथिव्याः, गुरुभारग्रहणगर्वं—महाभारोद्वहनाहङ्कारं, संहरन्निव—सङ्कोचयन्निव गुरुपादन्यासेन वराहरूपिणो नारायणस्यापि दन्तयोः व्यथां जनयन्निवेति भावः। पदभरेण वराहदन्तस्यापि नमनोत्क्रोचत्वादस्य महासारवत्त्वं सूचितम्। इहोर्वीनमनेन भगवतः वराहस्यापि दन्ताचलनमनं समुत्प्रेक्षितम्, अपि चौपम्यगर्भोत्प्रेक्षादर्शनात् व्यतिरेकोऽपि व्यज्यते।

(३४२) गतिवशविलोलस्य च आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपै आलानशिलास्तम्भमालामिव उभयतो निखनन्, ईषदुत्तुङ्गलम्बेन अधरबिम्बेन अमृतरसस्वादुना नवपल्लव कोमलेन कवलेन इव श्रीकरेणुका विलोभयन्, (३४३) निजनृपवंशदीर्घं नासावंशं दधानं, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेन इव पिबन् ईक्षणयुग्मायामेन दिशाम् आयाम, (३४४) मेरुतटादपि विकटविपुलालिकं, सततम्

---

(३४२) गतीति।—गतिवशेन—गमनवशेनेत्यर्थः विलोलस्य—चञ्चलस्य। विक्षेपैः—सञ्चालनैः आलानेति।—आलानानि—गजबन्धनानि गजबन्धनार्था इत्यर्थः, ये शिलास्तम्भाः—पाषाणस्तम्भाः तेषां मालामिव—श्रेणिमिव उभयतः—उभयोः पार्श्वयोः निखनन—प्रोथयन् पाषाणकाठिन्यमस्य भुजयोरासीदिति भावः। ईषदुत्तुङ्गलम्बेन—मन्दोन्नतलम्बिना अमृतेति—अमृतरसवत्—सुधाऽऽस्वाद इव स्वादना—सुरसेन सरसेन माधुरीलोभनीयेन वा इति भावः नवेति।—नवपल्लववत्—आभिनवोद्गम किसलयवत् कोमलेन—सुकुमारेण मृदुना च अधरबिम्बेन—बिम्बोष्ठेन एतेन अधरस्य आरक्ततमपि सूचितम् कवलेनेव—ग्रासेनेव श्रीकरेणुका—लक्ष्मीरूपहस्तिनीं सुलक्षणा फलितो मति यावत् विलोभयन—आकर्षयन्।

(३४३) निजेति।—निज—स्वीय नृपवंश—राजकुल तस्य राजवंश सम्भूतत्वात् भावः सदृश दीर्घम्—आयतम् इत्युपमितसमासाश्रयणात् आर्थीय मुपमालङ्कारः स्वकीयवंश सुदीर्घ आसीत् इत्यावर्तयितुमिव सुदीर्घा नासिका धृतेति भावः नासावंश—नासिकादण्डम्। अतीव।—अतिस्निग्धम् अतिकोमलं स्निग्धं मधुर—मनोहरं धवलं—शुभ्रं विशालम्—आयतं तस्य भावः तत्ता तया पीतक्षीरोदेन दुग्धसागरपायिना इव ईक्षणयुग्मायामेन—नेत्रयुगलावन्तरेण। आयामं—दैर्घ्यं पिबन् इव—ग्रसन्निव आयतनेत्र इति भावः।

(३४४) मेरुतटादपि—सुमेरुतटादपि सुमेरोरौन्नत्यात्पीनत्वत् विकटेति।—विकटम्—अत्यन्तं विपुलं—विशालम् अलिकं—भालदेशः ललाटम् इत्यर्थः यस्य तथाभूत ("ललाटमलिकं गोधि" इत्यमरः)।

(२४५) अविच्छिन्नच्छत्रच्छायाप्ररूढिश्रमादिव नितान्तायतनीलकोमलच्छविसुभगेन स्वभावभङ्गुरेण कुन्तलवालवल्लीवेल्लितविलासिना लुनन्निव लुप्तालोकान् अर्ककरान् बर्बरकेण, (२४६) अरिपक्षपरिचयपरित्यक्तकार्मुककर्माऽपि सकलदिगन्तश्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽपि

---

(२४५) अविच्छिन्नेति।—अविच्छिन्ना—विच्छेदरहिता, या छत्रच्छाया—आतपत्रेण सौरतापावरणेन इत्यर्थः, ["विभाषा सेना—" (२।४।२५ पा०) इत्यादिना क्लीबत्वस्य पाक्षिकत्वात् अत्र तदभावः] तस्याः प्ररूढिः,—आतिशय्यं, मुहुर्मुहुरपि छत्रधृतयतया अतप्रध्यानमित्यर्थः, तस्मादिव—तत्सम्पर्कादिवेत्यर्थः, नितान्तेति।—नितान्तम्—अत्यन्तम्, आयताः—दीर्घाः, नीलाः—कृष्णाः, कोमलाः—अकर्कशाः, स्निग्धा इत्यर्थः, सुखस्पर्शा इति भावः, या छविः,—कान्तिः, तया सुभगः—रम्यः तेन, आतपसम्पर्कजनितरूक्षताऽभावादिति भावः, स्वभावभङ्गुरेण—सहजभङ्गिमता, स्वत एव कुञ्चितेनेत्यर्थः ["भञ्जभासमिदो घुरच्" (३।२।१६१ पा०) इति घुरच्] कुन्तलेति।—कुन्तलाः,—केशाः, लम्बमानाः कटिपर्यन्तमिति भावः वालवल्लय इव—भूतलतल्लय इव, तासां वेल्लितेन—स्फुरणेन, विलसति—उल्लसति इति तथोक्तेन, बर्बरकेण—केशिना, केशबन्धेन इत्यर्थः ("बर्बर पामरे कश्चि चकन्ति नीतदन्तरी" इति मेदिनी) लुप्तालोकान—लुप्ताः,—विनष्टाः, आलोकाः —प्रकाशाः येषां तान् अर्ककरान्—सूर्यमयूखान्, लुनन्निव—खण्डयन्निव, कुञ्चितगाढकचकेशपाशेन सूर्याकिरणान् भञ्जयन्निवेत्यर्थः।

(२४६) अरीति।—अरिपक्षाः—शत्रुसमवायाः परिचयेन—सम्मुखगमनेन, परित्यक्तम्—उत्सृष्टं, कार्मुककर्म—धनुराकर्षणादिकं येन तथाभूतोऽपि, न चासामर्थ्यादौदासीन्याद्वा इत्याशयः, सकलेति।—सकलेषु—सर्वेषु, दिगन्तेषु—आशाप्रान्तेषु, श्रूयमाणः —आकर्ण्यमानः गुरुः —महान् गुणानां—शौर्यादीनां, शौर्यादीनाञ्च ध्वनिः,—शब्दः यस्य तथाभूतः, अत्र परित्यक्तकार्मुककर्माऽपि श्रूयमाणगुरुगुणध्वनिः इति आपाततः विरोधः, स च शौर्यादिगुणध्वनिश्रवणरूपार्थान्तरपर्यवसानात् इति विरोधाभासाऽलङ्कारः। आत्मस्थेति।—आत्मस्थानि—स्वायत्तानि, स्वाधिकृतानीति यावत्, समस्ताः,—सर्वे मत्तमातङ्गाः —मदोत्कटगजाः एव, साधनानि—सेनाङ्गानि यस्य तथाभूतोऽपि, आत्मस्थानि समस्तमत्तमातङ्गसाधनानि—निखिलमदस्रावियुक्तगजारोहिसैन्यानि

(३५१) उभयकरकमलावलम्बितं स्पृशन् मौलिना महीतलं नमस्कारम् अकरोत्।

उपविष्टं (३५२) नातिनिकटे तं तदा जगाद देवो हर्षः,—"श्रुतो विस्तर एव अस्य आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च; अतः शीघ्रं प्रवेश्यन्तां प्रवारनिर्गतानि गजसाधनानि। न चामृष्यति अतिसज्जम् अपि आर्यपरिभवपीडापावकः प्रयाणविलम्बनम्" इत्येवम् अभिहितश्च प्रणम्य व्यज्ञापयत्,—(३५३) "कृतम् अवधारयतु स्वामी समादिष्टं किन्तु स्वल्पं

---

प्रेष्य—क्रोधेन निग्रह दास,—सेवक, स न भवतीति, [नञ्समास] प्रतिमल्लही-नस्यापि सता परिचर्याविधौ निपुण इत्यर्थः।

(३५१) उभयेति।—उभाभ्या—द्वाभ्याम्, ["उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति सूत्रस्य योगविभागमाश्रित्य, "उभशब्दस्य वृत्तिविषये नित्यमयच् स्यात् स्वार्थे" इत्युक्त तत्त्वबोधिनीकारैः, एवञ्च समासे उभशब्दस्य उभयरूपत्वे परिणतिरिति सुस्पष्टमेवोपलभ्यते] करकमलाभ्या—पाणिपद्माभ्याम्, अवलम्बित—धृत, महीतल—भूतलम्। मौलिना—शिरसा।

(३५२) नातिनिकट—अनतिदूरे इत्यर्थः। आर्यव्यतिकरस्य—आर्यव्यसनस्य, तस्य गुरुकन्याया इत्यर्थः ("अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" इति मेदिनी) अस्मच्चिकीर्षितस्य—अस्माभि कर्त्तुमिष्टस्य च, विस्तर, वाक्यप्रपञ्च ["स च शब्दस्य विस्तर" इत्यमरोक्त "प्रथने वाचशब्दे" (३।३।५० पा०) इत्यप्]। प्रवारनिर्गतानि—प्रवारात्—सन्नहनात्, ग्रामनिगमादौ भक्ष्यसङ्ग्रहार्थे, वन्यकरिग्रहणार्थं वा इति भाव, निर्गतानि—निष्क्रान्तानि गजसाधनानि—करिसैन्यानि प्रवेश्यन्ताम्—आनीयन्ताम्, राजधानीमिति शेष, युद्धयात्रार्थमिति भाव, यद्वा—प्रवेश्यन्तां—रणभूमौ प्रेष्यन्तामिति भाव। आर्येति।—आर्यस्य—ज्येष्ठस्य परिभवेन—तिरस्कारेण अग्रजस्य हननेनेत्यर्थ, या पीडा—व्यथा, सैव पावक,—अग्नि, प्रयाणविलम्बम्—युद्धयात्राकालातिक्रमण, न चामृष्यति—न सहते ["अमामृष्टाना दीर्घ श्यनि" (७।३।७४ पा०) इति दीर्घ]।

(३५३) स्वामी—प्रभु, भवानिति शेष, समादिष्टम्—आज्ञप्त, भवता यत् इति शेष, तत्, कृत—सम्पादितमेव, अस्माभिरिति शेष, इति अवधारयतु निश्चि-

विस्मयमस्ति भर्त्तुभर्त्तः; तत् आकर्णयतु देवः,—देवेन हि पुष्पभूतिवंशसम्भूतस्य अजात्यस्य सहजस्य तेजसः, दिक्करिकर-प्रलम्बस्य बाहुयुगलस्य, असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशम् उपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न सृष्यन्ति विकारं, किमुत भवादृशाः तेजसां राशयः। केवलं (३५४) देवराज्यवर्द्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः, प्रतिग्रामं प्रति-नगरं प्रतिदेशं प्रतिद्वीपं प्रतिदिशञ्च भिन्ना वेशाश्च आकाराश्च

---

शीत्, भवदाज्ञा अपरिहार्यैव, तैमेदानीमक्षममपि क्षममेव तदिष्यवधारयतु स्वामी इति तात्पर्यम्। भर्त्तभर्त्ते,—स्वाम्यनुरागाद्धेतो। अजात्यस्य—जातौ भव जात्यं, तन्न भवतीति तथोक्तस्य सर्वथाजात्यतिशायिन इति भावः। सहजस्य—स्वाभाविकस्य, प्रकृतिसिद्धस्य इत्यर्थः। दिगिति।—दिक्करिणा—दिग्गजानां, करवत्—शुण्डादण्डवत्, प्रलम्बस्य—दीर्घस्येत्यर्थः, आजानुलम्बितस्येति भावः। सदृशम्—अनुरूपम्, उपक्रान्तम् —आरब्धम्। काकोदराभिधानाः,—भुजङ्गनामानः ("भुजङ्गोऽहिर्भुजङ्गमः। काकोदरः फणी" इत्यमरः) कृपणाः,—दुर्बलाः, कृमयोऽपि,—कृमिसदृशाः कीट विशेषाः अपि, विकारः—परपरिभवं, न सृष्यन्ति—न क्षाम्यन्ति, न सहन्ते इत्यर्थः, अत्र भुजङ्गानामपि दुर्बलकीटविशेषत्वाभिधानेन अस्य महातेजस्वित्वं प्रकटितम्। किमुत —किं पुनः, भवादृशानां तादृशापकारसहने वक्तव्यं नैवास्तीत्याशयः।

(३५४) देवेति।—देवस्य—राज्ञः, राज्यवर्द्धनस्य उदन्तेन—उत—उद्धत, अन्त,—निर्णयो यस्मात् तादृशेन, वृत्तान्तेन इत्यर्थः, ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः) देवेन—राज्ञा, भवता इति भावः, दुर्जनदौरात्म्यं—दुर्जनानां—खलानां, दौरात्म्य—दुष्टता, कियदपि—अल्पमात्रमित्यर्थं, अपिरत्र सम्भाव्यार्थकः इत्यवधेयम्, ("अपि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चये" इत्युक्ते) दृष्ट—ज्ञातमित्यर्थं। लोकस्वभावाः,—जनानां प्रकृतयः, खलु—निश्चये, ईदृशा—एवंविधा, दौर्जन्य-प्रधाना इति भावः। प्रतिग्रामं—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा॥" इत्युक्तलक्षणः विप्रादीनां वासस्थानं ग्रामः। ग्रामे ग्रामे इत्यर्थं, ["अव्ययम्—" (२।१।६ पा०) इत्यादिना वीप्सायां

आहाराश्च व्यवहाराश्च जनपदानाम्। तत् इयम् (३५५) आत्मदेशाचारोचिता स्वभावसरलहृदयजा त्वय्यतां सर्वविश्वासिता। (३५६) प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त्त एव प्रतिदिनं देवः। (३५७) यथा,—नागकुलजन्मनः सारिकाश्रावितमन्त्रस्य आसीत् नाशो नागसेनस्य पद्मावत्याम्। (३५८) शुकश्रुतरहस्यस्य च श्रीः श्रुतवर्मणः श्रावस्त्याम्।

---

पारिवक्रीऽव्ययीभावः]। एव पञ्चाश्चोपनीयम। भिन्ना—पृथग्विधाः वेषाः,—परिच्छदाः। व्यवहाराः,—आचरणानि इत्यर्थः। जनपदानाम्—जनानाम्, ("जनो जनपदो जानपदोऽपि जन देशयो" इति मेदिनी)।

(३५५) आत्मेति।—आत्मन,—स्व च, [ "क्षातिभ्रा मनिममनियो" (उ० ४ पा० १५२ सू०) इत्यत्र मनिष ] य देशाचार,—देशप्रचलितरीति सम्यविषा‍ंहिताश्च इति यावत् तस्य उचिता—अनुरूपा स्वभावेति।—स्वभावेन—प्रकृत्या, सरलम—अकुटिलम् उदारमित्यर्थ, यत् हृदयम—मन अन्तःकरणं तस्मात् जायते—उद्भवति इति तथाभूता प्रकृतिसरलोदारचित्तप्रसूता इत्यर्थः, सर्वविश्वासिता—सर्वेषु जनेषु विश्वासस्थापनम। यद्यपि परिमोदाराश्रया श्रीकण्ठजानपदवासव्या, तथाऽपि अन्ये मानवाः सर्वत्र तथा विश्वासपरा भवितुमर्हन्ति इति तत्तात्पर्य।

(३५६) प्रमादेति।—प्रमाददोषेण—अनवधानताऽपराधेन अभिषङ्गाः,—पराभवास्तेषु श्रुतेति।—श्रुता,—आकर्णिता बह्व्यः,—अनेकाः,वार्ता,—वृत्तान्ता येन तथाभूत।

(३५७) प्रतिज्ञातमित्र्यविविधप्रकारान् निदर्शयितुमाह—यथेति। नागकुलजन्मन,—नाग,—तन्नामा कश्चिद्राजा तस्य कुलं—वंश, जन्म—उत्पत्ति यस्य तथाविधस्य सारिकेति।—सारिका—पक्षिविशेष, तया श्रावित,—तन्मुखेन आकर्णितं, प्रकाशित इत्यर्थं, मन्त्र,—गुप्तमन्त्रणं यस्य तथाभूतस्य, नागसेनस्य—तदाख्यस्य नृपस्य, पद्मावत्याम्—तदाख्यायां नगर्यामित्यर्थं, नाश,—निधनम्। पुरा पद्मवत्यां नागसेनो नाम राजा मन्त्रिणम् अङ्गराजहरणदोषेण ताडयित्वा सारिकामप्यस्य रक्षणाय करोत, स मन्त्री सारिकामुखात् तद्विज्ञाय विश्वासघातकतापूर्वकं तं नागसेनं हतवानिति वार्त्ता।

(३५८) श्रावस्त्याम्—उत्तरपथस्थनगरविशेषे, [ "श्रावस्त्याम्" इत्यत्र "श्रावन्त्याम्" इति पाठान्तरम ] शुकेति।—शुकात्—कीराख्यपक्षिणः श्रुतम्—आकर्णितं, रहस्य—गुप्तमन्त्रणं यस्य तथाभूतस्य, श्रुतवर्मणः,—तदाख्यस्य नृपते,

(३५९) स्वप्नायमानस्य च मन्त्रभेदोऽभूत् मृत्तिकावत्यां स्वर्णचूडस्य। (३६०) चूडामणिलग्नलेखप्रतिबिम्बवाचिता॰क्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। (३६१) लोभबहुलश्च बहुलनिशि निधानम् उत्खनन्तम्

---

श्री,—लक्ष्मी, अपहार्यत—अपहृता, शुकमुखेन मन्त्रभेदात् इत्याशय। अत्र एषु श्रीरित्यादिवाक्यस्थपदजातेषु प्रकारस्यावकल्पतया दृश्यानुप्रास। पुरा श्रावस्तीपुरी श्रुतवर्मापि पूर्ववत् शुकमुखात् विभिन्नमन्त्रो राज्यभ्रष्टोऽभूदिति वार्ता। एतेन श्वाप्याख्यानेन विजिगीषुणा यत्नात् गूढमन्त्रेण भाव्यमित्युक्तम्।

(३५९) स्वप्नायमानस्य—स्वप्न,—स्वप्नवान्, स इव आचरत, निद्रितावस्थया गुप्तमन्त्रं प्रकाशयत इत्यर्थं, तद्दोषदोषात् दुःस्वप्नायमानस्य इति भाव, स्वर्णचूडस्य—तदाख्यस्य राज्ञ, मृत्तिकावत्या—तदाख्यायां नगर्या, मन्त्रभेद,—रहस्यप्रकाश, मृत्यवे—निधनाय, निधनकारणमित्यर्थं, अभूत्। पुरा मृत्तिकावत्यां नगर्यां स्वर्णचूडो नाम राजा कश्चित् विजयपूर्वक निधनम् मन्त्रितवान्, तदेव तस्य निद्रितावस्थायां शुश्राव। तत्र अमात्य अनुप्रयुक्तेन केनचित् एतच्छ्रोतृकेनैव भूत्वा तस्यो निधनं व्यापादित इति वार्ता। अनेन स्वप्नातकुलशीलो नरो न नियोज्य इत्युक्तम्।

(३६०) चूडामणीति।—चूडामणि,—शिरोरत्न, तत्र लग्न—सङ्क्रान्त, यत् लेखप्रतिबिम्ब—लिपिप्रतिच्छाया, तत्र वाचितानि—पठितानि इत्यर्थं, अक्षराणि—वर्णा, लेखस्थानि इति शेष यया तथाभूता, चूडामणिप्रतिफलितलेखाक्षराणि पठन्तीति भाव, चारुचामीकरचामरग्राहिणी—मनोहरकाञ्चनदण्डचामरव्यजनहस्तेत्यर्थं, तादृशन चामरेण वीजयन्तीति भाव, यवनेश्वरस्य—यवनाधिपस्य, यमता—यमत्व, ययौ—प्राप। पुरा यवनेश्वर केनचित् शत्रुणा व्यापादयितुमिष्ट इति स्वहस्तेन तद्वृत्तान्त लेखेन बोधित, लेखपृष्ठे च तेन लिखित, स्वय वाचयितव्यमिति। तथ लेख स्वय वाचयत यवनेश्वरस्य चूडामणिप्रतिबिम्बितानि अक्षराणि अनुप्रयुक्ता काचित् चामरग्राहिणी निगूढ वाचयित्वा स्वस्वामिने सर्वं व्यज्ञापयत्, तत तेनोपजप्ता सा निभृत त जघान इति वार्ता। अनेन पृष्ठोऽपि मन्त्रभेदोपाय परिहर्तव्य इति सूचितम्।

(३६१) लोभेति।—लोभबहुलम्—अतिलुब्ध, बहुलनिशि—कृष्णप॰

उत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। (३६२) नागवनविहारशीलञ्च मायामातङ्गाङ्गात् निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। (३६३) अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्धानम् असिलतया मृणालमिव अलुनात् अग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः।

रजन्या निधाने—मृगमध्यित रवम, उत्खननम—उद्धरन्, माथुर—मथुराधिप, बृहद्रथं—तदाख्य राजानं, विदूरथवरूथिनी—विदूरथस्य—तदाख्यस्य मृगयवयोयरानस्य, वरूथिनी—सेना ("ध्वजिनी वाहिनी सेना । वरूथिनी बल सैन्यम " इत्यमर) उत्खातेति।—उत्खातेन—उत्पाटितेन कोषात् चङ्गतेन इत्यर्थं खड्गेन—असिना, प्रमथाति—ताडयतीति तथाभूता सती, ममन्थ—जघान। विदूरथमन्त्रितेन गूढप्रयुक्त-राजन्यवृन्देन प्रक्षोभितो बृहद्रथो नाम राजा कश्यपवनिकायां विदूरथविवादविषयीभूत-खनितो रवजातमुत्कृष्ट प्राप्त तत्सैनिकै निहत इति वार्ता। एतेन सुविमृश्य कर्तव्यमित्युक्तम्, "सहसा विदधीत न क्रियाम" इत्याशयोक्ते ।

(३६२) नागेति।—नागाना—गजाना, वन—काननम्—[illegible]मित्यर्थं, तत्र विहारे—भ्रमणे शील—स्वभाव यस्य तथाभूतं वत्सपति—वत्सराजम् उदयन मिति यावत महासेनस्य—महासेनाख्यस्य वासवदत्तापितु उज्जयिनीराजस्य, सैनिका, —सैन्यानि मायामातङ्गाङ्गात—मायया—कपटेन रचित मातङ्ग —हस्ती तस्याङ्गम् —अवयव तस्मात्, निर्गता —निःसृता सन्त, न्ययंसिषु,—बबन्धु। पुरा महासेनो नाम उज्जयिनीपति स्वां दुहितर वासवदत्ताम उदयनाय दित्सु अन्तर्निगूढसामन्त मायामातङ्ग वने मुक्त्वा कञ्चुकिभिः नागवनविहाराय त प्रलोभितवान सोऽपि गज-व्यसनितया अविचार्यैव कतिपयपरिजनपरिवृत वीणां वादयन तत्र गत। ततश्च सिद्धाभिप्राय महासेन मायामातङ्गशरीरनिर्गतैः स्वसैनिकै त नियम्य स्वगृहमानीय कन्या ददौ इति वार्ता। एतेन मात्यसाधने सचीव्य च विश्वसेभान्यमित्युक्तम्।

(३६३) अतीति।—अतिदयितम्—अतिप्रियं, लास्य—नृत्य यस्य तथोक्तस्य, अन्यथं नृत्यप्रियस्य इत्यथ ("लास्य नृत्यञ्च नर्तने" इत्यमर)। शैलूषमध्य—नटमध्य, ("शैलूषो नट बिल्वयो" इति मेदिनी) अध्यास्य—अधिष्ठाय, नटच्छद्मना इति भाव, ["अधिशीङ्स्थासा कर्म" (१।४।४६ पा०) इत्याधारस्य कर्मसंज्ञा]। अलुनात् —चिच्छेद। मित्रदेव,—तन्नामा कश्चित सुमित्ररिपु। पुरा शुङ्गवंशी नाम राजा नृत्यव्यसनी नटजने विश्वस्य मित्रदेवेन नटरूपिणा व्यापादित, तत्र च दीमदर्श-

(३६४) प्रियतन्त्रीवाद्यस्य अलाबुवीणाभ्यन्तरशुषिरनिहितनिशिततरवारयो गान्धर्वच्छात्रच्छद्मान चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषा.। (३६५) प्रज्ञादुर्बलश्च बलदर्शनव्यपदेशदर्शिताशेषसैन्य सेनानी अनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्र स्वामिनम्। (३६६) आश्चर्यकुतूहली च चण्डीपति. दण्डोपनतयवननिर्मितेन नभस्तलयायिना यन्त्रयानेन अनीयत

---

प्रोगशिरोहितश्चैव बभूव इति कथा। अनेन च व्यसनिता प्राकृतजने विश्वस्तता च सर्वथा मोचिता इति प्रकटितम्।

(३६४) अलाब्विति।—अलाबु—तुम्बी तद्रचिता वीणा—विपञ्ची तस्या अभ्यन्तरशुषिरे—मध्यरन्ध्रे निहित—स्थापित निशित—तीक्ष्ण तरवारि—असि र्यैस्तथोक्ता गान्धर्वच्छात्रच्छद्मान—गान्धर्व—सङ्गीत तस्य छात्रा—शिष्या, तद्वच्छद्म—कपटं वेशो तथाभूता वयं भवत्सकाशे गान्धर्वं शिक्षितुमागता इति छलेन समुपस्थिता इति भाव रिपुपुरुषा—शत्रुप्रयुक्ता पुरुषा प्रियेति।—प्रिय—दयितं तन्त्रीवाद्य—वीणावाद्यं यस्य तथाभूतस्य तन्त्रीवाद्यप्रियस्येत्यर्थ अश्मकेश्वरस्य—अश्मकाख्यजनपदाधिपस्य शरभस्य—तदाख्यस्य नृपते शिर मूर्धानं चिच्छिदु—अकृन्तन्। शरभो नाम राजा वाद्यविद्याविशारदानाम् अवारितद्वारं प्रवेशमदात् तेनासौ छद्मवेषधरा म घट मूकायुधै शत्रुपुरुषै निहत इति वार्ता। एतेन व्यसनासक्तिर्भोगेऽपि सर्वथा परिहर्तव्या इति पुस्ताकारेण दृढीकृता।

(३६५) प्रज्ञेति।—बलाना—सैन्याना दर्शनम्—अवलोकनमेव, व्यपदेश—छल तेन दर्शितानि—अवलोकितानि अशेषाणि—अतिबहूनि इत्यर्थ सैन्यानि—बलानि, स्वाधिकृतानि इति भाव येन तथाभूत अनार्य—असाधु सेनानी—सेनापति, प्रज्ञादुर्बल—बुद्धिबलहीन मौर्यं—मौर्यवंशोद्भव स्वामिनं प्रभु बृहद्रथं पिपेष—अघातत्। एतेन केऽपि न सर्वाधिकारिण कर्तव्या इति व्यक्तीकृतम्।

(३६६) आश्चर्येति।—आश्चर्य—विस्मयकरं यत् तद्दर्शने इत्यर्थ कुतूहली—कौतुकवान् चण्डीपति—चण्डीनाम नगरी तस्या पति—प्रभु दण्डेति। दण्डेन—सङ्ग्रामेण, उपनता—निर्जिता इति यावत् ये यवना—तद्देशवासिनो म्लेच्छविशेषा इत्यर्थ त निर्मित—रचित तेन नभस्तलयायिना—आकाशमार्गेण गगनमार्ग भ्रमणपरायणेन इत्यर्थ, यन्त्रयानेन—विमानविशेषेण, यन्त्रचालितरथेन

क्वापि। (२६७) काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। अतिस्त्रीसङ्गरतम् अनङ्गपरवशं (२६८) शुङ्गम् अमात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवितम् अकारयत्। (२६९) असुरविवरव्यसनिनं चापजङ्घः अपारमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरुङ्गया स्वविषयं मेकलाधिपमन्त्रिणः।

---

इत्यर्थ, क्वापि—कुत्रापि, अनिर्दिष्टदेशमिति यावत्, अनीयत—प्रापित अदर्शनं गमित इत्यर्थः। पुरा चकोरपति यवनाम् विजित्य ते उपायनीकृतेन कृत्रचितेन यन्त्रयानेन परदारान् गच्छेति प्रलोभ्य स्वदेशं नीत्वा व्यापादित इति वार्ता। एतेन प्रभुषु तत्प्रदत्तोपायनेषु च न विश्वासः विधेय इति प्रकटीकृतम्।

(२६७) शैशुनागि,—शिशुनागाख्यजनपदाधिपति,काकवर्ण,—तन्नामा कश्चिद्राजा, नगरोपकण्ठे—पुरीसमीपे, ("समीपे निकटासन्न । उपकण्ठान्तिकाभ्यर्णा" इत्यमर) निस्त्रिंशेन—खड्गेन, कण्ठे निचकृते—निकृत्त, विच्छिन्न इत्यर्थ, केनचित् प्रभुघाति शेष।

(२६८) देवीव्यञ्जनया—देवी—राज्ञी एव व्यञ्जन—चिह्न यस्याः तथाभूतया, महिषीवेषधारिण्येत्यर्थ, देवभूतिदासीदुहित्रा—देवभूते,—तन्नामप्रसिद्धस्य कस्यचित्, दासी—काचित् परिचारिका, तस्या दुहित्रा—तनयया, [प्रयोज्यकर्तरि तृतीया करोतेः णिचि प्रयोज्यकर्तुः कर्मत्वस्य पाक्षिकत्वादिति ध्येयम्] शुङ्ग—तदाख्य नृप, वीतजीवितम्—अपगतजीवन विनष्टमित्यर्थ। अनेन वनितादिविषयेषु अत्यासक्ति दूरत परिहार्या इति बोधितम्।

(२६९) मेकलाधिपमन्त्रिण—मेकलाधिपस्य—तदाख्यपर्वतवेष्टितदेशस्वामिन, "मेकलो विन्ध्याद्रि" इति कश्चित्, मन्त्रिण,—सचिवा अपरिमितेति।—अपरिमिताना—बह्वीना, रमणीना—नारीणा, मणिनूपुराणा—रत्नमञ्जीराणा, झणझणाह्लाद,—झणत्कार-शब्द, तेन रम्या—मनोज्ञा तया, श्रवणसन्तर्पणशिञ्जितसुषमयेत्यर्थ, गोधनगिरिसुरुङ्गया—गोधनाख्यपर्वतान्तःकृतविवरवर्त्मना, "गोधनगिरि मूर्धाख्य पर्वत" इति कश्चित्, असुरविवरव्यसनिनम्—असुराणा—दानवाना, ["अचेतरन्" (उ० १ पा० ४३ सू०) इति उरन्] विवरम्—आवासरन्ध्र, पातालम् इत्यर्थ, तत्र व्यसनी—कुतूहलीत्यर्थ त, पातालदर्शनाय प्रलोभितमित्यर्थ, मागध—मगधराज, स्वविषय—स्वजन:

( ३७५ ) मृगयाऽऽसक्तम्य च मथ्नतो गण्डकान् उद्दण्डनड्वलनल-वननिलीनाश्च चम्पाधिपचमूचरभटाः चामुण्डीपतेः श्राचेमुः प्राणान् पुष्करस्य। ( ३७६ ) वन्दिरागपरश्च परप्रयुक्ता जय-शब्दमुखरमुखा मद्रा मौखरिं मूर्खं क्षत्रवर्माणम् उदखनन्। ( ३७७ ) श्ररिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च

सचिवं—मन्त्रिसहितं, चकोरनाथं—चकोराख्यजनपदाधिपं चन्द्रकेतुं तदाख्यं, शूद्रकदूत,—तदाख्यदूतेन कालीवद् छिद्रितहृत्तान्त इति भावः, रहसि—विजने, जीवितात—प्राणेभ्यः, दूरीचकार—अपसारयामास, निजघान इत्यर्थः। एतेन मन्त्री नैव प्रकाशनीय इति सूचितम्।

( ३७५ ) उद्दण्डेति।—उद्दण्डानि—उन्नतनालानि, नड्वलेषु—नडभूयिष्ठदेशेषु, यानि नलवनानि—नलाख्यतृणवनानि इत्यर्थः [ "नडप्राये नड्वल नड्वल इत्यपि" इत्यमरः। "नडशादाड्ड्वलच्" ( ४।२।८८ पा० ) इति ड्वलच् ] तेषु निलीनाः,—सुगूढं स्थिताः चम्पेति।—चम्पाधिपस्य—तदाख्यनगरीपतेः, चमूषु—सेनासु, चरन्ति—भ्रमन्ति, तिष्ठन्तीति यावत् तथोक्ताः, भटाः—वीराः, चम्पाधिपसैनिका इत्यर्थः, मृगयाऽऽसक्तस्य—आखेटव्यसनिनः गण्डकान्—"गण्डार" इति वङ्गभाषया प्रसिद्धान् खड्गिनः, ( "गण्डके खड्गखड्गिनौ" इत्यमरः ) मथ्नतः—व्यापादयतः इत्यर्थः, चामुण्डीपतेः,—चामुण्डी च नगरी, तस्याः पतेः,—ईश्वरस्य तस्य पुष्करस्य—तदाख्यस्य राज्ञः, प्राणान्—जीवनमित्यर्थः आचेमुः,—भक्षयामासुः, तं निजघ्नुरित्यर्थः। एतेन मृगयायाम् अपि अत्यासक्तिः परिहर्तव्या इति प्रदर्शितम्। श्लेषोऽस्मिन् न तु अन्यत्र बहूनाम् सहृदा-हृद्या इत्यनुप्रासोऽलङ्कार इति ज्ञेयम्।

(३७६) परप्रयुक्ता,—शत्रुप्रहिता, जयेति।—जयशब्देन—विजयतां विजयताम् इत्याकारध्वनिना, मुखराणि—शब्दायमानानि, मुखानि—वदनानि येषां तथाभूता मद्राः,—तदाख्या क्षत्रियाः, वैतालिकच्छद्मना जयशब्दमुखरवदना इति भावः, [ "मद्रा" इत्यत्र "भद्रा" इति पाठान्तरम् अश्लीलत्वेन सवर्णमद्रतायां भकारस्य विजातीयतया इत्यनुप्रासानुकूल्यात् इति सङ्क्षेपः] वन्दीति।—वन्दिनः —स्तुतिपाठकाः, वैतालिका इति यावत् तेषु रागः—अनुरागः प्रीतिरिति यावत्, एव परः,—प्रधानं यस्य तथाविधं तदासक्तमित्यर्थः मौखरं—मुखरवंशसम्भूतं, मूर्खं—निर्बोधं, क्षत्रवर्माणं—तदाख्यं राजानम्, उदखनन्—उदपाटयन् निजघ्नुरित्यर्थः। एतेनापि स्तुतिकः एवैवैव परिहर्तव्या इति प्रकटीकृतम्।

चन्द्रगुप्तः शकपतिम् अशातयदिति। (३७८) प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयम् आगता एव देवस्य। यथा —(३७९) मधुमोदितं मधुरकार्श्वलिप्तैः लाजैः सुप्रभा पुत्त्रराज्यार्थं महासेनं काशिराजं जघान। (३८०) व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारापर्यन्तेन अयोध्याधिपतिं परन्तपं रत्नवती

(३७७) चन्द्रगुप्त,कामिनीति।—कामिनीवेशेन—स्त्रीपरिच्छदं गृहीत्वेत्यर्थः,गुप्त —गोपायितस्वरूप, ब्रह्मचारी सन्नित्यर्थः, अरिपुरे—शत्रुनगरे, परकलत्रकामुक—परस्त्री-समासक्त,शकपति—शकाख्यक्षत्रियविशेषराजम्, अशातयत्—अवधीत्। चन्द्रगुप्तभ्रातृवधूं ध्रुवदेवीं कामयमानं शकाधिपतिं ध्रुवदेवीवेशधारी चन्द्रगुप्तेन गूढं व्यापादित इति वार्त्ता। एतेन केऽपि परकलत्रं नैव द्रष्टव्यं,विशेषतो लोकशासकराजैः इति व्यक्तीकृतम्।

(३७८) प्रमत्तानां—प्रमादशालिनां, प्रमदाकृता,—प्रमदाभिः,—कामिनीभिः, कृता —सम्पादिता इत्यर्थः, प्रमादाः,—अनवधानतानिबन्धना विपद इत्यर्थः, देवस्य —भवत इति भावः, श्रुतिविषयं—कर्णपथम्, आगता,—प्राप्ता, भवता श्रुता इत्यर्थः, तथाऽपि काव्यान्तरव्यासक्तचित्ततया ते विस्मृतिश्चेत् स्यादिति मत्वा अनुजीविभिरवश्य-कर्तव्यतया एवं उच्यन्ते, न त्वश्रुतपूर्व्वा ते विज्ञाप्यन्ते इत्याशयः। एतेन प्रभोः समयम् आपदादावस्थापनमेवाधिकारिणां प्रभुपरायणतायाः परिचायकम् इत्यावेदितम्।

(३७९) सुप्रभा—तन्नामप्रसिद्धा स्वमहिषी पुत्त्रराज्यार्थे—तनय राज्ये अभिषेक्तु-मित्यर्थः, मधुमोदित—मधुना—मद्येन, मोदितम्—उल्लासितं, अनिवर्त्तितविकारमिति यावत्, महासेन—तन्नामानं, काशिराज—वाराणसीपतिं मधुरकार्श्वलिप्तैः —मधुरकेण —मधुरेनैव मधुरकं तेन, विषविशेषेण इत्यर्थः, ("मधुरा शतपुष्पायां । क्लीबं विषे पक्षि रसे " इति मेदिनी ) संलिप्तैः,—दिग्धैः, लाजैः —भृष्टधान्यैः, जघान—निहतवती। ("लाजैर्नूपुरैरित्यर्थः , तथा च —विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्' इति मनुटीकायां कुल्लूकभट्टधृतवचनम्" इति केचित् )।

(३८०) व्याजेति।—व्याजेन—छलेन जनित,—उत्पादित, कन्दर्पस्य—कामस्य दर्पः,—आविर्भावितमत्र इत्यर्थः यया तथाविधा, कस्मिंश्चित्कामभावदर्पणेन आदयस्य काममुद्दीपयन्तीति भाव, रत्नवती—तन्नाम काचित् कामिनी, क्षुरेति।—क्षुरधारा—क्षुरस्येव—स्वनामप्रसिद्धास्त्रविशेषस्येव, धारा—तीक्ष्णता इत्यर्थः पर्य्यन्ते—प्रान्तदेशे यस्य तादृशेन, क्षुरावत्प्रिधितेनेत्यर्थः, दर्पणेन—आदर्शेन अयोध्याधिपतिम्—

जारूथ्यम्; (३८१) विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्; (३८२) योगपरागविरसवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरूपा वैरन्त्यं रन्तिदेवम्; (३८३) वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णि विदूरथम्; (३८४) रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम्;

---

महीपालान्, परन्तप—शत्रुतापिन ["द्विषत्परयोस्तापेः" (३।२।३९ पा०) इति खच् "खचि ह्रस्वः" (६।४।९४ पा०) इत्युपधाया ह्रस्वः] जारूथ्य—तदाख्य नृप, अघानीति पूर्वेणान्वयः। एवमुत्तरत्र।

(३८१) देवरानुरक्ता—देवरे—पत्युः कनीयसि भ्रातरि, अनुरक्ता—आसक्ता, विषचूर्णेन—गरलचूर्णेन चुम्बित—स्पृष्ट, मकरन्दः—मधु यस्य तादृशेन, कर्णेन्दीवरेण—कर्णपूरनीलोत्पलेन सौह्मं—सुह्मदेशाधिप देवसेनं—तदाख्यम्।

(३८२) वल्लभा—प्रिया, महिषीत्यर्थः सपत्नीरूपा—सपत्नीमनाहृत्य सपत्नीं प्रति समासक्त इति कोपनीया भाव, योगेति।—योगपराग,—वशीकरणार्थं कल्पित मन्त्रपूतौषधचूर्णविशेष तेन विरस—विरुद्ध, वर्षतीति वर्षीतेन, यद्वा,—विरस,—विषम् यथा, ("रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः॥" इति मेदिनी) तद्वर्षिणा—तत्स्राविणा, सविषपरागनिःसारिणेत्यर्थं मणिनूपुरेण—रत्न मञ्जीरेण, वैरन्त्य—वैरन्ती नाम नगरी तस्या अधिप वैरन्त्य त, ["तदर्हतीति—" (४।१।१७१ पा०) इत्यादिना अञ्] रन्तिदेव—तन्नामान नृपम्।

(३८३) विन्दुमती—तन्नाम्नी महिषी, वेणीनिगूढेन—केशपाशे गोपायित्वा निहितेन, वृष्णि—वृष्णिवंशप्रसूत, विदूरथ—तन्नामान राजानम्, तथा च—"शस्त्र वेणीविनिगूहितेन विदूरथं वै महिषी जघान" इति मनुटीकायां कुल्लूकभट्टधृतवचनम्।

(३८४) हंसवती—तन्नाम्नी राजमहिषी, रसदिग्धमध्येन—रस,—विष, ('शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमर) तेन दिग्ध—लिप्त, मध्यम् —अभ्यन्तर यस्य तथाविधेन मेखलामणिना—काञ्चीदाममध्यनिबद्धरत्नेन, सौवीर —तदाख्यजनपदाधिपति, वीरसेन—तदाख्य नृपम्। एवं प्रबन्धे स्वप्रेयस्योऽपि स्वाराध्या कदाचित् कालसर्पिण्यो भवन्ति इति विभाव्य नरेन्द्र सतत सार्वहित स्वावधानम् इति प्रदर्शितम्।

(३८५) अदृश्यागदलिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम्" इत्युक्त्वा (३८६) विरराम स्वाम्यादेशसम्पादनाय च निर्जगाम।

देवोऽपि हर्षः (३८७) सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे (३८८) प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि उपलिङ्गानि वितेनिरे। तथा हि (३८९) अविप्रकृष्टाः कालदूतहृदय इव इतस्ततः चेरुः षट्पदाः कृष्णसारश्रेणयः।

---

(३८५) अदृश्येति।—अदृश्येन—गूढेन, अगदेन—तदाख्यौषधेन, आत्म-रक्षार्थं विषनाशकेन इति भावः लिप्त—दिग्ध, वदन—मुख, मुखकुहरमित्यर्थः यस्याः यथा वा तथाभूता, अविश्वासभयापादनेन राजानं जिघांसन्ती राज्ञी तेन स्वप्राणवियोगो भवेन्नेति इति शङ्कया विषनाशकौषधं स्वमुखाभ्यन्तरे उपालिम्पदिति विभाव्यम्, पौरवी—तन्नाम्नी महिषी चिक्षेप इति।—विषवारुणी—गरलयुक्ता सुरा, तस्याः गण्डूष—मुखपूरणं, तस्य पायनेन—पानक्रियया, स्वभर्तारं राजानं पाययित्वा इत्यर्थः, पौरवेश्वरं—पुरुवंशीयानामधिपं सोमकं—तदाख्यं नृपम्। उक्ते वचनजाते स्त्रीविहितषड्यन्त्रप्रदर्शनेन सद्यस्तुमहत् अहिंसगौरवबहुलाः कपटरूपाः स्त्रियो हि सदैव परिवर्जनीया इति प्रतिपादितम्।

(३८६) विरराम—तूष्णीम्बभूव। स्वाम्यादेशसम्पादनाय—प्रभोराज्ञां पालयितुमित्यर्थः।

(३८७) सकलराज्यस्थितीः—समस्तराज्यव्यवस्थाः, राजकार्यस्य सुष्ठु निर्वाह-विधानानीत्यर्थः विजिगीषुभिः प्रयाणकाले प्रथमं स्वाधिकाररक्षणस्य अवश्यकर्तव्य-त्वादिति भावः।

(३८८) दिशां विजयाय—दिग्विजयाय, प्रयाणं—यात्रां, समादिशति—आज्ञापयति सति इत्यर्थः। गतायुषां—निःशेषजीवितकालानां, प्राप्तकालानामिति भावः, प्रतिसामन्तानां—हर्षवर्द्धनस्य विपक्षभूपानाम्, उदवसितेषु—गृहेषु, उपलिङ्गानि—उपलिङ्ग्यन्ते—अनुमीयन्ते अशुभानि यैः तानि, अनिमित्तानि इत्यर्थः, उत्पातचिह्नानीति यावत्। वितेनिरे—आतनिरे, विस्तारं प्रापुः इति भावः।

(३८९) कालेति।—कालस्य—यमस्य, दूताः—अनुचरा इत्यर्थः, तेषां हृदय

( ३८० ) प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासङ्घातझङ्कारा अज्ञादिरेऽजिरे। ( ३८१ ) विवृतविकृतवदनविवरविसृतवह्निविसरा वासरेऽपि विरसं विरेसुः चिरम् अशिवार्थम् अशिवाः शिवाः। ( ३८२ ) प्रवपिञ्छितप्रकटप्रणया इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः।

---

इव—नैशापि इव, चटुला,—चञ्चला, ग्रामारण्येषु,—ग्रामसारारण्यगनिवेशाः, अविप्रकृष्टा,—सन्निहिता सन्त, चेरु,—भ्रमन्ति स्म, जनविरले कानने ग्रामे ग्रामपदे नियत विहरणशीलानां भीतप्रकृतिकानां तेषां जनपदादौ निर्भयं पर्यटनस्य अचिरादेव बहुलजनक्षयेण जनपदादीनामरण्यीभवनसूचकत्वादिति भाव ।

( ३८० ) प्रचलितेति।—प्रचलितायाः,—प्रस्थितायाः, तेषां भवनं परित्यज्य इति भाव, लक्ष्म्या,—श्रियाः, नूपुराणां—मञ्जीराणां, प्रणादप्रतिमाः,—निक्वणसदृशा, मधुसरघाणां—मधुमक्षिकाणां, ("सरघा मधुमक्षिका" इत्यमरः) सरघाशब्देनैव मधुमक्षिकायामुक्तायामपि पुन मधुपदं मधुसरघयोस्सम्बन्धबोधकं ज्ञातव्यम्, सङ्घातस्य—समूहस्य, झङ्कारा,—गुञ्जनानि, अजिरे—चत्वरे, अज्ञादिरे—व्यजृम्भन्त, मधुकरा गुञ्जन्तु इत्यर्थं। सदनादौ मधुकराणां निर्गत्य निरन्तरम् उड्डीयमानानां सरघाणां सरादोऽप्यनर्थज्ञापक इत्याशय ।

( ३८१ ) विवृतेति।—विवृतानां—व्यात्तानाम्, अत एव विकृतानां—विघटानां, वदनानां—मुखानां, विवरेभ्य —कुहरेभ्य, विसृत,—निर्गत, वह्निविसर,—अग्निप्रसर यासां तथाभूता व्यात्तवदने अग्निमुद्गिरन्त्य इति यावत् अशिवा,—अमङ्गलसूचिका, शिवा,—शृगाला, उल्कामुख्य इति यावत् अशिवार्थम्—अमङ्गलार्थं, वासरेऽपि—दिवसेऽपि, का कथा निशायाम् इति अपिशब्दार्थ विरस—विकटं, विरेसु,—शब्दायन्ते स्म, निशायां प्रतियाम शिवा शब्दायन्ते, अत तदतिरिक्ते काले कीदृशा निनादा अशुभसूचका इति ज्ञेयम्। [इह व स र शाणामसकृदावृत्त्या वृत्त्यनुप्रास]।

( ३८२ ) कपीति।—कपिपोतानां—वानरशावकानां, कपोल,—गण्डदेशा इव, कपिला,—पिङ्गला, पक्षतय,—पक्षा येषां तथाविधा, काननकपोता,—आरण्यपारावता, "घुघुः" इति केचित प्रवेति।—प्रवानां—प्लवदेशानां, पिञ्छितेषु—मार्गेषु, प्रकट,—प्रकट, प्रणय,—स्पृहा येषां तथाभूता इव, प्रवपिञ्छितप्रकटप्रणया इवेति यावत्, पेतु,—पतन्ति स्म, नगरवासानभ्यस्तानां वन्यकपोतानां वन्यफलमूलनिरतानाम्

(३९३) आमन्त्रयमाणा इव दधुः अकालकुसुमानि समम् उपवनतरवः। (३९४) तरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सभाशालभञ्जिकाः। ददृशुः (३९५) आसन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिव आत्मानं कबन्धम् आदर्शोदरेषु योधाः। (३९६) चूडामणिषु चक्रशङ्खकमललक्ष्माणः प्रादुरभवन् पादन्यासा राजमहिषीणाम्। (३९७) चेटीचामराणि

---

चलनात् नगरीपरम्परस्मात् हतनृपतिप्रतिबिम्बितभवनवेलया इव इत्युत्प्रेक्षालाभार्थम्, तथा तथाविधप्रकोप महोत्पातज्ञापकम् इति आकुलिका।

(३९३) उपवनतरवः—आरामवृक्षाः, आमन्त्रयमाणा इव—प्रेषणार्थं कुर्वन्त इव, भोगावधेय सपदि सम्पादयितुमभिमन्त्रयन्त इवेत्यर्थः, समं—युगपत्, अकालकुसुमानि—असामयिकपुष्पाणि, पुष्पोद्गमायोग्यकालेऽपि पुष्पाणि इत्यर्थः, दधुः,—धारयन्ति स्म, अजनयन्त इति भावः। दोहददानप्रयत्नादिकमन्तरेणापि आकालिककुसुमोद्गम देशोपद्रवसूचक इत्याशयः।

(३९४) तरलेति।—तरलेन—चञ्चलेन, करतलेन—पाणितलेन यः प्रहारः,—आघातः, तेन प्रहतौ—ताडितौ, पयोधरौ—स्तनौ याभिः तथाविधाः सभाशालभञ्जिकाः,—सभापुत्तलिकाः, प्रसभं—सहसा, रुरुदुः,—रुदन्ति स्म इवेति शेषः, ता भाविवियोगशोकात् अथ स्वस्य करतले प्रहृत्य भृशं चक्रन्दुरिवेत्युत्प्रेक्षा बोद्धव्या, प्रतिमास्पन्दनं प्रबलशोकदुर्निमित्तज्ञापकम् इति शेषम्।

(३९५) योधाः—सैनिकाः, आसन्नेति।—आसन्नात्—अतिसन्निहितात्, अचिरभाविन इत्यर्थः कचग्रहात्—केशाकर्षणात् शत्रुभिः कृतात् इति भावः, भयेन—त्रासेन, उद्भ्रान्तम्—विघूर्णितम् उत्तमाङ्गम्—शिरो यस्य तथाभूतमिव, आत्मानं—स्वदेहम्, आदर्शोदरेषु—मुकुराभ्यन्तरेषु, कबन्धम्—अशिरस्कं, ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः)। आदर्शादौ आत्मनः कबन्धदर्शनं त्वरितमृत्युज्ञापकमिति बोध्यम्।

(३९६) राजमहिषीणां—प्रतिपक्षनृपवनितानां चूडामणिषु—मुकुटस्थरत्नेषु, चक्रेति।—चक्रादीनां—रथाङ्गादीनां, पादस्थितानां सद्भाग्यलक्षणानामिति भावः, लक्ष्माणि—चिह्नानि येषु तथाभूताः पादन्यासाः,—चरणनिक्षेपाः, विजेतृशत्रुचरणचिह्न इति भावः, प्रादुरभवन्—समपद्यन्त राज्ञः हर्षस्य रथाङ्गादिशोभितं पदं हनिष्यमाणरिपुरमणीनां शिरोमणिषु प्रतिबिम्बितमिदानीमेवाभूदिति फलितम्। चरणादीनामभावेऽपि तच्चिह्नप्रतिबिम्बनात् विभावनालङ्कारः, विजिगीषोर्दिग्विभूतिमत्त्वमनेन द्योतितम् इत्यलङ्कारेण वस्तुध्वनिः।

अकस्मात् अधावन्त पाखिपल्लवात्। प्रणयकलहेऽपि दत्तपृष्ठा चिरम् अभवन् भटाः पराङ्मुखा मानिनीनाम्। (३९८) करिकपोलेषु व्यघटन्त मधुलिहा मधुमदिरा- पानगोष्ठ्यः। (३९९) समाघ्रातयममहिषगन्धा इव ताम्यन्तः स्तम्बकरिम् अपि हयो हरितं नवयवसं न चेरु.।

---

(३९७) चेटीति।—चेटीना—दासीना, वीजनकारिणीनामिति भाव, चामराणि—बालव्यजनानि, पाखिपल्लवात्—करकिसलयात्, अधावन्त—अच्यवन्त। दत्तपृष्ठा,—दत्त—प्रदर्शितमित्यर्थ, पृष्ठ—पश्चाद्देश यै तथाभूता, प्रणयकलहे पराजितत्वया पृष्ठप्रदर्शन कृतवन्त इति भाव, भटा —वीरा, चिर पराङ्मुखा,— चिर विमुखा, पलायनपरा इति भाव, अभवन—अजायन्त, अधुना हतत्वात् कलहेऽपि पराजय तेषा भाविमृत्युसूचक अतएव पराजय वीरयाति इति भाव।

(३९८) करिकपोलेषु—करिणा—हस्तिना, कपोलेषु—गण्डेषु, मदमत्तदेशेषु इति भाव मधुलिहा—भ्रमराणा, मधिरा।—मधु—मदजलरूप पुष्परस एव, मदिरा—मद्य तस्या पानगोष्ठ्य —पानसभा, व्यघटन्त—व्ययुज्यन्त विच्छिन्ना भूता इत्यर्थ मकरन्दलोलुपा अपि मधुपा कुसुमनिकरवसति परित्यज्य समन्ततः करिकपोलेषु प्राक् नितरामवसन् इदानीन्तु रिपुकरिणा मदस्रावत्वाभावात् चलीना सन्त पूर्ववत् तत्र नासन्निति भाव, भयजात निकाशस मदवारि न अस्रवत् इति समुदितार्थ। कुञ्जराणा कपोलादिदेशात् भ्रमराणा पलायनस्य दुर्निमित्तसूचकत्वादिति भाव।

(३९९) हयाः —वाजिन घोटका इत्यर्थ ("घमानिलस्कन्धकविपुलिहाय वाजिषु। एकाङ्गिकपिभकपु हरिणा कपिले त्रिषु॥" इत्यमर) समाघ्रातेति।—समाघ्रात, —सम्यक् आघ्राय घ्रात इत्यर्थ, यममहिषस्य—कृतान्तवाहनस्य इति यावत गन्ध —इय यै तथाभुता इव ताम्यन्त,—क्लिश्यन्त, आसन्नमृत्युसम्भावनया इति भाव स्तम्बकरिं —स्तम्ब—गुच्छ करोति यस्त व्रीहिमित्यर्थ, तथा हरित—श्यामल नवयवसमपि—नूतन घासमपि, यद्वा,—इह समुच्चयार्थकोऽपिशब्द नेन श्यामल नवयवस स्तम्बकरिमपि इत्यन्वय अन्यथा ["स्तम्बशकृतोरिन" (३।२।२४ पा०) इत्यत्र "व्रीहिवत्सयोरिति वक्तव्यम्" (वा०) इति व्रीह्यर्थे एव इन विधानात्] यद्वा —स्तम्बफलप्रसवोन्मुखमपि सुरस नवस वाजिन ॥ अनुज्ञत इति अन्वयलभ्यार्थ, न चेरु,—न भक्षयामासुरित्यर्थ।

(४००) चलवलयावलीवाचालबालिकातालिकाऽऽतोद्यलालिता अपि न ननृतुः मन्दा मन्दिरमयूराः। निशि निशि (४०१) रजनिकरहरिणनिहितनयन इव उन्मुखः तारम् उपतोरणम् अकारणम् अक्राणीत् कौलेयकगणः। (४०२) गणयन्तीव गतायुषः तर्जनतरलया तर्जन्या दिवसम् आट वाटकेषु कोटवी।

---

(४००) मन्दिरमयूराः,—गृहपालितशिखिनः, ननृतुः।—चलाभिः,—तरलाभिः, तालदानप्रसङ्गेन चपलाभिरित्यर्थः, वलयावलीभिः,—कङ्कणश्रेणीभिः, वाचालाः,—मुखराः, सशब्दा इत्यर्थः, या बालिकाः,—कन्याः, तासां तालिका—करतलध्वनिरेव, आतोद्य—वाद्यभेदः, ("वादित्रातोद्यनामकम्" इत्यमरः) तेन लालिता अपि—लालनया आप्यायिता अपि, उत्तेजिता अपीति भावः, करतालमन्द्रध्वनिश्रवणसमकालं प्राक् सहर्षं नृत्यन्तः अपीति तात्पर्यम्, मन्दाः,—खिन्नाः, स्वपालकानां राज्ञां भाविवियोगाशङ्कया इति भावः।

(४०१) कौलेयकगणः,—कुक्कुरसमूहः, ("कौलेयकः सारमेयः कुक्कुरो मृगदंशकः" इत्यमरः) उपतोरणम्—बहिर्द्वारसमीपे, ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः) रजनीति।—रजनिकरस्य—चन्द्रस्य, यो हरिणः,—मृगः कलङ्कस्थ इति भावः, तस्मिन् निहिते— न्यस्ते, नयने—नेत्रे येन तथाभूत इव, दर्शनेच्छया, तस्य मृगस्य खाद्यत्वादिति भावः, उन्मुखः —ऊर्ध्वमुखः सन्, अकारणम्—अहेतुकं, तारम्—उच्चं, अक्राणीत्—व्यरावीत्, चीत्कारं कृतवान् इत्यर्थः। कुक्कुरा हि भवन्ति मृगमांसप्रियाः, ते हि त मृगयायां यथा उन्मुखीभूय मृगाननुयान्ति तथैव शशाङ्कस्य कुरङ्गमाक्रमितुमिव उन्मुखीभूय अकस्मात् सर्वत्र धावितुमारेभिरे इत्युत्प्रेक्षितार्थतात्पर्यम्, अथवा समुदिताश्च, प्रतिनिशं सतारं रुवन्तः श्वानः अन्येनामुनैव यद्दैवं भावि राजवियोग-मात्मज्ञा उन्मुखीभूय निभरमरुदन्निति।

(४०२) कोटवी—नग्ना स्त्री, उन्मत्ता इति भावः, ("स्त्री नग्निका कोटवी स्यात्" इत्यमरः) तर्जनतरलया—तर्जनं निर्भर्त्सनं, तत्र तरला—चञ्चला तया, तर्जन्या —अङ्गुष्ठानन्तरवर्त्तिन्या अङ्गुल्या गतायुषः,—गतजीवितान्, गणयन्तीव—सङ्ख्यां कुर्वन्तीव, के के गतायुषो जाता इति गणनां कुर्वन्तीवेत्यर्थः दिवसम्—दिनं व्याप्येत्यर्थः, [ व्याप्तार्थे द्वितीया ) वाटकेषु—वाटः,—मार्गः, स एव वाटकः तेषु, पथिषु इत्यर्थः, ("वाटी मार्गे वृतिस्थाने" इति मेदिनी) आट—बभ्राम। अपारद्रावभावनतिविनीगमनिर्भ

# सप्तम उच्छ्वासः ।

---

**अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।**
**वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ १ ॥**

---

इव, विजयिनृपस्येति भावः, चामराणि ।—चामराणि—प्रकीर्णकानि, बालव्यजनानीत्यर्थः, चामरग्राहिणि—छत्राणि, नृपलक्षणानीति यावत्, व्यजनानि—तालवृन्तानि तानि, अपहरन्ती—अपहारयन्ती, प्रतिपुरीषु प्रचण्ड पवन विजिगीषोः प्रतिहारी इव विपक्ष नृपाणां, (विजेतृ प्रतीहारीभिः स्वप्रतापनिर्जितानां विपक्षाणां छत्रचामरादीनि सततनृपव्यञ्जनानि अपहार्यन्ते इति लोकव्यवहारः । सततं प्रतिकूलमरुत एवमेव बहु, येन प्रतिज्ञान्ते विपक्षाणां राज्ञां शिरसि चरणादिकं धारयितुमपि शक्यमिति भावः ।

इत्यवधप्रान्तस्थाट्टनीअवरचपग्रामनिवासिना वात्स्यव्याससगोत्रेण पाण्डेयकुलपतिना वि, द,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीनित्यबोध-
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायां वामनव्याख्यायां
श्रीहर्षचरितव्याख्यायां षष्ठ उच्छ्वासः ॥ ६ ॥

---

अथ हर्षस्य युद्धयात्रां विवर्णयिषन् कविः, कदाचिन्न कोऽपि एवमाशङ्केत यत् सन्धाविलात्मकभुवनविनेतृत्वस्यापि हर्षस्य ईदृशी असम्भाव्या प्रतिज्ञा सम्भवेयानुचिता, रिपवश्चेत् दुर्गमदेशे पलायिता भवन्तु, तदा कथं स प्राक् कृतां प्रतिज्ञां पूरयितुमीशीत? कथं वा बहुराज्ञीं पृथ्वीमेक एव जयेत? इत्याशङ्कायां समाधत्ते, अङ्गनेति ।—कृतप्रतिज्ञस्य—प्रथममेव कृतसङ्कल्पस्य, अमुं समुद्रपर्यन्तं देशं कृतपरिकरस्यैव, सर्वां जेष्यामि एवं करिष्याम्येव इति दृढसङ्कल्पस्य इति भावः वीरस्य—शूरस्य, वसुधा—पृथ्वी अङ्गनवेदी—अजिरवर्त्तिनी परिष्कृता भूमिः एवेत्यर्थः, शूरा पृथिव्याः असीमत्वं तुच्छीकृत्य विजित्य च तां स्वगृहप्राङ्गणवत् लीलयैव तत्र यथासुखं विचरतीति भावः, जलधिः—समुद्रः कुल्या—अल्पा कृत्रिमा सरिदेवेत्यर्थः, ("कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः) दुष्पारं समुद्रं क्षुद्रजलाशयवत् सुपारं मत्वा तत्परपारस्थमपि

धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम्।
रिपुसञ्ज्ञकेषु गणना कैव वराकेषु काकेषु ? ॥ २ ॥

(१) अथ व्यतीतेषु च केषुचित् दिवसेषु, मौहूर्त्तिकमण्डलेन भूयः सुगणिते सुप्रशस्तेऽहनि

---

मुं अनायासेनैव विनिघ्नन्ति इति भावः, पातालम्—अधोभुवनं, स्थली—अकृत्रिमभूमिभूतं, ["जानपद—" (४।१।४२ पा०) इत्यादिना ङीष्] अच्छभूभाग इति भावः, दुर्गमं पातालमपि समतलभूस्थानवत् अनायासेन रिपुजयार्थं प्रविशन्ति इति भावः, सुमेरुः,—हेमाद्रिः, स्वर्गराज्यमिति भावः, वल्मीकः,—कीटविशेषविरचित-मृत्तिकास्तूप इत्यर्थः, तुङ्गमपि सुमेरुमपि वल्मीकस्तूपवत् अवलीलया आक्रामन्तीति भावः, शूरा हि निजशौर्य्यप्रभावेण त्रिभुवनं करतलगतफलमिव अनुमिन्वन्ति, न तु स्ववीर्य्यगुणानां तेषां साधनान्तरप्रयोजनमिति निष्कर्षः। अत्र केवलाया वसुधाया अङ्गनवेदीरूपत्वोक्ते, तथा जलधेः कुल्यारूपतया पातालस्य स्थलीभूततया सुमेरोः वल्मीकरूपतयोक्तेश्च निरङ्गाणां रूपकाणां सजातीयानां संसृष्टिः। आर्य्या वृत्तम् ॥ १ ॥

वीराणां प्रभावमाह, धृतेति।—बाहुशालिनि—भुजवीर्य्यवति इत्यर्थः, जने इति शेषः, धृतधनुषि—धनुष्पाणौ सति, त्रिभुवनमेव जेष्यामि इति प्रतिज्ञाय गृहीतचापे सतीत्यर्थः, [अत्र समासान्तविधेरनित्यत्वात् "धनुषश्च" (५।४।१३२ पा०) इति बहुव्रीहेरनङादेशाभाव इति ज्ञेयम्, अन्यथा धृतधन्वनि इति स्यादिति विभाव्यम्] शैलाः,—पर्व्वताः, न नमन्ति—न प्रणमन्ति, आत्मनाशभयादिति भावः, इति यत्, तत्—अननमनमिति यावत्, आश्चर्य्यम्—चित्रं, पर्व्वतानपि वीरा धनुर्बलेन नमयितुं शक्नुवन्तीति भावः, रिपुसञ्ज्ञकेषु—शत्रुनामधारिषु, वराकेषु—दीनेषु, काकेषु—क्षुद्रप्राणिषु अतुल्यनिर्वीर्य्येषु अल्पवीर्य्येषु वा, यद्वा,—कर्णकठोररटनमात्रपरा-धर्म्मोच्छिष्टभोजिषु इति भावः, कैव गणना?—क आदरः? इत्यर्थः, अन्ये प्रत्युत समाः प्रबलस्य बाहुबलशालिनः सकाशे नमन्त्येव, तान् हि असौ तृणाय मन्यते च इति भावः। एतेन शूरस्य भावि त्रिभुवनविजयित्वं सूच्यते। अत्र रिपुषु काक-रूपत्वोक्तेः निरङ्गरूपकम्। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेति।—"अथ" इत्यस्य "मन्त्रणाविज्ञासाम" इति परेण सम्बन्धः। क्रमेण विवृणोति, व्यतीतेषु इति।—व्यतीतेषु—अतिक्रान्तेषु। मौहूर्त्तिकमण्डलेन—ज्योतिर्विद्गणेन, भूयः,—पुनः पुनरित्यर्थः, सुगणिते—सुष्ठु गणनया निरूपिते।

(२) दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने, सलिलमोचविशारदैः शारदैरिव अम्भोधरैः कालधौतैः शातकौम्भैश्च कुम्भैः स्नात्वा, (३) विरचय्य परमया भक्त्या भगवतो नीललोहितस्य अर्चाम्, उदर्चिषं हुत्वा प्रदक्षिणावर्त्तशिखाकलापम् आशुशुक्षणिं, दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयाणि च सहस्रशः तिलपात्राणि,

---

(२) दण्डयात्रालग्ने—दण्डः,—सैन्यं, चतुरङ्गबलमिति भावः, ("दण्डोऽस्त्री लगुडे पुमान्। सैन्ये काले मानभेदे ....." इति मेदिनी) तस्य, यद्वा,—दण्डाय—युद्धाय, तुरीयोपायभूतायेत्यर्थः, यात्रा—प्रयाणं, तस्याः लग्नम्—अनुकूलराश्युदयः, शुभक्षण इत्यर्थः तस्मिन्, दत्ते—निर्दिष्टे। सलिलेति।—सलिलस्य—जलस्य, मोचे—क्षारणे, उद्गिरणे इत्यर्थः, विशारदाः,—पटवः तैः, सुबहुभिः सार्थजलैरिति यावत्, प्रभूतजलैरिति भावः, अन्यत्र,—सलिलानां मोचेन—वर्षासु वर्षणेन, विशारदाः,—ख्याताः तैः, शारदैः,—शरत्कालिकैरिव, अम्भोधरैः,—जलधरैः, जलपूर्णैरित्यर्थः, मेघैश्च, कालधौतैः,—राजतैः, ("कलधौतं रूप्यहेम्नोः" इत्यमरः) अन्यत्र,—कालेन—वर्षापगमेन धौताः,—निर्मलाः श्वेता वा तैः, शातकौम्भैः,—काञ्चनैः, स्वर्णमयैरित्यर्थः, ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयं शातकुम्भम्" इत्यमरः)। अम्भोधरैः सह कुम्भानामवैधर्म्यसाम्योक्तेः श्लेषानुप्राणितोपमाऽलङ्कारः।

(३) नीललोहितस्य—नीलः कण्ठे लोहितः जटायां तस्य, हरस्येत्यर्थः, ["वर्णो वर्णेन" (२।१।६९ पा०) इति समासः। "धूर्जटिर्नीललोहितः। हरः स्मरहरः ..." इत्यमरः) अर्चाम्—पूजाम्, विरचय्य—विधाय, उदर्चिषम्—उद्गतशिखम्, प्रदक्षिणेति।—प्रदक्षिणं—दक्षिणभागमनुलक्ष्येत्यर्थः, आवर्त्तते—उद्गच्छतीति य तथाविधः, शिखाकलापः,—ज्वालासमूहः यस्य तथाभूतम्, दक्षिणावर्त्तवह्नेः शुभसूचकत्वादिति भावः, आशुशुक्षणिम्—अग्निम्, ("अग्निर्वैश्वानरो वह्निः ... शिखावानाशुशुक्षणिः" इत्यमरः) हुत्वा—तर्पयित्वा, पावके हविः प्रक्षिप्येति भावः, द्विजेभ्यः,—ब्राह्मणेभ्यः, रत्नवन्ति—रत्नभूयिष्ठानि, राजतानि—रौप्यमयाणि, जातरूपमयाणि—स्वर्णमयानि, ("स्वर्णं सुवर्णं .....। चामीकरं जातरूपम् .....॥" इत्यमरः) सहस्रशः—बहुशः अनेकसहस्राणीति यावत्, ["सङ्ख्यैकवचनाच्च वीप्सायाम्" (५।४।४३ पा०) इति शस्] तिलपात्राणि—तिलपूर्णानि भाजनानि,

(४) कनकपत्रलताऽलङ्कृतशफशृङ्गशिखरा गाश्च अर्व्वुदश, समुपविश्य विततव्याघ्रचर्म्मणि भद्रासने, (५) विलिप्य प्रथम-विलिप्तायुधो निजयशोधवलेन आ चरणतः चन्दनेन शरीरं, परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले, (६) परमेश्वर-चिह्नभूतां शशिकलाम् इव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि, नीत्वा कर्णाभरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितम् अभिनवं दूर्व्वापल्लवं, विन्यस्य सह

---

(४) कनकेति ।—कनकपत्रलताभिः—सुवर्णपत्रभङ्गिभिः, अलङ्कृतानि—भूषितानि, शफानि—खुराः, शृङ्गशिखराणि—विषाणाग्राणि च यासां तथाभूताः, गाः,—धेनूः, अर्व्वुदशः, दशकोटिशः, बहुसङ्ख्या इत्यर्थः । विततेति ।—विततं—विस्तृतं, व्याघ्रचर्म्म—शार्दूलत्वक् यस्मिन् तथोक्ते, भद्रासने—नृपासने हैमासनासने इति यावत्, ("नृपासनं यद्भद्रासनं सिंहासनन्तु तत् । हैमम्" इत्यमरः) राज्ञः व्याघ्रचर्म्मासनस्य चक्रवर्त्तियोग्यत्वज्ञापकत्वादिति भावः ।

(५) निजयशोधवलेन—निजेन—स्वकीयेन यशसा—कीर्त्त्या धवलः—समधिकं श्वेतः तेन, यद्वा—निजयशोवत् धवलेन चन्दनेन—श्रीखण्डेन श्वेतचन्दनेनेति यावत्, प्रथमेति ।—प्रथमम्—अग्रे एव इत्यर्थः विलिप्तानि—चतुरलिप्तानि, आयुधानि—कोदण्डगदाशक्तिचक्रखड्गादीनि येन तथाभूतः आ चरणतः —चरणपर्य्यन्तं शरीरं—देहं, विलिप्य—उपदिह्य । राजेति ।—राजहंसमिथुनं—रक्तचञ्चुचरणश्वेतवर्णहंसविशेषदम्पतीत्यर्थः ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः) लक्ष्म—चिह्नं ययोः तथाभूते ("चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) सदृशे—अनुरूपे राजयोग्ये इत्यर्थः दुकूले—वसने उत्तरीयाधोवस्त्रे इत्यर्थः, परिधाय—परिहित्य, यथोपयुक्ताचारेण इत्याशयः ।

(६) परमेश्वरचिह्नभूताम्—परमेश्वरस्य—महाराजस्य हरस्य च चिह्नभूताम्—लक्षणरूपां सार्व्वभौमलक्षणां स्मरहरप्रसादीकृताञ्च इत्यर्थः, नीलकण्ठोपासकैः इष्टदेवसमर्पणमन्तरेण माल्यवसनभूषणादयः नैव स्वीक्रियन्ते इति भावः, सितकुसुममुण्डमालिकां—श्वेतपुष्पहारविशेषं शिरसि कल्पयित्वा—धृत्वा । कर्णाभरणमरकतमयूखमिव—श्रवणभूषणहरिन्मणिकिरणमिव, गोरोचनाच्छुरितं—गोरोचनया—माङ्गल्यद्रव्यविशेषेण छुरितं—प्रलिप्तम् अभिनवम्—अम्लानं, हरिद्वर्णमिति यावत्, दूर्व्वापल्लवं—शतपर्व्विकाकोमलं,

(७) शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे, (८) परिपूजित प्रहृष्ट-पुरोहित करप्रकीर्यमाण-शान्तिसलिलशीकरनिकराभ्युक्षितशिरा: समर्प्य महार्हाणि वाहनानि, (९) बहलरत्नालोकलिप्तककुब्भि च भूषणानि भूभुजा संविभज्य, (१०) क्लिष्टकार्पटिककुलपुत्रलोकमोचितै: प्रसाददानैव विमुच्य

---

कोमलदूर्वोद्गमसहितम् , दूर्वाया पल्लवानि च तत्समुदायम इति वा [ "विभाषा—" (२।४।१२ पा०) इत्यादौ "पशुशकुनिवृक्षमृगतृणधान्यव्यञ्जनपक्षिगणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्" (वा०) इति पशुपक्षान्तस्यानेकवद्भावे एकवद्भाव ] कर्णगोचरता—श्रुतिविषयता,कर्णदेशमित्यर्थ , नीत्वा—प्रापय्य, कर्णयो: संस्थाप्य इत्यर्थ ।

(७) शासनवलयेन—मुद्राकटकेन, "ठोडर" इति वङ्गभाषया प्रसिद्धेन राजकीयलेखादीनामुपरि कटमाङ्काङ्कितेन राज्ञानुमोदनज्ञापकचिह्नविशेषयुक्तेन करभूषणेनेति यावत सह गमनमङ्गलप्रतिसरं—यात्रिकमङ्गलसूत्रम्, विहिता विजयाय युद्धयात्रायां साफल्यार्थं करधार्य मन्त्रपूत सूत्रविशेषमित्यर्थ, ("हस्तसूत्रे प्रतिसरोऽस्त्रियाम्" इत्यमर ) प्रकोष्ठे—कूर्पर-मणिबन्धयो रन्तरे ।

(८) परिपूजितेति ।—परिपूजितेन—समर्चितेन, अत एव प्रहृष्टेन—प्रीतेन, पुरोहितेन—पुरोधसा करेण—हस्तेन, प्रकीर्यमाणाना—विक्षिप्यमाणाना, शान्तिसलिलाना—शान्त्युदकाना, शीकरनिकरै,—कणसमूहै, अभ्युक्षित—सिक्त, शिर,—मस्तक यस्य तथाभूत , पूज्यमानपुरोहितशान्तिजलाभिषेकात् यात्राया मरीचिकाज्ञानमपि न समुन्नहति इति विवेक , महार्हाणि—बहुमूल्यानि, वाहनानि—हस्त्यादीनि ।

(९) बहलेति ।—बहलाना—प्रभूताना, रत्नाना—मणीनाम, आलोकेन—प्रभया, लिप्ता —रञ्जिता , ककुभ ,—दिश यै तानि भूषणानि—अलङ्कारान भूभुजा —राज्ञा स्वपक्षाश्रितसामन्तानामिति भाव , संविभज्य—सम्यक विभागेन दत्त्वा इत्यर्थ, दानरूपद्वितीयोपायप्रयोगेण मित्रराजाना वशीकरणार्थमिति भाव , एतेनास्य नीतिकुशलता प्रदर्शिता ।

(१०) क्लिष्टेति ।—क्लिष्टकार्पटिका ,—जीर्णच्छिन्नवसना अतीव दरिद्रा इत्यर्थ, ये कुलपुत्रलोका —सत्कुलजातजना , अभ्यर्थकाणोलाय, तेषु मोचितै,—निक्षिप्तै, दारिद्र्यक्लेशविघटनपटीयोभि इति भाव, प्रसाददानै,—अनुग्रह

बन्धनानि, (११) नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव च अष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भम्, अहमह-मिकया सेवकैः इव सुनिमित्तैः अपि समग्रैः अग्रतो भवद्भिः, (१२) प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनात् निर्जगाम।

(१३) नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये, समुत्तम्भिततुङ्गतोरणे, वेदीविनिहितपल्लवललामहेम-

---

वितरणे बन्धनानि—दारिद्र्यनिगडसन्दानानि, अविद्याभावबन्धनबहुलानि बन्धनवत् पीडाकराणि दारिद्र्यदुःखानि वा इति भावः विमुच्य—अपाकृत्येत्यर्थः कुलपुत्रकीकाना-मिति भावः।

(११) तत्कालस्मरणस्फुरणेन—तत्कालस्य—तात्कालिकशत्रुगणस्य, भ्रातृपरिभव-रूपस्य इति भावः स्मरणेन—मनसि उदयेन यत् स्फुरणं—वाहौ स्पन्दनम् उद्दीपन-मिति भावः तेन कथितः,—निवेदितः आत्मा—स्वरूपं यस्मै तथाभूतमिव, निवेदित-प्रतिहिंसाऽभिप्रायमिव इति भावः, अष्टादशेति।—अष्टादशानाम्—अष्टादशसंख्यकानां, द्वीपानां—जम्बूप्रभृतीनां जेतव्यानां—विजेतुमर्हाणां यः अधिकारः,—आयत्ती-करणं सैनापत्यमिति यावत् तस्मिन्, पुंसां दक्षिणभुजस्पन्दनस्य शुभसूचकत्वादिति भावः। अहमहमिकया—अहमग्रे अहमग्रे इत्येवं स्पर्द्धया, ("अहमहमिका तु या स्यात् परस्परं यो भवत्यहङ्कार" इत्यमरः)। सुनिमित्तैः—शुभसूचकैः लक्षणैः। अग्रतो भवद्भिः,—पुरतो गच्छद्भिः, तस्य गमनकाले बहूनि सुलक्षणानि प्रादुरासन् इति भावः।

(१२) प्रमुदितेति।—प्रमुदिताभिः—प्रहृष्टाभिः प्रजाभिः—प्रकृतिवर्गैः, जन्यमानः—क्रियमाणः जयशब्दकोलाहलः—जय जयेति कलरवः यस्य तथाभूतः, ब्रह्माण्डात्—हैमाण्डात् हिरण्यगर्भः इव—ब्रह्मा इव, कृतयुगकरणाय—सत्ययुग स्थापनार्थं, कृतस्य—आचरितस्य भ्रमजनितस्य भ्रातृद्रोहस्य इति भावः युगकरणाय—प्रतीकाराय इत्यर्थश्च दुर्जनान् समूलं विनाश्य कृतयुगवत् सुजनानां स्थापनाय इत्यर्थो वा। इह हिरण्यगर्भ-हर्षयोः सादृश्यावबोधादुपमा, ब्रह्माण्डेन सह भवनस्याभेदारोपाच्च रूपकमिति सङ्करः।

(१३) उपसरस्वति—सरस्वत्या नद्याः समीपे, [इत्यव्ययीभावः]। तृणमये—तृण-बहुले,तृणरचिते इत्यर्थः। समिति।—समुत्तम्भितः,—समुत्थापितः, [उत्पूर्वकत्वात् स्तम्भस्य

कलशे, (१४) बद्धवनमालादाम्नि, धवलध्वजमालिनि, भ्रमच्छुक्लवाससि, पठद्विजन्मनि मन्दिरे प्रस्थानम् अकरोत्। तदवस्थस्य च अस्य (१५) ग्रामाक्षपटलिकः सकलकरणिपरिकरः

---

लकारलोपः ] तुङ्गः,—उन्नतः, तोरणः,—बहिर्द्वारं यस्य तथाभूते। वेदीति।—वेद्या—परिष्कृतभूमौ, विनिहितः,—स्थापितः, पल्लव एव—नवकिसलय एव, आम्रादीनामिति भावः, ललाम—लाञ्छनं, चिह्नमित्यर्थः, मङ्गलबोधकमिति भावः, यद्वा,—ललाम—भूषणं यस्य तथाभूतः, पल्लवभूषितइत्यर्थः, ("ललाम लाञ्छने ध्वजे। श्रृङ्गे प्रधाने भूषायाम्" इति मेदिनी) हेमकलशः,—स्वर्णकुम्भः, मङ्गलघट इति भावः यस्मिन् तथोक्ते।

(१४) बद्धेति।—बद्ध—विरचितं, वनमालादाम—वनपुष्पमालासमूहः, यद्वा,—"आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या च वनमालेति कीर्तिता॥" इत्युक्तलक्षणक पुष्पपत्रप्रतियोजितं माल्यं यस्मिन् तथोक्ते। धवलध्वजानां—शुक्लपताकानां, माला—श्रेणिः अस्ति अस्मिन्निति तथाभूते। भ्रमदिति।—भ्रमन्ति—इतस्ततः चलन्ति, वायुवेगादिति भावः, शुक्लानि—शुभ्राणि, वासांसि—पताकारूपाणि वस्त्राणि, द्वारादौ आवरणभूतानि वेति भावः, यद्वा,—भ्रमन्तः,—इतस्ततः सञ्चरन्तः शुक्लवाससः—शुभ्रवस्त्रपरिधायिनः परिचारकजना यस्मिन् तथोक्ते। पठदिति।—पठन्तः,—अधीयानाः, मन्त्रान् वेदान् धर्मशास्त्राणि वा समुच्चारयन्त इति भावः, द्विजन्मानः—ब्राह्मणा यस्मिन् तथोक्ते। प्रस्थानम्—निर्गमनमित्यर्थः।

(१५) ग्रामाक्षपटलिकः,—अक्षाणां—भूतानां, पटले—समूहे नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्रामाक्षपटलिकः, ग्रामवासी वेतालसाधकः तान्त्रिकविधानवेत्ता वा इति भावः, यद्वा,—अक्षाणां—व्यवहाराणां, विवादानामित्यर्थः, अक्षाणां—द्यूताङ्गानां, द्यूतसाधनपाशकादीनामित्यर्थो वा, ("अक्षम् इन्द्रिये। ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे" इत्यमरः) पटले नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्रामव्यवहारदर्शक इत्यर्थः ग्रामीणानां विवादमीमांसायां राजनियुक्तः अधिकरणिकविशेष इति यावत् ग्राम्यद्यूतक्रीडाध्यक्षो वा, सकलकरणिपरिकरः,—सर्वप्रकारलेख्यरचनानिपुण इति यावत्, ["करणिः,—कायस्थः" इति कथितः, तथाच सर्वकायस्थपरिवृत इत्यर्थः.]।

"करोतु देवो (१६) दिवसग्रहणम् अद्यैव अवन्ध्यशासनः शासनानाम्" इति अभिधाय (१७) उपाहरत् अभिनवघटितां हाटकमयीं मुद्राम् उपनिन्ये, जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलात् अधोमुखी महीतले पपात मुद्रा। (१८) मन्दाकिनीपङ्कपटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि च (१९) विषीदति परिजने नरपति अकरोत् मनसि एतत्,—"अतत्त्वदर्शिन्यो हि भवन्ति अविदग्धानां

(१६) अवन्ध्यशासन,—अप्रतिहताज्ञ शासनानां—राज्यशासनानामिति यावत्, दिवसग्रहणं—मासिकसङ्ग्रामदिवसग्रहणम् इत्यर्थं, अद्य प्रभृति भवान् प्रजाशासनाधिकारे नियुक्त इत्येव निश्चयार्थं भवत्तामाङ्कितमुद्राग्रहणमिति भाव।

(१७) उपाहरत्—उपचिकाम्, अभिनवघटितां—नवरचितां हाटकमयीं—काञ्चनमयीं मुद्रां—वर्णावलीविरचिताक्षरपङ्क्तिविशेषम् उपनिन्ये—अर्पयामास। करकमलात्—पाणिपद्मात्, हस्तेनेति भाव, प्रथमत —आदौ एव, समुपस्थापिते—समर्पिते केनचिदिति भाव मृत्पिण्डे—मृत्तिकापिण्डे, परिभ्रश्य—निपत्य अधोमुखी—अधः राजमाङ्कलाञ्छनाक्षरपृष्ठभागा इत्यर्थ।

(१८) मन्दति।—मन्दाकिनीम्—सुरसरितम्, पङ्कपटल—कर्दमचय यस्मिन् तस्मिन् अत एव मृदुमृदि—मृदी—कोमला मृत्—मृत्तिका यस्मिन् तथाभूते सरस्वतीतीरे—तदाख्यनदीतटे, वर्णाना—मुद्राक्षराणां राजय —श्रेणय स्फुट—स्पष्ट व्यराजन्त—शोभिरे, मुद्राक्षरपङ्क्तय सरस्वतीतीरस्थकर्दमलग्नाकारा इव अभवन्निति निष्कर्ष। एतेन समुद्रमुद्रितामखिलवसुधा स्वयमादरात् अशासमुद्राग्रहणं करिष्यतीति द्योतितम्, तच्च विज्ञदैवज्ञादयविचार्यकम् इति निगदामन्त।

(१९) विषीदति—विषण्णीभवति, किम् भविष्यति अमङ्गलं इति भाव। अतत्त्वदर्शिन्य,—अयथार्थदर्शिन्य, अदीर्घदर्शिन्य इति यावत् कुसंस्काराच्छन्ना इति भाव। [ "अतत्त्वदर्शिन्य" इत्यत्र "तत्त्वदर्शिन्य" इति पाठे,—स्वल्पदर्शिन्य, स्थूलदर्शिन्य इति यावत्, उपस्थितदर्शिन्य अन्तःप्रवेशसामर्थ्याभावात् इति भाव ] अविदग्धानाम्—अज्ञानाम्।

धियः। तथा हि (२०) एकशासनमुद्राङ्का भूर्भवती भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्याः" इति (२१) अभिनन्द्य मनसा महानिमित्तं तत् सीरसहस्रसम्मितसीम्नां ग्रामाणां शतमदात् द्विजेभ्यः, निनाय च तत्र तं दिवसम्। प्रतिपन्नायां शर्वर्यां सम्मानितसर्वराजलोकः सुष्वाप।

(२२) अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वे निःशब्दे दिक्कुञ्जरबृंहणगम्भीरध्वनिः अताड्यत प्रयाणपटहः।

---

(२०) एकेति।—एका—अद्वितीया एव शासनमुद्रा—राजकार्याङ्कित आज्ञासूचक [illegible] इति यावत् अङ्का—चिह्नं यस्याः सा तथाभूता, एकच्छत्रा इति भावः। भूः—पृथिवी। निमित्तेन—शकुनेन, [illegible] [illegible] [illegible] भावः। ("निमित्तं हेतुशकुनयोः" इत्यमरः) निवेदितमपि—ज्ञापितमपि अन्यथा—[illegible]। ग्राम्याः—अविदग्धा इत्यर्थः।

(२१) तत्—[illegible], [illegible] [illegible], महानिमित्तम्—[illegible] [illegible] [illegible] इति यावत्, अभिनन्द्य—प्रशस्य, [illegible] इति भावः। सीरेति।—सीराणां—हलानां, [illegible]। ["कृषि[illegible]" (अ० २ पा० २४ सू०) इति [illegible]] सहस्रेण—[illegible], [illegible], सम्मिता—परिच्छिन्ना, परिमिता इत्यर्थः सीमानः—मर्यादा येषां तथाभूतानां, [illegible] इति यावत्। निनाय—अतिवाहयामास। शर्वर्याम्—रात्रौ, प्रतिपन्नायाम्—उपस्थितायाम्, सम्मानितेति।—सम्मानिताः—सत्कृताः, सर्वे राजलोकाः—नृपजना येन तथोक्तः, [illegible] सर्वैः [illegible] [illegible], सुष्वाप—निद्रां [illegible], युद्धयात्रायां [illegible] [illegible] [illegible] इति भावः।

(२२) सुप्तेति।—सुप्ताः—निद्रिताः, समस्ताः—सकलाः, सत्त्वाः—प्राणिनः, निःशब्दे—नीरवे, तृतीये यामे—तृतीयप्रहरे, गलति—अतिक्रामति, दिक्कुञ्जरेति।—दिक्कुञ्जराणां—दिग्गजानां, बृंहणवत्—बृंहितमिव [illegible], गम्भीरः, —[illegible], ["गभीरगम्भीरौ" (उ० ४ पा० ३५ सू०) [illegible] [illegible] [illegible]]

(२३) अग्रतः स्थित्वा च मुहूर्त्तमिव पुनः प्रयाणक्रोशसङ्ख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे पटीयांसः ।

(२४) ततो रटत्पटहे, नन्दन्नान्दीके, गुञ्जत्कुञ्जे, कूजत्काहले, ध्मायमानशङ्खे, (२५) क्रमोपचीयमानकटककल-

---

ध्वनिः,—निनादः यस्य तथाभूतः, [ "दिक्कुञ्जरहृदयगम्भीरध्वनिः" इत्यत्र दिक्कुञ्जरजृम्भमाणगम्भीरध्वनि " इति पाठे,—दिक्कुञ्जराणां जृम्भमाणः,—प्रवर्द्धमान इत्यर्थः, गाम्भीरध्वनिरिव ध्वनिः यस्य तथाभूतः ] प्रयाणपटहः,—युद्धयात्राकालिकवाद्यभेद इत्यर्थः, अताड्यत—अवाद्यत इत्यर्थः, पाटच्चरैरिति शेषः ।

(२३) अग्रतः,—अग्रे, अनन्तरमिति भावः, मुहूर्त्तमिव—मुहूर्त्तकालमित्यर्थं इव शब्दोऽत्र अवधारणे, स्थित्वा—विरम्येत्यर्थः, प्रयाणेति ।—प्रयाणस्य—यात्रायाः क्रोशाः,—"चतुर्विंशत्यङ्गुलिभिर्हस्तः तन्त्रविदो विदुः । सहस्रैरष्टभिः ख्यातः हस्तैः क्रोशमानकम् ॥" इत्युक्तलक्षणाः अष्टसहस्रहस्तमिता अध्वान इत्यर्थः, केचित्तु सहस्रहस्तमाना इत्याहुः, तेषां सङ्ख्यापकाः,—सङ्ख्याज्ञापकाः, अष्टौ—अष्टसङ्ख्यकाः, अद्य अष्टौ क्रोशा गन्तव्या इत्येवं सङ्ख्यासंस्थापका इत्यर्थः, पटीयांसः,—अतिपटवः, [ "द्विवचनविभज्योपपदे—" ( ५।३।५७ पा० ) इत्यादिना ईयसुन् ] प्रहाराः,—ताडनानि ।

(२४) "ततः" इत्यस्य "प्रयाणसमये ...राजभिः आपूपूरे राजद्वारम्" इत्यनेनान्वयः । प्रयाणसमये इति विशिनष्टि, रटत्पटहे इत्यादि ।—रटन्तः,—ध्वनन्तः, पटहाः —आनकाख्यवाद्यविशेषाः यस्मिन् तथोक्ते । नन्दन्नान्दीके—नन्दन्त्यः —राजलोकान् उल्लासयन्त्य इति यावत्, नान्द्यः,—भेरीसदृशमाङ्गल्यवाद्यभेदाः, आशीर्वचनसंयुक्ताः स्तुतयो वा, "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते ॥" इति लक्षणात्, ताः यस्मिन् तथोक्ते । गुञ्जत्कुञ्जे—गुञ्जन्तः,—ध्वनन्तः, कुञ्जाः,—शङ्खभेदाः यस्मिन् तथोक्ते, ते तु "शम्बा" इति नाम्ना प्रसिद्धाः, पृष्ठे च तेषां जतु परिकल्पितं भवतीति विज्ञानम् । कूजत्काहले—कूजन्त्यः,—स्वनन्त्यः, काहलाः,—वाद्यभेदाः यस्मिन् तादृशे, ( "काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि" इति मेदिनी ) । ध्मायमानशङ्खे—ध्मायमानाः,—धमन्तः, शङ्खाः,—कम्बवः, "मुरुङ्गशङ्खा" इति प्रसिद्धा यस्मिन् तथोक्ते । शङ्खनादानां सुभटहृदयोल्लासकत्वात् माङ्गलिकत्वाच्च युद्धयात्रादौ विशेषव्यवहारः सदातन इति ज्ञेयम् ।

(२५) क्रमेति ।—क्रमेण—शनैः, शनैरिति यावत्, उपचीयमानः,—वृद्धि

काले, परिजनोत्थापनव्याप्टतव्यवहारिणि, (२६) द्रुतद्रुघण-घातघट्यमानकोणिकाकोलकोलाहलकलितककुभि, (२७) बलाधिकृतबध्यमानपाटोपतिपिटके, जनज्वलितोल्कासहस्रा-लोकलुप्यमानवियामातमसि, (२८) यामचेटीचरणचलनोत्थाप्य-मानकामिमिथुने, (२९) कटुककटुकनिर्दयनश्यन्निद्रोन्मिष-

---

गच्छन, कटकानां—सैनिकानामिति यावत, कलकले —कोलाहले यस्मिन तथोक्ते। परिजनेति।—परिजनानां—पार्श्वचराणां, निद्रितानाम इति भाव, उत्थापने—प्रबोधने, व्याप्टता,—प्रहता, व्यवहारिणि —कर्मचारिणि यत्र तथाभूते।

(२६) द्रुतेति।—द्रुत—सत्वर, द्रुघणस्य—मुद्गरस्य इति प्रसिद्धस्य शस्त्रभेदस्य, घातेन—ताडनेन, घट्यमाना—चाल्यमाना या कोणिका—वादनयष्टिविशेष, तस्या, कोलस्य—मध्यभागस्य, कोलाहलेन—निनादेन, कलिता —पूरिता, ककुभ,—दिशो यत्र तथाक्ते, यद्वा —द्रुत द्रुघणस्य—मुद्गरस्य ("द्रुघणो मुद्गरेऽपि स्यात" इति मेदिनी) घातेन—ताडनेन घट्यमाना —चाल्यमाना, कोणकाकोला,—काण एव कोणिका—वाद्यभेद वल्लकीकदण्डो वा, ("कोणो वाद्यप्रभेदे स्यात् वीणादीनाञ्च वादने। एकदेशे गृहादीनाम्भ्रो च लगुडेऽपि च।" इति मेदिनी) तत्र ये कोला,—प्रदेश, अन्यपदनिबद्धा बन्धनदृढतार्थं तन्नुनिबद्धा वा, तेषां कोलाहलै कलिता ककुभ यत्र तथोक्ते, क्षिप्रमुद्गराघातोत्थाप्यमानानन्तकीलककठोररव भुवनव्यापी सञ्जात एतेन मल्लरहाणाम् आनन्द द्योतितम् इत्यवगम्यते।

(२७) बलेति।—बलाधिकृतै —सैन्याधिकारिभि बध्यमान—ताड्यमान, पाटोपतिपिटकं—प्रतिनियतरक्षकवर्ग,प्रमादीति भाव यत्र तथोक्त। जनेति।—जनै,—परिजनैरिति यावत, ज्वलितानां—प्रज्वालितानाम उल्कासहस्राणाम्—उल्मुकसहस्राणां, दीपसमूहानामिति यावत, आलोकेन—प्रभया, लुप्यमान—विनाश्यमानं वियामातम, तिमिरं यस्मिन् तथोक्ते।

(२८) यामेति।—यामचेटीभि,—प्रहरिकदासीभि प्रहारचेटीभिरित्यर्थं चरण चलनेन—पदचेष्टनिनादेन इति यावत, पादस्पर्शनेनेत्यर्थो वा, उत्थाप्यमान—प्रबोध्यमानं, कामिमिथुन—कामयुगल यस्मिन् तथोक्ते।

(२९) कटुकेति।—कटुकानां—तूणिपकनिक्षेपकाणां, कटुकेन—दरुण, निर्दयेन—भाग्यता, नश्यन्ती—अपगच्छन्ती या निद्रा—स्वाप, तथा उन्मिषत,—

मदस्यन्दि दन्ति सन्दान शृङ्खलाखनखन निनाद निर्भर-भरितदश-दिशि, (२६) घासपूलकप्रहारप्रनष्टपांशुनकरिपृष्ठप्रसार्य्य-माणप्रस्फोटितचर्म्मणि, (२७) शठहचिन्तकचेटकसंवेष्यमान-पटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके, (२८) कील-कलापापूर्य्यमाणचिपिटचर्म्मपुटे, (२९) सम्भाण्डायमान-भाण्डागारिणि, भाण्डागारवहनवाह्यमानमञ्जुलीवाणिके,

---

मान, क्षुभ्यमाणा,—परिक्षिप्यमाणा, मदस्यन्दिनां—दानजलस्राविणां दन्तिनां—गजानां, ये सन्दानशृङ्खला,—बन्धनशृङ्खला, तेषां यः—सम्यक्, खनखननिनादेन—खनखन इति शब्दविशेषेण, निर्भरम्—अत्यन्तं यथा तथा, भरिता—पूरिता, दश दिशः—दशसङ्ख्याकाः ककुभः यस्मिन् तथोक्ते।

(२६) घासेति।—घासपूलकानां—यवसस्तवकानां, प्रहारेण—ताडनेन, साक्षेपेणेति यावत्, प्रनष्ट—परिच्छिन्न, पांशुन—रजोबहुलं, खेनैव विकीर्णत्वादिति भावः, यत् करिपृष्ठं—हस्तिपृष्ठं, तत्र प्रसार्य्यमाणम्—आस्तरणार्थं विस्तार्य्यमाणं, प्रस्फोटितम्—प्रमृष्टं, ताडितं वा, धूल्याद्यपनयनार्थमिति भावः, ("प्रस्फोटनन्तु शूर्पे स्यात् ताडने च विकाशने" इति मेदिनी) चर्म—अजिनं यस्मिन् तथोक्ते।

(२७) शठहेति।—शठहाः—असमानाः, सैनिकावासशिबिरादीनामित्यर्थः, चिन्तकाः,—कार्य्यदर्शिन इत्यर्थः, ये चेटकाः—भृत्याः, तैः संवेष्यमानाः,—परिक्षिप्यमाणाः, संवृत्यमाना इत्यर्थो वा, पटकुट्यः,—पटे—वस्त्रे, कुट्यः,—सूक्ष्मगृहभेदाः, स्कन्धावारसम्बन्धिभेदा इत्यर्थः, काण्डपटमण्डपानि—काण्डपटाः—काण्ड इव पटाः, "कानात्" इति प्रसिद्धाः पटभेदाः, तस्य सदीर्घत्वेन इक्षुकाण्डवत्ता काण्डवत्ता वा जायते इयत काण्डपट इति संज्ञा, तद्वेष्टितमण्डपानि—गृहाः परिवस्त्राः,—जवनिकाः, वितानकाः,—उल्लोचाः, चन्द्रातपभेदा इति यावत् यत्र तथोक्ते, ("अस्त्री वितानमुल्लोच" इत्यमरः)।

(२८) कीलेति।—कीलानां—शङ्कूनां कलापैः,—समूहैः, आपूर्य्यमाणाः,—भ्रियमाणाः, पथि पुनः स्कन्धावारस्थापनार्थमिति भावः, चिपिटाः,—ह्रस्वाः, क्षुद्रा इति यावत्, चर्मपुटाः,—चर्मनिर्मितभाजनविशेषाः यस्मिन् तथोक्ते।

(२९) सम्भाण्डेति।—सम्भाण्डायमानाः—भाण्डानि सञ्चिन्वन्तः, भट्टया धारान् एकत्रीकुर्वन्त इत्यर्थः, ("भाण्डात् समाचयने" (वा०) इति णिङ्, ङित्त्वा-

(४०) निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलशपीडा-पीडसङ्कटायमानसामन्तौकसि, (४१) दूरगतदन्तदासेरकक्षिप्र-प्रक्षिप्यमाणोपकरणसम्भारभ्रियमाणदुष्टदन्तिनि, (४२) तिर्य्यगा-नमज्जाघनिककरकच्छाकष्ट-लम्बमान-परतन्त्र-तुन्दिल-तुन्दी-

---

दात्मनेपदं, तत शानच्] भाण्डागारिक,—भाण्डपूर्णपेटकवाहका इत्यर्थः यस्मिन् तथोक्ते। भाण्डेति।—भाण्डागारस्य—"भाण्डार" इति प्रसिद्धस्य सद्व्यपात्रसमूहस्य स्थानान्तरस्य इत्यर्थः, वहनाय—प्रापणाय, स्थानान्तरनयनाय इत्यर्थः, दाप्यमाना,—नीयमाना, बहव,—अनेके दवींवाहिका,—बलीवर्दा यस्मिन् तथोक्ते। ["बलीं-वाहिकै" इत्यत्र "नालीवाहिकै" इति पाठे,—नालीवाहिका,—वारिणा सावयवया-प्रयुक्ता हस्तिपक्षविशेषा, "मेट्" इति प्रसिद्धा। करिवरसैन्यमहामात्रादिपरि-चय्यानिरताना राजकीयभाण्डागारवहननियोग. न तथा सदयपरिचायक इत्येवं पाठ न सम्यहित इति ज्ञेयम्।

(४०) निषादीति।—निषादिभि,—आरोहिभि, चतुरङ्गलियके वा, तदभावे प्रासादाद्यदापातात् इति भाव, निश्चलेषु—स्थिरेषु, तिष्ठत्सु इत्यर्थः, अनेकेषु—बहुषु, अनेकपेषु—हस्तिषु, ["सुपि स्थ" (३।२।४ पा०) इति सूत्रे सुपीति योगो विभज्यते, तेन सुप्युपपदे पादन्तात क इति कप्रत्यय। " हस्ती द्विरदोऽनेकपो द्विप" इत्यमर] तत्पृष्ठेषु इति भाव, आरोप्यमाणाना—निधीयमानाना, कोशकलशाना—धनपूर्णकुम्भाना पीडापीडेन—सङ्कीर्णतया स्थापनेन इति भाव, सङ्कटाय-मानानि—सङ्कीर्णानि इति यावत्, सामन्ताना—राज्ञाम्, अध्यासितानामिति भाव, ओकासि—स्थानानि यत्र तथोक्ते।

(४१) दूरेति।—दूरगते,—विप्रकृष्टस्थानस्थे, पतीव इत्यर्थो वा, दन्ते,—भारवहनक्षमे इति यावत, यद्वा—दूरगत—दूरगमने. दक्षा,—प्रवीणा, दासेरक,—उष्ट्रै, क्षिप्र—शङ्कैति यावत् प्रक्षिप्यमाणा,—भूमौ पात्यमाना, ये उपकरणसम्भारा,—परिच्छदसमूहा, तै भ्रियमाणा,—पूरितपृष्ठा इति यावत्, दुष्टा,—दुर्दान्ता लोकाना वहने दोषकारिण इत्यर्थ, उत्कटा इति यावत् दन्तिन,—गजा यस्मिन् तथोक्ते।

(४२) तिर्य्यगिति।—तिर्य्यक्—कुटिल यथा तथा, आनमन—आनतीभवन्, येन कोऽपि न पश्यतीति भाव. य जाघनिक,—जघनस्पर्शी, कामुक इति भाव, ["जाघनिक" इत्यत्र "जाघनि" इति पाठेऽपि स एवार्थ] तन करेण—हस्तेन,

कुप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, (४६) गमनवेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके, (४७) प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवरवाजिनि, (४८) चारुचारभटसैन्यन्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके, (४९) स्थानपालपर्य्याण-न्यस्यमान लवणकलापीकिङ्किणी-नालीसनाथ सङ्कलिततल-

---

कुप्रयुक्तेन—असङ्गतसञ्चालनेन आकुलाना—व्यस्ताना, कुलीनाना—सज्जनाना, कुलपुत्रकलत्राणा—कुलीनकुलाङ्गनाना, वाहनानि—यानानि यस्मिन तथोक्ते। इत्यादीयाद्यमानत्वाविषयनिमित्ताभावात "वाहनमाहितात" (८।४।८ पा०) इति न णत्वम ]।

(४६) गमनेति।—गमनवेलाया—यात्राकाले, विप्रलब्धा,—प्रतारिता, अविदितगमनवेला इत्यर्थ, अत एव वारणाना—हस्तिनाम, आधोरणै,—निषादिभि, पालकैरित्यर्थ, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिन" इत्यमर) अन्विष्यमाणा —अनुसन्धीयमाना, नवसेवका,—नूतनभृत्या यस्मिन तथोक्ते कार्य्यानभिज्ञतया नवनियुक्ता प्राय प्रतारिता भवन्ति इत्याशय।

(४७) प्रसादेति।—प्रसादेन—राजानुग्रहेण, वित्ता,—ख्याता, ("प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता" इत्यमर) ये पत्तय,—पदातिसैन्यानि, तै नीयमान, —प्राप्यमाण, आनीयमान इत्यर्थ नरपते,—राज्ञ वल्लभ,—प्रिय, वर,—श्रेष्ठ, वाजी—अश्व यस्मिन् तथोक्ते, [ "वरवाजिनि" इत्यत्र "वारवाजिनि" इति पाठे,—नरपते वल्लभा, वारवाजिन —वारे—अवसरे, अनुग्रहयोग्यकाले इत्यथ, प्राप्ता इति भाव ("निवहावसरौ वार" इत्यमर) वाजिन यस्मिन तथोक्ते, राजप्रसादलब्धघोटकाकटमेनिति इत्यथ ]।

(४८) चार्व्विति।—चारु,—मनोज्ञ, चार,—गतिर्येषा तथाभूतानि, भटसैन्यानि—योधबलानि ("भटा योधाश्च योद्धार" इत्यमर) तै न्यस्यमाना,—निधीयमाना, नासीरमण्डलाडम्बरस्य—सेनाग्रगामिसैन्यनिवहस्य, स्थूला,—महान्त इत्यर्थ स्थासका,—अलङ्करणानि यस्मिन तथोक्ते, यद्वा,—चारुचारभटसैन्यै, न्यस्यमाना,—आत्मन एव क्रियमाणा, नासीरेण—कर्पूरेण, मण्डलाडम्बराय—सैन्यसमूहशोभावर्द्धनाय, स्थूला,—महान्त, दीर्घा इति यावत्, स्थासका,—चर्चा, तिलकविशेषा इत्यर्थ यस्मिन तथोक्ते, ("चर्चा तु चार्चिक्य स्थासक" इत्यमर)।

(४९) स्थानेति।—स्थानपालानाम्—अश्वपालाना, पर्य्याणेषु—पल्ययनेषु,

मानानेकमन्दुराविमर्दे, (५४) सज्जीकृतकरेणुकारोहाह्वानमत्वर-सुन्दरीदीयमानमुखालेपने, (५५) चलितमातङ्गतुरङ्गप्रधावित-प्राकृतप्रातिवेश्यकलोकलुण्ठ्यमाननिर्घासशस्यसञ्चये, संचरच्चेल-चक्राक्रान्तचक्रीवति, (५६) चक्रचीत्कारिगन्त्रीगणगृह्यमाण-

---

ते तथमाने,—क्रियमाणे, अनेकासां—बह्वीनां मन्दुराणां—वाजिशालानां, ["मन्दिराणि —" (उ० १ पा० ३२ सू०) इत्यादिना उरच्। "वाजिशाला तु मन्दुरा" इत्यमरः] विमर्दे,—विध्वंसे यत्र तथोक्ते।

(५४) सज्जीकृतेति।—सज्जीकृतासु—हतकल्पनासु, आरोहणार्थम् आस्त-रणादिना अलङ्कृतासु इत्यर्थः, ("कल्पना सज्जना समे" इति गजप्रकरणे अमरः) करेणुकासु—हस्तिनीषु, ("करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे" इति मेदिनी) आरोहाय—आरोहणार्थमित्यर्थः आह्वाने—आकारणाय, कस्यचित् सामन्तस्येति भावः, यद्वा,—सज्जीकृतकरेणुकारोहाह्वानेन—सज्जीकृतायाः करेणुकायाः आरोहः,—निषादी, तेन आह्वानम्—उच्चैराकारणं तेन सत्वरा—त्वरावती, अलङ्कृतहस्तिनी-निषादितास्वरेण त्वरान्विता इत्यर्थः, या सुन्दरी—कामिनी, हस्तिपकस्य इति भावः, तया दीयमाने—विधीयमाने, मुखालेपने—सिन्दूरादिना मुखानुलेपे, करेणुकायै इति भावः यस्मिन् तथोक्ते।

(५५) चलितेति।—चलितेषु—प्रस्थितेषु मातङ्गेषु—हस्तिषु तुरङ्गेषु—अश्वेषु च, प्रधाविते—सत्वरमापतिते प्राकृते,—साधारणे, प्रातिवेश्यकलोके,—प्रतिवेश्मि-जनगणे, समीपवास्तिमनुष्यैरित्यर्थः, लुण्ठ्यमानाः—क्रियमाणाः, निर्घासशस्यसञ्चयाः,—निः,—निःसृष्टाः, त्यक्ता इत्यर्थः भुक्तावशिष्टा इति यावत्, घासाः,—यवसानि, शस्यानि च—यवगोधूमादीनि च, तेषां सञ्चयाः—समूहा यत्र तादृशे। संचरदिति। —संचरता,—इतस्ततो भ्रमता, तथा चेलचक्रेण—वस्त्रसमूहेन ("चेलं वस्त्रेऽधमे त्रिषु" इत्यमरः) "चेलचक्रेण वालकसङ्घेन" इति कश्चित्, आक्रान्ताः,—आपूरितपृष्ठाः, समाकीर्णपृष्ठा इत्यर्थः, चक्रीवन्तः,—गर्दभा यत्र तथोक्ते ["आसन्दीवत्—" (८।२।१२ पा०) इत्यादिना मतुपि निपातनात् सिद्धम्। "चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः" इत्यमरः। "चक्रीवत् —उष्ट्रः" इति कैश्चित्]।

(५६) चक्रेति।—चक्रे —रथाङ्गे, चीत्कारिणः,—उच्चैः कूजन्तः, ये गन्त्री-गणाः,—वृषभवाह्यशकटवृन्दानि, ("गन्त्री कम्बलिवाह्यकम्" इत्यमरः। अत्र कम्बलि-वाह्यकं—वृषभवहनीयशकटमित्यर्थः) तैः गृह्यमाणानि—आक्रम्यमाणानि, अत

प्रहतवर्त्मनि, (५७) अकाण्डदीयमानभाण्डभरितानडुहि, (५८) निकटघासलाभलुभ्यल्लम्बमान-प्रथमप्रसार्यमाण-सारसौरभेये, (५९) प्रमुखप्रवर्त्यमानमहासामन्तमहानसे, पुरःप्रधावद्ध्वजवाहिनि, (६०) प्रियशतोपलभ्यमानसङ्कटकुटीरकान्तरालनिःसरणे, (६१) करिचरणदलितमठिकोत्थितलोकलोष्ट-

---

एव प्रहतानि—क्षुण्णानि, शकटचक्रेण सञ्जातखातानीत्यर्थः, वर्त्मानि—मार्गा यत्र तथोक्ते।

(५७) अकाण्डेति।—अकाण्डे—सहसा, दीयमानेन—आरोप्यमाणेन, भाण्डेन—द्रव्यपूर्णपात्रेण, भरिताः,—पूरितपृष्ठा इति यावत्, अनड्वान्—वृषा यस्मिन् तथोक्ते, ("अनड्वान् सौरभेयो गौः" इत्यमरः)।

(५८) निकटेति।—निकटे—समीपे, घासस्य—यवसस्य, लाभेन—प्राप्त्या, लुभ्यन्तः,—लोलुपतां गच्छन्तः लम्बमानाः,—प्रलम्बदेहाः, घासग्रहणेच्छया इति भावः, प्रथमम्—अग्रे, प्रसार्यमाणाः,—प्रसार्यमाणाः, सारसौरभेयाः,—बलवद्बलीवर्दाः यस्मिन् तथोक्ते।

(५९) प्रमुखेति।—प्रमुखे—अग्रे, प्रथममेवेत्यर्थः, प्रवर्त्यमानम्—प्रस्थाप्यमानम्, आगामिस्कन्धावारसन्निवेशस्थानमुद्दिश्येति भावः, महासामन्तानाम्—प्रधानसामन्तनृपतीनाम्, अधीननृपतिषु प्रधानानामित्यर्थः, महानसम्—रसवती, रन्धनशाला इत्यर्थः यस्मिन् तथोक्ते, ("रसवत्यां तु पाकस्थानमहानसे" इत्यमरः)। पुर इति।—पुरः,—अग्रतः, प्रधावन्तः,—प्रचलन्तः ध्वजवाहिनः,—पताकाधारिणः सैन्यविशेषा यत्र तथोक्ते।

(६०) प्रियशतेति।—प्रियशते,—चाटुवाक्यसमूहे, उपलभ्यमाने—श्रूयमाणे, सङ्कटात्—सङ्कीर्णात्, कुटीरकाणाम्—क्षुद्रगृहाणाम्, अन्तरालात्—मध्यात्, निःसरणं—मुखं, निर्गममार्ग इत्यर्थः यस्मिन् तथोक्ते, यद्वा,—प्रियशते,—प्रीतिकरवचने, उपलभ्यमाने—प्राप्यमाणे सङ्कटकुटीरकान्तरालात्—सङ्कीर्णक्षुद्रनिकेतनमध्यात् इत्यर्थः, निःसरणम्—मोक्षः, मुक्तिरित्यर्थः यस्मिन् तथोक्ते ("मुखं निःसरणम्" "अथ निःसरणं मृत्युपायमोक्षेषु निर्गमे" इत्यमरमेदिन्यौ। "प्रियशतोपलभ्यमानसङ्कट—" इत्यत्र "प्रियशतोपलभ्यमानासङ्कट—" इति पाठे,—आसङ्कटात्—ईषत् सङ्कीर्णात् इत्यर्थः)।

(६१) करीति।—करिणा—हस्तिना, चरणैः,—पादैः, दलितायाः,—

(६५) हयारोहाकृष्यमाणलम्बितश्वनि, (६६) सरभसचरणनिपतन-नियमनगमन-सुखायमान खक्खट स्तूयमान तुङ्गतुङ्गगुणे, (६७) स्रस्तवेसरविसंवादिसीदद्दाक्षिणात्यसादिनि, (६८) रजोध्वस्तजगति प्रयाणसमये, (६९) प्रतिदिशमागच्छद्भिः

---

(६५) हयेति।—हयारोहैः,—अश्वारोहिभिः, आकृष्यमाणाः,—आकार्यमाणाः, लम्बिताः,—पश्चात् स्थिताः, श्वानः,—कुक्कुराः यस्मिन् तथोक्ते, मृगभावेन विपक्ष-शशनेऽशाक्रमणपूर्वकाय स्वयामाहाय्याय च स्वामिनोयाचामावशकत्वादिति भावः।

(६६) सरभसेति।—सरभसेन—सवेगेन, चरणनिपतनेन—पादक्षेपेण, नियमनगमनेन च—धीरचलनेन इति भावः, सुखायमानाः,—सुखमनुभवन्तः, ये खक्खटाः,—हयाः, पश्चिमोत्तरकथाप्रसिद्धाः वीराश्वाः स्वयमागमनेतारः, अन्यथा कर्मणी सुखवाहिनीषु वर्तीयसामभिनिवेश निष्प्रयोजनी भवेत इति मूढाशय [ "प्रवादिभ्यो ष्ठन" (उ० ४ पा० ८१ सू०) इति शाकार्यवाक्यभनेरटम्] ते स्तूयमानाः,—प्रशस्यमानाः, तुङ्गानाम्—उन्नतानां, तुङ्गाणाम्—अश्वानां, तदाख्यदेशजातानां वा, ["तुङ्ग" इत्यत्र "तङ्गण" इति पाठान्तरम्] गुणः,—गतिसौष्ठवाद्युत्कर्षविशेषः यस्मिन् तथोक्ते।

(६७) स्रस्तेति।—स्रस्तान—श्लथान, पश्चात् पतितानिति भावः वेसरान—अश्वतरान, विसंवदन्ति—परित्यजन्ति, अनुशोचन्तीति भाव तथोक्ता विसंवादिनः,—अनुशोचन्त इत्यर्थः, द्रुतगमनाक्षमत्वेन अश्वीयसङ्घभ्रष्टत्वात, दाक्षिणात्ये वेसरा न वर्तन्ते द्रुतमश्वतरारोहकतया द्रुतगमनाक्षमत्वेन पश्चात पतनात् पथिश्रान्तिभयाद्वा इति भाव, अत एव सीदन्तः,—अवसादं गच्छन्तः, दुःखिता इति भावः, दाक्षिणात्या,—दक्षिणापथजाता, सादिनः,—अश्वारोहाः यस्मिन् तथोक्ते, ("अश्वारोहास्तु सादिनः" इत्यमरः)।

(६८) रज इति।—रजोभिः,—धूलिभिः ध्वस्तानि—विनष्टानि, अदृश्यतां गतानीत्यर्थः, आपूरितानीति यावत जगन्ति—भुवनानि यस्मिन तथोक्ते। ["रजोध्वस्तजगति" इत्यत्र "रजोजग्धजगति" इति पाठे,—रजोभिः,—धूलिभिः, जग्धानि—ग्रस्तानीत्यर्थं आच्छन्नानीति यावत, जगन्ति—भुवनानि यत्र तथोक्ते]। इह सैनिक-धूलिभिर्जगतामाच्छादनमित्यसम्बन्धे सम्बन्धत्वाध्यवसायसिद्धे तद्रूपातिशयोक्तिः सान्द्रिकसम्भावीकरणम्।

(६९) प्रतिदिशमागच्छद्भिः,—समन्तात् प्रहते, [ "अव्ययं—" (२।१।६ पा०)

गजवधूसमारूढैः, आधोरणोर्द्ध्वध्रियमाणहेमपत्रभङ्गसारशार्ङ्गैः, अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकविधूयमानचामरपल्लवैः, (७०) पश्चिमासनिकाऽर्पितभस्त्राभरणभिन्दिपालपूलिकैः, (७१) पत्रलताकुटिलकलधौतनलकपल्लवितपर्य्याणैः, (७२) पर्य्याणपक्षकपरिक्षेपपट्टिकाबन्धनिश्चल-

---

इत्यादिना प्रतियोगी वीप्सायामव्ययीभाव ] गजवधूसमारूढैः,—करिणीपृष्ठस्थैः । आधोरणेति ।—आधोरणैः,—हस्तिपालैः, ऊर्द्ध्व—उपरिभागे, आरोहिणां पतनप्रतिरोधार्थं पृष्ठोपरि स्थापितस्य धातुनिर्म्मितस्य वेष्टनीविशेषस्य "हावोदा" इति प्रसिद्धस्य इति भाव, ध्रियमाणानि—स्थाप्यमानानि हेमपत्रभङ्गेन—काञ्चनपत्ररचनया, साराणि—चित्राणि, शार्ङ्गाणि—धनूंषि येषां तैः, [ "शार्ङ्गं कार्म्मुकमात्रेऽपि विष्णोरपि शरासने" इति मेदिनी । "आधोरणोर्द्ध्व—"इत्यत्र "आधोरणैरूर्द्ध्व—" इति क्वचित्पाठे, —प्रतिदिशमागच्छद्भि गजवधूसमारूढैराधोरणैरित्येकवाक्यतयाऽन्वय, एतत्पक्षे सापेक्षत्वेऽपि गमकत्वात् समास ]। अन्तरेति ।—अन्तरासनेषु—मध्यवर्त्तिषु पीठेषु, समीपेषु इति भाव, आसीनैः,—उपविष्टैः, अन्तरङ्गैः,—स्वजनैः, गृहीता,—धृता, असय,—करवाला येषां तैः । ताम्बूलिकेति ।—ताम्बूलिकैः—ताम्बूलदायिभि परिजनैः [ "तदस्य पण्यम्" (४।४।५१ पा०) इति ठक् ] विधूयमाना,—सञ्चाल्यमाना चामरपल्लवा,—किसलयकोमलबालव्यजनानि येषां तैः ।

(७०) पश्चिमेति ।—पश्चिमासनिकाया—पश्चाद्वर्त्तिनि आसने, अर्पितानि—स्थापितानि, भस्त्राभरणानि—तूणभेदा इति यावत्, भिन्दिपाला,—हस्तक्षेप्यनालिकाऽस्त्रविशेषा, ("तोमरा" इति केचित्, तत् कीलकाकारास्त्रतायत्त्वादयुक्तम्) तेषां पूलिकानि—समूहा येषां तैः ।

(७१) पत्रेति ।—पत्रलतया—पत्रावलिरचनया, कुटिलानि—भङ्गिमन्ति, कलधौतनलकैः—काञ्चननिर्म्मितनलाकारैः, पल्लवितानि—रञ्जितानि इति भाव, पर्य्याणानि—पल्ययनानि आसनविशेषा इति भाव येषां तैः ।

(७२) पर्य्याणेति ।—पर्य्याणस्य—पल्ययनस्य, पक्षक,—प्रान्त, पार्श्वं वा, ("पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके" इति मेदिनी), यद्वा,—पर्य्याणपक्षक,—पर्य्याणालङ्कृतहस्तिपार्श्वभाग, ("पक्षभाग पार्श्वभाग" इति गजावयवनिरूपणे अमर.) तस्य परिक्षेपपट्टिका—वेष्टनपट्टी, तस्या बन्धेन—संयमनेन, निश्चलम्—अचञ्चल,

वर्त्तमेचकैः कञ्चुकैश्च, उपचितचीनचोलकैश्च, (७७) तारमुक्ता-स्तवकित स्तवरकवारवाणैश्च, नानाकषायकर्बुरकूर्पासकैश्च, (७८) शुकपिच्छच्छायाऽऽच्छादनकैश्च, (७९) व्यायामालुप्तपार्श्व-प्रदेशप्रविष्टचारुशस्त्रैश्च. (८०) गतिवशवेल्लितहारलतालग्नलोल-कुण्डलोन्मोचनप्रधावितपरिजनैः, (८१) चामीकरपत्राङ्कुर-

---

देहेषु—शरीरेषु विराजमाना,—शोभमाना, राजावर्त्तक—तन्नामपाषाणवत् मेचका,—श्यामला ते, कञ्चुके —चमाभि, उपलक्षितै इति योजनीयम्, [ "इत्थम्भूत—" (२।३।२१ पा०) इत्यादिना तृतीया ]। उपचितेति।—उपचित—शोभितम्, [ "उपचितम्" इत्यत्र "अपचितम्" इति पाठे,—पूजितम्, उत्कर्षतां गतमित्यर्थ , यद्वा,—अपचितं—व्ययितं, त्यजितमित्यर्थः, कञ्चुकधर्षणादिति भाव । "भवेदपचिति पूजाव्ययनिष्कृतिहानिषु" इति मेदिनी ] चीन—चीनदेशीयम्, सूक्ष्ममिति यावत्; चोलक—वसन येषां ते ।

(७७) तारेति।—तारा,—विमला, मुक्ता,—मौक्तिकानि, ("तारो वानरभिन्मुक्ताविशुद्धौ शुद्धमौक्तिके" इति मेदिनी ) तामि स्तवकिता,—सञ्जात-पुष्पगुच्छाकारा, स्तवरका —वस्त्रभेदा वारवाणा,—कञ्चुकाश्च येषां ते । नानेति।—नानाकषायैः—विविधनिर्य्यासविशेषैः, रञ्जनसाधनैरित्यर्थ, कर्बुरा,—चित्रा, रञ्जिता इत्यर्थं, कूर्पासका,—चोलका, वस्त्रभेदा इति यावत येषां ते ।

(७८) शुकेति।—शुकस्य—पक्षिभेदस्य पिच्छ—बर्हं पक्ष इत्यर्थं, तस्य छाया—कान्तिरिव कान्ति येषां तादृशानि आच्छादनानि—उत्तरीयाणि येषां ते, हरितवर्णोत्तरीयैरित्यर्थ ।

(७९) व्यायामेति।—व्यायामेन—अङ्गचालनाविशेषेण, अलुप्तेषु—प्रनष्टेषु, स्थितेषु इत्यर्थं, पार्श्वप्रदेशेषु—कक्षशरीरयोर्भागेषु, कटिदेशेषु इति यावत प्रविष्टानि—स्थितानि इत्यर्थं, चारूणि—रम्याणि शस्त्राणि—आयुधानि येषां तै ।

(८०) गतीति।—गतिवशेन—द्रुतगत्येति यावत् वेल्लितायां—दोलितायां, हारलतायां—मुक्ताऽऽवलीयष्ट्यां, शिर स्थितायामिति भाव, लग्न—सम्जत, [ "लग्न—" इत्यत्र "गलत—" इति पाठे,—पतत, सङ्क्रममानमित्यर्थं ] यत् लोल—तरलं, गतिवशादेव इति भाव कुण्डलं—कर्णभूषणं, तस्य उन्मोचनाय—निष्क्रामणाय, प्रधावित,—द्रुतोपगत इत्यर्थं, परिजन,—परिचारक इति यावत् येषां तै ।

(८१) चामीकरेति।—चामीकर,—सौवर्णं इत्यर्थं, पत्राङ्कुर,—दलप्ररोह!

कर्णपूरकविघट्टमानवाचालवालपाशैश्च, (८२) उष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च, (८३) कुङ्कुमरागकोमलोत्तरीयान्तरितोत्तमाङ्गैश्च, (८४) चूडामणिखण्डखचितक्षौमचोलैश्च, (८५) मायूरपलायमाणशेखरोड्डीयमानषट्पदपटलैश्च, (८६) मार्गागतशारिकशारिवाहवेगदण्डैः,

---

यस्य तथाभूत, यत्र कर्णपूरक—कर्णभूषण, तत्र विघट्टमान —सङ्घर्षं गच्छन् अत एव वाचाल,—मुखरित, "ठठङ्" इति शब्द कुर्वन् इत्यर्थ, वालपाश,—चमर कर्णाभरणविशेष येषा तै ।

(८२) उष्णीषेति ।—उष्णीषपट्टेन—शिरोवेष्टनवस्त्रेण, ("अथ्युष्णीष : शिरोवेष्ट-किरीटयो" इत्यमर ) अवष्टब्धानि—आक्रान्तानि, समाक्रान्तानीत्यर्थ, कर्णोत्पलनालानि—कर्णभूषणीकृतनीलोत्पलदण्डकानि येषा तै ।

(८३) कुङ्कुमेति ।—कुङ्कुमेन—काश्मीरजेन राग,—रञ्जनं, तेन कोमलै,—मृदुलै, मनोज्ञैरिति यावत् उत्तरीयै,—उत्तरासङ्गै, अन्तरित—वेष्टितम् उत्तमाङ्ग—शिर येषा तै ।

(८४) चूडामणीति ।—चूडामणीना—शिरोरत्नाना, खण्डेन—शकलेन, खचितं—बद्ध समुत्कीर्णमित्यर्थं, क्षौमचोल—दुकूलवसन, शिर.स्थमिति भाव येषा तै ।

(८५) मायूरेति ।—मयूरस्य इद मायूरं—मयूरसम्बन्धि इत्यर्थं [ "तस्येदम" (४।३।१२० पा० ) इत्यण ] पत्र—पिच्छमित्यर्थ, तदिव आचरत, मयूरपिच्छवत् इतस्ततश्चलदित्यर्थं, यत शेखर—शिरोभूषण, तस्मिन उड्डीयमानानाम—उड्डयन कुर्वता, षट्पदाना—भ्रमराणा, पटल—समूह येषा तै । [ "मायूरपलायमाणशिखरोड्डीयमानषट्पदपटलै" इत्यत्र "मायूरपलायमाणशेखरषट्पदपटल" इति पाठे, —मायूरपलायमानशेखरे षट्पदपटलम्, उड्डीयमानमिति भाव येषा तै ]।

(८६) मार्गागतेति ।—मार्गागता,—पथिप्राप्ता, शारिकशारिवाहवेगाभ्य—प्रथमिदाना, दण्डा,—लगुडा यै तथोक्ते, यद्वा,—मार्गागताना—पथि द्रुतगमनार्थं आनीतानामश्वानां, अश्वपालैरिति भाव, शारिकशारिवाहाना—शारिषु —प्रस्तरण- [illegible], या कशा —अश्वताडन्य ता अस्त्य —एषाम, प्रहरणचातुर्यादिति भाव तादृशा, ये वाहा,—अश्वा, तेषा वेगार्थे —द्रुतधावनार्थे दण्डा,—ताडना, हस्ते इति भाव येषा तै, यद्वा,—मार्गागता,—सरण्यनुसर्त्तार, प्रवर्त्तत्वादिति भाव, शार,—द्यूतार्थपर्य्यायमेव शारिका, ("शारिनांऽक्षोपकरणे स्त्रियां शकुनिकान्तरे ।

उदिते च भगवति दिनकृति राज्ञः (८१) समायोगग्रहण-समयशंसी सस्तान संज्ञाशङ्खो मुहुर्मुहुः। (८२) अथ न चिरा-दिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव (८३) गमनविलोलकर्णतालदोलाविलासैः कुर्व्वाणया करेणुकया उह्यमानः, (८४) वैदूर्य्यदण्डविकटेन उपरि

---

ग्रसंख्यत्वादिति भावः। उन्मुखेति।—उन्मुखे,—ऊर्ध्वमुखे, आदेशवचनार्थमिति भावः, पादाते,—पदातिसैन्ये, ["तस्य समूहः" (४।२।३७ पा०) इत्यण्] प्रतिपाल्यमाने,—प्रतीक्ष्यमाणे, आज्ञापनं,—आदेशवचनमिति यावत् येषां तैः, राजभिः,—सामन्तनृपतिभिरित्यर्थः, राजद्वारे—हर्षशिबिरप्रवेशतोरणम्, आपूरे—व्याप्तमित्यर्थः। इह "ततो रटत्पटहे" इत्यारभ्य एतदवधि हर्षशिबिरद्वारे समाश्रितसामन्तवाहिनीनां यथायथवर्णकविन्यासविच्छित्तिमत्रा स्वभावोक्तिरलङ्कारः स्फुटः, उत्प्रेक्षानुप्रासातिशयोक्त्यादयश्चाङ्गानि इत्यवधेयम्।

(८१) समायोगेति।—समायोगः—सन्निधानं, सन्नाह इति यावत्, कवचादिरिति भावः, यद्वा,—समायोगः—प्रयोजनं, प्रयोजनीयं वस्तु इत्यर्थः, यात्रिकपर्यस्त्रादिकमिति भावः ("समायोगस्तु संयोगे समवाये प्रयोजने" इति मेदिनी) तस्य ग्रहणं—स्वीकारः, परिधानादिकं इत्यर्थः, तस्य समयः,—कालः, तं शंसति—सूचयतीति तथोक्तः, संज्ञाशङ्खः,—सङ्केतशङ्खः, सस्तानं—दध्वान, यात्रासमयः समागतः, अत एव सज्जितो भव इति ज्ञापनार्थं शङ्खध्वनिं चक्रुः तत्कर्म्माधिकृता इति निष्कर्षः।

(८२) अथेति।—"अथ" इत्यस्य "दिग्विजयाय निर्जगाम नरपतिः" इति परेण सम्बन्धः। ["न चिरादिव" इत्यत्र समस्तपाठे नञर्थकनशब्देन "सह सुपा" (२।१।४ पा०) इति समासः]। प्रथमप्रयाण एव—प्रथमयात्रायामेव, दिग्गजसमागममिव—ऐरावतसङ्गममिव।

(८३) गमनेति।—गमनेन—गतिक्रमादित्यर्थः, विलोलाः,—चञ्चलाः, कर्णतालाः,—कांस्यतालवत् कर्णदेशाः, साम्यमनुसृत्य चालितकर्णा इत्यर्थो वा, तेषां दोलाविलासैः,—कम्पनविभ्रमैः। करेणुकया—हस्तिन्या, उह्यमानः—नीयमानः, प्रत्युत्पन्नकरिणीपृष्ठसमारूढ इत्यर्थः।

(८४) वैदूर्य्येति।—वैदूर्य्यं—विदूरपर्वतजो मणिः, तस्य दण्डः,—दण्डिकितनालं इत्यर्थः, तेन विकटम्—उज्ज्वलं तेन।

(९५) प्रत्युप्तपद्मरागखण्डखचिततया सूर्योदयदर्शनकोपादिव लोहितायतया भ्रियमाणेन मङ्गलातपत्रेण, (९६) कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनाम् अधिपतिः अङ्गलग्नेन कञ्चुकेन, (९७) अमृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल इव पारिजातपादप इव आखण्डलभूमिम् आरूढः,

---

(९५) प्रत्युप्तेति।—प्रत्युप्तं,—निबद्धं, पद्मरागाणां—रत्नविशेषाणां, खण्डैः—शकलैः, खचितं—घटितं, तस्य भावः तत्ता तया सूर्योदयदर्शनकोपादिव—भास्करप्रकाशावलोकनक्रोधादिव, लोहितायतया—लौहित्यरूपधर्मवत्त्वं, [ अलोहितो लोहितो भवतीत्यर्थे "लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि, लोहितायमानधातोः कर्तरि पचादित्वादचि लोहिताय इति सिद्धे, तत भावे तलि रूपम्, "लोहितायमानेन" इति प्रकाश्यपाठस्तु अपलौकार्थ्यात् समीचीन एवेति प्रतीयते ] भ्रियमाणेन—ध्रियमाणेन छत्रधारिणेति शेषः, मङ्गलातपत्रेण—राजलक्षणछत्रेण, [ "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति तृतीया, करणे वा ]।

(९६) कदलीति।—कदली—रम्भातरुः, तस्या गर्भः,—उदरम् अभ्यन्तरभाग इत्यर्थः तस्मादभ्यधिकः,—अतिशयः, म्रदिमा—मार्दवं यस्य तेन, नवनेत्रनिर्मितेन—नूतनपट्टवस्त्रविशेषकल्पितेन, ( "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी ) अङ्गलग्नेन—देहसंसक्तेन, कञ्चुकेन—वर्मणा, गात्रावरणविशेषेण इत्यर्थः, निर्मोकेण च, ( "कञ्चुकी वारबाणे स्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके॥" इति मेदिनी ) भोगिनाः—सर्पाणाम् अधिपतिः,—प्रभुः, अनन्तनाग इत्यर्थः।

(९७) क्षीरोदेति।—क्षीरोदस्य—दुग्धसागरस्य, फेनपटलं—डिण्डीरपुञ्जः, तद्वत् धवलं—शुभ्रम्, अम्बरं—वस्त्रम् अन्तरीयञ्च वहति—परिधत्ते इति तथोक्तः, अत एव अमृतमथनदिवस इव—अमृताय—पीयूषाय, मथनं—विलोडनं, क्षीरोदस्येति भावः, तद्दिवस इव—तद्दिनमिव, परिदृश्यमान इति शेषः। बाल एव—क्षीरोदधिनवोद्भूत इत्यर्थः, उत्तरोत्तरसमृद्धिमानिति भावः, एवञ्च अमृतमथनकालिकत्वज्ञापनाय अनुधर्म्यसाम्यप्रतिपत्तये पारिजातपादपे बालत्वधर्मव्यपदेश इत्यवगन्तव्यम्। आखण्डलभूमिम्—इन्द्रस्थानं, नन्दनोद्यानमित्यर्थः, इन्द्रसहशनेपथ्यञ्च, ऐरावतापम-

(९८) विधूयमानचामरमरुद्विधुतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेन इव दिशः कुरयन्, (९९) अभिमुखचूडामणिघटमानपाटलप्रतिबिम्बम् उदयमानं सवितारमपि पिबन् इव तेजसा, (१००) बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराणि ओष्ठमुद्रया, (१०१) अनुरागस्य स्फुरन्महाहारमरीचिचक्रवालानि चामराणि इव दिशोऽपि

---

गजवराधिष्ठितत्वादिति भावः, यद्वा,—चामुण्डभूमिम्—चन्द्रस्थानं, राजेन्द्रमर्यादा नियतं, भूलोकाधिकारित्वात् इति भावः, चाटु,—अधिष्ठितः।

(९८) विधूयमानेति।—विधूयमानयो—चाल्यमानयो चामरयोः,—वालव्यजनयोः, मरुता—वायुना विधुताया—कम्पिताया कर्णपूरकुसुममञ्जर्याः,—कर्णभूषणीकृतपुष्पवल्लर्याः, रजसा—परागेण, सकलेति।—सकलाना—समस्ताना, भुवनाना—जगतां वशीकरणाय—वशाय चूर्णे—रज, मन्त्रपूतौषधविशेष इति यावत्, तेनेव कुरयन्—व्याप्नुवन्।

(९९) अभिमुखेति।—अभिमुखे—सम्मुखवर्त्तिनि स्वस्य चूडामणौ—शिरोरत्ने, घटमान—प्रतिफलत् पाटलम्—श्वेतरक्तम् अरुणवर्णमित्यर्थः प्रतिबिम्बं—प्रतिच्छाया यस्य तम्, उदयमानम्—उद्गच्छन्तं, सवितारं—सूर्यं, सूर्यादपि अधिकतेजस्वीति भावः।

(१००) बहलेति।—बहलेन—प्रभूतेन, ताम्बूलसिन्दूरेण—पर्णरागेण छुरित—व्याप्ता, रञ्जिता इत्यर्थः तया, ओष्ठमुद्रया—रदनच्छदविभागेन। विलभमान इव—विलोभयन् इवेत्यर्थः, आत्मानं भजयितुं मुद्राप्रदर्शनेन द्वीपान्तराणि प्रलोभयन्निवेति भावः, एतेनास्य भाविसप्तद्वीपाधिपतित्वं प्रकटीकृतम्। केचित्तु—"विलभमानः अर्पयन् कुर्वन्। मुद्रया हि ससिन्दूरया विलभ्यते" एवं व्याख्यानयन्ति, व्याख्यानेनानेन अस्य अतीव दातृत्वम् अशेषभुवनशासकत्वञ्च सूचितम्।

(१०१) स्फुरदिति।—स्फुरन्—विकसन् यो महाहारः—उत्कृष्टमुक्तावली कलापः, तस्य मरीचीनां—मयूखानां, चक्रवालानि—मण्डलानि अनुरागस्य—प्रीतेः, हर्षं प्रतीति शेषः, चामराणि—वालव्यजनानीव दिशोऽपि—दिग्वधूरपीति यावत्, अनुरागात् दिग्वधूर्योऽपि तं वीजयन्त्य इवासन्निति भावः, एतेनास्य सर्वदिगाधिपत्यं सूचितम्।

ग्राहयन्, (१०२) राजकेक्षणोत्क्षिप्तविभागया त्रीन् अपि लोकान् करदानाय आज्ञापयन् इव सविभ्रमं भ्रूलतया, द्राघीयसा बाहुप्राकारेण परिक्षिपन् इव रिरक्षया सप्तापि सागरमहाखातान्, अखिलमिव क्षीरोदमाधुर्य्यम् आदाय उद्गतया लक्ष्म्या समुपगूढं गाढम्, अमृतमय इव (१०३) पीयमानं कुतूहलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव, लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाम्,

(१०२) राजकेति।—राजकानां—राजन्यानाम् ईक्षणे—दर्शने उत्क्षिप्तः, —उन्नमितः विभागः—तृतीयो भागः यस्याः तथाभूतया [क्वचित् संज्ञाप्रमादानां पुरस्तादर्थत्वमपि दृश्यते] सविभ्रमं—सविलासं, त्रैलोक्यैव करमिति यावत् एतेन तस्य त्रैलोक्याधिपत्यस्य प्रकटीकृतम्। द्राघीयसा—अतिदीर्घेण ["द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुन्, ततः "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना दीर्घस्य द्राघादेशः] बाहुप्राकारेण—भुजप्राचीरेण, रिरक्षया—रक्षितुमिच्छया, भुजासनगुणेन स्वात्मना चतुरन्तीकरणेच्छया इत्यर्थः, [लिपिकरप्रमादात् इकारमीषेण रिरक्षयेत्यत्र रिरक्षया जाता तत्र रक्ष्यते सन्नन्तात् भावे अ प्रत्यये टापि च रूपमेतदिति ध्येयम्] सागरमहाखातान्—सागराः—समुद्रा एव, महान्ति—दुस्तराणि इत्यर्थः, खातानि—पुष्करिण्यः, प्राकारवेष्टनार्थमीत्यर्थं येषां तान् ("पुष्करिण्यां तु खातं स्यात्" इत्यमरः) दीर्घाणामिति शेषः परिक्षिपन्निव—परिवेष्टयन्निव, एतेनास्य आज्ञानुलङ्घ्यत्वं सूचितम्। अखिलं—सम्पूर्णं, क्षीरोदमाधुर्यं—दुग्धसमुद्रस्य रमणीयताम्, आदाय—गृहीत्वा उद्गतया—उत्थितया। गाढम्—अशिथिलं यथा तथा, समुपगूढं,—समालिङ्गितं, दुग्धधवलकान्तिः सुश्रीकश्च इति भावः।

(१०३) कुतूहलेति।—कुतूहलेन—आश्चर्यरूपमिदमिति कौतुकेन उत्तानानाम्—उत्क्षिप्तानां कटकलोकलोचनानां—सैनिकजननयनानां, सहस्राणि—समूहा इत्यर्थः तैः, पीयमानः—सादरं दृश्यमानः इति भावः। स्नेहार्द्रेषु—स्नेहेन—प्रीत्या, आर्द्रेषु—सरसेषु प्रीतिरससिक्तेषु इत्यर्थः, राज्ञां—सामन्तनृपाणां, हृदयेषु—अन्तःकरणेषु, गुणगौरवेण—गुणानां—शौर्यदाक्षिण्यादीनां गौरवेण—भारेण मज्जन्निव—बुडन्निव अन्तःप्रविशन्निवेत्यर्थः गुणानुरक्तानां राज्ञां हृदये कृतपदास्पदः इति भावः, भारवद्वस्तु अपि आर्द्रस्थानेषु मज्जतीति दृश्यते। द्रष्टॄणां—दर्शनकर्त्तॄणां जनानां, सौभाग्यद्रवेण—सौभाग्यं—शुभादृष्टं, तद्दर्शनहेतुभूतमिति भावः, तदेव

कुशलप्रश्नैश्च प्रतिप्रणामैश्च उन्मत्तभ्रूवीक्षितैश्च आघ्राटानैश्च आक्रीणन् इव मानमयान् प्राणान् प्रणयदानैः प्रवीराणां वीरो यथाऽनुरूपं विबभाज राजकम्।

अथ प्रस्थिते राजनि (११३) कलकलत्रस्तदिङ्नागसूत्काररव इव दूरस्ततः तस्तार तारतरः तूर्याणां प्रतिध्वनः आशातटेषु। दिग्गजेभ्यः प्रकुपितानां विप्रसुतानां करिणां मदप्रस्रवणवीथीभिः अलिकुलकालीभिः कालिन्दीवेणिकासहस्राणि इव सस्यन्दिरे। (११४) सिन्दूररेणुराशिभिः अवश्याय-

---

क्षणोषि, उन्नतैकभ्रूणि इत्यर्थः] आर्द्रस्मितैः,—ईषद्धास्यैरित्यर्थः, हिक्कालापैः,—वक्रोक्तिभिः, अलसाऽनायासायचैरित्यर्थो वा। उन्मत्तेति।—उन्मत्तैः,—उन्मादरोगग्रस्तस्येव पीतमद्यस्येव वा चपलैरित्यर्थः, भ्रूवीक्षितैः,—भ्रूसञ्चालनैः, परिहासार्थमिति भावः प्रवीराणां—वीरश्रेष्ठानां, राज्ञामिति शेषः, मानमयान्—अभिमानघनानित्यर्थः, प्रणयदानैः,—प्रीतिज्ञापनैरित्यर्थः, आक्रीणन्निव—विक्रीयेव क्रीणन्निव, ["आक्रीणन्निव" इत्यत्र "आक्रीडन्निव" इति पाठे—क्रीडां कुर्वन् इव, तान् प्रति स्वानुग्रहभावज्ञापनार्थमिति भावः। प्रथमतः नेत्रविभागैरेवादाय प्राणान् आक्रीणन् इति न्यूनेनाधिकविनिमयात् परिहासिन अलङ्कृति विनिमयेन पश्चाद्धनविकश्रेष्ठत्व स्वस्य प्रतिपादितत्वात् इति तत्त्वेप] वीरः, हर्षः इति शेषः, यथाऽनुरूपं—यथोचितं, विबभाज—विभज्य स्थापितवान् इत्यर्थः।

(११३) कलकलेति।—कलकलेन—कलरवेण, जनसमूहानामिति भावः, त्रस्तानां—भीतानां, दिङ्नागानां—दिग्गजानां, सूत्काररव इव—श्वासशब्दकशब्दविशेष इव, "सूत" "सीत" इत्याकारक इत्यर्थः। तस्तार—व्याप। तारतरः,—उच्चैस्तरः। तूर्याणां—वाद्यविशेषाणाम्। आशातटेषु—दिग्विभागेषु। दिग्गजेभ्यः,—दिग्गजान् प्रतीत्यर्थः, ["क्रुधद्रुह—" (१।४।३७ पा०) इत्यादिना चतुर्थी]। विप्रसुतानां—त्रिभिः अङ्गैः कपोलादिभिः, प्रसुता,—मदस्राविणः तेषाम्। अलिकुलकालीभिः,—भ्रमरकुलश्यामलाभिरित्यर्थः, मदप्रस्रवणवीथीभिः,—दानजलधाराश्रेणीभिः, कालिन्दीवेणिकासहस्राणि इव—यमुनाप्रवाहसहस्राणि इव सस्यन्दिरे—स्रवन्ति स्म, दानजलानीति शेषः।

(११४) सिन्दूरेति।—सिन्दूररेणूनां—नागसम्भवचूर्णानां, करिकुलैर्विनिक्षिप्ता-

मानबिम्बे रवौ अस्तमयसमयं शशङ्किरे शकुनयः। करिणां (११५) षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैः तिरोदधिरे दुन्दुभिध्वनयः। (११६) दोधूयमानश्च सचराचरम् आचचाम चामरसङ्घातो विभ्रम्। (११७) अश्वीयश्वास-निक्षिप्तैः शिश्विन्दे सिन्धुवारदामशुचिभिः निरन्तरम् अन्तरीक्षं फेनपिण्डैः। (११८) पिण्डीभूततगरस्तबकपाण्डुराणि पपुः इव

---

नाम इति भावः, शकुनिभिः,—निचयैः, रवौ—सूर्ये, लोहितायमानं—लोहितायमाने, तस्य प्रतिफलनादिति भावः, बिम्बं—मण्डलं यस्य तथाभूते, सतीति शेषः, एतेन हयस्य गजानामतिबाहुल्यं महौजस्यञ्च सूचितम्, शकुनयः,—पक्षिणः इति यावत्, अस्तमयसमयम्—अस्तगमनकालं, सन्ध्याकालमित्यर्थः, शशङ्किरे—शङ्कितवन्तः, तेषां तथा दर्शनेन विपर्ययज्ञानं जातमिति भावः। इह कविप्रौढोक्तिसिद्धो भ्रमः अस्तगामिसूर्य-बिम्बसाम्यातिशयव्यञ्जकः, तेन हि शकुनानाम् अस्तमनोन्मुखे रवौ अस्तमनोन्मुखत्व-बुद्धेरुदयात् भ्रान्तिमदलङ्कारः।

(११५) षट्पदेति।—षट्पदानां—भ्रमराणां, मदवारिलुब्धानामिति भावः, कोलाहलेन—कलकलेन, मांसलाः,—प्रबलाः इत्यर्थः तैः, ["सिध्मादिभ्यश्च" (५।२।९७ पा०) इति पाणिनेः लच्] कर्णेति।—कर्णौ—श्रवणे एव, तालौ—करतला-स्फालने, कांस्यनिर्मितवाद्यविशेषौ वा तयोः निस्वनैः,—शब्दैः, तिरोदधिरे—तिरस्कृताः, अत्यन्तोच्चशब्दबाहुल्येन दुन्दुभिध्वनयः न श्रुतिगोचराः अभवन्नित्यर्थः।

(११६) दोधूयमानः,—पुनः पुनः सञ्चाल्यमानः, [धुनोतेः धूनातेः धवतेर्वा यङन्तात् कर्मणि शानचि रूपम्]। सचराचरं—स्थावरजङ्गमसहितम्। आचचाम—जग्रास, आच्छादयामासेति यावत्।

(११७) अश्वीयेति।—अश्वीयम्—अश्वानां समूहः, तस्य श्वासेन—निश्वास-पवनेन, निक्षिप्तानि—पातितानीत्यर्थः तैः, सिन्धुवारदामशुचिभिः,—निर्गुण्डी-मालाविशदैः, फेनपिण्डैः,—डिण्डीरखण्डैः। शिश्विन्दे—शुक्लतां प्रापयाञ्चक्रे, [श्विन्दते श्वैत्यादिकस्य कर्मणि लिटि रूपम्]। एतेनाश्च अश्वानामपि अतिबाहुल्यं सूचितम्।

(११८) पिण्डीभूतेति।—पिण्डीभूतः,—राशीभूतः, यः तगरस्तबकः,—तगरपुष्पगुच्छः, तद्वत् पाण्डुराणि—शुभ्राणि, शुभ्राणि इत्यर्थः।

परस्परसङ्घट्टनष्टाष्टदिशं दिवसम् उच्चचामीकरदण्डानि आतपत्रवनानि। (११९) रजोरजनीनिमीलितो मुकुटमणिशिलावलीबालातपेन विचकास वासरः। (१२०) राजतैः हिरण्मयैश्च मण्डनकभाण्डमण्डलैः ह्रादमानैः हरितीकृताः परिह्लादा हरितो बधिरतां दधुः। (१२१) अरिप्रतापानलनिर्मूलनाय इव मदाम्बुशीकरैः शिशीकिरे करिणः ककुभां चक्रम्। (१२२) चक्षुषाम् उन्मेषं मुमुषुः तडिच्चञ्चलानि

---

उच्चचामीकरदण्डानि—उच्चाः,—उन्नताः चामीकरदण्डाः,—सौवर्णयष्टयः येषां तानि, आतपत्रवनानि—छत्रारण्यानि अनेकसहस्रच्छत्राणीत्यर्थः, परस्परेति।—परस्परासाम् —अन्योऽन्यासां, दिशामिति भावः सङ्घट्टन—सङ्घर्षेण, नष्टा,—अदर्शनं गता, अष्टौ—अष्टसङ्ख्याकाः, दिशः,—ककुभः यत्र तम्। वपुरिव—अहरिव, अनेकसहस्रच्छत्रच्छायया दिवालोकस्य प्रतिहतत्वादिति भावः।

(११९) रज इति।—रज एव—धूलिरेव सैन्यपदोत्थितमिति भावः, रजनी—रात्रिः, गगनमण्डलाच्छादनादिति भावः, तया निमीलितः,—मुद्रितः, रजसा आच्छन्न इति यावत्, वासरः,—दिवसः, मुकुटेति।—मुकुटमणिशिलावलीनाम्—किरीटरत्नानाम्, बालातपेन—नवालोकेन मन्दकिरणेनेति यावत्, विचकास—विदिद्युते व्यशोभत इत्यर्थः। रजसान्धकारीभूतोऽपि दिवसः मुकुटमणिप्रभया प्रचकाशे इति निष्कर्षः।

(१२०) ह्रादमानैः—शब्दायमानैः राजतैः,—रौप्यैः हिरण्मयैः,—सौवर्णैश्च, मण्डनकभाण्डमण्डलैः—मण्डनकानि—शोभाजनकानि यानि भाण्डानि—अश्वाभरणानि, ("भाण्डमश्वाभरणे" इत्यमरः) भूषणपात्राणि वा तेषां मण्डलैः—समूहैः, परिह्लादा—परितो निःस्वनपूरिता, राजतादिभाण्डनिस्वनैः निनादिता इत्यर्थः [ह्रादतेः कर्मणि घञ्] तथा हरितीकृता—श्यामीकृताः सुव्यक्त श्यामरत्नादिना इति भावः, यद्वा,—हरितीकृता,—धवलीकृता इत्यर्थः, आभरणप्रभाभिरिति भावः, हरितः,—दिशः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः)।

(१२१) अरीति।—अरीणाम्—शत्रूणाम्, प्रतापानलस्य—तेजोवह्नेः, निर्मूलनाय इव—निर्वापणाय इव मदाम्बुशीकरैः,—दानवारिणां सूक्ष्मकणिकाभिः, ककुभाम्—दिशाम्, चक्रम्—मण्डलम्, शिशीकिरे—सिषिचुः, अजस्रसम्पतन्मदासारैः सिक्तवन्तः इत्याशयः। ["शीकते" इत्यस्य सौवादिकस्य लिटि रूपम्]।

चूडामणीनामर्चींषि। स्वयमपि (१२३) विसिसिक्षिये बलानां भूपालः सर्व्वतो विक्षिप्तचक्षुश्च अद्राक्षीत् आवासस्थानमकाशात् प्रतिष्ठमानं स्कन्धावारम्, (१२४) अधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात् प्लावितभुवनम् उद्वमन्तम्, (१२५) अर्ज्जुनबाहुदण्ड-सहस्रसम्पिण्डितोन्मुक्तमिव सहस्रधा प्रवर्त्तमानं प्रवाहं नर्मदायाः। (१२६)"प्रसर तात। ।भाव। किं विलम्बसे ? लङ्घति

(१२२) तडिद्वलयानि—विद्युन्मण्डलानि अर्चींषि—किरणाः, चक्षुषा—नेत्राणां, तत्रत्यजनानामिति भावः, उन्मेष—विकासं मुमुषुः,—अहरन् हठात् तीव्रालोक सम्पातस्य दृष्टिप्रतिबन्धकत्वादिति भावः।

(१२३) विसिसिक्षिषे—अतुलम् अमन्यत इत्यर्थः। बलानां—सैन्यानाम्। [अत्र "षष्ठी शेषे" (२।३।५० पा०) इति षष्ठी] भूपालः —हर्षः। विक्षिप्तचक्षुः—पातितनेत्रः। प्रतिष्ठमानं—प्रचलन्तम्। स्कन्धावारं—शिबिरं, चतुरङ्गवाहिनीमित्यर्थः। सर्वतो विक्षिप्तचक्षुः भूपालः स्वयमपि आवासस्थानसकाशात् प्रतिष्ठमानं "अधोक्षजकुक्षे—" इत्यारभ्य "नर्मदायाः"इत्यन्तविशेषणकं बलानां स्कन्धावारम् अद्राक्षीत् विसिसिक्षिये च इत्यन्वयः।

(१२४) युगादौ—सत्ययुगप्रारम्भे, अधोक्षजकुक्षेः,—नारायणोदरात्, निष्पतन्तं—निःसरन्तम्। कुम्भभुवः,—अगस्त्यस्य, ("अगस्त्यः कुम्भसम्भव"इत्यमरः)। प्लावितभुवनं—प्लावितं भुवनं येन तथाभूतं व्याप्तजगत्मित्यर्थः, यद्वा—क्रियाविशेषणञ्चेतत्, प्लावितं भुवनं यस्मिन् कर्म्मणि तद्यथा स्यात् तथेत्यर्थः। उद्वमन्तं—निःसरन्तमित्यर्थः।

(१२५) अर्ज्जुनेति।—अर्ज्जुनस्य—कार्त्तवीर्य्यार्ज्जुनस्य इत्यर्थः, बाहुदण्डानां—भुजयष्टीनां, सहस्रेण—दशशतसङ्ख्यया, आदौ सम्पिण्डितम्—समाहृतं पश्चादुन्मुक्तं—परित्यक्तं सहस्रधा—सहस्रप्रकारेणेत्यर्थः, प्रवर्त्तमानं—प्रसरन्तम्। पूर्वं कार्त्तवीर्य्यार्ज्जुनेन हैहयाधिपतिना पुरस्त्रीभिः सह नर्म्मदायां जलकेलिनिरतेन तत्प्रवाहो भुजसहस्रेण स्तम्भितो बद्धः पश्चात् त्यक्त इति वार्त्ता। इह आवासस्थानसकाशात् प्रतिष्ठमानं स्कन्धावारमारभ्यैतदवधि स्कन्धावारस्योपमानानि अधोक्षजाङ्गात् निष्पतज्जीवलोकादिकानि एकवाक्यान्वितानि इति मालोपमा।

(१२६) तात—वत्स। प्रसर—गच्छ। भाव।—विद्वन्। मान्य इत्यर्थः, किं विलम्बसे ?—कथं चिरयसि ? लङ्घति—चलति, प्रचण्डवेगेन धावतीति भावः।

तुरङ्गम। भद्र! भग्नचरण इव सञ्चरसि यावदमी पुरःसराः सरभसम् उपरि पतन्ति। वाहयसि किमुष्ट्रम्? न पश्यसि निर्दय! शुकशिशुं प्रयान्तम्?। वत्स रामिल। (१२७) रजसि यथा न नश्यसि। नो पश्यसि गलति शक्तुप्रसेवकः?। किमेवम् (१२८) इत्वर! त्वरसे? सौरभेय!। सरणिम् अपहाय कथमध्ये धावसि धीवरि!?। विशसि गन्तुकामा मातङ्गि! मातङ्गमार्गम्?। भद्र! गलति तिरश्चीना चणकगोणी। गणयसि न मामारटन्तम्?। अवटम्

["त्वगि गतौ" इति भौवादिकस्य त्वङ्गते लटि रूपम]। भग्नचरण इव—खण्डितपद इव। पुरःसराः—अग्रगामिनः। सरभसं—सवेगम्। प्रयान्तं शुकशिशुं पश्य त्वन यासीति भावः। ["शुकशिशुम्" इत्यत्र "निःशुकशिशुम्" इति पाठे,—निःशूक—निर्घृण, अज्ञातसौऽसत्कारत्वादस्यस्वयमित्यर्थः, अत एव सम्यथा कृपाऽऽस्पदम इति भावः]।

(१२७) रजसि—धूलिराशौ इति भावः, यथा न नश्यसि—न अदर्शनं यासि, तथा कुर्विति शेषः, यद्वा,—यथा रजसि—याद्रक अनुरक्तोऽभवसि, तद्वेति भावः, [रजते भौवादिकस्य लटि रूपम] न नश्यसि—न प्रणाशं गच्छसि, एतादृगनुरागस्य अभ्युदयहेतुत्वादिति भावः। शक्तुप्रसेवकः,—शक्तुना—तन्नामकभक्तेन इति भावः, प्रकर्षेण सेवते इति तथोक्तः भक्तदास इत्यर्थः, शक्तुभावधतनो भृत्य इति भावः, तदाख्यो वा गलति—दूरं गच्छतीत्यर्थः, यद्वा,—शक्तूनां प्रसेवकः,—शक्तुपूर्णः स्यूतः, शणपट्टादितन्तुनिर्मित धान्याद्याधारविशेष इत्यर्थः, ("स्यूतप्रसेवौ" इत्यमरः) "प्रसेवकः भस्त्राभरणम" इत्येके, गलति—पतति नो पश्यसि?—नावलोकसे? ["नो" इत्यत्र "न" इति पाठान्तरम] शक्तुदेश्यादिरपि दृश्यते।

(१२८) इत्वर।—गमनशील। [इण गताविति धातोः "इण नश—" (३।२।१६३ पा०) इत्यादिना क्वरप् प्रत्ययः] त्वरसे?—सम्भ्रान्तोऽसि? द्रुतं धावसीत्यर्थः। सौरभेय।—वृषभ। वृषभवत् दान्त इति भावः ("उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः" इत्यमरः) धीवरि!—धीवरकन्ये। सरणिं पन्थानम् अपहाय—परित्यज्य, कथमध्यम—जनताभ्यन्तरं, धावसि?—द्रुतं यासि? मातङ्गि।—चण्डालतनये। इत्यर्थः ("चण्डालप्लवमातङ्ग" इत्यमरः) मातङ्गमार्गं—हस्तिसरणिं, विशसि?—आश्रयसि? प्रविशसीत्यर्थः। भद्रेति सम्बुद्धौ। तिरश्चीना—अऋजुविहिनेति भावः, चणकगोणी—चणकाख्यकलायस्थलिका, गलति—च्यवते। गणयसि

अमुतः द्राक् दावेश मुखवासपूलकं लुनीहि, को जानाति (१३२) यवसगतं गतानाम् ? षव। वारय बलीवर्दान्, वाहीकरचितं चेत्रमिदम्। (१३३) लम्बिता शकटी, शाकरं धुरन्धरं धुरि धवलं नियुङ्क्ष्व। यवपालित। प्रमदा. पिनक्षि. अक्षिणी किं ते स्फुटिते ?। हत हस्तिपक रे! (१३४) दोव्यसि करिकरदण्डे ?। समद सम्मर्द। कर्दमे खलसि ?। भ्रातर्भाव! विधुरबन्धो! उद्धर पङ्कात् अनडुाहम्। इत एहि (१३५) माणवक! घनेभघटामङ्ग-

---

वाहीं इति यावत निर्वहति—वोढं शक्नोति। अमुत,—अमुष्मात, मावीवात—माषकलायकेदात, ("तिल्यतैलीनवन्माषोमाकुभङ्गाल विरूपता" इत्यमर) द्राक—झटिति, मुखवासपूलक—किंचिमासमुखवासितत्वं घास मुखवास, तस्य पूलकं—गुच्छं, लुनीहि—छिन्धि।

(१३२) गताना—प्रस्थिताना, पशूनामिति शेष, यवसगत—यवस—घास एव, गत—गतिविषय तत्, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् इति भाव, पशवो यवस विना क्षणमपि जीवित नोत्सहन्ते इति को जानाति॥ इति भाव। षव!—नर! बलीवर्दपालक पुरुष! इत्यर्थ, ("षव पुमान् नरे धूर्ते पशौ इत्यानरेऽपि च" इति मेदिनी) बलीवर्दान्—वृषभान्, वारय—क्षेत्रघ्रवान् वारय इत्यर्थ, वाहीकरचित—परिपालकरचितम् ईषदपि भक्षयतो महाप्रमाद प्रसजेत इत्याशय।

(१३३) शकटी—क्षुद्रशकट लम्बिता—मार्गादधःस्खलितेत्यर्थं। धुरन्धर—भारवहनक्षममित्यर्थं, धवल—श्वेतकाय, शाकर—शक्कर एव शाकर त, युव युवान वा वृषभमित्यर्थ शक्करशब्दस्यापि वृषभवाचकत्व दृश्यते, तथाच षष्ठे ५८८ पृष्ठे शक्करशब्दस्य वृषभवाचकत्व, यथा—"शङ्करशङ्करशक्कर—" इति। धुरि—यानमुखे, ("धू स्त्री क्लीबे यानमुखम्" इत्यमर) नियुङ्क्ष्व—योजय इत्यर्थं। यवपालित! सम्बोधन पदमिदम्, प्रमदा.—स्त्रिय, पिनक्षि ?—दलसि ? पदनिक्षेपैर इति भाव [पिषै रौधादिकस्य रूपम्] स्फुटिते ?—विदीर्णे ? अन्ध किमु भवान ? इति भाव।

(१३४), करिकरदण्डे—हस्तिशुण्डादण्डे हस्तिशुण्डोपरि इत्यर्थं दीव्यसि ?—क्रीडसि ? समद!—मत्त इत्यर्थ, सम्मर्द! इति कस्यचित सम्बोधन, खलसि ?—पतसि ?। भाव!—मान्य! विधुरबन्धो!—दीनदयालो! अनडुाह—वृषभ।

(१३५) माणवक!—बालक! ("बालस्तु स्यान्माणवक" इत्यमर)'

सङ्कटे नास्ति निस्तरणम्" (१२६) इत्येवमादिप्रवर्त्तमानानेकसंलापं, (१२७) क्वचित् स्वेच्छाघटितोद्दामशस्यग्रासविघससुखसम्पन्नातपुष्टे केलिकोकिले किलकिलायमाने मेण्ठवण्ठरलम्बनलेखिकलुण्ठकचेटचाटचण्डालमण्डलैः आण्डीरे स्तूय-

---

घनेति।—घना—निबिडा, उम्भटा—इसितह, तस्या सङ्कटेन—सम्मर्द्देन, सङ्कट—सम्बाध तस्मिन निस्तरणं—निस्सार उद्धार इत्यर्थः ।

(१२६) "इत्येवमादिप्रवर्त्तमानानेकसंलाप"—"सीतमाव कटक जगाम" इत्युभयोरन्वय । इत्येवमादिप्रवर्त्तमानानेकसंलापम—इत्यादिप्रवर्तमानबहुविधसदयम।

(१२७) कटक विशिनष्टि, क्वचिदित्यादि। स्वेच्छेति।—स्वेच्छया—स्वच्छन्देन, घटितानि—रचितानि येषाम् समाहृत्य पुञ्जवदाधितिस्तवैन परिष्कृतानीत्यर्थः उद्दामानि—प्रबलानि प्रभूतानि इति यावत शस्यानि—धान्यादय तथा ग्रासा —यवसानि, तथा विघसा —भक्ष्याद्युपयोगशिष्टानि अन्नानि ("अथत विघसो यज्ञशेषभोजनशेषयो" इत्यमर ) परस्परलुण्ठनानि वा ते विविधप्रभूतैरात भाव, सुखेन—अनायासेन, सम्पन्नानि—सङ्गृहीतानि यानि अन्नानि—भोज्यानि तेभ्यो धान्यादिक हृत्वा लब्धानि भक्ष्याणि इत्यर्थः, न पुष्टा —पूरितोदरा ते केलिकोकिले —क्रीडार्थे कोकिले कोकिलवत्कलेति यावत, परान्नपुष्टत्वादिति भाव, [ "केलिकोकिले" इत्यत्र "किलिकले" इति पा०—क्रीडाविधौ प्रहसनपरैरित्यर्थः, सम्भावि भवे ] किलकिलायमाने —अतिशोरयात किलकिलाशब्द कुर्वद्भिरित्यर्थं आण्डीरे —प्रगल्भे मुष्कवद्भिर्वा अण्डानि—पुंसामङ्गावयवविशेषा ते नि सन्ति एषामिति व्युत्पत्त्या [ "काण्डाण्डादीरन्नीरचौ" (५।२।१११ पा०) इत्यण्डशब्दादस्त्यर्थे ईरच। "आण्डीरै" इत्यत्र 'राण्डैरै' इति पाठे—राण्डीरै —रण्डापुत्रै रण्डा—विधवा स्त्री ( "रण्डा मूषिकपर्ण्याञ्च विधवायाञ्च योषिति" इति मेदिनी ) एतत्पक्ष रण्डाशब्दात प्रशार्थे ईरन प्रत्यय इति मल्लेन यत्—रण्डाशब्दात् 'काण्डादिभ्य' (४।१।९६ पा०) इति दात्र राण्डिरिति सिद्ध तमीरत्ति पुत्रानि इत्यत्र ईरयने पचादित्वादचि रूपमिति ज्ञेय रण्डापुत्रपोषकैरिति तदर्थ ] मेण्ठेति।—मेण्ठा —हस्तिजागरिका एतच्छब्द प्रागसिद्धत्वात 'मेठा' 'मेण्ठा' वा इति मन्वामहे, तथात्वे तन्मता तदर्थ इति ज्ञेय,

शिव सेवा करोतु, स्वस्ति (१४१) सर्व्वदुःखकूटाय वाटकाय" इति दुर्विधकुलपुत्रकैः निन्द्यमानं, क्वचित् (१४२) अतितीक्ष्णसलिलस्रोतःपातिनीगतैः इव ग्रथितैः इव पङ्क्तिभूतैर्जनैः अतिद्रुतं द्रवद्भिः (१४३) कणकठिनस्कन्धगुरुलगुडैः गृहीतसौवर्णपादपीठीकरङ्ककलशपतद्ग्राहावगाहैः (१४४) प्रत्यासन्नपार्थिवोपकरणग्रहणगर्व्वदुर्वारैः सर्व्वमेव बहिः-

---

(१।२।११२ पा०) इत्याशिषर्थ ] भवतु—सम्पद्यताम्, संसारे भूतिं भजतु इति भावः। सेवा—भक्तिभावः, शिव—मङ्गलम्, करोतु—विदधातु।

(१४१) सर्व्वदुःखकूटाय—समस्तक्लेशसङ्घातकपायेत्यर्थः, वाटकाय—सैनिकाय, सैनिकजनाय इति भावः, स्वस्ति—शुभम्, अस्त्विति शेषः, ("नमःस्वस्ति—" (२।३।१६, पा०) इत्यादिना चतुर्थी। "शिव सेवा वाटकाय" इत्यत्र "शिवसेवां करोतु खलु सर्व्वदुःखकूटाय वाटकाय" इति पाठे—शिवसेवा—शिवाराधना, सर्व्वदुःखकूटाय वाटकाय स्वस्ति करोतु इत्यन्वयः शिवसेवा सैनिकजने रक्षतु लोकानिति भावः ]। दुर्विधेति।—दुर्विधाः—दरिद्राः, ('स्तु खलु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः) कुलपुत्रकाः,—कुलक्रमागतसेवका इत्यर्थः तैः। ["दुर्विधकुलपुत्रकैः" इत्यत्र "दुर्विधःप्रकुलपुत्रकैः" इति पाठान्तरम् ]।

(१४२) अतितीक्ष्णेति।—अतितीक्ष्णम्—अत्युग्रम्, अतिवेगवदित्यर्थः, यत् सलिलस्रोतः,—जलप्रवाहः तत्र पातिनी—पतन्ती, नौः—तरणिः गताः,—अधिष्ठिताः तैरिव। ग्रथितैरिव—गुम्फितैरिव लोकाधिक्यादविरलभावेनावस्थितैः द्रुतगामिभिरिति भावः। पङ्क्तिभूतैः,—श्रेणीबद्धैः, द्रवद्भिः,—गच्छद्भिः।

(१४३) कणेति।—कणेषु—नियतभारोद्वहनात् श्यामीभूतेष्वित्यर्थः, कठिनेषु—दृढेषु, स्कन्धेषु—अंसदेशेषु, गुरवः,—महान्तः, लगुडाः,—दण्डानि येषां तैः। गृहीतेति।—गृहीताः,—धृताः, सौवर्णपादपीठ्यः,—काञ्चनपादपीठानि, करङ्काः,—ताम्बूलभाजनानि च, कलशाः,—कुम्भाश्च, तथा पतद्ग्राहाः,—पतता—मुखादिभ्य स्रवता, जलादीनामिति शेषः ग्राहः—ग्रहणं यत्र ते, निष्ठीवनपात्राणि इत्यर्थः ("प्रतिग्राहः पतद्ग्रहः" इत्यमरः) येषां अवगाहाः,—सान्द्रीभावा ये तथाभूतैः।

(१४४) प्रत्यासन्नेति।—प्रत्यासन्नस्य—निकटस्थस्य, पार्थिवस्य—राज्ञः उपकरणानाम्—आसनादीनाम्, ग्रहणेन—धारणेन, वहनेनेत्यर्थः, ये गर्व्वाः,—

कारयद्भिः भूपतिभृतकभारिकैः महानसोपकरणवाहिभिश्च (१४५) बद्धवराहवध्रवार्ध्रीणसैः (१४६) लम्बमानहरिणचटुकचटकजूटजटिलैः शिग्रुशाककशाकपत्रवेत्राग्रसङ्कटसङ्ग्राहिभिः (१४७) शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभाण्डैः

कदशारा, यत्र लोकभग्ना इत्येवरूपा इति भावः तैः, दुर्वारा —वारयितुमशक्या, उद्धता इति यावत् तैः । सर्वमेव, जनमिति शेषः, अपि कारयद्भिः,—निरस्यद्भिरित्यर्थः, पदगर्वेण वचसा इवेति भावः । भूपतिभृतकभारिकैः,—भूपतेः,—राज्ञः, भृतकाः—भरणापर्याणि धनादिकामित्यर्थं तस्य भारिकाः,—भारवाहिनः तैः । महानसोपकरणवाहिभिः,—महानसे—पाकशालायां, ("रसवत्यान्तु पाकस्थानं महानसे" इत्यमरः) यानि उपकरणानि—द्रव्यसम्भाराः, तानि वहन्ति—नयन्ति ये तैः, रन्धनसामग्रीवाहकैरित्यर्थः ।

(१४५) बद्धेति ।—बद्धानि—सङ्कीर्णानि, वराहवध्राणि—शूकरचर्माणि, शूकरचर्मनिर्मितरज्जुविशेषा इत्यर्थः, तथा वार्ध्रीणसाः,—पक्षीयच्छागविशेषाः तच्चर्माणि वा यैः तथाभूतैः । ["बद्धवराहवध्रंवार्ध्रीणसैः" इत्यत्र "बद्धवराहवध्रवार्ध्रीणस" इति पाठान्तरम् ]।

(१४६) लम्बमानेति ।—लम्बमानाः,—स्कन्धे धारणादिति भावः, हरिणस्य—मृगविशेषस्य चटुकाः,—पूर्वभागाः, चटकाः,—पक्षिविशेषाश्च तेषां जूटैः,—समूहैः, जटिलाः —युक्ताः तैः । शिग्रुविति ।—शिग्रवः,—अन्यन्यवयसः, शाककाः,—नगभेदाः, शाकपत्राणि—शाकानां—हरितकानां, अग्रसमीपस्थितद्रव्याणामित्यर्थः, ("अस्त्री शाकं हरितकम्" इत्यमरः) पत्राणि—पर्णानि, वेत्राग्राणि—वेत्राङ्कुराः, वानीराख्यलताग्रभागा वा, तेषां सङ्कटे—समाहृतौ, ("समाहृतिस्तु सङ्ग्रह" इत्यमरः) निपुणा ये सङ्ग्राहिणः,—सञ्चयकारकाः तयोक्त । वेत्राङ्कुरशैत्यपादनप्रयत्नानि स्वादवन्ति बहुलानि देशविशेषे बहुहृतानि दृश्यन्ते, तत्र शिग्रुशाककशाकैः तस्य सहयोगो न विषमशीलगणस्य इत्यवधेयम् ।

(१४७) शुक्लेति ।—शुक्लेन श्वेतेन, कर्पटेन—वसनेन प्रावृतम्—आच्छादितं, मुखं -वदनं येषां तानि, तथा एकदेशे—एकस्मिन् विभागे, दत्ता—निहिता, आर्द्रा —अभिनवेति भावः, मुद्रा—चिह्नविशेषः येषां तानि, अत एव गुप्तानि—अप्रकाशानि, सुरक्षितानीत्यर्थः ; यद्वा —शुक्लकर्पटप्रावृतमुखस्य एकदेशे—एकस्मिन् भागे, ग्रन्थिबन्धनस्थाने इत्यर्थः, दत्तया आर्द्रया मुद्रया गुप्तानि, राजपेयतया विषप्रयोगादिभयादिति भावः, गोरसभाण्डानि—गव्यपात्राणि ये तथाभूतैः । एतेन प्रभुप्रयुक्तैः पुरुषैः गूढचारिभिः

(१४८) तलकतापकतापिकाहस्तकताम्रचरुकटाहसङ्कटपिटकभारिकैः समुत्साध्यमानपुरोवर्त्तिजनं, क्वचित् (१४९) "कोऽयो-ऽस्माकं, फलकाले अन्य एव विटाः समुपस्थास्यन्ते" इति मुखरैः पदे पदे पततां दुर्बलबलीवर्दानां खेटने नियुक्तैः खेटचेटकैः (१५०) खिद्यमानासंविभक्तकुलपुत्रलोकं, क्वचित् (१५१) नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं,

---

विजिगीषुणा भोग्यग्रामीणादौ किञ्चित् छिद्रमवाप्य विग्रहादिक कर्त्तव्यमिति सूचितम्।

(१४८) तलकेति।—तलक,—पाषाणकटिका, लौहतुलीति ख्यात, तापक,—ताम्रादिनिर्मित सूपादिकरणपात्र, तापिका—काष्ठपालिका, यत्र तैलादिभि भक्ष्याणि परिपच्यन्ते, "कटाहजातीय" इति मन्यते, हस्तक,—सूत्र, मांसादिपाकसाधनमिति भाव, ताम्रचरुकटाह,—ताम्रनिर्मितपायसादिपाकार्थं कटाहविशेष इत्यर्थ, सङ्कटपिटक,—क्षुद्रभाण्ड, तेषा भारिका,—भारवाहिन तै, समुत्साध्यमानेति।—समुत्साध्यमाना,—दूरीक्रियमाणा, पुरोवर्त्तिन,—अग्रस्थायिन, जना,—लोका यस्य यत्र वा तथाभूतम्।

(१४९) कोऽयोऽस्माक, बलीवर्दगाहनादिना इति भाव, किन्तु फलकाले—पुरस्कारलभ्यफलप्राप्तिसमये विटा,—धूर्त्ता समुपस्थास्यन्ते—सन्तोषयिष्यन्ते, प्रभुम् इति शेष, न वयमिति भाव, मुखरै,—वाचालै, पदे पदे—प्रतिपदक्षेपे, पतता—स्खलता, दौर्बल्यादिति भाव, दुर्बलबलीवर्दाना—क्षामवृषाणा, खेटने—प्रेरणे, चालने इति यावत, ["खेटने" इत्यत्र "खलने" इति पाठे,—खलने—स्खलनादुद्धरणे इति भाव] नियुक्तै,—आदिष्टै। ["खेटने नियुक्तै" इत्यत्र "नियुक्तै खेटने" इति पाठान्तरम्]। खेटचेटकै,—पालकभृत्यै, ["खेटचेटकै" इत्यत्र "स्खलचेटकै" इति पाठे—स्खलचेटकै,—दुष्टभृत्यैरित्यर्थ ]।

(१५०) खिद्यमानेति।—खिद्यमाना—क्लेश्यमाना, चेटैरसम्भ्रान्ता इति भाव, असंविभक्ता,—कर्मविशेषेण सम्यगदत्तविभागा, विशेषकर्मवाह्या इत्यर्थ, कुलपुत्रलोका,—कुलक्रमागतसेवकजना यस्य यत्र तथोक्तम्।

(१५१) नरपतेरिति।—नरपते,—राज्ञ, दर्शने—अवलोकने, यत् कुतूहलम्—कौतुकं तस्मात्, उभयत,—उभयो पार्श्वयो, कटकस्येति भाव,

(१५२) मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैः (१५३) उपायनीकृतदधिगुडखण्डकुसुमकरण्डैः घटितपेटकैः सरभसं समुत्सर्पद्भिः (१५४) प्रकुपितप्रचण्डदण्डिविवासनविद्रुतैः दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्र-

---

प्रजविनेति।—प्रजविन—सवेगं यथा स्यात्तथा, प्रधाविता,—चलिता ग्रामेयका,—ग्राम्या, जानपदा,—जना यस्मिन् तथाभूतम्। ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी)।

(१५२) मार्गग्रामेति,—मार्गे—प्रयाणमार्गसमीपे स्थिता इत्यर्थ, ये ग्रामा,—संवसथा, विप्रादिवर्णप्राया प्राकारपरिखादिरहिता बहुजनवसतय इत्यर्थ, ("संवसथ ग्रामौ" इत्यमर) तेभ्य निर्गता,—निःसृता तै, आग्रहारिकजाल्मै,—आग्रहारिका,—अग्रहारभूमिनियुक्ता, यद्वा,—अग्रहाराऽग्रभागे नियत दीयते येभ्य इति व्युत्पत्त्या अग्रहारब्राह्मणा ठाकुर इत्यर्थ, अयथाचीर्णविप्रा इत्यर्थ तेषु जाल्मा,—निर्बोधा पुरुषा तै। पुरःसरेति।—पुरःसर,—अग्रगे, जरद्भि,—स्थविरै, महत्तरै,—महाजनै, उत्तम्भिता—ऊर्ध्वीकृता अम्भःकुम्भा,—जलपूर्णकलशा यै त यात्रिकशुभसूचनार्थमिति भाव।

(१५३) उपायनीकृतेति।—उपायनीकृतानि—उपढौकनत्वेन दत्तानि, राज्ञे इति भाव दधीनि—क्षीरान्तरावस्थाभावा, ("दधि क्षीरान्तरावस्थाभावे श्रीवासवासयो" इति मेदिनी) गुडा,—इक्षुपाकभेदा, ("गुडौ गोलेक्षुपाकयो" इत्यमर) खण्डा,—फाणितानि इक्षुविकारविशेषा इत्यर्थ ("मत्स्यण्डी फाणितं खण्डविकारे" इत्यमर) कुसुमानि—पुष्पाणि, एषां करण्डा—भाजनानि यै तथाभूतै। [ 'कडङ् कुसुमभञ्ज' (उ० १ पा० १२८ सू०) इति डङ्गोऽवम ] घटितपटकै,—कस्मिन् कदम्बे, श्रीवर्धनस्येव, यद्वा,—उपायनीकृतानां दध्यादीनां करण्डै,—पात्रै, घटिता—पूरिता इत्यर्थं पेटका,—मञ्जूषा येषां, ("पेटक पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी)। सरभसं—सवेगं, समुत्सर्पद्भि—समुपगच्छद्भि, अहमहमिकया अन्यस्मादग्रत एव राजदर्शनाभिलाषात् इत्याशय।

(१५४) प्रकुपितेति।—प्रकुपितानाम्—अतिक्रुद्धानां, प्रचण्डानाम्—उग्राणां, दण्डिनां—वेत्रपाणीनं, विवासनेन—भयप्रदर्शनेन, विद्रुतै,—पलायितै। दूरगतैरपि—सुदूरमपसृतैरपि। स्खलद्भिरपि—भ्रश्यद्भिरपि। नरेन्द्रेति।—नरेन्द्रे—

निहितदृष्टिभिः (१५५) असतोऽपि पूर्व्वभोगपतिदोषानुद्भावयद्भि अतिक्रान्ताऽऽयुक्तकशतानि च शंसद्भिः (१५६) विरल्लनघाटापराधाख्याभिदधानैः उद्धूयमानधूलिपटलं, क्वचित् (१५७) एकान्तप्रवृत्ताक्षवारचक्र चर्व्यमाणागामि गौडविनिर्गमार्ग शस्य-सरसहस्रम्, (१५८) अपरे आदिष्टपरिपालकपुरुषपरितुष्टैः

---

राजनि हर्षे, निहिता,—न्यस्ता, दृष्टय,—नेत्राणि यै तै ; राजपुरुषकरदर्शनाभ्युत्थानार्थं तातोलि हर्षदृष्टार्थमभिनिवेश्य चक्रुरात् महाराजकर्मकुतूहलस्य चरमोत्कर्षं सूच्यते ।

(१५५) असतोऽपि—मिथ्याभूतानपीत्यर्थ, पूर्वेति ।—पूर्वे—प्राग्वर्त्तिन ध्वय, ये भोगपतय,—ग्रामाध्यक्षनाधिकारस्थ, तेषां दोषान—निन्दा इति यावत, उद्भावयद्भि,—प्रकटयद्भि । अतिक्रान्तेति ।—अतिक्रान्तानां—पूर्व्ववर्त्तिनाम्, आयुक्तकानां—अन्यायि सत्यक आयुक्तानां, शतानि—समूहान् शंसद्भि —उद्घोषयद्भि, गुणवतो दोषवतो वा इति भाव , यद्वा,—अतिक्रान्तानि—गतानि, आयुक्तकानाम—आयुक्तव्यवहाराणां, शतानि—समूहान शंसद्भि —कथयद्भि ।

(१५६) विरल्लनेति ।—विरल्लना,—अतिविरलस्थायिन, [“स्राय विरल—” (४।१।२१ पा० ) इत्यादिना ल्यु गुडागमश्च ] ये घाटा —धूर्त्ता, तेषाम अपराधा, —दोषा तान, अभिदधानै —कथयद्भि, उद्धूयमानेति ।—उद्धूयमानानि—उत्क्षिप्यमाणानि, उत्कटपदचलनेनेति भाव, धूलीनां—पांशूनां, पटलानि—निचया यत्र तथाभूतम ।

(१५७) एकान्तेति ।—एकान्तप्रवृत्तानाम—अतिद्रुतचलितानाम, अक्षवाराणाम् —अश्वारोहिणां, चक्रे,—समूहे, चर्व्यमाणानि—भक्ष्यमाणानि आगामिषु—आगत प्रायेषु सम्मुखावस्थितेष्वित्यर्थ, गौडेषु—गौडदेशेषु, विनिर्गमाय ।म—प्रस्थानमार्गाणि, अनुमस्थानलभ्यानीति यावत् शस्यानां—धान्यकादीनामिति यावत, सरस्यानि—सरसानि, सरसस्तनसस्यानि इति यावत यस्य तथोक्त, “तदभिहितो भावो द्रव्यवत् प्रकाशते” इति न्यायादिति भाव , गौडे सङ्ग्रामकाले भवधार्थं जानपदै सञ्चितानि शस्यानि अश्वारोहैश्च भक्षितानि इति तात्पर्य्यम ।

(१५८) अपरे,—अन्य, पुरुषैरिति शेष, आदिष्टेति ।—आदिष्टा,—एते परिपाल्या इति राज्ञा निर्द्दिष्टा, परिपालका,—परिपालयन्ति—सम्यक पोषयन्ती त्येव इति तथाभूता, ये पुरुषा,—लोका, तेषु परितुष्टा,—सन्तोष गता ते,

"धर्मः प्रत्यक्षो देव." इति स्तुतीः आतन्वद्भिः अपरैः (१५९) लूय-मानानिष्पन्नशस्यप्रकटितविषादैः क्षेत्रभुजां सकुटुम्बैरेव निर्गतैः (१६०) प्ररूढप्राणच्छेदैः परितापत्याजितभयैः "क्व राजा ? कुतो राजा ? कीदृशो वा राजा ?" इति प्रारब्धनरनाथनिन्दैः, (१६१) शशकैरिव पदे पदे प्रजविप्रसृतदण्डपाणिपेटकानुबद्धैः गिरिगुडकैः इव हन्यमानैः इतस्ततः सञ्चरद्भिः अपरैः युगपत् पर्यापतित-

[ "पादगुडे" इत्यत्र "अपादगुडे" इति पाठान्तरम्, एतत्पक्षे "धर्मः प्रत्यक्षो देव" इति व्याजस्तुतिरवगन्तव्या, देव,—सम्राट् त्वं प्रत्यक्षो धर्म,—विग्रहवान् धर्म एव, भवतीति शेष, न तस्य दोषलेशोऽपि दृश्यते, यतो दुर्गतानस्मान् सम्यक् पालयितु-मादिदेश, अधिकृतास्तु परमदुर्जना, ते पुन सर्वानेव सधारानात्मसात् कृत्वा अस्मिन्नाम् क्षपयन्ति इति भाव ] स्तुती,—शंसान प्रशंसावादानित्यर्थं, आतन्वद्भि,—कुर्वद्भि ।

(१५९) लूयमानेति ।—लूयमाने,—छिद्यमाने, सैनिकसङ्घैरिति भाव, अत एव अनिष्पन्ने,—अपक्वीभूते, शस्ये,—व्रीहियवगोधूमादिशस्येऽरित्यर्थं, प्रकटित,—प्रकाशित विषाद,—विषण्णता, कातरता इति यावत् यैः येषा वा तथाभूतै, क्षेत्रभुजां —क्षेत्राणां शस्यनाशजनितशोकेन इति यावत, सकुटुम्बैरेव—सपरिवारैरेव ।

(१६०) प्ररूढेति ।—प्ररूढ,—सञ्जातप्राय प्राणानां—जीवनानां प्राणहेतु-भूतशस्यानामिति यावत्, यद्वा—प्ररूढानाम—अङ्कुरितानां, फलितानामिति यावत्, प्राणानां—जीवनधारणहेतुभूतशस्यानामिति यावत् छेद,—कर्त्तनं, नाश इत्यर्थं येषां तथाभूतै चेद्रक्षणाय तेषां प्राणानामत्युन्थद्दुःखदायक इति भाव । [ "प्ररूढप्राण-च्छेदै" इत्यत्र "प्ररूढच्छेदै" इति पाठे —प्ररूढ,—जात, छेद पक्वानामिव इति भाव येषां तथाभूते ]। परितापेति ।—परितापेन—शस्यनाशदुःखेन, त्याजित—मोचित, भयं—त्रासं सैन्यादिभ्य इति भाव येषां तथाभूतै, निर्भयैरिति भाव । कुत,—कस्मात्, कस्माद्देशादागतोऽयं राजा ? इति भाव । प्रारब्धेति ।—प्रारब्धा —उपक्रान्ता, नरनाथस्य—राज्ञ निन्दा—दोषकीर्त्तनं यत्र यैः वा तथोक्तम ।

(१६१) "शशकै" इत्यस्य "आयुधो बलात क्षतकलकलम्" इत्यनेनान्वय । शशकान् विशिनष्टि, प्रजवीति ।—प्रजविन,—प्रकृष्टवेगशालिन, प्रसृता,—उद्यता यै दण्डपाणय,—वेत्रधारिण पुरुषा, तेषां पेटकेन—कदम्बकेन, समूहेन इत्यर्थ, अनुबद्धा,—अनुसृता तै । गिरिगुडकै इव—पाषाणलोष्ट-इव, हन्यमानै,—ताड्यमानै । युगपत्—समकाले, पर्यापतितै,—समुपस्थितै,

रितवासजालजालकितजघनैश्च (१६६) पुराणपर्य्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णामकलशिथिलमलिनमलकुथैश्च (१६७) प्रभुप्रसादीकृतपाटितपटच्चरचलच्चोलकधारिभिश्च धावमानैः उद्धूयमानधूलिपटलं, क्वचित् (१६८) एकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविग्रहं, क्वचित्

---

ग्रामवाहिभिश्च इत्यर्थ, कुथेति।—कुथेन—कडङ्करेण, पश्वादिदुष्पेयर्थं, ("कडङ्करो बुस क्लीबे" इत्यमर) तथा धूलिभि,—पांशुभि, धूसरितानाम—आकीर्णलादीषत्पाण्डुवर्णानां, वाससां—वस्त्राणां, जालेन—समूहेन, जालकितानि—सञ्जातजालानि इव लक्ष्यमाणानि जघनानि—नितम्बभागा इत्यर्थं येषां तै।

(१६६) पुराणेति।—पुराणस्य—पुरातनस्य, पर्य्याणस्य—पल्ययनस्य, एकदेशे—एकस्मिन्नंशे पश्चाद्देशे इति यावत्, दोलायमानानि—लम्बमानानि, दात्राणि—घासच्छेदनास्त्रविशेषा येषां तै। शीर्णेति।—शीर्णानि—क्षीणानि, जीर्णानि इति यावत्, ऊर्णानां—मेषादिलोम्नाम् ("ऊर्णा मेषादिलोम्नि" इत्यमर) शकलानि—खण्डानि, न शिथिला,—दृढा इत्यर्थं, सुविरला इति भाव, मलिना,—मलदिग्धा, मलकुथा —(हस्त्यास्तरणानि, अश्वपर्यङ्कस्थला इत्यर्थं येषा तै, ("प्रवेण्यास्तरण वर्णं परिस्तोम कुथो द्वयो" इत्यमर)। क्वचित् "मलकुथा—मलपट्टी इतिविशिष्ट" इति व्याख्यातवान्।

(१६७) प्रभ्विति।—प्रभुणा—स्वामिना, प्रसादीकृत—कृपया दत्त, पश्चात् पाटित—छिन्न यत पटच्चर—जीर्णवस्त्र, ("पटच्चर जीर्णवस्त्रम्" इत्यमर) तस्मात् चलन्—भ्रश्यन् यत् चोलक—वस्त्रखण्ड तत् धारयन्ति—वहन्ति, चक्र इति भाव ये तथाक्तै। धावमानै,—द्रुत गच्छद्भि, धाविभिरिति पूर्वोक्तेनान्वय, उद्धूयमानेति।—उद्धूयमानानि—उत्क्षिप्यमाणानि द्रुतगमनपदपातादिति भाव, धूलिपटलानि—पांशुसमूहा, मार्गगतानीति भाव यत्र तथोक्तम।

(१६८) एकान्तेति।—एकान्तप्रवृत्तै—एकस्मिन्नंशे अवस्थितैरित्यर्थं, अश्ववारचक्रे—सादिसमूहै चर्व्यमाण,—भक्ष्यमाण पुन पुन आलोच्यमान इति यावत्, आगामी—अचिरभावी, गौडविग्रह,—गौडराजेन सह युद्ध, युद्धस्य शुभाशुभमित्यर्थं, आगामिनि गौडयुद्धे क पराजयिष्यते इत्येवम्प्रद इति यावत यत्र तथोक्तम, यद्वा,—आगामिन,—युद्धाय तूर्णमागमिष्यत, तत्तद्युद्धोद्यमस्येति भाव, गौडस्य—गौडाधिपस्य, विग्रह,—शरीर यत्र तथोक्तम्।

तया कौतुकजननं, प्रलयजलधिम् इव (१७३) जगद्ग्रास-ग्रहणाय प्रवृत्तं, पातालमिव महाभोगिनां गुप्तये समुत्पादितं, कैलासमिव परमेश्वरवसतये सृष्टं, (१७४) दृश्यमानसकल-प्राणिपर्य्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां, क्लेशबहुलमपि तपःकरणमिव क्रमकारणं कल्याणानाम्, एवञ्च वीक्ष्यमाणः कटकं जगाम ।

(१७५) आसन्नवर्त्तिनाञ्च तत्रभवतां,—"मान्धाता प्रवर्त्तिताः

---

व्याप्यमानाश्चर्य्यमिति भावः, अनेकव्यापारतया—बहुव्यापारतया, उत्कर्षेण इति भावः, कौतुकजननं—चमत्कारावहम् ।

(१७३) प्रलयजलधिमिव—कल्पान्तकालीनसमुच्छलितसमुद्रमिव, जगदिति ।—जगदेव—भुवनमेव, ग्रासः,—कवलः, तस्य ग्रहणाय—स्वीकरणाय, ग्रासनाय इत्यर्थः, सर्वजगदात्माधीनीकरणाय सर्वजनसम्बन्धनाय च इति यावत् । महाभोगिनां—महान्तः,—महात्मान इत्यर्थः, भोगिनः,—सुखभोगरताः लोकाः, सर्पाश्च तेषां, गुप्तये—रक्षणाय, समुत्पादितं—सुविहितं, रचितमिव इत्यर्थः, दुर्लङ्घ्यामत्याचारात् लोकान् वास्तु सङ्घटितमिति समुदितार्थः । परमेश्वरवसतये—परमेश्वरः,—हर्षः, हरश्च, तस्य वसतये—स्थितये ।

(१७४) प्रजापतीनां—ब्रह्मादीनां, चतुर्युगेति ।—चतुर्णां—चतुःसङ्ख्यकानां, युगानां—सत्यादीनां, समाहृतानामिति भावः, सर्गकोशमिव—सृष्टिस्थानमिव, दृश्यमानेति ।—दृश्यमानाः,—ईक्ष्यमाणाः, सकलानां—सर्वेषां, प्राणिनां—जीवानां, पर्य्यायाः,—क्रमाः, प्रकारभेदा इत्यर्थः, यत्र,—पर्य्यायः,—परि—समन्तात्, आयः,—आगमनं यत्र तथोक्तं, सर्वप्राणिसमाकीर्णमिति यावत् । तपःकरणमिव—तपश्चरणमिव, सिद्धिलाभजनकत्वादिति भावः । क्रमकारणं—क्रमेण श्रेयसां साधनं, दुर्लभोपद्रवनिवारकत्वेनेति भावः । ["क्रमकारणम्" इत्यत्र "क्रमकारिणम्" इति पाठे,—क्रमः,—क्रमः, शक्तौ परिपाट्यां, यद्वा,—क्रमः,—अनुक्रमः, उपक्रम इत्यर्थः, ("क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी) तस्य कारी तम् ।

(१७५) "आसन्नवर्त्तिनाम्" इत्यस्य "इत्थमाश्रयान्··· आलापान् पार्थिवकुमाराणाम् शाखबलिना शृण्वन् एव आससाद आवासम्" इत्युत्तरेण सम्बन्धः ।

पन्थानो दिग्विजयाय। (१७६) अप्रतिहतरथरंहसा रघुणा लघुना एव कालेन अकारि ककुभां प्रसादनम्। शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजनधनमदावलिप्तानां भूभुजां पाण्डुः। (१७७) पाण्डवः सव्यसाची चीनविषयम् अतिक्रम्य राजसूयसम्पदे (१७८) क्रुध्यद्गन्धर्वधनुष्कोटिटाङ्कारकूजितकुञ्जं हेमकूटपर्व्वतं पराजैष्ट।

---

आसन्नेति।—आसन्नवर्तिनाम्—अन्तिकचराणाम्, नवभवता—मान्धाता, पार्थिवकुमाराणामित्यनेनान्वयः। आलापप्रकारमाह, मान्धातेति।—मान्धाता—युवनाश्वसुतेन सूर्यवंशीयेन राज्ञा, दिग्विजयाय—सर्वदिगवस्थितानां राज्ञां पराभवायेत्यर्थः, पन्थान,—सरणयः, दृष्टान्ता इति यावत्, प्रदर्शिता,—प्रदर्शिता इत्यर्थः।

(१७६) अप्रतिहतरथरंहसा—अप्रतिबद्धस्यन्दनवेगेन। लघुनैव—अल्पेनैव, कालेन—समयेन, ["प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया] ककुभा—दिशां, प्रसादन—दुष्टराजशासनजनितकण्टकापनोदनेन प्रसन्नताविधानमित्यर्थं, वशीकरणम् इति यावत्। शरासनद्वितीय,—धनुर्मात्रसहाय, अन्यसाहाय्यानपेक्ष इति भाव, पाण्डु,—युधिष्ठिरादीनां जनक, क्रमागतेति।—क्रमागतस्य—पितृपितामहादिभ्य प्राप्तस्य भुजबलस्य—बाहुवीर्यस्य, अभिजनस्य—वंशमर्यादाया, धनानाम्—अर्थानाञ्च, मदेन—गर्वेण, अवलिप्ता,—उद्धता तेषां, भूभुजा—राज्ञां, चक्र—मण्डलं, करदीचकार—शासनाधीनं विदधे।

(१७७) सव्यसाची—सव्येन—वामेन, वामहस्तेनापीति यावत्, सचति—वर्षति, बाणान् विकिरति इत्यर्थं य स, पाण्डव,—अर्जुन इत्यर्थ, राजसूयसम्पदे—तदाख्ययज्ञभेदसम्पत्तिनिमित्तं, राजसूययज्ञसम्पादनोचितधनार्थमित्यर्थं, [राज्ञा सूयते असौ राजसूयः क्रतु इत्यर्थे "राजसूयसूर्य—" (३।१।११४ पा०) इति सूत्रेण क्यबन्तो निपात्यते] चीनविषय—चीनराज्यम्, अतिक्रम्य—निर्जित्येत्यर्थ।

(१७८) क्रुध्यदिति।—क्रुध्यतां—कुप्यतां गन्धर्वाणां—देवयोनिविशेषाणां, धनुष्कोटि,—कार्मुकाटने, टाङ्कारेण—ज्यानिस्वनेन, कूजिता,—शब्दिता, कुञ्जा,—निकुञ्जा, लतादिपिहितस्थानानीत्यर्थ यस्य तथोक्तं, ("निकुञ्ज-कुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमर) हेमकूटपर्वत—सुमेरुपर्वताधिवासिनं गन्धर्वसमूहमिति यावत्, पराजैष्ट—जितवान्, जयतेर्लुङि रूप, ["विपराभ्यां जे" (१।३।१९ पा०) इति आत्मनेपदम्]।

(१७९) सङ्कल्पान्तरितो विजयः तरस्विनाम्। (१८०) सहिमहिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरं करं कौरवेश्वरस्य किङ्कर इव भ्रमती द्रुमः। (१८१) नातिजिगीषवः खलु पूर्वे येन अल्प एव भूभागे भूयांसो भगदत्त-दन्तवक्र-क्राथ-कर्ण-कौरव-शिशुपाल-साल्व-जरासन्ध-सिन्धुराजप्रभृतयोऽभवन् भूपतयः। (१८२) सन्तुष्टो राजा युधिष्ठिरः, यो हि असहत समीप एव धनञ्जयजयजनितजगत्त्रास्यः किम्पुरुषाधर

---

(१७९) तरस्विनां—वीर्यशालिनां, विजयः—शत्रुपराभवः इति यावत्, सङ्कल्पान्तरितः,—मननमात्रव्यवहितः, सङ्कल्पमात्रसाध्य इत्यर्थः, सङ्कल्पमात्रव्यवहितो हि विजयः तेजस्विनामिति फलितार्थः। विजिगीषुणा विजये सङ्कल्पादन्यत् किमपि इतिकर्तव्यमुत्पादयितुं न शक्नोति, सङ्कल्पात् परमेव से कार्यं सम्पादयन्तीति भावः।

(१८०) सहिमेति।—सहिमेन—तुषाराकीर्णेन, हिमवता—हिमाद्रिणा, व्यवहितः,—अन्तरितः, दुर्जयोऽपि इति भावः, बाहुबलव्यतिकरकातरः—भुजवीर्य-सम्बन्धर्षित इति यावत्, भ्रमती—भ्रमन्, दुर्वन्त इत्यर्थः, द्रुमः,—तदाख्यः किन्नरनरपतिः कौरवेश्वरस्य—दुर्योधनस्य, करं—राजग्राह्यभागम्, उवाह—वहति स्म, दुर्गमप्रदेशस्थमपि द्रुमं तेजस्वी दुर्योधनः सङ्कल्पमात्रेणैव करदं चकारेति समुदितार्थः।

(१८१) पूर्वे—पुरातनाः राजानः नातिजिगीषवः,—नातिविजयाकाङ्क्षिणः इत्यर्थः, आसन्निति शेषः, येन—येन हेतुना, नातिजिगीषुतयेत्यर्थः, अल्पे एव भूभागे—अदूरवर्तिप्रदेशमध्ये अल्पीयसि भूमिभागे इत्यर्थः, भूयांसः,—अतिबहवः, भगदत्तः,—प्राग्ज्योतिषाधिपतिः दुर्योधनश्वशुरः, दन्तवक्रः,—कृष्णद्वेषिनृपविशेषः, क्राथः,—नृपविशेषः कर्णः,—अङ्गाधिपः दुर्योधनसुहृत्, कौरवः,—दुर्योधनः, शिशुपालः—चेदिराजः कृष्णद्वेषी, साल्वः—सौभाधिपतिः, जरासन्धः,—मगधाधिपतिः, सिन्धुराजः,—जयद्रथः तत्प्रभृतयः,—तदादयः, एतेषां जिगीषुत्वे च अल्पीयसि भूभागे एकस्यैव भूपतित्वं स्यादिति फलितार्थः।

(१८२) युधिष्ठिरः—राज्ञः पाण्डोः ज्येष्ठसुतः, [युधि स्थिर इति अलुक्समासे "गवि युधिभ्यां स्थिरः" (८।३।९५ पा०) इति सत्वम्] सन्तुष्टः,—अल्पेनैव मुदितः इत्यर्थः, अजिगीषुरपि वीतस्पृहतया कारुण्यपूर्णतया वा हिंसाबहुले दण्डविधौ अलस

राज्यम्। अलसः चण्डकोपो यो न प्राविचत् क्ष्मां जित्वा स्त्रीराज्यम्। (१८३) क्लीब एवान्तरं तुषारगिरि-गन्धमादनयोः उत्साहिनः। किष्कुः तुरुष्कविषयः; (१८४) प्रादेशः पारसीकदेशः, शशपदं शकस्थानम्; अदृश्यमानप्रतिप्रहारं

---

इति भावः, धनञ्जयेति।—धनञ्जयस्य—अर्जुनस्य, जयेन—राज्ञा पराभवेन, जनित,—उत्पादित, जगता—जगदाक्रिनामिन्यय, कम्प,—वेपथु, त्रासजनित इति भाव येन तादृश, य,—युधिष्ठिर, यस्य हि राज्ञ एवं जयशीलवीर्य्य सहोदर आसीदिति भाव सङ्गीरे—सन्निधौ एव परराज्यस्य इति भाव, स्थितमिति शेष, किम्पुरुषाणा—किन्नराणां, राज्य—देशम्, अलसत—औडवान समर्थोऽपि युधिष्ठिर किन्नर राज्य न आत्माधीन चकार इति समुदितार्थ। चण्डकोप—तदाख्यो नृपति। य,—चण्डकोप, स्त्रीराज्य जित्वा—स्त्रीवशीभूतो भूत्वा इत्यर्थ, क्ष्मा—पृथ्वीं, न प्राविचत्—प्रविष्टवान्, [ विशते लुङि रूपम् ] समर्थोऽपि स्त्रैणत्वात् दिग्विजयं न चकारेति निष्कर्ष, यद्वा,—स्त्रीराज्य—स्त्रीजनप्रधानित राज्य सर्वां भूमि विजित्यापि अलसतया चण्डकोपनृपति स्त्रीभूयिष्ठ राज्य न जिगायेति भाव। स्त्रीराज्यकथाऽपि श्रूयते भारते अश्वमेधपर्वणि, तद्विवरणम् तत्र द्रष्टव्यम्।

(१८३) तुषारगिरि,—हिमाद्रि, उत्साहिन,—उत्साहशालिन, जनस्येति शेष, उत्तरापथस्थित इति यावत, गन्धमादन,—दक्षिणापथस्थित स्वनामप्रसिद्ध पर्वतविशेष तयो क्लीब—अन्तरम्, अन्तर—व्यवधानम्, उभयदिगन्तावस्थयोरपि एतयोर्व्यवधानम् उत्साहिभिरल्पमेव मन्यते इति भाव। तुरुष्कविषय,—तुरुष्कजनपद, किष्कु—हस्तो वितस्ति वा, तत्परिमित अल्पपरिसर इति भाव, ("किष्कुर्हस्ते वितस्तौ च" इत्यमर) सुदूर तुरुष्कदेशमपि उत्साहसम्पन्ना किष्कुपरिमाणव्यवहितमिव मन्यन्ते जयैषिणा योजनशतमपि न दूरमिति भाव।

(१८४) प्रादेश,—प्रादेशव्यवहित इत्यर्थ, विस्तृतयो प्रदेशिन्यङ्गुष्ठयो अन्तर परिमाणसम्मित इति यावत्, अतिक्षुद्र इति भाव, उत्साहिन इति पूर्वेणान्वय। ("प्रादेशतालगोकर्णास्तर्जन्यादियुते तते। अङ्गुष्ठे—" इत्यमर)। शकस्थान—शकदेश, शशपदं—शशस्य—क्षुद्रपशुभेदस्य,पद—पदपरिमितम्। अदृश्यमानेति।—न दृश्यमान, —न ईक्ष्यमाण, प्रतिप्रहार,—प्रतिद्वन्द्विविक्रम यत्र तादृशो, निर्वीर्य्ये इति भाव.।

पारियात्रे यात्रैव शिथिला; (१८५) शौर्यशुल्कः सुलभो दक्षिणापथः; (१८६) दक्षिणार्णवकल्लोलानिलचलितचन्दनलतासौरभसुन्दरीकृतदरीमन्दिरात् दर्दुरात् अद्रेः नेदीयसि मलयः; मलयलग्न एव च महेन्द्रः" इत्येवम्प्रायान् उद्योगद्योतकानाम् आलापान् पार्थिवकुमाराणां बाहुशालिनां शृण्वन् एव आससाद आवासम्। (१८७) मन्दिरद्वारि च उभयतः सबहुमानं भूलताभ्यां विसर्जितराजलोकः प्रविश्य च अवततार, बाह्यास्थानमण्डपस्थापितम् आसनम् आचक्राम; अपास्तसमायोगश्च क्षणमासिष्ट।

---

पारियात्रे—तदाख्ये देशे पर्वते वा, यात्रा—युद्धार्थगमनम्, शिथिला—निरवकेति भावः, निर्वीर्याणां तेषां युद्धेति वार्तायवणमात्रेणैव पलायनपरत्वादिति तात्पर्यम्।

(१८५) दक्षिणापथः—दाक्षिणात्यः, कलिङ्गादिप्रदेश इत्यर्थः, अत एव शौर्यशुल्कः,—शौर्य—वीर्यमेव, शुल्कः,—पणः यस्य तथाभूतः, विक्रमलभ्य इति भावः, सुलभः,—सुप्रापः, गमनमात्रेणैव स जेष्याम इति भावः।

(१८६) दक्षिणेति।—दक्षिणार्णवस्य—दक्षिणसमुद्रस्य, कल्लोलानिलेन—तरङ्गवायुना, चलितानां—कम्पितानां, चन्दनलतानां—श्रीखण्डवल्लीनां, सौरभेण—गन्धेन सुन्दरीकृतः—मनोज्ञीकृतः, दरी—गुहा एव, मन्दिरं—गृहं यस्य तथाभूतात्, दर्दुरात्—तदाख्यात्, अद्रेः,—पर्वतात् नेदीयसि—अतिनिकटे, [ अतिशयेन अन्तिके इत्यर्थे ईयसुनि, अन्तिकस्य "अन्तिकबाढयोर्नेदसाधौ" (५।३।६३ पा०) इति नेदादेशः ] मलयः,—तदाख्यपर्वतः। महेन्द्रः,—तदाख्यपर्वतः, अत एव तावपि सुलभौ इति भावः। उद्योगद्योतकानाम्—उत्साहव्यञ्जकानां बाहुशालिनां—भुजवीर्यवतां, पार्थिवकुमाराणां—सामन्तराजपुत्राणाम्। आवासम्—निवासस्थानम्, आससाद—प्राप।

(१८७) मन्दिरेति।—मन्दिरस्य—गृहस्य, द्वारि—द्वारदेशे, उभयतः, आत्मानमिति शेषः, स्वस्य उभयपार्श्वयोः निपातिताभ्याम् इत्यर्थः, भूलताभ्याम्—भ्रूसङ्केतेन इति भावः, सबहुमानं—ससमादरम्। प्रविश्य मन्दिरमिति शेषः, अवततार—अवतीर्णवान्, वाहनादिति शेषः। बाह्येति।—बाह्य—बहिर्देशस्थम्, आस्थानमण्डपे—सभागृहे, तत्र स्थापितं—निहितम्। आचक्राम

अथ तत्र (१८८) प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्,—"देव। (१८९) प्राग्ज्योतिषेश्वरेण प्रहितो हंसवेगनामा दूतोऽन्तरङ्गः तोरणमध्यास्ते" इति। राज्ञा तु "तमाशु प्रवेशय" इति सादरम् आदिदेश। अथ (१९०) दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरञ्च हंसवेगं सविनयम् (१९१) आकृत्यैव नयनानन्दसम्पादनसुभगाभोगभद्रया (१९२) समुत्सर्पमाण-गुणगरिमा, प्रभूतप्राभृतभृता पुरुषाणां समूहेन महता अनु-

—आयततौ। व्यायामभाजोः,—व्यायामशालिनोः, यद्वा,—आयत,—आयत, तथा दीर्घ,—सम्बद्ध, प्रकोष्ठौ वा यस्य तथाभूत, बाह्याभ्यन्तरसम्भ्रमरहित, निश्चलौ भूत्वेव। आसिष्ट—उपाविशत, [आसेः इत्यादादिकस्य लुङि रूपम्]।

(१८८) प्रतीहारः—दौवारिकः, पृथ्वीति।—पृथ्वीपृष्ठे—भूतले, प्रतिष्ठापितः—निहितः, पाणिपल्लवः—करकिसलयः, अभिवादनार्थमिति भावः येन तथाभूतः, भूमौ करौ संस्थाप्य साष्टाङ्गं प्रणिपत्येति यावत्।

(१८९) प्राग्ज्योतिषेश्वरेण—कामरूपाधिपतिना। ["प्राग्ज्योतिषेश्वरेण प्रहित" इत्यत्र "प्राग्ज्योतिषेश्वरेण कुमारेण प्रहित" इति पाठे—कुमारेण—[illegible]]। अन्तरङ्गः—आप्तः प्राग्ज्योतिषाधिपतेरिति भावः। तोरणं—बहिर्द्वारम्, ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य तोरणस्य कर्मत्वं देयम्] अध्यास्ते—अधितिष्ठति। स—हंसवेगः।

(१९०) दक्षतया—निपुणतया क्षितिपालादरात्—क्षितिपाले—राज्ञि हर्षे, आदरात्—बहुमानात् स्वयमेव निरगात्—निरगच्छत् न त्वन्यं कञ्चित् प्रेषितवान्, राजादेशस्याशुसम्पादनाभिप्रायेणेति भावः। ["इण् गतौ" इत्यादादिकस्य एतेः लुङि रूपम् "इणो गा लुङि" (२।४।४५ पा०) इति गादेशः]।

(१९१) आकृत्येति।—नयनानन्दः,—चक्षुःप्रीतिः, तस्य सम्पादने—जनने, सुभगः,—मनोहरः, यः आभोगः,—विस्तारः, शरीरस्य परिपूर्णता इति यावत्, तेन भद्रा—मनोहारिणी तया, आकृत्यैव—अवयवेनैव सौम्यमूर्त्त्यैव सहैव।

(१९२) समुत्सर्पमाणेति।—समुत्सर्पमाणः,—निर्गम्यमानः, गुणानां—शौर्यसत्यव्रतादीनां, गरिमा—गौरवम्, बहिर्गच्छन्निति भावः येन तथाभूतः, लोकातिशायिसौन्दर्येणैव अतीव गुणवत्तया प्रतीयमान

गम्यमानः प्रविवेश राजमन्दिरम्। (१८३) आरादेव पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत्। "एह्येहि" इति (१८४) सबहुमानमाहूतश्च प्रधावितोऽपसृतः पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेन उपसृत्य भूयो नमश्चक्रे। स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टम् अविप्रकृष्टं स प्रदेशमध्यास्त। ततो राजा (१८५) तिरश्चीं तनुम् ईषत् इव दधानश्चामरग्राहिणीम्

---

इति भावः, यद्वा,—समुन्नम्यमानः,—प्राप्यमाणः इत्यर्थः, प्रकाश्यमान इति यावत् गुणगरिमा यस्य तथाभूतः, राजदूतस्य हंसवेगस्य निसर्गसौम्यमूर्त्त्या असौ सर्व्वगुणवत्तामपेक्षत एव भवतीति प्रतीयते इति समुदितार्थः। प्रभूतप्राभृतभृता—प्रभूत—विविधं, प्राभृतम्—उपायनद्रव्यं, ("प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा॥" इत्यमरः) बिभ्रति—धारयन्ति ये तथाविधाना, मनुष्योपढौकन धृतवताम् इत्यर्थः।

(१८३) आरादेव—दूरादेव, ("आराद्दूरसमीपयोः" इत्यमरः) पञ्चाङ्गेति।—पञ्चभिः,—पञ्चसङ्ख्यकैः, अङ्गैः,—शिरःप्रभृतिभिः आलिङ्गितः—स्पृष्टम् अङ्गनं—चत्वरं येन तथाभूतः, "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥" इति वचनात् यद्यपि प्रणामस्य अष्टाङ्गत्वं दृश्यते, तथाऽप्यत्र भूमिस्पर्शविधौ योग्यानामेवावयवानामत्यावश्यकतया प्राधान्यात् प्रणामस्याङ्गपञ्चकसाध्यत्वमुक्तमित्यदोष इत्यवधेयम्।

(१८४) सबहुमानेति।—सबहुमानं—सादरम्, आहूतः,—आकारितः राज्ञा इति शेषः, प्रधावितः,—क्षिप्रम् पुरोगत इत्यर्थः, आह्वानश्रवणादेवेति भावः, अपसृतः,—अनन्तरं किञ्चित् पश्चाद्गत इत्यर्थः, भूयः,—पुनश्च उपसृत्य, राजानम् इति शेषः, राज्ञः समीपं गत्वा इत्यर्थः पादेति।—पादपीठे—चरणासने, नृपस्य इति शेषः, लुठिता—स्पृष्टा, निहिता इत्यर्थः, ललाटलेखा—भालरेखा येन तथाभूतः, तथा पार्थिवेन—नृपेण, पृष्ठे—पृष्ठदेशे न्यस्तहस्तः,—स्थापितपाणिः, अर्पितकरः सन् इत्यर्थः, नमश्चक्रे—प्रणाममकरोत्, एवंविधप्रणामस्तु तत्कालप्रचलिताचारवशात्सूचित इति ज्ञातव्यम्। स्निग्धेति।—स्निग्धया—प्रीतिपूर्णया नरेन्द्रस्य—राज्ञः, दृष्ट्या—वीक्षणेन, निर्दिष्टं—प्रदर्शितम्, अविप्रकृष्टम्—सन्निकृष्टम्।

(१८५) तनु—स्वदेहमिति यावत्, ईषत्—किञ्चित्, तिरश्चीं—तिर्यक्चारिणीम्, एकस्मिन् पार्श्वे किञ्चिदावर्जितामिति यावत्, दधानः,—कुर्व्वन् इत्यर्थः।

अन्तरालवर्त्तिनीं समुत्सार्य सम्मुखीनस्तं सप्रश्रयं पप्रच्छ,—"हंसवेग। श्रीमान् कच्चित् कुशली कुमारः?" इति। स तमन्ववादीत्,—"अद्य कुशली, येन एवं स्नेहस्नपितया सौहार्द-द्रवार्द्रया सगौरवं गिरा पृच्छति देव" इति।

स्थित्वा च मुहूर्त्तमिव पुनः (१८६) स चतुरमुवाच,—"चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भम् अपहाय हृदयमेकम् अन्यत् अनुरूपं प्राभृतमेव दुर्लभं लोके, तथाप्यस्मत्स्वामिना सन्देशम् अशून्यतां नयता

---

अन्तरालवर्त्तिनीं—मध्यस्थितामित्यर्थः। समुत्सार्य—अपसार्य, सम्मुखीनः,—अभिमुख इत्यर्थः, दूतस्येति भावः, सप्रश्रयं—सप्रणयं प्रीतिप्रदर्शनपुरःसरमित्यर्थः, [क्रियाविशेषणमेतत्। "प्रश्रयप्रणयौ समौ" इत्यमरः], यद्वा,—सप्रश्रयं—प्रश्रयेण सह वर्त्तमानं, सविनयमित्यर्थः, विनीतमिति यावत् "तम्" इत्यस्य विशेषणम्। कच्चित् इति प्रश्नसूचकमव्ययं, ("कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च" इति मेदिनी)। स्नेहस्नपितया—प्रीतिसिक्तया [कर्मणि विचि निष्पन्नं रूपम्]। सौहार्देति।—सौहार्दं—सुहृदो भावः, मित्रता इत्यर्थः तदेव द्रवः—रसः, स्नेह इति यावत्, तेन आर्द्रया—सिक्तया, एतेनानुचितकृदिति भावः, तव भवता स्नेहगर्भसौहार्दसम्भाषणेन इदानीमेव सौभाग्यवान् सञ्जातः, न तु प्राक्, एवंविधस्निग्धप्रश्नयसम्भाषणं हि शुभादृष्टफलमित्यत्र नास्ति सन्देहलेश इति तात्पर्यम्।

(१८६) स—हंसवेगः, चतुरं—निपुणं दूतोचितदक्षतापूर्वकं यथा तथेत्यर्थः क्रियाविशेषणमेतत्। सद्भावगर्भं—सद्भावपूर्वकम्, एकं—केवलं हृदयम् अपहाय इत्यन्वयः, अन्यत्—अपरं, चतुरम्भोधीति।—चतुर्णाम्—चतुःसङ्ख्यकानाम्, अम्भोधीनां—समुद्राणां भोगभूतिः—भोगैश्वर्य्यं, तस्याः भाजनभूतस्य—पात्रस्वरूपस्य, देवस्य—राज्ञो भवत इत्यर्थः अनुरूपं—योग्यं, प्राभृतम्—उपढौकनम् अस्माकं प्रभोः साधुभावपूर्णात् हृदयात् विना अन्यत् भवते प्रदेयमुपायनं किमपि नास्तीति भावः। अस्मत्स्वामिना—अस्माकं प्रभुणा, कामरूपेश्वरेणेति यावत् सन्देशं—वाचिकोक्तकथनं, दूत्यमिति यावत् दूतस्य सन्देशहरत्वादिति भावः, अशून्यतां नयता—पूर्णतां प्रापयता, समुचितोपहारप्रदानेन सन्देशं सफलं कुर्व्वता इत्यर्थः, उपायनमन्तरेण सन्देशप्रेषणस्य [illegible]सम्भावनया समाजे रिक्तहस्तेन दूतेनस्य अनौचित्यादिति भावः।

(१९७) पूर्व्वजोपार्जितं वारुणातपत्रम् आभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थीकृतमेतत्। (१९८) अस्य च कुतूहलकान्ति बहूनि आश्चर्य्याणि दृश्यन्ते। प्रतिदिवसं प्रविशति (१९९) शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिः अस्मिन्। (२००) अस्मिन् प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्य्याश्च्योतन्ति चन्द्रभासामम्भसा मणिशलाकाभ्यो यावदिच्छ-

---

(१९७) पूर्व्वजोपार्जित—पूर्व्वपुरुषलब्धम्, आभोगाख्यम—आभोगनामक, वारुणातपत्र—वरुणदत्तच्छत्र जलवाविच्छत्र वा, निरतिशयशैत्यसविधायकमातपत्रमिति भाव, अनुरूपस्थानन्यासेन—योग्यस्थानार्पणेन, देवसदृशसत्पात्रे प्रदानेनेत्यर्थ, भवानेव एतस्य भोगसौभाग्यभाक् नान्य इति मन्यते भाव ।

(१९८) अस्य—आभोगस्य, कुतूहलकान्ति—कौतुककराणि, अपूर्व्वगुणयोगात् दर्शनौत्सुक्यजनकानीति भाव ।

(१९९) छायाया,—अनातपस्य, छत्रस्येति शेष, शैत्यहेतौ,—शीतलतासम्पादननिमित्तम्। किरणेति।—किरणानां—मरीचीनां, सहस्राणि—सहस्रसङ्ख्या यस्य तस्मात सूर्य्यादित्यर्थं। सोमस्य—चन्द्रस्य, रश्मि,—मयूख। अस्मिन—आतपत्रे इत्यर्थं। ननु दिवा सोमस्योदयाभावात कथमातपत्रे तस्य किरणस्य प्रवेशसम्भव इति चेत? अवाङ्—सूर्य्यतापेन छत्रच्छाया उष्णा मा भूदिति हेतोः सूर्य्यस्य एकैक रश्मि चन्द्रात्मकरूपेण परिणत सन् तत्र प्रविशति इति तात्पर्य्यम्। दृश्यते च लोके प्रखरसूर्य्यकिरणेनोत्तप्तस्यातपत्रस्य शैत्यविधानार्थं जलेनार्द्रीकरणम्, अत्र तु तादृशसन्तापसत्त्वेऽपि आर्द्रीकरणस्य प्रयोजनाभाव, इत्येवास्य कुतूहलजनकत्वम्।

(२००) अस्मिन—चन्द्ररश्मौ, प्रविष्टे—उपगते, आभोगाख्यच्छत्राभ्यन्तरमिति शेष, प्रध्यानानन्तर—प्रकृष्टभावनात पर, छत्रधारिपुरुषस्येति भाव, यद्वा,—रश्मीनां सम्यगेकीभूतभवनात् परमित्यर्थं, मणिशलाकाभ्य,—मणिमयच्छत्रशलाकाभ्य, स्वादव,—सुमधुरा, दन्तेति।—दन्तवीणा—शैत्योद्रेक दन्तानामन्योऽन्याघात, अतिशैत्यात इति भाव, तस्या उपदेशे—शिक्षायाम, आचार्य्या,—गुरव, शीतस्पर्शातिशयात वेपथुद्रयेन दन्तानामन्योऽन्यघर्षणजननात इति भाव, चन्द्रभासा—चन्द्रवत्प्रभावतां, सुधानामित्यर्थं। यावदिच्छ—यावती इच्छा तावत्

मच्छा धाराः। (२०१) प्रचेता इव यश्चतुर्णाम् अर्णवानाम् अधिपतिर्भूतो भावी वा, तमनुगृह्णाति छायया, न इतरम्। इदञ्च न (२०२) समाचिर्दहति, न पृषदश्वो हरति, न उदकम् आर्द्रयति, न रजांसि मलिनयन्ति, न जरा जर्जरयति। एतत् तावदनुगृह्णातु इमा देवः, सन्देशमपि विस्रब्धं श्रोष्यति" इत्येवम् अभिधाय विहस्य आत्मीयं पुरुषम् अभ्यधात्,—"उत्तिष्ठ, दर्शय देवस्य" इति।

(२०३) स वचनानन्तरम् उत्थाय पुमान् ऊर्द्धीचकार तत्, धौतदुकूलकल्पिताच्च निचोलकात् अकोषीत्।

---

इति विग्रहे ["यावदवधारणे" (२।१।८ पा०) इत्यव्ययीभावः] यथेष्टमित्यर्थ, अच्छा,—निर्मला। धीतमित्ति—पतन्ति।

(२०१) प्रचेता इव—वरुण इव, ("प्रचेता वरुणः पाशी" इत्यमरः) भूत,—सम्प्राप्त। भावी—भविष्यन्नित्यर्थः। छायया—अनातपेन, छायाविस्तारेणेत्यर्थः, न—चतुःसमुद्रवेष्टिताया पृथिव्या अधिपतिं सम्राजमित्यर्थः, अनुगृह्णाति—एवंविध राज्ञे एव छत्रमिदं पूर्णाभिगुणान् बिभर्त्ति इति निष्कर्षः। .चतुरर्णवाधिपतिमेवासौ सेवते स्वञ्च तथा भविष्यसि, अत त्वम् एव एतदर्हसीति सूच्यते। यदी हि चतुरुदधि भोगसौभाग्यभाजमेव प्रीतमुखे सेवते, नान्यम्, एतदेवास्य विस्मयकरत्वमिति भावः।

(२०२) समाचि,—अग्नि ("अग्निर्वैश्वानरो वह्नि। सप्तार्चिर्दहनो" इत्यमरः)। पृषदश्व —वायु ("श्वसन स्पर्शनो वायुर्मातरिश्वा सदागतिः। पृषदश्व" इत्यमरः)। उदकं—जलम्। रजांसि—धूलय। जरा—जीर्णता पुरातनत्वमित्यर्थ जर्जरयति—खण्डयतीत्यर्थं जरसि नैतत् जीर्यतीति, सदैव नवमिव वर्त्तते इति भावः। एतत—आतपत्रमित्यर्थः। विस्रब्ध—विश्वस्त यथा तथा रहसि इति भावः। विहस्य—मुखं परावर्त्त्येत्यर्थः। देवस्य—सम्राज दर्शय [सम्बन्धविवक्षया षष्ठी "अभिवादि दृशोरात्मनेपदे वेति वाच्यम्" इति वार्त्तिकवचनात् दर्शेरात्मनेपदस्य प्रयोगाभावात् न प्रयोज्यकर्त्तु देवस्य कर्मत्वं तथा च तृतीयाया अपि अवसर इति दिक्सङ्ग्रह]।

(२०३) स,—आत्मीय दूतस्यानुचरविशेष इत्यर्थः। ऊर्द्धीचकार—उद्धृतवानित्यर्थः। धौतेति।—धौतेन—क्षालितेन, शुभ्रेण इत्यर्थः, दुकूलेन—वस्त्रेण,

(२०४) आक्रम्यमाणे एव च यस्मिन् अतिसितमहसि सरभसम् अहासि इव हरेण। (२०५) रसातलात् उदलासीव शेषफणि-फणाफलकमण्डलेन। अस्थायि इव चक्रीभूय अन्तरिक्षे क्षीरोदेन। अघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन बलाहकव्यूहेन। (२०६) विश्रान्तम् इव विततपक्षतिना वियति पितामह-विमानहंसयूथेन। (२०७) अत्रिनेत्रनिर्गतस्य धवलधाम-

---

अलिहात्—रचितात्, निचोलकात्—प्रच्छदपटात्, आवरणवस्त्रात् इत्यर्थः, ("निचोल प्रच्छदपट" इत्यमरः) अकोषीत्—निष्कोषितवान्, आतपत्रस्य वस्त्रावरणं मुक्तोचितवानित्यर्थः।

(२०४) अतिसितमहसि—अतिशुभ्रत्विषि, यस्मिन्—आतपत्रे, ["यस्य च भावेन भावलक्षणम्" (२।३।३७ पा०) इति सप्तमी] सरभसम्—सवेगम्, आक्रम्यमाणे—निष्क्रम्यमाणे, प्रच्छदपटादिति शेषः, हरेण—शिवेन, अहासि इव—अट्टहसितमिव एतदातपत्रस्यातिशुभ्रत्वेन झटिति तदाकर्षणात् हरस्याट्टहासमिव तत्र शोभते इति भावः, "यशसि धवलता वर्ण्यते हासकीर्त्योः" इत्यादि कविसमयप्रसिद्धेः, आतपत्रधवलत्वप्रतिपादनार्थं हरहासकल्पनेयोत्प्रेक्षितमिति वाच्या क्रियोत्प्रेक्षेयमिति कथम्।

(२०५) रसातलात्—पातालात्, शेषेति।—शेषफणी—अनन्तनागः, तस्य फणाफलकमण्डलं—भोगपट्टकसमूहः तेन, उदलासि इव—उल्लसितमिव, [लसते भावे लुङि रूपम्]। क्षीरोदेन—दुग्धसागरेण, चक्रीभूय—मण्डलीभूय, अस्थायि इव—स्थितमिव। शारदेन—शरत्कालिकेन, निर्मलत्वात् शुभ्रेण इति भावः, बलाहकव्यूहेन—मेघमण्डलेन, ("अथ मेघो वारिवाह स्तनयित्नुर्बलाहकः" इत्यमरः) गोष्ठीबन्धः—समाजः, एकीभूयावस्थानमित्यर्थः अघटि इव—घटित इव, रचित इव इत्यर्थः, [घटते इत्यस्य णिचि कर्मणि लुङि रूपम्]।

(२०६) वियति—आकाशे, विततपक्षतिना—विस्तृतपक्षेण, पितामहविमानहंस-यूथेन—ब्रह्मणो रथवाहनहंससङ्घेन विश्रान्तमिव—विश्रामः कृत इव, एतदातपत्रं विलोक्य जनः प्रसारितपक्षा ब्रह्मणः विमानहंसा व्योममार्गे विश्राम्यन्तीवेति मेनिरे इति तात्पर्यम्।

(२०७) अत्रिनेत्रनिर्गतस्य—अत्रेः,—वदान्यस्य ब्रह्मणो मानसपुत्रस्य मुनि

मण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः।
प्रत्यक्षीकृत इव उद्गमनक्षणो नारायणनाभिपुण्डरीकस्य।
(२०८) आहिता इव कौमुदीप्रदोषदर्शनानन्दधृतिरक्ष्णाम्।
उदमाङ्क्षीत् इव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे।

---

विशिष्टस्य नेत्रात्—नयनात् निर्गतस्य—निःसृतस्य चन्द्रो हि प्रजासर्गार्थं तपस्यतोऽत्रेर्नेत्रात् जातः तथा हि हरिवंशे—"पिता सोमस्य वै राजन्। जज्ञेऽत्रिर्भगवान् ऋषिः। ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः॥" अपि च तत्रैव—"नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा॥ समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः॥ पपात भासयँल्लोकान् शीतांशुः सर्वभावनः॥" इति। अत एवात्र रघौ (२ स० ७५ श्लो०) कालिदासः,—"अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः" इत्यादि, कुमुदबन्धोः,—चन्द्रस्य, धवलेति।—धवल—शुभ्र, यत् धाममण्डल—परिधिः, तेन मनोहरः—रमणीयः, जन्मदिवसः—उत्पत्तिदिनं दृष्ट इव—वीक्षित इव, इत्युत्प्रेक्षा दर्शनद्वारा "स हि जन्मदिवस एवायं किमु?" इत्याकारकप्रत्यभिज्ञारूपतया प्रत्यक्ष-कारणयोः सम्मेलनमेवैतदिति विभाव्यम्। नारायणनाभिपुण्डरीकस्य—विष्णोर्नाभिदेशस्थस्य श्वेतपद्मस्य, उद्गमनक्षणः,—उत्पत्तिसमयः प्रत्यक्षीकृत इव—साक्षात्कृत इव। पूर्ववदलङ्कारः।

(२०८) अक्ष्णाम्—चक्षुषां कौमुदीति।—कौमुदीप्रदोषः,—चन्द्रिकासमन्विता रजनी, यद्वा—कौमुदी नाम दीपोत्सवतिथिः, तदुक्तं भविष्योत्तरे,—'कौ मोदन्ते जना यस्यां नानाभावैः परस्परम्। हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता॥" इत्युक्तलक्षणा कार्त्तिकपौर्णमासी आश्विनपौर्णमासी वा इति वदन्ति, तस्याः प्रदोषः,—रजनीमुखं तस्य दर्शनेन—अवलोकनेन यः आनन्दः,—सुखं, तेन धृतिः—प्रीतिः, आहिता इव—जनिता इव, यस्य हि सन्दर्शनं तदैव नयनसन्तर्पणं भवति यथा कौमुदी समुदितैव दृश्यमाना लोचनेषु सुधाधारामिव स्रावयन्ती निपतन्ती तान् प्रीणयति मानसञ्चाह्लादयति इति। कौमुद्या नयनरञ्जकत्वमुक्तं रघौ (३ स० १ श्लो०) यथा—"सखीजनोद्वीक्षणकौमुदीमुखम्" इत्यादि। अम्बरोदरे—गगनमध्ये इत्यर्थः, महत्—विशालं मन्दाकिनीपुलिनमण्डलं—स्वर्गङ्गासैकतनिवहः उदमाङ्क्षीदिव—उन्मज्जितमिवेत्यर्थः, [मस्जतेर्लुङि रूपम्] मन्दाकिनीपुलिनस्य धवलत्वेनैवमुत्प्रेक्षितमिति ज्ञेयम्।

(२१२) प्रबुद्धम् आबद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः।

(२१३) चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत्तिलकम् इव त्रिभुवनस्य, शैशवम् इव श्वेतद्वीपस्य, अग्रावतारम् इव शरदिन्दोः, हृदयम् इव धर्मस्य, निवेशम् इव शशिलोकस्य, दन्तमण्डल-

---

सत वदनानि येषां तथाभूते, सवर्णाङ्गुलिपल्लवे,—सहक्षमुद्रानिचये, पराङ्मुखीभूत—किञ्चिदधोमुखतां गतम्। अत्रापि पूर्ववत् शिरोऽङ्गुलिपल्लवानां दले पद्ममेव भ्रान्त्या पराङ्मुखीभवनवर्णनात् भ्रान्तिमदलङ्कारः।

(२१२) कुमुदषण्डैः,—कैरवसङ्घैः, आबद्धेति।—आबद्ध,—निर्मित, चन्द्रे—इन्दौ, य आनन्दः,—प्रीतिः, तस्य उद्दामेन—औत्कण्ठ्येन, आतिशय्येनेत्यर्थः, उद्दलन्ति—विकाशं गच्छन्ति, यानि दलपुटानि—पुटवत्सुदृढपत्राणि इत्यर्थः, चन्द्रोदये तेषां स्वत एव विकाशात्तत्पत्रे च तस्मिन् चन्द्रधर्मादित्व भाव तान्येव अट्टहासाः,—हासविशेषाः, तैः विशदं—निर्मलं यथा तथा [क्रियाविशेषणमिदम्] हासस्य धवलत्वं कविप्रसिद्धत्वात् "धवलता वर्ण्यते हासकीर्त्योः" इत्युक्तः, प्रबुद्धं विकसितं, कुमुदषण्डानि चन्द्रोदयं प्राप्य यथा सम्यक् विकसन्ति, तथैव तस्मिन् छत्रे आश्चर्यमाप्नुवन्तीति भावः। अत्र दलपुटेषु अट्टहासत्वारोपात् रूपकं, पूर्ववत् भ्रान्तिमदलङ्कारश्च इत्यनयोः सङ्करः।

(२१३) चित्रीयमाणचेताः,—चित्रीयमाणम्—आश्चर्यं कुर्वत्, चेतः—मानसं यस्य तथाविधः, चमत्कृतचित्तः, विस्मयमानमानस इत्यर्थः, ["नमो वरिवश्चित्रङः क्यच्" (३।१।१९ पा०) इति सूत्रेण आश्चर्यकरणार्थे क्यचि शानचि च रूपम्]। दण्डानुसारेति।—दण्डानुसारेण—दण्डस्य आत्मानुसन्धेन, अधिरोहति—उत्तिष्ठति इति यथा तथा [illegible] निहितया दृष्ट्या, दण्डदेशात् प्रभृति तस्य यावत् निपातितदृष्टि यावत्। तत्—छत्रमित्यर्थः। तिलकं—ललाटभूषणम्, सर्वशोभाया निधानभूमिमित्यर्थः। शैशवं—बाल्यं चतुर्द्वीपमध्येन्थय, श्वेतद्वीपस्य शुभ्रत्वात् बालत्वस्य, [illegible] शिशुत्वव्यपदेश इति विभाव्यम्। शरदिन्दोः,—शरच्चन्द्रस्य, अग्रावतारम्—अग्रेन—श्रेष्ठेन, रूपान्तरेणेत्यर्थः अवतार,—अवतरणम्, आविर्भाव इत्यर्थः तमिव। हृदयमिव—अन्तःकरणमिव, निर्मलत्वादिति भावः। शशिलोकस्य—चन्द्रमण्डलस्य, निवेशमिव—आयतनमिव।

धवलं मुखमिव चक्रवर्तिनस्य, (२१४) मौक्तिकजालपरिकर-सितं सीमन्तचक्रमिव दिवः, (२१५) बहलज्योत्स्नांशुकोदर-मैन्दवम् इव परिवेशवलयं, (२१६) श्रीक्षाह सतशङ्खश्वोकं श्रवणमण्डलम् इव निश्चलतां गतमैरावतस्य, (२१७) श्वेत-गङ्गावर्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य,

---

चक्रवर्तिनस्य—सार्वभौमस्य, दन्तेति ।—दन्तमण्डलधवलं—दन्तपङ्क्तिकान्त्या, धवलं—शुभ्रं, दन्तमण्डलेन—दन्तसमूहेन धवलस्य, मुखमिव—आरभ्यमिव, वदनमिव च, चक्रवर्तिनव्यञ्जकानां द्रव्याणां प्रधानमिवेति यावत् सितच्छत्रस्य चक्रवर्तिसम्राड्प्रकाशादिति भावः, ("मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी)।

(२१४) दिवः—स्वर्गस्य, मौक्तिकेति ।—मौक्तिकानां—मुक्ताफलानां, जालेन—समूहेन, दामेति यावत्, यः परिकरः—वेष्टनं, तेन सितम्—उज्ज्वलं शुभ्रञ्च, सीमन्तचक्रमिव—केशविन्यासचक्रमिव, ("सीमन्तः केशविन्यासः" इति कोषः) युगादीर्घविश्लेषमौक्तिमुक्ताजालमिवेति भावः ।

(२१५) बहलेति ।—बहलया—प्रभूतया, ज्योत्स्नया—चन्द्रिकया शुभ्रं—शुभ्रम्, उदरम्—मध्यभागः यस्य तथाभूतम्, ऐन्दवं—चान्द्रमसं, परिवेशवलयमिव—परिधिमण्डलमिव ("परिवेशस्तु परिधि" इत्यमरः) राकाशशधरमिवेति भावः ।

(२१६) श्रीक्षेति ।—श्रीक्षेण—श्वेतगुणेन, हसिता—तिरस्कृतेत्यर्थः, शङ्खादपि अधिकश्वेतत्वादिति भावः, शङ्खस्य—कम्बोः, श्रीः,—कान्तिर्येन तथोक्तं निश्चलतां गतं—स्थिरत्वं प्राप्तम्, एकत्रैवावस्थितमिति यावत् हस्तिकर्णस्य सदैव चञ्चलत्वात्, अन्यथा स्वभावतः स्थिरस्य चक्रवर्तस्तुना सह साम्यं न घटते, तेनैवमुक्तमिति ज्ञेयम्, ऐरावतस्य श्रवणमण्डलमिव—कर्णमण्डलमिव, ऐरावतस्य स्वभावशुभ्रत्वात् साम्यमत्रादर्शि वेदितव्यम् ।

(२१७) श्वेतेति ।—श्वेतगङ्गायाः,—शुभ्रसलिलाया आकाशगङ्गायाः, आवर्तवत्—अम्भसां भ्रम इव, पाण्डुरं—धवलम्, अथवा,—श्वेतायाः,—शुभ्रवर्णायाः, गङ्गायाः,—विष्णुपद्याः, आवर्तेन—आवर्तनेन, अवस्थानेनेति यावत्, गङ्गायाः विष्णुपदीभूतत्वादिति भावः, पाण्डुरं—धवलं, त्रिविक्रमस्य—वामनावतारस्य विष्णोः इत्यर्थः, त्रिभुवनवन्दनीयं—त्रिलोकीपूज्यं, त्रिजगदादरणीयञ्च, पदमिव—चरणमिव, अत्र एकस्यैव आतपत्रस्य भूयसामुपमानानां सत्त्वात् मालोपमाऽलङ्कारः ।

(२१८) प्रचेतसश्चूडामणिमरीचिशिखाभिः इव शिखाभि-र्मानसबिसतन्तुमयीभिः चामरिकावलीभिः विरचितपरिवेशम्, उपरि (२१९) चक्रवर्तिलक्ष्मीनूपुरस्खलनश्रवणदोहदनिश्चलेन इव लक्ष्मणा विततपक्षेण हंसेन समायोजितशिखरं, (२२०) स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिना इव नीतेन दण्डतां द्योतमान, (२२१) धवलिम्ना चालयत् इव नक्षत्रपथं, प्रभाप्रवाहप्रथिम्ना प्राप्लावयत् इव

---

(२१८) प्रचेतस—वरुणस्य, चूडामणि,—शिरोरत्न, (मस्तकाभूषणमिति भाव, तस्य मरीचिशिखाभिरिव—मयूखाग्रैरिवेत्युत्प्रेक्षा, शिखाभि,—अग्रभागैः, मानसबिसतन्तुमयीभि —मानससरोवरकमलदण्डतन्तुरचिताभि, अतिशुभ्राभिरिति भाव चामरिकाऽऽवलीभि,—क्षुद्रचामरपङ्क्तिभि, विरचित —कल्पित, परिवेश,—परिधिर्यस्य तथोक्त, समन्तात् चामरिकाऽऽवलीवेष्टितमित्यर्थः ।

(२१९) चक्रेति।—चक्रवर्तिन,—सम्राज, या लक्ष्मी,—श्री, तस्या नूपुरस्खलनस्य—मञ्जीरध्वनितस्य, श्रवण—आकर्णने, यत् दोहदम—अभिलाष, हंसानां नूपुरध्वनिप्रियत्वादिति भाव, तेन निश्चल —स्थिर इव। विततपक्षेण विस्तृतपक्षेण, लक्ष्मणा—चिह्नभूतेन सारसपक्षिणा, हंसेन—हंसमूर्त्या, यद्वा,—लक्ष्मणा—चिह्नेन, हंसाकारकेतेनेत्यर्थः, समायोजितशिखर—संयुक्तशिरोभागम्, उपरिभागे विन्यस्तावस्तृत-पक्षशालिकलहंसमित्यर्थः ।

(२२०) स्पर्शवता—सुखस्पर्शेनेत्यर्थः, ["रसादिभ्यश्च" (५।२।९५ पा०) इति मतुप, "भूमनिन्दाप्रशंसासु—" इत्यादिकारिकात् प्रशंसायाम् अतिशायने वाऽयं प्रयुक्तमिति ध्येयम्] प्रभावस्तम्भितेन—प्रभावेण—अलौकिकमहिम्ना, स्तम्भित—निश्चलतां गत तेन, मृणालस्य अतिकोमलत्वेऽपि प्रभाववशात् दृढीभूतेनेति भाव, मन्दाकिनीमृणालेन—मन्दाकिन्या,—स्वर्गङ्गाया, मृणालेन—पद्मनालेन मुकुलित फणेन—सङ्कुचितफणामण्डलेन, दण्डतां नीतेन—नालतां गतेन, वासुकिनेव—सर्पराजेनेव द्योतमान—राजमान, स्वर्नद्या सुविपुलहैमकमलनालं हि सम्राड्-भागसौभाग्यसम्पत्त्यै एतच्छत्रदण्डरूपतया परिणतम्, अत फणसदृश मुकुलीकृत्य प्रसादेन स्थितमिवेति प्रतीयते इति समुदितार्थः ।

(२२१) धवलिम्ना—श्वैत्येन, ["वर्णदृढा—" (५।१।१२३ पा०) इति इमनिचि

दिवस, समुच्छ्रायेण अधः कुर्व्वदिव दिवम्, उपरिस्थितम् इव सर्व्वमङ्गलानां, श्वेतमण्डपम् इव श्रियः, स्तवकमिव ब्रह्म-स्तम्भस्य, नाभिमण्डलम् इव ज्योत्स्नायाः, विशदं हासमिव कीर्त्तेः, फेनराशिम् इव खड्गधाराजलानां, यशःपटलम् इव शौर्य्यशालितायाः त्रैलोक्याद्भुतं महत् छत्रम् ।

---

छत्रम् ] नभःपथम्—अन्तरीक्षम्; [ नभसः पन्था इति तत्पुरुषे "ऋक्पूर—" ( ५।४।७४ पा० ) इत्यादिना समासान्त अप्रत्ययः ] छायापथमात्मक ज्योतिश्चक्र-मध्यवर्त्ती कश्चित् तिर्य्यक् अवकाशोऽयमिति प्रतीयते, तस्य हि क्षीरसमधवलत्वं प्रसिद्धमेव,तथा हि रघौ त्रयोदशे द्वितीय श्लोके कालिदासः,—"छायापथेनेव शरत्प्रसन्नम्" इति, आलयदिव—शोषयदिव, धवलीकुर्व्वदिवेत्यर्थः । प्रथिति ।—प्रभायाः—त्विषः, प्रवाहस्य—स्रोतसः, प्रसरस्येत्यर्थः, प्रथिमा—विस्तारः तेन, [ "पृथ्वादिभ्य—" ( ५।१। १२२ पा० ) इत्यादिना इमनिच्, "र ऋतो—" ( ६।४।१६१ पा० ) इति रत्वञ्च ज्ञेयम् ] प्लावयदिव—आच्छादयदिव । समुच्छ्रायेण—समुन्नत्या, दिवं—स्वर्गम्, अधः कुर्व्वदिव—निम्नीकुर्व्वदिव, पराभवदिवेत्यर्थः । सर्व्वमङ्गलानां—सम्यगाधिक्य-हारकच्छायायामित्यर्थः, प्रभूतमङ्गलजनकत्वादिति भावः । श्वेतमण्डपमिव—शुभ्रभवनमिव, राजलक्ष्म्याः वासभवनमिवेत्युत्प्रेक्षा । ब्रह्मस्तम्भस्य—ब्रह्माण्डस्येति यावत्, स्तवकमिव—पुष्पगुच्छमिव, छत्रस्य ब्रह्माण्डतुल्यत्वादिति भावः, चतुर्द्दशभुवनभूतं ब्रह्माण्डं राज्ञ उपभोगाधीनत्वम् प्रसूनस्तवकमिव सन्निहितं सत् संस्थितमिवेत्युत्प्रेक्षा । नाभिमण्डलमिव—नाभिभागमिव कौमुद्याः प्रभवस्थानमिवेत्यर्थः, नाभिमण्डलस्य कलाकृतित्वात् छत्रस्य च शीतलत्वादिगुणाधिक्यादस्य नाभित्वमुत्प्रेक्षितमित्यभिप्रायः । विशदं—शुभ्रं, हासमिव—मधुरहास्यरूपविकाशमिवेत्यर्थः, कीर्त्तेः श्वेतत्वाच्च धवलेन कविवर्णनीयत्वादिति-धवलमिति भावः । खड्गधाराजलानाम्—असीनिशितानामग्रभागस्थोदकानां, फेनराशिमिव—हिण्डीरपुञ्जमिव, कृपाणधारान्तरस्थि फेनायमानानि पुञ्जीभूयैवात्र संस्थितानीवेत्युत्प्रेक्षा, छत्रस्य विक्रमैकरक्षणीयत्वादिति भावः । शौर्य्यशालितायाः,—शौर्य्येण शालते शोभते यः स शौर्य्यशाली, तस्य भावः तत्ता तस्याः, महावीर्य्यविभूषितस्य सौन्दर्य्यविधायिनः प्रकाम-मानपराक्रमस्य इत्यर्थः, यशःपटलमिव—दिशा विदिशाद्यन्तरालमपि व्याप्नुवतीनां कीर्त्तीनां सञ्चयमिवेत्युत्प्रेक्षा, तस्य वीरैकभोगास्पदीभूतत्वादिति भावः ।

दृष्टे च (२२२) तस्मिन् राजा प्रथमे शेषमपि प्राभृतं प्रकाश्यमानक्रमेण ददर्श, तद्यथा,—पराध्यरत्नांशुगौरीकृतदिग्भागान् भगदत्तप्रभृतिख्यातपार्थिवपरागतान् आहृतलक्षणान् अलङ्कारान्, प्रभालेपिनाञ्च चूडामणीनां समुत्कर्षान्, क्षीरोदधेः धवलताहेतून् इव हारान्, (२२३) अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुचीनि शौचक्षमाणि क्षौमाणि, (२२४) कुशलशिल्पिलोकोल्लिखिता-

---

(२२२) तस्मिन्—आतपत्रे इत्यर्थः। प्रथमे—मुख्ये इत्यर्थः [ "प्रथमचरम—" (१।१।३३ पा०) इत्यादिना सर्वनामसंज्ञाया वैभाषिकत्वात् जस शीत्वं प्रथमे ] ददर्श,—दर्शितवान् दर्शितमान् इत्यर्थः, शेषमपि—अवशिष्टमपि इत्यर्थः प्राभृतम्—उपदाम्, उपहारमित्यर्थः ("प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः) प्रकाश्यमानक्रमेण—प्रकटितक्रमं दर्शयमानमित्यर्थः। तद्यथा—तथा हि। पराध्यति।—पराध्यानाम्—श्रेष्ठानाम् अत्युत्कृष्टानामित्यर्थः ("पराध्याग्र्यप्राग्रहरप्राग्र्याग्र्यग्रीयमग्रियम्" इत्यमरः) रत्नानाम्—मणीनाम् अंशुभिः—किरणैः गौरीकृताः—धवलीकृताः दिग्भागाः—आशातटा यैः तथोक्तान् भगदत्तेति।—भगदत्तः—दुर्योधनश्वशुरः नृपभेदः, तत्प्रभृतिभिः—तदादिभिः ख्यातैः—प्रसिद्धैः पार्थिवैः—नृपैः, परागतान्—व्यवहृतान् आहृतलक्षणान्—गुणैः प्रसिद्धान् ("गुणे प्रतीते तु कृतलक्षणाहतलक्षणौ" इत्यमरः)। प्रभालेपिनाम्—कान्तिपूर्णानाम्, समुत्कर्षान्—अतिशयान् गुणातिशयप्रकाशकानि बहूनि शाहस्राणि चूडारत्नानि इति भावः। क्षीरोदधेः—दुग्धार्णवस्य धवलताहेतून्—शुक्लताविधायकानि इव, अतिशुभ्रत्वात् तस्य हारस्यैव समुद्रगर्भे अवस्थानात् तस्मादेव क्षीरसमुद्रस्य धवलता जाता इव इत्युत्प्रेक्षिताः।

(२२३) अनेकेति।—अनेकैः—विविधैः रागैः—वर्णैः रञ्जिताः, रुचिराः—मनोज्ञाः ये वेत्रकरण्डाः—वेत्रनिर्मितसमुद्गकाः, तेषु कुण्डलीकृतानि—वलयीकृतानि सङ्कोच्य स्थापितानीत्यर्थः शरच्चन्द्रमरीचिरुचीनि—शारदेन्दुकिरणप्रभाणि शौचक्षमाणि—क्षालनादाय क्षौमवस्त्राणि तु प्रायश एव क्षालनानर्हाणि भवन्ति, इमानि तु शाहस्राणि इति भावः यद्वा—पवित्रताशय्याहरणार्हाणि क्षौमाणि—वसनविशेषान्।

(२२४) कुशलेति।—कुशलैः,—निपुणैः शिल्पिलोकैः,—कारुजनैः, ("कारु

नाश्च शुक्तिशङ्खगल्वर्कप्रमुखाणां पानभाजनानां निचयान्, (२२५) निचोलकरचितरुचांश्च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणाम अतिबन्धुरपरिवेशानां कार्दरङ्गचर्मणां सम्भारान्, भूर्जत्वक्कोमलाः स्पर्शवतीः जातीपट्टिकाः, (२२६) चित्रपटानाञ्च म्रदीयसां चमूरुकोपधानादीन् विकारान्,

---

शिल्पी" इत्यमरः ) शङ्खिक्षितानाम्—उद्धर्षितानां, प्रमृष्टानामिति यावत् शङ्खानि ।—गल्वर्क,—मुक्तास्फोटा, ("मुक्तास्फोट स्त्रियां शुक्ति" इत्यमरः) शङ्खा,—कम्बव गल्वर्का,—मसुराख्या मणिभेदाः, "चन्द्रकान्ता" इति केचित् चषका वा, प्रमुखा,—आदय अग्रेसरा वा, येषां इत्यर्थं तेषां तथाभूतानां तत्तद्रचितानामिति भाव, शुक्तिशङ्खगल्वर्कप्रमुखाणां वा, पानभाजनानि तन्मयान्यपि दृश्यन्ते, पानभाजनानां—पानपात्राणां, निचयान्—सङ्घान् ।

(२२५) निचोलकेति ।—निचोलकैः,—आवरणवस्त्रैः रचिता —पालिता गूढत्व इव उज्ज्वलतया व्यापिता इत्यर्थ, रुच —प्रभा येषां तथोक्तानाम्, औज्ज्वल्यपरिरक्षणार्थं आवरणवस्त्रेणावृतानामित्यर्थं तावदेति ।—रुचिरे —मनोज्ञे, काञ्चनपत्रभङ्गे,—सौवर्णपत्ररचनाभि भङ्गुराणि भङ्गिमन्ति तेषाम् अतिबन्धुरपरिवेशानाम—अतिशयेन उन्नतानताभोगानामित्यर्थं कार्दरङ्गचर्मणां—कार्दरङ्गदेशजफलकविशेषाजिनानाम्, यद्वा,—कार्द —कर्दम, स एव कार्द, [ स्वार्थे अण् ] रङ्ग,—राग [ रञ्जने भावे घञ् ] कार्द इव रङ्ग येषां तथाभूतानां चर्मणां कर्दमाभानां कृष्णसारप्रभृतीनां त्वचामित्यर्थं, धूमाभानां मृगाजिनानामिति भाव, सम्भारान्—निचयान् । भूर्जत्वक्कोमला,—भूर्जस्य—स्वनामख्यातवृक्षविशेषस्य, त्वक् इव—वल्कलानि इव, कोमला,—मृदुला स्पर्शवती —सुखस्पर्शा, जातीपट्टिका,—उत्कृष्टानि उपधानव्यजनशायनानि सूक्ष्माणीत्यर्थं, यद्वा,—जात्य —मालत्य सम्प्रसूनसुमस्येव इति यावत् या, पट्टिका —पट्टे भूता [ "तमधीष्टे—" (५।१।८० पा०) इति ठञ् ] कोमलांशुकानि इत्यर्थं जातिकुसुमसुवासितानि कौशेयवसनानि इति यावत् ।

(२२६) म्रदीयसाम्—अतिमृदूनां, चित्रपटानां—विचित्रवसनानां, चमूरुकोपधानादीन्—चमूरुक,—मृगभेद, तस्य उपधानादीन्—तदाकारकारितशिरोधानादीन्, [ "चमूरुकोपधानादीन्" इत्यत्र "समूरुकोपधानादीन्" इति पाठोऽपि स एवार्थ ] विकारान्—रूपान्तराणि, अतिकोमलविचित्रवसननिर्मितचमूरुमृगाकार

(२२७) प्रियङ्गुप्रसवपिङ्गलत्वञ्चि च आसनानि वैत्रमयाणि, अगुरुवल्कलकल्पितसञ्चयानि च सुभाषितभाञ्जि पुस्तकानि, (२२८) परिणतपाटलपटोलत्विषि च तरुणहारीतहरिन्ति क्षीरक्षारीणि च पूगानां पल्लवलम्बीनि सरसानि फलानि, (२२९) सहकारलतारसानाञ्च कृष्णागुरुतैलस्य च (२३०) कुपितकपिकपोलकपिलकापोतिकापलाशकोशकवचिताङ्गीः स्थवीयसी-

---

शिरोधानादिविविधद्रव्याणीत्यर्थः ; यद्वा,—विविधैः कोमलैश्च पटैः समाच्छादितानि राङ्कवाणि शयनीयोपकरणानीति यावत्।

(२२७) प्रियङ्गिति।—प्रियङ्गुप्रसवः,—प्रियङ्गुलतापुष्पम्, तद्वत्—पिङ्गला — पिशङ्गाः, त्वचः,—वल्कलानि, आच्छादनानीत्यर्थः येषां तानि, वैत्रमयाणि—वेत्रलतानिर्मितानि, आसनानि—पीठानि। अगुर्विति।—अगुरुवल्कलेन—अगुरुवृक्षत्वचा, कल्पितः—विहितः, सञ्चयः,—पत्राणां सङ्ग्रह इत्यर्थः येषां तथोक्तानि, पत्रावरणार्थं वल्कलेन निर्मितकपाटिकानीति यावत्, सुभाषितभाञ्जि—सदुक्तिपूर्णानि, सुवचनवन्तीत्यर्थः, पुस्तकानि—सुपाठ्यान् ग्रन्थान्।

(२२८) परिणतेति।—परिणत—परिपक्वम्, अत एव पाटल—श्वेतरक्तः, यत् पटोलं—स्वनामप्रसिद्धं कुलकापरपर्यायं फलविशेषः तस्य त्विट् —कान्तिः इव त्विट् येषां तानि तरुणहारीतहरिन्ति—तरुणः —नवीनः, यः हारीतः,—पक्षिविशेषः, तद्वत् हरिन्ति—श्यामलानि, क्षीरक्षारीणि—दुग्धवच्छुभ्रनिर्यासोद्गारीणि, निरतिशयस्वादूनीत्यर्थः पूगानां—गुवाकतरूणां, पल्लवलम्बीनि—किसलययुक्तानीति भावः, सरसानि —रसवन्ति, अशुष्काणि इति भावः।

(२२९) सहकारेति।—सहकारलता—अतिसौरभाम्रतरुः, ("आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः) तस्याः रसाः,—निर्यासाः तेषां, ["सहकारलतारसानाम्" इत्यत्र "लतासहकाररसानाम्" इति पाठे,—लतारूपो यः सहकारः,—आम्रः तस्य रसाः तेषामित्यर्थः।

(२३०) कुपितेति।—कुपितस्य—क्रुद्धस्य, कपेः,—वानरस्य कपोलः,—गण्डः तद्वत् कपिला—पिङ्गला, या कापोतिका—ओषधिविशेषः, तस्याः पलाशानां —पत्राणां कोशैः —कोषाकारैः पुटसमूहैः, कवचितानि—आवृतानि इत्यर्थः, अङ्गानि—अवयवाः यासां ताः, स्थवीयसीः,—अतिस्थिराः, दृढाः इत्यर्थः, ["स्थूल-

वैणवीर्नाडीश्च, (२३१) पट्टसूत्रप्रसेवकार्पिताश्च भिन्नाञ्जनकृष्णस्य कृष्णागुरुणः गुरुपरितापमुषश्च गोशीर्षचन्दनस्य (२३२) तुषारशिलाशकलशिशिरस्वच्छसितस्य च कर्पूरस्य कस्तूरिकाकोशकानाञ्च, पक्वफलजूटजटिलानाञ्च कक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणां जातीफलस्तवकानाञ्च राशीन्; (२३३) अतिमधुरमधुरसामोदनिर्हारिणीश्च उदककलशीः,

---

दूर—"(६।४।१५६ पा०) इति ईयसुनि यणादिपरस्य लोपात् गुणात् च सिद्ध, तत ङीष्] वैणवी,—वंशसम्बन्धिनी, नाडी,—पात्रविशेषान्।

(२३१) पट्टेति।—पट्टसूत्राणां—कौषेयतन्तूनां, प्रसेवकाः,—गोण्यः, आधारविशेषा इत्यर्थः, तेषु अर्पिताः,—निहिताः तान्, भिन्नाञ्जनकृष्णस्य—भिन्नं,—मर्दितं, यदञ्जनं—रसाञ्जनं, कज्जलं वा, तद्वत् कृष्णं—श्यामं तस्य। गुरुपरितापमुषः,—गुरुः,—महान्, परितापः,—सन्तापः, दाह इत्यर्थः, तं मुष्णाति—हरतीति तथोक्तस्य, गोशीर्षचन्दनस्य—हरिचन्दनाख्यचन्दनविशेषस्य, ("तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्" इत्यमरः)।

(२३२) तुषारेति।—तुषारशिला,—हिमशिला, वर्षोपल इत्यर्थः, तस्याः शकलं—खण्डं, तद्वत् शिशिरं—शीतलं, तथा स्वच्छं—निर्मलं, सितं—धवलञ्च तस्य। [अत्र विशेषणपदानां परस्परं विशेष्यत्वं परिकल्प्य कर्मधारयः स्वीकरणीयः]। कस्तूरिकाकोशकानां—कस्तूरिकाहेतुभूतमृगविशेषस्य नाभीनां, मृगनाभीनामित्यर्थः। पक्वेति।—पक्वानां—परिणतानां, फलानां—शस्यानां, जूटैः,—समूहैः, जटिलाः,—युक्ताः तेषां कक्कोलपल्लवानां—सुवासितकाशीवकिसलयानाम्। लवङ्गपुष्पमञ्जरीणां—लवङ्गलताकुसुमानां मञ्जरीणाम्। जातीफलस्तवकानां—जातीफलगुच्छानां, राशीन्—सञ्चयान्।

(२३३) अतीति।—अतिमधुरः,—अतिसुरसः, सुस्वादु इत्यर्थः, [पदमेतत् आमोदमेव विशिनष्टि, अन्यथा मधुरसाया स्वाद्वाः। द्राक्षाया एव वाचकतया तद्विशेषणत्वेनोपन्यासः पिष्टपेषणवत् निरर्थकः स्यादिति विभाव्यम्] मधुरसायाः,—द्राक्षायाः, केचित् "मधुरसः—मकरन्दद्रवम्" इत्याहुः ("मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः) आमोदः,—अतिदूरप्रसरत् मनोहरं सौरभम्, ("आमोदः सोऽतिनिर्हारी" इत्यमरः) निर्हारी च—हृदयाकर्षकः गन्धश्च यासु ताः, ("समाकर्षी तु निर्हारी" इत्यमरः) उदककलशीः,—उदक,—

मितासितस्य च चामरजातस्य निचयान्, (२३४) अवलम्बमानतूलिकाऽलाबुकांश्च, लिखितानालेख्यफलकसम्पुटान्, (२३५) कुतूहलकानि कनकशृङ्खलानियमितग्रीवाणां किन्नराणाञ्च वनमानुषाणाञ्च जीवञ्जीवकानाञ्च जलमानुषाणाञ्च मिथुनानि, (२३६) परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान्, गेहपरिसरणपरिचिताश्च चमरीः, (२३७) चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च सुबहुसुभाषितजल्पाकजिह्वांश्च

---

सुगन्धिफलविशेषस्य, आसवविशेष इति केचित् तस्य कलशी,—कुम्भान्। सितासितस्य—श्वेतस्य कृष्णस्य च। चामरजातस्य—बालव्यजनसमूहस्य।

(२३४) अवलम्बमानेति।—अवलम्बमानाभि —लम्बमानाभि, पार्श्वे निबद्धाभिरित्यर्थः, तूलिकाभि,—ईषिकाभि, चित्रकर्मसाधनीभिरिति यावत, ("ईषिका तूलिका समे" इत्यमर) सहिता अलाबुका,—तुम्बा, वर्णकभाजनानीति भाव, तान्। लिखितेति।—लिखिता,—चित्रिता, अनालेख्या —अचित्रिता, द्वे फलक सम्पुटा,—चित्राधारकाष्ठफलकविशेषा तान यद्वा—अवलम्बमाना तूलिका यत्रालाबुकास्तेषु तान्, लिखितान—चित्रितान विविधलतापत्रादिचित्रसमन्विता-नित्यर्थ, आलेख्यफलकसम्पुटान्—आलेख्यफलकाना—चित्रपटाना सम्पुटान्—आधारविशेषानित्यर्थं।

(२३५) कुतूहलकानि—कौतुकावहानि, कनकेति।—कनकशृङ्खलया—काञ्चनदाम्ना, नियमिता—निबद्धा, ग्रीवा—कन्धरा येषा तथोक्ताना, किन्नराणा—कुत्सितदेवयोनिभेदानाम्, अश्वमुखनरदेहविशेषाणा, नरमुखाश्वदेहाना वा इत्यर्थं। जीवञ्जीवकाना—पक्षिविशेषाणा, जलमानुषाणा—सलिलान्तःस्थितनरविशेषाणा, मिथुनानि —द्वन्द्वानि।

(२३६) परिमलेति।—परिमलेन—मनोहरसौरभेण, आमोदिता,—सुरभिता, ककुभ,—दिश ये तथाभूतान्, कस्तूरिकाकुरङ्गान—सुगन्धिनाभिकोष युक्तमृगभेदान्। गेहेति।—गेहेषु—गृहेषु, परिसरणे—विचरणे, परिचिता,—अभ्यस्ता ता, गृहवासाभ्यस्ता इत्यर्थं चमरी,—महिषाकारमृगी।

(२३७) चामीकरेति।—चामीकररस—स्वर्णस्य, द्रुतस्येति भाव, रसेन—द्रवेण, चित्रा,—रञ्जिता, वेत्रा,—वेतसा, तेषा पञ्जराणि—[illegible] पिञ्जराणि

शुकशारिकाप्रभृतीन् पक्षिणः, (२३८) प्रवालपञ्जरगतांश्च चकोरान्, जलहस्तिनाम् उदग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि।

राजा तु छत्रदर्शनात् प्रहृष्टहृदयः (२३९) प्रथमप्रयाणे शोभननिमित्तमिति मनसा जग्राह; हंसवेगञ्च प्रीयमाणो बभाषे,—"भद्र। सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्य अस्य महातपत्रस्य महार्णवात् इव कुमुदबान्धवस्य कुमारात् लाभो न विस्मयाय। बालविद्याः खलु महताम् उपकृतयः"

---

इत्यर्थः, तेषाम् अन्तर्गताः—मध्यस्थिताः तान् शुकादीनिति।—सुबहूनि—प्रभूतानि, सुभाषितानि—सूक्तानि सदुक्तानि इत्यर्थः, तेषां जल्पाकाः—वाचालाः पुनः पुनरुच्चारणशीला इत्यर्थः, ("स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः) जिह्वा—रसना येषां तान्।

(२३८) प्रवालेति।—प्रवालम्—विद्रुमं रत्नविशेषः, ("अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्" इत्यमरः) तस्य पञ्जराणि—पिञ्जराणि, तानि गताः,—प्राप्ताः, तत्र स्थिता इत्यर्थः तान् ["द्वितीयाश्रितातीत—" (२।१।२४ पा०) इति द्वितीयासमासः]। जलहस्तिनाम्—जलचराणां करिणाम्, उदग्रेति।—उदग्रेषु उन्नतेषु, कुम्भेषु—शिरःस्थमांसपिण्डविशेषेषु, यानि मुक्ताफलानि—जायमानानि मौक्तिकानि, गजशिरःसम्भूतमुक्ताफलानीत्यर्थः, तेषां दामानि—स्रजः दन्तुराणि—उच्चावचानीति भावः, दन्तकाण्डकुण्डलानि—स्थूलहस्तिदन्तरचितकर्णभूषणविशेषान्।

(२३९) प्रथमप्रयाणे—प्रथमयात्रायाम्, शोभननिमित्तम्—शुभलक्षणम्। मनसा जग्राह आकलयामास इत्यर्थः। सकलरत्नधाम्नः,—सर्वरत्नाकरस्य, सर्वगुणाकरस्येति यावत्, परमेश्वरस्य—प्रभोः चक्रवर्त्तिनः, शिरोधारणार्हस्य—मस्तकधारणयोग्यस्य, महातपत्रस्य उत्कृष्टच्छत्रस्य, महार्णवात्—गभीरसागरात्, कुमुदबान्धवस्य इव—चन्द्रस्य इव, कुमारात्—तदाख्यकामरूपाधिपात्। उपकृतयः,—परोपकाराणीति यावत्, महताम्—महापुरुषाणां बालविद्याः,—बाला,—प्रथमाभ्यस्ता, विद्या—ज्ञानानि अभ्यासनार्हा इति यावत्, यद्वा,—बालानाम्—शिशूनाम्, विद्याः,—पाठाभ्यासाः, इवेति शेषः, महान्तो हि प्रथममेव परोपकारः स्वयमर्जनीय इत्येव ज्ञानमर्जयन्ति, यद्वा,—शिशवो यथा प्रथमकर्माणि ग्रन्थ

(२४४) हरिचन्दनरसासारेण इव अपाति सन्ततम् उरसि। कुमुदमयम् इव हृदयम् अभवत् अतिशिशिरम्। अन्तर्हितहिम-शिला इव विलीयमाना व्यलिम्पत् अङ्गानि। जातविस्मयश्च अकरोत् मनसि, (२४५) "एकमजर्य्यं सङ्गतम् अपहाय कास्ति अन्या प्रतिकौशलिका?" इति। आहारकाले च हंसवेगाय (२४६) धवलकर्पटप्रावृतधौतनारिकेलपरिगृहीतं विलिप्तशेषं चन्दनम् अङ्गस्पृष्टे च वाससी (२४७) शरत्तारका-कारतारमुक्तास्तवकितपर्य्यन्तं परिवेषं नाम कटिसूत्रम्

---

हारा इव" इत्यत्र "नीहारहारा इव" इति समीचीनतया प्रतिभाति, तेन नीहारैः तुहिनकणनिकरैः कृता नीहारहाराः,—तुहिनरचितहारा इवेत्यर्थः ] अपप्तन्—अपतन्निति भावः [ पतेः कर्त्तरि लुङि रूपम् ]।

(२४४) हरिचन्दनेति।—हरिचन्दनरसासारेण—चन्दनविशेषद्रवासारेण, आसारः,—धारासम्पातः तेनेव, सन्ततम्—अनवरतम्, उरसि—वक्षसि, अपाति—पतितम्, [ पतेः कर्मणि लुङि रूपम् ]। कुमुदमयमिव—कैरवमयमिव, अतिशिशिरम्—अति-शीतलम्। विलीयमाना—द्रवीभवन्ती अन्तर्हितहिमशिला इव—अदृश्यकरका इवेत्यर्थः।

(२४५) एकम्—केवलम्, अजर्य्यम्—अक्षय्यम्, सङ्गतम्—मैत्रीम्, अपहाय—त्यक्त्वा, अन्या—अपरा, प्रतिकौशलिका—प्रत्युपकृतिः, का अस्ति?—नैव काऽप्यस्तीत्यर्थः, केवलमकृत्रिमं सख्यमेव अस्य प्रतिदानं नान्यत् किमपि अस्ति इति भावः।

(२४६) धवलेति।—धवलेन—धौतेन इत्यर्थः, कर्पटेन—वस्त्रेण, प्रावृतः,—आच्छादितः, स धौतः—शुद्धः, विशुद्ध इत्यर्थः, नारिकेलः—नारिकेलसम्पुटकम् इत्यर्थः, [ "नारिकेल" इत्यत्र "नालिकेर" इति पाठोऽपि न दुष्टः ] तेन परिगृहीतम्—[illegible] इति यावत्, विलिप्तशेषम्—स्वानुलिप्तावशिष्टमित्यर्थः, अङ्गस्पृष्टे—अङ्गधृते स्वपरिधान-योग्ये इत्यर्थः, स्वाङ्गानुलेपनावशिष्टचन्दनप्रदानं तथा स्वाङ्गस्पृष्टोचितवासःप्रदानञ्च अनुग्रहातिशयप्रदर्शनार्थं, राज्ञोऽयमस्मदादिरूपप्रसादप्राप्तेः सम्मानबोधकत्वादिति भावः।

(२४७) शरदिति।—शरद्—शरत्कालीनाः तारकाः—नक्षत्राणि, तासाम् आकारा इव—मूर्त्तय इव, मेघावरणराहित्यात् अतिसमुज्ज्वला इति भावः, ताराः,—महत्यः, या मुक्ताः,—मुक्ताफलानीत्यर्थः, तैः स्तवकितः—ग्रथितः, पदम्—

(२४८) अतिमहार्घपद्मरागालोकलोहितीकृतदिवसञ्च तरङ्गकं नाम कर्णाभरणं प्रभूतञ्च भोज्यजातं प्राहिणोत्। एवं प्रायेण च क्रमेण जगाम दिवसः।

ततः (२४९) कटकस्थबलबहलधूलिधूसरितवपुरंशुमाली मलीमसम् अङ्गमिव क्षालयितुम् अपरजलनिधिम् अवातरत्। (२५०) आभोगाऽऽतपत्रप्रदानवार्त्तामिव निवेदयितुं वरुणाय वारुणीं दिशम् अयासीत्। (२५१) मुकुलायमानसकलकमलवना प्रमुख एव प्रदर्शिताञ्जलिपुटा इव सदीपा भूः

---

अवयव इत्यर्थ यस्य तथाभूत, परिवेश नाम—परिवेश इत्याख्य, परिधिकपत्तादिति भाव ।

(२४८) अतीति।—अतिमहार्घस्य—महामूल्यस्य, पद्मरागस्य—रत्नविशेषस्य, कर्णाभरणनिहितस्य इति भाव, आलोकेन—उद्योतेन लोहितीकृत,—रक्तीकृत, दिवस,—वासर येन तथाभूत तरङ्गक नाम—तरङ्गकेतिसंज्ञकम्, आन्दोलनादिति भाव, कर्णाभरणं—कुण्डलम् ।

(२४९) कटकेति।—कटक—हस्त्यश्वरथपादातसन्निवेश, तस्मिन तिष्ठतीति कटकस्थ यत् बल—सैन्य, तस्य बहलाभि,—प्रभूताभि, धूलिभि,—रजोभि, सैन्यानां पदनिक्षेपवेगोत्थिताभिरिति भाव, धूसरितम—आपाण्डुरीकृत, वपु,—शरीरं यस्य तथाभूत अंशुमाली—सूर्य । मलीमस—मलिन सैन्यपदोत्थरजःसम्पर्कादिति भाव । अपरजलनिधि—पश्चिमसागरम् ।

(२५०) आभोगेति।—आभोगातपत्रम्—आभोगनामकं छत्र, तस्य प्रदानम्—अर्पण कुमाराय प्राभृतीकरणमित्यर्थ, तस्य वार्त्ता—संवाद तामिव । वरुणाय—प्रचेतसे पश्चिमाशाऽधिपतये इति भाव । वारुणीं—वरुणाधिष्ठिता, प्रतीचीमित्यर्थ, सूर्यस्य तस्यामेव अस्तगमनादिति भाव । अत्र आभोगातपत्रस्य वारुणतया अधिपति वरुणमन्तरेण कथं तदुपभोग राज्ञा हर्षेण क्रियते ? कथं वा अन्यस्य वस्तु अन्येनापरस्मै दीयते इति वार्त्ता वरुणाय विज्ञापयितुमेव वारुणदिकप्रयाण तपनस्य इत्युत्प्रेक्षितम्।

(२५१) मुकुलायमानेति।—मुकुलायमान—निमीलदिति भाव सकल—समग्र, कमलवन—पद्मकानन यस्या यस्या वा तथाभूता, सदीपा—सप्तादशद्वीपवती भूः

अभूत् भूपतेः । (२५२) नृपानुरागमय इव निखिलजीवलोकलोकाञ्जलिबन्धबन्धुर्जगत् जपाह्न सन्ध्यारागः । (२५३) गौडापराधशङ्किनी इव श्यामता प्रपेदे दिक् प्राची । (२५४) प्रचिततिमिरनिवहा निर्वाणान्यनृपप्रतापानलकलापा इव कालिमानम् अतानीत् मेदिनी । (२५५) मेदिनीशप्रदोषास्थानपुष्पनिकरम् इव (२५६) विकचतगररुचिरम् अवचकरः

---

अहदेवाञ्जलिपुटा इव—नैशार्थे रचितकरसंयोगा इव इत्यर्थे प्रभुक्ते एव अर्थे एव।

(२५२) नृपेति।—नृपे—राजनि, हर्षे इति यावत, अनुरागमय,—प्रीतिपूर्ण। निखिलेति।—निखिलस्य—सकलस्य जीवलोकस्य—संसारस्य, लोकाना—जनानाम् अञ्जलिबन्धस्य—करद्वयसंयोगस्य बन्धु —मित्र, संयोगघटकत्वादिति भाव, कृताञ्जलिभि लोकै सन्ध्या उपास्यते इति तात्पर्यम्। जगत्—भुवन, जपाह्व—आचक्राम, सन्ध्याकाल संजात इति भाव ।

(२५३) गौडेति।—गौडस्य—गौडराज्याधिपस्य इत्यर्थ अपराधात—दोषात, राज्ञ गौडस्य जनितादिति भाव शङ्कते—बिभेतीति तथोक्तेव, प्राची—पूर्वा, श्यामता—मलिनता प्रपेदे—प्राप अस्तोन्मुखसूर्यस्य आलोकेन पश्चिमदिशाया औज्ज्वल्यात् पूर्वाया निष्प्रभा जाता इति भाव ।

(२५४) प्रचितेति।—प्रचित,—उदित, सञ्चित इत्यर्थ तिमिरनिवह—अन्धकारनिचय यस्या यस्यां वा तथोक्ता। निर्वाणेति।—निर्वाण,—शान्त विनष्ट इत्यर्थ, अन्येषाम्—इतरेषा, हर्षविपक्षाणामिति भाव, नृपाणा—राज्ञां प्रतापानल कलाप,—प्रभावाग्निसमूह यस्या तथाभूता इव, निर्वाणाग्नि कृष्णवर्णाङ्गारखण्ड परिणमनादिति भाव, कालिमान—कृष्णत्व, तिमिराच्छन्नत्वमिति भाव अतानीत—विस्तारयामास।

(२५५) मेदिनीति।—मेदिनीशस्य—भूपते, प्रदोषास्थान—रजनीमुखसभामण्डप, सायमुपवेशनार्हसभास्थानमिति यावत तस्य पुष्पनिकर,—कुसुमनिचय, मण्डपशोभावर्द्धनार्थ परिचारकवर्गै स्थापित इति भाव सोऽपि।

(२५६) विकचेति।—विकचै,—प्रस्फुटितै, तगरै,—पुष्पविशेषै, रुचिर—मनोज्ञ, विकचानि—प्रस्फुटानि, तगराणि—तदाख्यकुसुमानि, तद्वत् रुचिर—मनो-

उडुनिकरम् अविरलं ककुभः। (२५७) स्कन्धावारगन्धगजमदासारोद्धावितस्य इव मार्गो वियति विरराज रजःपाण्डुः ऐरावतस्य। (२५८) कुपितनृपव्याघ्राघ्राताम् उपसृष्टाम् इव पौरुहूतीं विहाय विहायस्तलम् आरुरोह रोहिणीरमणः। (२५९) प्रयाणवार्त्ता इव मानिनीनां हृदयभेदिन्यो ययुः इन्दुदीधितयो दश दिशः।

---

हरन्। अविरलम्—सान्द्रम्, उडुनिकरम्—नक्षत्रनिचयम्, ("नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः) ककुभः—दिशः, ववमुः,—आविश्चक्रुः, बहूनि नक्षत्राणि समुदितानीति समुदितार्थः।

(२५७) वियति आकाशे, स्कन्धावारेति।—स्कन्धावारस्य—कटकस्य, ये गन्धगजाः,—गन्धप्रधाना करिणः, तेषां मदासारेण—दानवारिभिर्वर्षेण धावितस्य—क्षालितस्य इव, स प्रति शोभत इति भावः, ऐरावतस्य—स्वनामप्रसिद्धस्य इन्द्रगजस्य। रजःपाण्डुः—रजोभिः,—धावनवेगेन उत्थितैः पांशुभिः इत्यर्थः, पाण्डुः,—धवलः, मार्गः—पन्थाः, आकाशमार्ग इत्यर्थः, विरराज—शुशुभे, चन्द्रिकाधवलो वियन्मार्गः ऐरावतरजःपाण्डुरिव विरराज इति भावः।

(२५८) रोहिणीरमणः,—चन्द्रः, रोहिणी—गौः ("माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी" इत्यमरः) तस्याः रमणः,—वृषः, पतिरित्यर्थः, वृषभ इति यावत्। ("रमणः पटोलमूले नायके त्रि तु भवे करे" इति मेदिनी) कुपितेति।—कुपितेन—क्रुद्धेन, नृपव्याघ्रेण—राजश्रेष्ठेन, शार्दूलाधिपेन च, ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः) आघ्राता—आक्रान्तेति यावत् ताम्, गौडदेशस्य पूर्व्वदिग्व्यवस्थितत्वादिति भावः, अत एव उपसृष्टामिव—उपद्रुतामिव, पौरुहूतीम्—पुरुहूतेन—इन्द्रेण अधिष्ठिताम्, प्राचीमित्यर्थः, ["इन्द्रो मरुत्वान्मघवा ·। पुरुहूतः पुरन्दरः॥" इत्यमरः। "पौरुहूतीम्" इत्यत्र "पौरुहूतीम्" इति पाठोऽपि स एवार्थः] विहायस्तलम्—अन्तरीक्षम्, ("नभोऽन्तरीक्षं गगनम् । पुंस्याकाश-विहायसी॥" इत्यमरः) वृषभश्च कुपितव्याघ्राघ्रातां सोपद्रवां दिशं विहाय स्थानान्तरं गच्छतीति भावः।

(२५९) मानिनीनाम्—प्रियान् प्रति प्रणयकोपवतीनाम्, हृदयभेदिन्यः,—चित्तव्यथा-

(२६०) नवनृपदण्डयात्रात्रासातुरा इव तरलितसत्त्वहृदयाः चुक्षुभुः पतयो वाहिनीनाम्। (२६१) चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमुक्तसर्वोर्वीतिमिरसन्ततिः। प्रतिसामन्तचक्षुषाम् इव ननाश निद्रा कुमुदवनानाम्।

अस्याञ्च वेलायां (२६२) विततवितानतलवर्त्ती नरेन्द्रः,—"यात तावत्" इति विसर्ज्य अनुजीविनो हंसवेगम् आदिष्टवान्,—"कथय सन्देशम्" इति। प्रणम्य स कथयितुं प्रास्ता-

---

हारिण, भर्तृणा भटाना युद्धगमनेन विरहाशङ्किनाम्, उद्दीपकत्वादिति भाव, इन्दुदीधितय,—चन्द्रकिरणा, प्रयाणवार्त्ता इव—युद्धयात्राप्रहता इव।

(२६०) नवेति।—नवस्य—नूतनस्य, नवाभिषिक्तस्य इति यावत्, नृपस्य—हर्षस्य, दण्डयात्रा—युद्धप्रयाण, तया त्रास —भीति, तेन आतुरा इव—कातरा इव, अत एव तरलितेति।—तरलिता—चलिता, शिथिलिता च, सत्त्वाना—प्राणिनां, हृदयस्य—सत्त्वगुणस्य, उत्साहगुणकार्यधैर्यस्य इत्यर्थ ("सत्त्व गुणे पिशाचादौ बले द्रव्य स्वभावयो। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु॥" इति मेदिनी) इति,—व्यवहार येषा तथाभूता वाहिनीना—सैनिकाना, विपक्षीयाणामिति भाव, तरङ्गिणीनाञ्च नदीनाञ्चेत्यर्थ, ("वाहिनी स्यात्तरङ्गिण्यां सेना-सैन्यप्रभेदयो" इति मेदिनी) पतय,—स्वामिन राजान समुद्राश्चेत्यर्थ, चुक्षुभु,—विव्यथिरे, चचालिरे च, चन्द्रोदयदर्शनेन समुद्रक्षोभ प्रसिद्ध एव।

(२६१) भूभृता—राज्ञा, पर्वतानाञ्च। गुहाविवराणि—कन्दराभ्यन्तराणीत्यर्थ। विमुक्तेति।—विमुक्ता—त्यक्ता सर्वा—समग्रा, उर्वी—पृथ्वी यया तथाभूता, तिमिरसन्तति —अन्धकारसमूह। ["विमुक्तसर्वोर्वीतिमिरसन्तति" इत्यत्र "विमुक्तसर्वाशातिमिरसन्तति" इति पाठे—विमुक्ता सर्वा आशा,—दिश यया तथाभूता तिमिरसन्तति] चन्द्रोदयेन अन्धकार दूरीभूत इति समुदितार्थ। प्रतिसामन्तचक्षुषामिव—प्रतिपक्षनृपतिनयनानामिव। निद्रा—सङ्कोच, स्वापश्च, ननाश—नष्टा, चन्द्रोदयात, हर्षभयाच्चेति भाव।

(२६२) विततेति।—विततस्य—उपरि विस्तृतस्य, वितानस्य—उल्लोचस्य, चन्द्रातपस्येत्यर्थ, ("अस्त्री वितानमुल्लोच" इत्यमर) तलवर्त्ती—अध स्थित।

वीत्,—"देव ! पुरा (२६३) वराहसम्पर्कसम्भूतगर्भया भगवत्या भुवा नरको नाम सूनुः असावि रसातले। वीरस्य यस्य अभवन् बाल्य एव पादप्रणामप्रणयिनः चूडामणयो लोकपालानाम्; यस्य च (२६४) त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकीकोपकुटिलकटाक्षवीक्षितोऽपि (२६५) भयचकितारुणपरिवर्त्तितरथो न आज्ञया विना रविः अस्तम् अव्राजीत्; यश्च वरुणस्य (२६६) बहिर्वृत्ति हृदयम् इदम् आतपत्रम् अहार्षीत्। महात्मनः तस्यान्वये भगदत्तपुष्पदत्त-

---

यात—गच्छत। अनुजीविनः—परिजनान्, विसृज्य—परित्यज्य, सम्प्रेष्येति यावत्, स्थानान्तरमिति भावः। सन्देशं—वाचिकम्। प्रास्तावीत्—प्रचक्रमे।

(२६३) वराहेति।—वराहः—भगवतो विष्णोरवतारविशेषः, तस्य सम्पर्केण—सङ्गेन, सम्भूतः—उत्पन्नः, गर्भः—भ्रूणः यस्याः तथाभूतया, भुवा—पृथिव्या, नरकः—तन्नाम्ना प्रसिद्धः सूनुः—पुत्रः, असावि—प्रसूतः। यस्य—नरकस्य, लोकपालानाम्—इन्द्रादीनां, चूडामणयः—मुकुटरत्नानि, पादेति।—पादयोः—चरणयोः, प्रणामे—नमस्कृतौ, प्रणयाः—आसक्ताः इत्यर्थः, सन्ति एषामिति तथोक्ताः, नियतनरकचरणप्रणतिपरायणा इत्यर्थः, येन लोकपालाः सर्वे निर्जिता इति भावः।

(२६४) त्रिभुवनभुजः—त्रिलोकीभोगिनः, त्रिलोकीश्वरस्य इति यावत् भुजशौण्डस्य—भुजेन—बाहुना बाहुबलदर्पेणेति यावत्, शौण्डस्य—मत्तस्य, बाहुबलशालिन इति यावत् ("मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः) भवनेति।—भवनकमलिनी—गृहसरसि पद्मिनी गृहसमीपस्था पुष्करिणी वा, तत्र या चक्रवाकी—चक्रवाकवधूः, तस्याः कोपेन—क्रोधेन कुटिलः—वक्रः, यः कटाक्षः—अपाङ्गदर्शनं, सूर्यास्तगमने तस्या विरहोत्पत्तेरवश्यम्भाविकतया तद्गमननिवारणार्थं सक्रोधदर्शनमिति भावः, तेन वीक्षितोऽपि—दृष्टोऽपि, अस्तगमनोत्सुकोऽपि इति भावः।

(२६५) भयेति।—भयेन—भीत्या, चकितः—त्रस्तः, योऽरुणः,—तदाख्यसूर्यसारथिः तेन परिवर्त्तितः,—प्रत्यावर्त्तितः, रथः,—स्यन्दनः यस्य तथाभूतः। अव्राजीत्—अगमत्।

(२६६) बहिर्वृत्ति—बहिःस्थितम्, अतिप्रियमिति भावः। अहार्षीत्

यच्चदत्तप्रभृतिषु व्यतीतेषु बहुषु (२६७) मेरुपमेषु महत्सु महीपालेषु, प्रपौत्रो महाराजभूतिवर्म्मणः, पौत्रः चन्द्रमुखवर्म्मणः, पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्म्मणः सुस्थिरवर्म्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिः, मृगाङ्क इति यं जना जगुः। (२६८) यो यमजैनेवाजायत सहैवाहङ्कारेण। यश्च बाल एव प्रीत्या (२६९) द्विजातीन् अप्रीत्या च अरातीन् समग्रान् प्रतिग्रहान् अग्राहयत्:

---

बलपूर्वकमग्रहीदित्यर्थः। वंश—भरतस्य, अन्वये—वंशे। व्यतीतेषु—अतिक्रान्तेषु, परलोकं प्रस्थितेषु इत्यर्थः।

(२६७) मेरुपमेषु—सुमेरुतुल्येषु, धनमानाढ्यत्वादिभिरत्युन्नततयेति भावः। महत्सु—प्रवरेषु, महीपालेषु—राजसु। कैलासेति।—कैलासे—तदाख्ये शिवाऽऽवासभूते पर्व्वते, स्थिरा—निश्चला, निश्चयात्मिका इति यावत्, स्थितिः,—अवस्थानं यस्य तथाभूतस्य, स्वकीयशुभकर्म्मबलात् अनश्वमेव शिवपार्षदो भूत्वा कैलासे विराजमानं कुर्व्वत इति भावः, पुण्यवत इति तात्पर्य्यम्। महेति।—महाराजेषु—श्रेष्ठनृपतिष्वपि, अधि—अधिकं, उत्कर्षवानित्यर्थः, राजा—नृपतिः तथाभूतः, सार्व्वभौम इत्यर्थः, जज्ञे—बभूव। मृगाङ्कः—चन्द्रः, तद्वत् जगतां प्रीत्युत्पादकत्वात् इति भावः, एतेन स अतीव प्रजारञ्जनपरायण आसीत् इति सूच्यते, जगुः—कीर्त्तयामासुः।

(२६८) यः—मृगाङ्कापरनामा सुस्थिरवर्म्मा इति यावत्, यमजैनेव—युग्मजातेनेव, अहङ्कारेण सहैवोत्पन्नत्वादिति भावः अहङ्कारेण—अभिमानेन, सहैव अजायत—उदपद्यत, अहङ्कारः स च युगपदेव अवतीर्ण इत्यर्थः, स अतीव अभिमानी आसीदिति भावः।

(२६९) प्रतिग्रहान—द्विजेभ्यो विधिवद्देयान यथाविधि दानीयद्रव्याणीति यावत्, सैन्यपृष्ठानि च, अरातिसैन्यानि रणभूमौ पृष्ठप्रदर्शनपराणीत्यर्थः, पराजयप्रत्यक्षीकानीति भावः, ("प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे॥" इति मेदिनी) प्रीत्या द्विजान् दानेऽद्रव्यस्वीकरणरूपप्रतिग्रहान् अग्राहयत्, शत्रूंश्च अप्रीत्या सैन्यानां पश्चाद्भागप्रदर्शनप्रतिग्रहान् अग्राहयत् इति निष्कर्षः, स दानशील वीर्य्यवांश्चासीदिति तात्पर्य्यम्।

(२७०) यत्र च अतिदुर्लभं लवणालयसम्भूतायाः परं माधुर्यम् अभूल्लक्ष्म्याः; तथा च यो (२७१) वाहिनीनाथानां ग्रहान् जहार, न रत्नानि; पृथिव्याः स्थैर्यं जग्राह, न करम्; (२७२) अवनिभृतां गौरवमादत्त, न नैष्ठुर्यम्। तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्माऽपरनामा तनयः शन्तनोर्भागीरथ्यां भीष्म इव कुमारः समभवत्। अयम् (२७३) अस्य च शैशवादारभ्य सङ्कल्पः स्थेयान् स्थाणुपादारविन्दद्वयादृते न अहम् अन्यं नमस्कुर्यामिति; ईदृशश्च अयं मनोरथः त्रिभुवनदुर्लभः त्रयाणाम् अन्यतमेन सम्पद्यते; सकलभुवनविजयेन

---

(२७०) यत्र—यस्मिन् राजनि। लवणालयसम्भूतायाः,—लवणसागरसमुत्पन्नायाः, लक्ष्म्याः,—श्रियाः; स एव श्रीमान् आसीदिति भावः।

(२७१) वाहिनीनाथानां—प्रतिपक्षसेनापतीनां, समुद्राणाञ्च ग्रहान्—युद्धारम्भे बाध्यमानान् विजयग्रहान्, समुद्रगर्भस्थान् जन्तून् इत्यर्थः, जहार—यत्नेन विजित्य बलपूर्वकं जग्राह, समुद्रात् जग्राह च। स्थैर्यं—चिरस्थितिम्; करः—राजग्राह्यभागः, धीरः स स्वधैर्येण पृथिवीमपि अतिचक्राम इति भावः।

(२७२) अवनिभृतां—राज्ञां, पर्वतानाञ्च, गौरवं—सम्मानं, गुरुत्वमित्यर्थश्च; नैष्ठुर्यं—क्रूरत्वं, काठिन्यञ्च, राज्ञां सम्मानं जग्राह तथा पर्वतवत् सारवानासीत् इति भावः। सुगृहीतनाम्नः,—प्रातःस्मरणीयस्य, तस्य—सुस्थिरवर्मणः। भास्करद्युतिः,—सूर्यवत् तेजस्वी। शन्तनोः,—तदाख्यस्य चन्द्रवंशीयनृपभेदस्य। कुमारः,—कुमार इत्याख्यः।

(२७३) अस्य—भास्करवर्माऽपराख्यस्य कुमारस्य। स्थेयान्—अतिस्थिरः, दृढतर इति यावत्, सङ्कल्पः,—अभिलाषः, वासनेति यावत्। स्थाण्विति।—स्थाणोः,—हरस्य, ("हरः स्मरहरो भर्गः । स्थाणू रुद्र उमापतिः ॥" इत्यमरः) पादारविन्दद्वयात्—चरणकमलयुगलात्, ऋते—विना। त्रिभुवनदुर्लभः,—त्रिजगद्वासिभिर्दुष्प्राप इत्यर्थः। त्रयाणां—सकलभुवनेत्यादिना वक्ष्यमाणानां त्रिविधानामित्यर्थः, अन्यतमेन—केनचिदेकेन, सम्पद्यते—घटते। सकलभुवनविजयेन—त्रिजगद्वशीकरणेन, त्रिभुवनं विजेतुं समर्थयन् न कमपि नमस्कुर्यात्, तमेव सर्वे नमस्करिष्यन्तीति भावः।

गतागतामहतभुवम् ; (३८२) उपचेत्रमुपरचितैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम् ; दिशि दिशि च (३८३) प्रतिमार्गद्रुमकृतानां, पथिकपादप्रस्फोटनधूलिधूसरैः नवपल्लवैर्लाञ्छितच्छायानाम्, (३८४) अटवीसुलभसालकुसुमस्तवकाचितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानाम्, (३८५) अच्छिद्रकटकाल्पितकुटीरकाणां, (३८६) कुटिलकीटवेणीविद्ध-

---

लब्धक्षयमापन्नादिति भावः, आरब्धाभ्यां—प्रारब्धाभ्यां, गतागताभ्याम्—यातायाताभ्याम्, अप्रहता—नातिहता, नातिकृष्टा इत्यर्थः, भूः,—भूमिः यत्र तम्।

(३८२) उपचेत्र—चेत्रसमीपे, [सामीप्येऽव्ययीभावः] यद्वा,—चेत्रेषु उप चेत्रमिति [विभक्त्यर्थेऽव्ययीभावः] उपरचितैः,—कल्पितैः, मञ्चैः,—"माचा" इति भाषया प्रसिद्धैः, ["उपरचितैर्मञ्चैश्च" इत्यत्र "उपरचितैरचमञ्चैश्च" इति पाठान्तरम्] सूच्यमानेति।—सूच्यमानः,—अनुमीयमानः, श्वापदानाम्—हिंस्रजन्तूनां, श्वापदस्य—व्याघ्रस्य वा, उपद्रवः,—उत्पातः यत्र तम्।

(३८३) प्रतिमार्गेति।—प्रतिमार्गं—प्रतिपथं, द्रुमैः,—वृक्षैः, कृतानां—रचितानाम्। पथिकेति।—पथिकानां—पान्थानां, पादप्रस्फोटनात्—चरणताडनात्, सवेगपदक्षेपणादित्यर्थः, उत्थिता इति शेषः, या धूलयः,—पांशवः, ताभिः, तत्सम्भवेन इति भावः, धूसराः,—ईषत्पाण्डुवर्णाः तैः, लाञ्छितेति।—लाञ्छिताः,—चिह्निताः, युक्ता इत्यर्थः छाया—प्रतिबिम्बं यासां तदीकानाम्।

(३८४) अटवीति।—अटव्याम्—अरण्ये, सुलभाः,—सुप्रापाः, ये सालाः,—वृक्षविशेषाः, तेषां कुसुमस्तवकैः,—पुष्पगुच्छैः, आचिताः,—शोभिता इत्यर्थं, तत्पुष्पगुच्छानां निकटवर्तिषु पतनादिति भावः, नवखाता—नूतनखनिता, या कूपिका—क्षुद्रकूपः, तस्याः उपकण्ठे—अन्तिके, ("उपकण्ठान्तिकाभ्यर्णाभ्यग्राः" इत्यमरः) प्रतिष्ठिताः,—प्रतिष्ठां गताः, ये नागस्फुटाः,—नागदन्तिकाः, प्रस्फुटितपुष्पनागकेसरवृक्षा वा यत्र तासाम्।

(३८५) अच्छिद्रेति।—अच्छिद्र—छिद्ररहितं यथा तथा, कटैः,—शराख्यतृणविशेषैः, किलिञ्जैर्वा, ("कट श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे" इति मेदिनी) कल्पितानि—रचितानि, कुटीरकाणि—क्षुद्रकुटाणि यासां तासाम्।

(३८६) कुटिलेति।—कुटिला—वक्रगामिनी, या कीटवेणी—कीटश्रेणी,

जायमानजलजडिम्नाम्, (३९०) उदकुम्भाऽऽकृष्टपाटलशर्करा-शकलशिशिरीकृतदिशां, (३९१) घटमुखघटितकटहारपाटल-पुष्पपुटानां, (३९२) शीकरपुलकितपल्लवपूलीपाय्यमानशोष्य-सरसशिशुसहकारफलजूटीजटिलस्थाणूनां, (३९३) विश्राम्यत्-कार्पटिकपेटकपरिपाटीपीयमानपयसाम्, अटवीप्रवेशप्रपाणां

"जाला" इति वङ्गीयैराख्यातेषु जलाश्रयजलाधारविशेषेषु इत्यर्थः, ("अलिञ्जर स्यान्मणिकम्" इत्यमरः) जायमानः,—सम्पद्यमानः जलानां—सलिलानां, जडिमा—शैत्यं यासु तथोक्तानाम्।

(३९०) उदकुम्भेति।—उदकुम्भेभ्यः,—जलघटेभ्यः, आकृष्टानां—बहिरानीतानां, पाटलानां—श्वेतरक्तानां, शर्कराणां—कर्कराख्यवालुकानां, शकलैः—खण्डैः, अलखिलैः इति भावः, शिशिरीकृता,—शीतलीकृता, वायुना जलीयांशस्य हरणतो विक्षिप्यमाणत्वादिति भावः, दिशः,—ककुभः यासु तथोक्तानाम्।

(३९१) घटेति।—घटानाम्—उदकुम्भानां मुखेषु—आस्येषु उपरिभागेषु इत्यर्थः, घटितः,—रचितः, कटहारः—तृणविशेषनिर्मितहारः, पाटलः—श्वेतरक्तः, पुष्पपटश्च—कुसुमावरणञ्च, यासां,—घटमुखे घटितकटहारे यत् पाटलपुष्प—"पारुल" इति वङ्गीयैराख्यात पाटलाख्यकुसुमविशेषः ग्रथितमिति भावः, तं पुटः,—आच्छादनम् अधिवासनार्थमिति भावः यासु तथोक्तानाम्।

(३९२) शीकरेति।—शीकरैः,—अम्बुकणैः, पुलकिता—सम्पृक्ता इति यावत्, या पल्लवपूली—किसलयसमूहः, तया पाय्यमानः—रक्ष्यमाणः आप्याय्यमानः इत्यर्थः, अत एव शोष्योऽपि—शोषणयोग्योऽपि, सरसः—अशुष्कः इत्यर्थः, परिपुष्ट इति यावत्, शिशुसहकारः,—बालाम्रतरुः, तस्य फलजूटीभिः—फलसमूहैः, जटिलः,—संयुक्तः, स्थाणुः,—शाखापल्लवरहिततरुः इत्यर्थः यासु तथोक्तानाम्, यद्वा—शीकरपुलकितपल्लवपूलीपाय्यमानः अत एव शोष्योऽपि शाखापल्लवादिशून्यत्वेनावरणराहित्यादिति भावः, सरसः, आम्रशाखाभिराच्छादनादिति भावः, शिशुसहकारफलजूटीजटिलस्थाणुर्येषु तथोक्तानाम्।

(३९३) विश्राम्यदिति।—विश्राम्यद्भिः—श्रममपनुदद्भिः, कार्पटिकैः,—कर्पटेन—कषायवस्त्रेण चरन्तीति तैः, तीर्थयात्रिकैरित्यर्थः, पेटकपरिपाटीभिः,—पात्रविशेषश्रेणीभिः, यद्वा—कार्पटिकपेटकैः,—तीर्थयात्रिकदम्बकैः, ("पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी) परिपाट्या—आनुपूर्व्या, अनुक्रमेणेत्यर्थः,

ग्रैष्मेन त्याजयन्तमिव ग्रैष्मम् उष्माणम्, (३८४) क्वचित् अन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसङ्कट दाहिभि र्व्योकारैः ; सर्व्वतश्च (३८५) प्रातिवेश्यविषय-वासिना, समासन्नग्रामगृहस्थापितस्थविरपरिपाल्यमानपाथेय-स्थगितेन, (३८६) कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन, (३८७) स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन,

---

पीयमान सलिल—जलं यासां यत्र वा तथोक्तानाम् अन्वीपवप्रप्रपाणाम्—अरण्य प्रवेश पानीयशालानाम्, ("प्रपा पानीयशालिका" इत्यमरः)। ऊष्म—नैदाघम उष्माणम्—उत्तापम् ।

(३८४) अङ्गारीयदारुसङ्कटदाहिभि —अङ्गारेभ्य —अलातेभ्य हितानि अङ्गारीयाणि—अङ्गारोपयोगीनि यानि दारूणि—काष्ठानि तथा सङ्कट —सञ्चय, तान्यपि च दहन्ति—भस्मीकुर्व्वन्तीति तथाभूतै र्व्योकारैः —लोहकारै कर्म्म कारै इत्यर्थः ("व्योकारो लोहकारकः" इत्यमरः) अन्यत्र क्वचित् ग्राहयन्तमिव—सङ्क्रामयन्तमिव, उष्माणमिति पूर्व्वेणान्वय ।

(३८५) प्रातिवेश्येति ।—प्रातिवेश्य —प्रतिवेशी विषयवासी—जनपदवासी तेन, यद्वा—प्रातिवेश्य —प्रातवासस्य—प्रतिवासिन अयं प्रातवेश्मिसम्बन्धीत्यर्थ, विषय —आश्रय ("विषय आश्रये" इत्यमरः) तत्र वसति—तिष्ठतीति तेन यद्वा, —प्रातिवेश्य —गृहसमीपवर्त्ती यो विषय —देश स्थानमित्यर्थ ("विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी) तन्निवासिना । समासन्नेति ।—समासन्ने—सन्निहिते, ग्रामे—आवसथे यत् गृह—भवन तत्र स्थापितेन—रक्षितेन स्थविरेण —वृद्धेन परिपाल्यमान—रक्ष्यमाणम् यत् पाथेय—शम्बलम्, तेन स्थगित —पाथेया नधिगमात् गमनात् निवृत्त इत्यर्थः तेन ।

(३८६) कृतेति ।—कृत —विहित दारुणस्य—कठिनस्य दारुव्यायामस्य —काष्ठच्छेदनरूपपरिश्रमस्य योग्य —अनुरूप अङ्गाभ्यङ्ग —शरीरे तैलमर्द्दन वयश येन तथोक्तेन अभ्यङ्गलक्षणमुक्तं यथा—"मूर्द्धि न्यस्य यदा तैलं मर्द्दनं सर्व्वाङ्गसङ्गतम् । स्रोतोभिन्नपथेष्वाङ्ग अभ्यङ्ग स उदाहृत ॥" इति ।

(३८७) स्कन्धेति ।—स्कन्ध—असदेशे अध्यासितस्य—स्थापितस्य कठोरस्य —तीक्ष्णस्य इति यावत् कुठारस्य—परशो, कण्ठ—अग्रभागे इत्यर्थ, लम्बमान —तिष्ठदित्यर्थ प्रातराशपुट—प्रातर्भोजनपात्र यस्य तथाभूतेन ।

(३९८) पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण, कालवेतकत्रिगुणव्रततिवलयपाशग्रथितग्रीवाग्रथितैः पत्रपोटाहृतमुखैः पीतकूटैः उदकधारिणा (३९९) पुरःसरबलवद्बलीवर्दयुगसरेण, नैकटिककुटुम्बिकलोकेन, काष्ठसङ्ग्रहार्थम् अटवीं प्रविशता, (४००) श्वापदव्यधनव्यवधानवल्लीसमारोपितकुटीकृतकूटपाशेन, (४०१) गृहीतमृगतन्तुतन्त्रीजालवलय-

---

(३९८) पाटच्चरेति।—पाटच्चर,—चोर, ("चौरैकागारिकस्तेन । पाटच्चरमलिम्लुचाः" इत्यमरः) स एव प्रत्यवाय —अन्तराय, तेन हेतुना प्रतिपन्न—गृहीत, परिहितमित्यर्थः पटच्चर—जीर्णवस्त्रं येन तथोक्तेन, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) दस्युतस्करादिभिः परिहृततनुसनवस्त्रस्य अपहरणभयात् इति भाव। कालेति।—कालवेतकस्य—जलवेतसस्य, त्रिगुण—त्रिरावृत्त यत् व्रततिवलय—लतामण्डलमेव, पाश,—रज्जु, यद्वा,—त्रिगुण व्रततिवलयपाश —लतामण्डलरचितरज्जु तेन ग्रथितया—वेष्टितया, ग्रीवया—कण्ठेन ग्रथितैः,—विधृतैः, उपर्युक्तरित्यत्र तादृग्ग्रीवावद्भिरिति यावत् पत्रेति।—पत्रपोटया—पत्रसम्पुटेन, आहृतम्—आच्छादितं, मुखम्—अग्रभाग इत्यर्थः येषां तथोक्तैः, पीतकूटैः,—पानपात्रविशेषैः उदकधारिणा—गृहीतसलिलेन।

(३९९) पुरःसरेति।—पुरःसरम्—अग्रसरं यथा तथा, बलम्—बलवत्, बलीवर्दयुगसरम्,—वृषभयुगलं यस्य तेन, ["पुरःसरबलवद्बलीवर्द—" इत्यत्र पुरःसरबलवद्बलीवर्द—" इति पाठस्तु समीचीनतया प्रतिभाति, तस्मिन् पुरःसर,—अग्रे गच्छन्, बलवान्—सबल बलीवर्दयुगसर यस्य तेन] नैकटिककुटुम्बिकलोकेन—सन्निहितगृहस्थलोकेन "उपेतम्" इत्यनेनान्वय। एवमुत्तरत्रापि तृतीयान्तविशेष्यपदेन सहेति योज्यम्।

(४००) श्वापदेति।—श्वापदानां—व्याघ्रादिहिंस्रजन्तूनां, व्यधनाय—वेधनाय, व्यवधाने—अन्तराले, या वल्ली—निभृत स्थानं, तत्र समारोपिता—रचितेत्यर्थः, या कुटी—क्षुद्रं तृणनिर्मितं गृहं सैव कृता,—स्थापिता, कूटपाशा,—कूटरज्जवः यन्त्रपाशरूपा वा ये तथाभूते।

(४०१) गृहीतेति।—गृहीता,—धृता, मृगतन्तव,—मृगाणाम् अन्त्राणि इति यावत्, ते [illegible] तन्त्रीजालानि—रज्जुसमूहा, तेषां वलये,—मण्डले, कास्तीतान

वागुरैः, वहिर्व्याधैः विचरद्भिः; अंसावसक्तवीतंसव्यालम्बमानबालपाशिकैश्च, (४०२) सङ्गृहीतग्राहककाककारकपिञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः, (४०३) च्युतमासकलेशनिश्चलतावधूलट्वालम्पटानाञ्च पेटकैः पाशकशिशूनाम् अटद्भिः, (४०४) दवस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटुकारैश्च विहङ्गकृपया मृगयुयुवभिः

---

भाव, वागुरा—पाश यैः तथाभूतैः, मृगबन्धनोपायधारिभिरित्यर्थः, वहि, विचरद्भि,—सञ्चरद्भि व्याधैः—लुब्धकैः । अंसेति ।—अंसेषु—स्कन्धदेशेषु अवसक्ता,—सक्ता, वीतंसा,—"जालगला" इति बङ्गभाषया ख्यातानि मृगपक्षिणां बन्धनसाधनानि उपकरणानि ("वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्" इत्यमरः) व्यालम्बमाना—दोलायमाना इत्यर्थः, बालपाशिका—घुदरज्जुः यैषां तैः, यद्वा,—अंसावसक्तवीतंसेषु व्यालम्बमाना—सम्बध्यमाना इत्यर्थः, बालपाशिका यैषां तैः ।

(४०२) सङ्गृहीतेति ।—सङ्गृहीतानि—धृतानीत्यर्थः, ग्राहकाणां—घातिविहगानां, श्येनानामित्यर्थः, ("ग्राहकौ घातिविहगौ व्यालग्राहे ग्रहीतरि" इति मेदिनी) काकराणां—काकानां, "कयेर" इत्याख्यपक्षिणामित्यर्थः, ("कृकवाकुर्नकुटो वनौ" इत्यमरः) कपिञ्जलादीनाञ्च—गौरतित्तिरीणां चातकानां वा, पञ्जरकाणि—पिञ्जराणि यैः तथाभूतैः शाकुनिकैः,—पक्षिव्याधैः, पाशमृद्भिः इत्यर्थ ।

(४०३) च्युतेति ।—च्युतलासका,—विलासशून्या इत्यर्थः, निष्पन्दा इति यावत् तथा लेशेन—स्वल्पेन लासकलवेनेति यावत् कदाचित् चाटुकमादिति भाव निभृता—स्तब्धा, लता,—बीरुध एव, बध्व—नार्यः, तासु ■ लट्वा,—पक्षिभेदाः, "चडुइ" पक्षिचटका इति यावत्। ("लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी) तासु लम्पटा,—लुब्धा तेषां, पाशकशिशूना—व्याधबालकाना, अटद्भि,—भ्रमद्भिः पेटकैः,—समूहैश्च ।

(४०४) दवेति ।—दवानाम्—अर्जुनानां, स्तम्बेषु—गुल्मेषु, अन्तरिता,—निभृतास्थिता, ये तित्तिरय,—तदाख्यपक्षिभेदाः, तेषु तरलायमानानां—लोलुपानां, कौलेयकाना—सारमेयाणां, कुक्कुराणामित्यर्थः, ("कौलेयक सारमेये कुलीने" इति मेदिनी) यत् कुल—समूह, तस्य चाटुकारैः,—सेवकैरिति यावत्, तत्सहायैः

क्रीडद्भिः, (४०५) परिणतचक्रवाककण्ठकषायरुचां क्षौम-
व्यानां वल्कलानां कलापान्, नातिचिरोढ़तानाञ्च धातुत्विषां धातकीकुसुमानां गोणीः अगणिताः, (४०६) पिचव्यानां अतसीगणपट्टमूलकानां पुष्कलान् सञ्चारान्, भारांश्च मधुनो माक्षिकस्य, मयूराङ्गजस्य, अक्लिष्टमधूच्छिष्टचक्रवालानां, (४०७) लम्बमानलामज्जकजूटजटानाम्, अपत्वचां खदिर-

---

रिति भावः, विहङ्गमगणैः—पक्षिवृन्दैः आक्रीडद्भिः,—खेलद्भिः, कुर्वद्भिरित्यर्थः, मृगयुयुवभिः,—तरुणैः व्याधैः।

(४०५) परिणतेति।—परिणतः,—स्थविरं यः चक्रवाकः,—रथाङ्गनामा पक्षिभेदः, तस्य कण्ठः—गलदेशः, तद्वत् कषाया—पीतरक्ता, लोहिता वा ("कषायो रक्तपीतेऽपि । तुवरो लोहिते त्रिषु ॥" इति मेदिनी) रुक्—प्रभा येषां तथोक्तानां, क्षौमव्यानां—क्षौमवस्त्रकरणयोग्यानाम्, ऐतद्वाचामित्यर्थः, वल्कलानां—त्वचां कलापान् सङ्घान्। नातिचिरोढ़तानाम्—अनतिचिरोद्धृतानां, धातुत्विषां—गैरिकवर्णानां, ("धातुर्मनःशिलाद्यद्रेर्गैरिकन्तु विशेषतः" इत्यमरः) धातकी-कुसुमानां—धातपुष्पिकाख्यपुष्पाणां, "धाइफुल" इति वङ्गीयैः ख्यातानामित्यर्थः, अगणिताः,—असङ्ख्याः, गोणीः,—पुष्पनिक्षेपभाजनविशेषान्।

(४०६) पिचव्यानां—पिचुः,—तूलः तदुपयोगिनां, कार्पासानामिति भावः, तथा अतसीति।—अतसीगणा—अतसीभेदाः, पट्टाः,—वस्त्रभेदाः, मूलकानि—ओषधिभेदाः तेषाम्, यद्वा,—अतसीवर्णानां—धौतवस्त्रोपयोगिनां सूत्रसमूहानामित्यर्थः, पट्टानां—कौषेयाणां, कौषेयवस्त्रोपयोगिनामित्यर्थः, मूलकानि—मूलानि, बीजानि इत्यर्थः तथा, पुष्कलान्—प्रभूतान् सञ्चारान्—निचयान्। माक्षिकस्य—मक्षिका-विशेषकृतस्य, मधुनः,—क्षौद्रस्य इत्यर्थः भारान्—समूहान्। मयूराङ्गजस्य—शिखि-पिच्छस्य, "भूयसो भारकान्" इति पदैरन्वयः। अक्लिष्टेति।—अक्लिष्टानाम्—अक्षुण्णानां मधूच्छिष्टानां—सिक्थकानां, "मोम" इति वङ्गे प्रसिद्धानामित्यर्थः चक्र-वालानि—समूहाः तेषाम्। ["मधूच्छिष्टचक्रवालानाम्" इत्यत्र "मधूच्छिष्टचक्र-मालानाम्" इति पाठे,—मधूच्छिष्टचक्राणां—"मोमाछिर चाक" इति प्रसिद्धानां मधुमक्षिकाणां आवासभूतानां सिक्थकबीजानां, माला,—श्रेणय तासाम्]।

(४०७) लम्बमानेति।—लम्बमानानां—दीर्घाणामित्यर्थः, लम्बमानाः,—

(४११) धुर्यगतधूलिधूसरसैरिभसरोषस्वरसार्यमाणानां, सक्रीडचटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः (४१२) सम्पाद्यमानदुर्बलोर्वीविकचदेवसंस्कारम्; (४१३) आरब्धदृप्तदान्तवाहकदण्डोड्डीयमानहरिणहिंसा-लम्बितवैणवहतिभिव, (४१४) निखातगौरकरङ्कशङ्कितशशकशबलितशुष्कशृङ्गैः, प्रयत्नप्रसूतविसङ्कटविटपैः,

---

(४११) धुर्येति।—धुर्ये —धुरि—भारे, गत,—प्राप्त, भारवहने नियुक्त इत्यर्थं, धूलिभि —मार्गरजोभि, धूसर,—धाराश्चुर, य सैरिभ,—महिष, ( "लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमर ) तेन सरोषेण—सक्रोधेन, स्वरेण—गम्भीरशब्दविशेषेण सार्यमाणा —सञ्चाल्यमाना तासां, सक्रीडदिति।—सक्रीडता—कृजता, चटुलाना—चञ्चलाना घूर्णमानानामित्यर्थं, चक्राणां—रथाङ्गाना, चीत्कार —शब्दविशेष तद्वतीनाम्। सम्पातै —सञ्चारै।

(४१२) सम्पाद्यमानेति।—सम्पाद्यमान —क्रियमाण, दुर्बल,—क्षामाव इति भाव उर्व्या,—पृथिव्या विकचाया—विशदस्य कचाया, कर्कशानामित्यर्थ पदवामम् इति यावत् देवाना—केदाराणा संस्कार —कर्षणम्, कर्षणमिति भाव यत्र तथोक्तम्।

(४१३) आरब्धेति।—आरब्धाय—रक्षणाय, धान्यस्येति भाव, यत्र, —आरब्धै —रक्षक स्थिता,—प्रेरिता दान्ता,—दमनशया, ये वाहकदण्डा,—प्रकाण्डा, ताडनयष्टय इत्यर्थ ते उड्डीयमाना —उत्प्लुत्य उत्प्लुत्य पलायमाना इत्यर्थ, ये हरिणा —मृगा, तै हिंसया—भक्षणेन लङ्घिता—अतिक्रम्य गता, तुङ्गा —उन्नता, वैणवी—वेणुसम्बन्धिनी वंशनिर्मितेत्यर्थं, वृति,—वेष्टन, प्राकारप्राचीर मित्यर्थं येषां ते, ( "प्राचीर प्रान्ततो वृति" इत्यमर )।

(४१४) निखातेति।—निखातै —निहितै शस्यविघातकप्राणित्रासनार्थं भूमिनिखातदण्डोपारस्थापितैरिति भाव गौर —शुभ्रै करङ्कै,—कङ्काल महकास्थिभिरित्यर्थं शिरःस्थकपालैरिति यावत ( "करङ्को मस्तकास्थिनारिकेलफलास्थिनि" इति मेदिनी ) शङ्कितै,—कौन्तं करङ्कोपस्थापनैरिति भाव, शङ्किता,—भीता शशका,—"खरगोश" इति ख्यात प्रसिद्धा मृगभेदा, तै शबलिता,—सङ्कुलता, शुष्का,—उन्नता, शृङ्गा —शृङ्गभागा, अविकासितपत्राणि वा येषां ते, प्रयत्नेति।—प्रयत्नेन—प्रकृष्टादरयत्नेन, प्रसूत —पोषिता, विसङ्कटा,—विशाला,

भित्तिभिः, किंशुकरोचनारचितमण्डनमण्डपवल्लजनबद्धाङ्गार-राशिभिः, (४२३) शाल्मलिफलतूलसञ्चयबहुलैः, सन्निहित-नलशालिशालूकखण्डकुमुदबीजवेणुतण्डुलैः, (४२४) सङ्गृहीत-मालबीजैः, भस्ममलनम्लानकायस्थकूटव्याप्तकटैः,

[ "—पोटदल—" इत्यत्र "—पोटगल—" इत्येव पाठः साधीयान् कोषादौ पोट-दलशब्दस्य अदर्शनात्, अस्मिन् पक्षे,—वैश्व,—वशा पोटगला,—काशाख्यतृणभेदा इत्यर्थः "अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदिनी ] नली,—नडाख्य-तृणभेदा धरा,—गुन्द्राख्यतृणविशेषाश्च, तन्मयी—तदात्मिका, या इति —वेष्टनं, सैव ताभिर्वा विहिता—कृता, भित्तिः,—कुड्यं येषां ते, किंशुकेति ।—किंशुकानि—पलाशपुष्पाणि, रोचना—गोरोचनाख्यमाङ्गल्यद्रव्यभेदः, ताभ्यां रचितं—कृतं मण्डनं —शोभाकारकं यस्य तादृशे, मण्डपे—गृहे, वल्लजे,—तृणभेदे बद्ध —रचित, अङ्गारराशि,—अङ्गारचयः, भूतोपद्रवनिवारणार्थमिति भावः येषु तैः, यद्वा,—किंशुक —पलाशकाष्ठ, रोचन,—कूटशाल्मलीसंज्ञक शाल्मलीभेदः, ("रोचनः कूटशाल्मलिः" इत्यमरः) ताभ्याम् आरचित—कृत, मण्डन—वेष्टनं, इतिरित्यर्थः यस्य तादृशे, मण्डपे वल्लजे बद्ध —कृत, अङ्गारराशि,—अनुद्धतासितवाम्रिसमूहः, शैत्यनिवारणार्थं व्याघ्रादिहिंस्रजन्तुनिवारणार्थं वा इति भावः येषु तैः ।

(४२३) शाल्मलीति ।—शाल्मलि —रक्तपुष्पा, ("शाल्मली रक्तपुष्पा च तुलिनी स्थिरजीविता" इति कोषः) तस्याः फलानां तूलसञ्चयैः,—तूलराशिभिः, बहुलानि—व्याप्तानि तैः । सन्निहितेति ।—सन्निहितानि—स्थितानि, नलशालयः,—शालि-विशेषाः, शालूकखण्डा,—पद्ममूलानां खण्डाः, ("पद्ममूलन्तु शालूकम्" इति कोषः) कुमुदबीजानि—कैरवशस्यानि, वेणव,—वंशाः, तण्डुला —धान्यसाराः, भिन्नपदान्वयीत्यर्थः, यद्वा,—वेणुतण्डुला,—वंशबीजानि वंशजातयवाकारपदार्थभेदा इत्यर्थः येषु तैः ।

(४२४) सङ्गृहीतेति ।—सङ्गृहीतानि—सञ्चितानि, मालानां—क्षेत्रप्रधानां, बीजानि—शस्यानि येषु तैः, यद्वा —सङ्गृहीतानि मालानां—वृक्षाणां, "पिंड" इति वङ्गे प्रसिद्धानामित्यर्थः, बीजानि—अङ्कुरकारणानि, यद्वा,—सङ्गृहीतानि मालबीजानि—चैत्यस्थशस्यानि येषु तैः, ("माल क्षेत्रे स्त्रियां वृक्षाधर्म्मीजीयन्नृर्दे पुमान्" इति मेदिनी)। भस्मेति ।—भस्मना—पांशुना, मलनेन—मर्द्दनेन, म्लान—मलिनतां गत, यत् कायस्थकूटं—तृणमणिकाराशि, तेन व्याप्ता,—

( ४२५ ) आम्रानराजादनमदनफलस्फीतैः, मधूकासवमद्यप्रायैः, ( ४२६ ) कुसुम्भकुम्भगण्डकुसूलैः, अविरहितराजमाषवपुष कर्कटिकाकुष्माण्डालाबूबीजैः, ( ४२७ ) घोष्यमाणवनविडाल-

---

निर्मिता, कटाः,—"मादुर" इति वङ्गभाषया ख्यातानि शयनानि येषां ते, यद्वा, —भखनाः—मृत्तीर्णाः, मलनेन—कर्द्दमेन ("मलन पटवासे स्या कर्द्दमे तु नपुंसकम्" इति मेदिनी) जलार्द्रमलवलेपनेनेत्यर्थः, (दृश्यते च गाम्भारीफलत्वच मर्दयितामिव लोके) श्यामा ये काश्मर्याः,—गाम्भारीफला ("गाम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका। श्रीपर्णी भद्रपर्णी च काश्मर्य्यश्च" इत्यमरः) तेषां कूटे—राशौ, खण्डितलताखसमूहोपरि कयर्थं, आश्रिताः कटाः, शोषणायमिति भावः येषां ते।

( ४२५ ) आम्रानिति।—आम्रानानि—ईषच्छुष्काणि, राजादनः,—क्षीरीकाख्य वृक्षभेदः, ("क्षीरीदकस्तु राजन्य क्षीरवृक्ष क्षपीद्रुमः। राजादनी दृढस्कन्ध क्षपीट प्रियदर्शनः॥" इति कोषः), यद्वा,—राजादनः—पियालः, "राजादन पियालश्च" इत्यमरः) मदनः,—"मयना" इति वङ्गीयैराख्यात वृक्षश्च, ("मदन श्वसनो रोध" इति कोषः) तयोः फलानि तैः स्फीतानि—पूर्णानि तैः। मधूकेति। —मधूकानां—"महुया" इति ख्यातानां गुडपुष्पाणां, ("मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः) आसवाः,—रसा एव, यद्वा,—मधूकैर्ध्य कृता आसवाः,—सन्धानविशेषः, मद्यविशेषा इत्यर्थः ता एव मद्यानि—सुरा प्रायेण—बाहुल्येन येषु तैः।

( ४२६ ) कुसुम्भेति।—कुसुम्भानां—महारजनाख्यपुष्पाणां, कुम्भाः,—घटाः, गण्डानां—पलण्डाख्यवमभेदानां, कुसूलानि—स्थानानि येषु तैः, यद्वा,—कुसुम्भानां—महारजनानां, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) कुम्भानां—गुग्गुलूनाञ्च, ("कुम्भी राशयन्तरे। घटे क्लीबन्तु गुग्गुलौ" इति मेदिनी) गण्डाः,—पिण्डकाः, तत्पूर्णपात्रविशेषा इत्यर्थः, ("गण्ड स्यात पुंसि खड्गिनि। ग्रहयोगे प्रभेदे च वीथ्यङ्गे पिटकेऽपि च॥" इति मेदिनी) गण्डाः,—पिण्डा इत्यर्थो वा, तेषां कुसूलाः,—स्थापनार्थस्थानविशेषाः, कोष्ठा वा येषु तैः। अविरहितेति।—अविरहितानि—पूर्णानि राजमाषाणां—निष्पावानां "बरवटी" इति वङ्गे प्रसिद्धानां व्रीहिभेदानां वा, वपुषाणां—"शशा" इति वङ्गभाषया प्रसिद्धानां खाड्कानां, कर्कटिकानां—"काँकुड" इति वङ्गे ख्यातानां, कुष्माण्डानां—कर्कारूणाम्, अलाबूनां —तुम्बीनाञ्च, बीजानि—अङ्कुरकारणानि येषु तैः।

( ४२७ ) घोष्यमाणेति।—घोष्यमाणाः,—पाठ्यमानाः, वनविडालाः,—

मालुधाननकुलशालिजातजातकादिभिः अटवीकुटुम्बिनां गृहैः उपेतं वनग्रामकं ददर्श, तत्रैव च अवसदिति।

इति श्रीबाणभट्टकृते हर्षचरिते छत्रलब्धिर्नाम
सप्तम उच्छ्वासः ॥ ७ ॥

---

अरण्यमार्जारा मालुधाना,—प्राणिविशेषा, मातुलाहिनामसर्पभेदा वा, ("मालुधानो मातुलाहि" इत्यमरः) ते तु विविधा ज्ञेयाः, नकुला —"बेजि" इति बङ्गे प्रसिद्धा सर्पशत्रव, शालिजाता —जीवभेदा, जातकादयश्च—प्राणिविशेषा येषु ते तथा,—शालय,—"खटाश" इति बङ्गे प्रसिद्धा गन्धमार्जारा ("शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी) तेषां जाताना—समूहाना, जातकादय,—शावकादय इत्यर्थः, यद्वा—तेभ्य जाता —उत्पन्ना ये जातका —शावका, तदादय,—तत्प्रभृतय येषु ते, [ "जातकादिभि" इत्यत्र "जालकादिभ" इति पाठ समीचीनतया प्रतिभाति पोतमार्जारविडालादिजातानां—समूहाना, जालकानि—आनाया, पिञ्जरा इति यावत् तदादय यत्र ते ]। अटवीकुटुम्बिना—वनगृहिणाम्। उपेत—युक्तं वनग्रामकम्—अरण्यमध्यस्थ सुवसथं तद्ग्रामकं वा।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वाचस्पत्याभिधानेन पण्डितकुलपतिना सि, इ,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायां
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायां बालबोधिन्याख्यायां
श्रीहर्षचरितव्याख्यायां सप्तम उच्छ्वासः ॥ ७ ॥

# अष्टम उच्छ्वासः ।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ॥
दैवेनापि क्रियते भव्यानां पूर्व्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टजनातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ? ॥ २ ॥

(१) अथ अपरेद्युः उत्थाय पार्थिवस्तस्मात् ग्रामकात् निर्गत्य विवेश विन्ध्याटवीम्, आट च तस्याम् इतस्ततः सुबहून्

---

अथ पुरुषप्रयत्नं विनाऽपि सुदैवानुकूल्येन सम्पूर्णाशा मनोरथसिद्धिर्भवतीति श्लोकाभ्यां प्रदर्शयन्नाह सहसेति ।—सहसा—हठात् मनोरथप्रार्थितानि—मनोऽभीष्टानि, अभिलषितानीत्यर्थः, वस्तूनि—द्रव्याणि, सम्पादयता—संयोजयता, प्रददता इत्यर्थः, दैवेनापि,—भाग्येनापि अनुकूलेनेति भावः किं पुनः पुरुषकारेण यत्नेन वा इत्यपिशब्दार्थः, भव्यानां—योग्यानां, शुभफलभाजामित्यर्थः, सत्पात्राणामिति भावः, ("भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी) पूर्व्वसेवा—प्रथमा परिचर्या, क्रियते इव—विधीयते इव, दैवं हि सहसैव सतां मनोरथं सम्पाद्य स्वदनुरागस्य प्रथमनिदर्शनं प्रदर्शयति अनन्तरमपि प्रभूताभ्युदयं जनयतीति भावः । श्लोकेनानेन भाग्यवतः सतो हर्षस्य दैवानुकूल्येन यात्रायाः साफल्यं सूचनम् । अत्र पूर्व्वसेवायाः अक्रियमाणाया अपि तत्त्वेन सम्भावनोत्प्रेक्षणात् क्रियोत्प्रेक्षाऽलङ्कारः । आर्य्या वृत्तम् ॥ १ ॥

विद्वदिति ।—विदुषा जनेन—पण्डितमण्डलेन सम्पर्कः—सङ्गः, सख्यमिति भावः, तथा नष्टेति ।—नष्टस्य—अदर्शनं गतस्य, इष्टस्य—प्रियस्य जाते,—बन्धुजनस्य, दर्शनं—साक्षात्कारः तदेव अभ्युदयः—मङ्गलम्, इष्टलाभजनितानन्द इत्यर्थः, भवने —गृहे, महारत्नानां—महामूल्यमणीनाम् अविद्यमानानां दुर्लभानामिति भावः लाभश्च —प्राप्तिश्च, कस्य—जनस्य इति भावः, सुखाय—आनन्दाय न भवति ?—न जायते ? अपि तु सर्वस्य एव भवति इत्यर्थः एतेन हर्षस्य दिवाकरमित्राश्रमविद्वन्मित्रलाभ भगिन्या राज्यश्रिया प्राप्ति महामूल्यैकावलीलाभश्च सूचितः । अत्र प्रस्तुतानां सम्पर्काभ्युदयरत्नलाभानामेकेन सुखजननयोग्यत्वरूपधर्म्मेण सह सम्बन्धात् तुल्ययोगिताऽलङ्कारः । आर्य्या वृत्तम् ॥ २ ॥

(१) एतदेव प्रतिपादयति, अथ इत्यादि ।—अपरेद्युः,—अपरस्मिन् दिवसे, तत्रग्रामे आश्रमवासस्य परादिने इत्यर्थः । आट—बभ्राम । "एकदा तु भूपते"

दिवसान्। एकदा तु भूपतेर्भ्रमत एव आटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतु. नाम कुतोऽपि (२) कज्जलश्यामलश्यामलतावलयेनाधिललाटम् उच्चैःकृतमौलिबन्धम्, (३) अन्धकारिणीम् अकारणभुवा भ्रुकुटिभङ्गेन विशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थली सदा समुद्वहन्तम्, (४) अवतंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेन श्रवणेन शोभमानं, (५) किञ्चिच्चुल्लस्य प्रविरलपक्ष्मणः चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तार-

---

इत्यस्य "व्याघ्रकेतुः शबरयुवानमादाय आजगाम" इति उत्तरेण सम्बन्धः। भूपतेः,—हर्षस्य, [कर्मणि षष्ठी]। आटविकेति।—आटविक,—आरण्य सामन्त,—अधिराज, वनप्रदेशरक्षणाय दत्तात प्राप्ताधिकार इत्यर्थ, य शरभकेतु,—तदाख्यः कश्चित तस्य, सूनु,—पुत्र, इति व्याघ्रकेतुरित्यस्य विशेषणम्।

(२) शबरयुवानं विशिनष्टि, कज्जलेति।—कज्जलवत—अञ्जनवत श्यामला—नीला, या श्यामलता—गन्धप्रियङ्गुवल्ली, सा एव वलय—वेष्टन तेन अधिललाट—ललाटोपरि, उच्चैरिति।—उच्चै कृत,—उन्नमय्य स्थापित, मौलिबन्ध—केशबन्धो येन तथोक्तम्।

(३) अकारणभुवा—विना कारणं जातेन इत्यर्थ, स्वाभाविकेन इति भाव, विशाखेन—विरेखेण, भ्रुकुटिभङ्गेन—भ्रूकौटिल्येन, अन्धकारिणीम्—अन्धकारवती भ्रूकुटीचनेन निबिडीकृतभागत्वादिति भाव, यद्वा—अन्धकारिणीं—कृतान्धकारामित्यर्थं, अत एव त्रियामामिव—रात्रिमिव, तामसामिवेति यावत् साहससहचारिणीं—साहससङ्गिनीम्, वधपूर्वककार्यकरणसामर्थ्यबोधिकामिति भाव, ललाटस्थली—भालदेश समुद्वहन्त—दधानम्।

(४) अवतंसितेति।—अवतंसितस्य—भूषणीकृतस्य, एकस्य—एकमात्रस्य, शुकपक्षकस्य—कीराख्यपक्षिपतत्रस्य, प्रभया—कान्त्या, हरितायमान—श्यामायमान तेन पिनद्धेति।—पिनद्धा—बद्धा, काचरस्य—काचनस्य, काचमयी,—काचाख्य रत्नस्य, कर्णिका—कर्णभूषणं, काचमणिनिर्मितं कर्णभूषणमित्यर्थ यत्र तथाभूतेन, श्रवणेन—कर्णेन, शोभमान—राजमानम्।

(५) किञ्चिच्चुल्लस्य—ईषत् क्लिन्नस्य, ("स्यु क्लिन्नाक्ष चुल्लचिल्लपिल्ला क्लिन्नेऽक्ष्णि

रसं चतजमिव चरन्तम्, अवनाटनासिकं, विपिटाधरं, चिक्किनचिवुकम्, (६) अहीनहनूत्कटकपोलकूटास्थिपर्यन्तम्, ईषदुदग्रग्रीवावन्धं, स्कन्धस्कन्धार्धभागम्, (७) अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन मांसलेन उरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरिं,

चाप्यमी" इत्यमरः) प्रविरलपक्ष्म,—अल्पपक्ष्म। सहजेन—स्वाभाविकेन रागरोचिषा—लोहितप्रभया रसायनरसोपयुक्त—रसायनरसेन—औषधविशेषरसेन सह उपयुक्त—पीतम् इत्यर्थः, तरक्षु,—मृगादन "नेकडे बाघ" इति वङ्गे प्रसिद्ध व्याघ्र विशेष इत्यर्थ, ("तरक्षुस्तु मृगादन" इत्यमरः) तस्य इदं तारक्षम्, तद् कश्चित् रोगविशेषे (यक्ष्मणि) उपयुञ्जते इति वैद्यकाः, क्षतजमिव—रक्तमिव, चरन्त—भक्षयन्तम्। अवनाटनासिक—निम्ननासापुटम्, ("अवटीटोऽवनाटश्चावभ्रटो नतनासिके" इत्यमरवचनात् अवनाटशब्देनैव निम्ननासिके लब्धेऽपि पुनर्नासिकाशब्दग्रहणं नासाया अतिनिम्नत्वद्योतनार्थमिति मन्तव्यम्) अन्तःप्रविष्टनासिकमित्यर्थः, "खाँदा नाक" इति वङ्गभाषया प्रसिद्धमिति भावः। विपिटाधर—स्थूलस्वरदनच्छदम्। चिक्किनचिवुक—स्थूलपृथुलाधराधोभागम्।

(६) अहीनेति।—अहीनौ—सम्पूर्णौ महान्तौ इत्यर्थ हनुभ्या—कपोलोर्ध्वभागाभ्याम्, उत्कटौ—उन्नतौ विकटौ वा, कपोलयो—गण्डयोः, ("ओष्ठाधरौ तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परौ हनुः" इत्यमरः) कूटौ—शिखरभूतौ, अस्थिपर्यन्तौ—कङ्कालप्रान्तौ यस्य तम्, अनुन्नतहनुस्थितकपोलम् अत एव निम्नहनुदेशमित्यर्थ। ईषदुदग्रग्रीवावन्धम्—ईषदुदग्र—किञ्चिदुन्नत, ["ईषदुदग्र—" इत्यत्र 'ईषदवाग्र—' इति पाठे—अवाग्र,—अवनत इत्यर्थः] ग्रीवाबन्ध,—कन्धरासन्धिः यस्य तम्। स्कन्धेति।—स्कन्ध —पृष्ठ, अवनमन्, उन्नतौ वा, स्कन्धार्धभाग —अंसार्धदेशः यस्य तम्।

(७) अनवरतेति।—अनवरतेन—अविश्रान्तेन, कोदण्डस्य—धनुष कुण्डलीकरणेन—आकर्षणेन, चक्रीकरणेन इत्यर्थ कर्कशेन—कठिनेन, व्यायामेन च—अङ्गचालनविशेषेण च, विस्तारित—प्रसारं गत तेन मांसलेन—बलवता प्रशस्तेन इदन च इति यावत् ("बलवान् मांसलोऽंसलः" इत्यमरः) उरसा—वक्षःस्थलेन, विन्ध्यगिरे,—विन्ध्याचलस्य, तटशिलाप्रथिमान—तटशिलायाः—उन्नतप्रदेशप्रस्तरस्य, प्रथिमान—विस्तार, हसन्तम्—उपहसन्त, विपुलोरस्कमित्यर्थः।

(८) अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशाल-द्रुमाणां द्राघिमाणं, (९) वराहवालवलितबन्धनाभिर्नागदमन-जूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुन्दिभम्, (१०) अहीरमणीचर्मनिर्मितपट्टिकया उच्चित्रचित्रकत्वक्तारकितपरि-

(८) अजगरगरीयसा—अजगर इव—बृहदाकारसर्पविशेष इव गरीयः,—गुरुतरं, दीर्घमित्यर्थः तेन। तुहिनेति।—तुहिनशैलस्य—हिमाद्रेः, शालद्रुमाणां—सर्जतरूणां, द्राघिमाणम्—अतिदीर्घतां, लघयन्तं—लघूकुर्वन्तम्, आजानुलम्बितभुजमिति भावः।

(९) वराहेति।—वराहस्य—शूकरस्य, वालैः—लोमभिः, वलितं—कृतं बन्धनं—संयमनं यासां ताभिः, नागदमनजूटिकाभिः,—नागदमनः,—"नागदौना" इति वङ्गीयैराख्यातः विषहरः औषधिविशेषः, तस्य जूटिका—प्रतानः, कुसुमगुच्छो वा ताभिः, सर्पभयनिवारणार्थमिति भावः, [ "नागदमनजूटिकाभिः" इत्यत्र "नागदमनजूटिकाघाटिकाभिः" इति पाठे—नागदमनजूटिकाया घाटिका,—गुच्छः, गुच्छा इत्यर्थः ताभिः ] जटिलीकृतं—युक्तं पृष्ठम्—उपरिभागो यस्य तथाभूते, प्रकोष्ठे—कूर्परमणिबन्धयोरन्तरालस्थे ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) प्रतिष्ठां—स्थितिं गतं—प्राप्तं, गोदन्तमणिचित्रं—सर्पविशेषशिरोरत्नमण्डितं त्रपुषा—सीसकेन रङ्गेण वा निर्मितं त्रापुषं—सीसकेन रङ्गेण वा निर्मितमिति यावत्, यद्वा—त्रपुणः,—सीसकस्य रङ्गस्य वा विकारः त्रापुषः—सीसकनिर्मितं रङ्गनिर्मितं वेत्यर्थः, [ "त्रपुजतुनोः षुक्" (४।३।१३८ पा०) इत्यत्र षुगागमः। "त्रपु सीसकरङ्गयोः" इति मेदिनी ] वलयं—कटकं, बिभ्राणं—दधानम्। अतुन्दिलं—तुन्दिलः,—बृहत्कुक्षिः स्थूलोदरः पुमानित्यर्थः, ("तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः) न भवतीति तं क्षीणोदरं कृशमध्यमिति वा, तुन्दिभम्—उन्नतनाभिम्, [ "तुन्दिवलि-वटेर्भः" (५।२।१३९ पा०) उन्नता नाभिस्तुन्दिरिति तुन्दिशब्दात् भः। "तुन्दिभम्" इत्यत्र "तुण्डिभम्" इति पाठेऽपि स एवार्थः ]।

(१०) अहीति।—अहीरमणी—द्विमुखः विषकाख्यः जन्तुभेदः, यच्छायया गच्छतोऽपि अपरः सर्पनाशकः भवतीति बोध्यम्, [ "अहीरमणि—" इत्यत्र "अहीरणि—" इति पाठस्तु साधीयान्, अहीरमणी इति शब्दस्य कोषादावदर्शनाद्यौक्तिकेषु, अहीन् ईरयति दूरीकरोति इति व्युत्पत्त्या "राजसर्प" इति प्रसिद्धः द्विमुखसर्पविशेषः

वारया (११) सङ्कुशाजिनजालकितया शृङ्गमयमसृणमुष्टिभाग-भास्वरया (१२) पारदरसलेशलिप्तमसृणमस्तकया कृपाण्या करालितविसङ्कटकटिप्रदेशं, (१३) प्रथमयौवनोल्लिख्यमान-मध्यभागभ्रष्टमांसभरितौ इव स्थवीयसावूरुदण्डौ दधतम्,

---

कशेरपि, तद्दर्शनादितरे सर्वे पश्चात्से] तदाऽस्य या—लत्वा, निर्मिता—रचिता, पट्टिका—खड्गकोषधारणार्थं बन्धनि लिप्यविभक्तिचर्मनिर्मितप्रबन्धतनु-भेद यस्या तथाभूतया, उचितेति।—उचिता—स्वभावोद्भूतचित्रा, विचित्रवर्णा इत्यर्थः, या चित्रकस्य—पशुविशेषस्य त्वक्—चर्म तया तारकित,—सञ्जाततारक इव परिदृश्यमान इत्यर्थं, परिवार,—खड्गकोष, परिवेष्टनमित्यर्थः, यस्या तथाभूतया। ("परिवारः परिजने खड्गकोषे परिच्छदे" इति मेदिनी) ["कशीरमयी 'परिवारया" इत्यत्र "कशीरचीचर्मनिर्मितपट्टिकयोचितचित्रकत्वक्तारकितपरिवारया" इति पाठे,—पट्टिकयो,—खड्गकोषस्य उभयपार्श्वावस्थितचत्वारिंशत्निबद्धचर्मरज्ज्वोरित्यर्थः, शोभना इति अध्याहार्यं चित्रा—विविधवर्णा, चित्रकत्वचा तारकित परिवार यस्या तथाभूतया ]।

(११) सङ्कुशेति।—सङ्कुशेन—सङ्कुचितेन, अजिनेन—हरिणचर्मणा, जालकिता—जालाचिता जालाकृतवत् परिदृश्यमाना इत्यर्थं तया, सुतरां कुञ्चितहरिणचर्मनिर्मितकोषाभ्यन्तरस्थावरणया इत्यर्थ, कोषे हरिणचर्मणा कृपाणीमावेष्ट्य पश्चात् कोषमध्ये स्थापितवान् इति भाव, शृङ्गेति।—शृङ्गमयेन—महिषशृङ्गादिविषाणनिर्मितेन मसृणेन—श्लक्ष्णेन मुष्टिभागेन—करदेशेन, मुष्टिधारणस्थानेनेत्यर्थ, भास्वरा—दीप्तिमती तया।

(१२) पारदेति।—पारदस्य—सूतस्य, रस,—द्रव, यद्वा—पारद एव रस,—विदं, तस्य लेशेन—बिन्दुना लिप्त—दिग्ध मसृण—स्निग्धं, मस्तक—शिरोभाग यस्या तया, कृपाण्या—छुरिकया कर्त्तर्या वा, ("कृपाणः खड्ग छुरिकाकर्त्र्योरपि योषिति" इति मेदिनी) करालितेति।—करालित,—भीषणीकृत, विसङ्कट,—विशाल, स्थूल इत्यर्थ,, कटिप्रदेश,—श्रोणिफलक यस्य तम्।

(१३) प्रथमेति।—प्रथमेन—अभिनवेनेत्यर्थ, यौवनेन—तारुण्येन, उल्लिख्यमानात—उत्खन्यमानात, कृशतां नीयमानादिति यावत मध्यभागात्—उदरदेशादिव भ्रष्टेन—स्खलितेन, मांसेन—पिशितेन, भरिताविव—आपूरिताविव, स्थवीयसौ—अतिस्थूलौ।

(१४) अच्छभल्लचर्म्ममयेन भल्लीप्रायप्रभूतशरभृता (१५) शबलशार्दूलचर्म्मपटपीडितेन अलिकुलकालकम्बललोम्ना पृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयन्तम्, (१६) उत्तरत्रिभागोत्तंसितचाषपिच्छचारुशिखरे खदिरजटानिर्म्माणे क्षुरप्राणे (१७) प्रचुरमयूरपित्तपत्रलताचित्रितत्वचि त्वचि सारगुरुणि वामस्कन्धाध्यासितधनुषि दोषि लम्बमानेन (१८) अवाक्शिरसा शितशरक्षतैकानलकविवर

---

(१४) अच्छेति ।—अच्छभल्लचर्म्ममयेन—भल्लूकचर्म्मनिर्मितेन ( "अच्छभल्लभल्लूका" इत्यमरः ) भल्लीति ।—भल्ली—अस्त्रविशेषः तत्प्रायान्—तद्बहुलान् प्रभूतान्—प्रचुरान् शरान्—बाणान् बिभर्त्ति धारयतीति तथोक्तेन ।

(१५) शबलेति ।—शबल—चित्रं शार्दूलचर्म्मैव—शार्दूलाजिनमेव पट—आवरणं तेन पीडितेन आवृतेन गले बद्धेनेति ।—अलिकुलं—भ्रमरसमूहः तद्वत् कालं—कृष्णवर्णं यत् कम्बललोम—रल्लकरोम तेन तत्प्रच्छादितेन इति भावः पृष्ठभागभाजा—पृष्ठदेशस्थितेन भस्त्राभरणेन—भस्त्रा—चर्म्मनिर्मिता शरादिपूर्णा स्यूतपात्री सैव आभरणं—मण्डनं तेन नूतनेन वा पल्लवितमिव—पूरितमिव कार्श्यं—कृशताम् आत्मन इति भावः उपदर्शयन्तम्—प्रकाशयन्तम् भस्त्राभरणपूरितत्वात् पीडितमिव आत्मानं प्रकटयन्तमित्यर्थः ।

(१६) उत्तरेति —उत्तर—उपरितनः त्रिभागः—तृतीयो भागः तदुपर्युपरि भाग इत्यर्थः उत्तंसितं—अलङ्कृतं यत् चाषपिच्छं—नीलकण्ठाख्यपक्षिपक्षः तेन चारु—मनोज्ञं शिखरम्—अग्रं यस्य तथोक्ते खदिरेति —खदिरजटाया इव—खदिरवृक्षस्य मूलस्येव घनत्वमस्य इति भावः निर्म्माणं—गठनं यस्य तथाभूते खदिरजटानिभ इत्यर्थः पीवरास इव धावत क्षुरप्राणे तीक्ष्णबाणे ।

(१७) प्रचुरेति —प्रचुरेण बहुना मयूरपित्तेन—शिखिमायुना या पत्रलता—रचनाविशेषः तया चित्रिते शोभिते तथा त्वचि त्वचि—आवृता त्वक्—चर्म्म यस्य तथोक्ते । त्वचि चर्म्मणि सारगुरुणि—सारेण—काठिन्येन गुरु—महान् तस्मिन् दुर्भेद्यचर्म्मणि इत्यर्थः वामेति ।—वामस्कन्धे—सव्यांसे अध्यासितं—स्थितं धनुः—कार्म्मुकं यस्य तथाभूते दोषि—भुजे ( "भुजबाहू प्रवेष्टो दोः" इत्यमरः ) ।

(१८) अवाक्शिरसा—अधोमुखेन शितेति ।—शितेन—तीक्ष्णेन शरेण—

प्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन (१९) बन्धूकलोहितरुधिरराजिरञ्जितप्राणवर्त्मना (२०) वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोडरोमशुक्लिम्ना शशेन (२१) शिताटनीशिखाग्रग्रथितग्रीवेण (२२) चापाहतचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णकमुष्टिमिव स्वभार्याया दर्शयन्तं, (२३) विषमविषदूषितवदनेन च विकर्णेन कृष्णाहिना इव मूलगृहीतेन

---

बाणेन, कृतं—छिद्रं यत्र एवंभूतः—"मशा" इति ख्यातः जङ्घाऽस्थिविशेषः, तस्य विवरे—छिद्रे प्रवेशिता—ढौकिता या इतरजङ्घा—अन्यतरा जङ्घा तया जनितः—कृतः स्वस्तिकबन्धः—आसनविशेषः यस्य तथाभूतेन।

(१९) बन्धूकेति।—बन्धूकं—तदाख्यं पुष्पं तद्वत् लोहितं—रक्तं, यत् रुधिरं—शोणितं, तस्य राज्या—धारया रञ्जितं—प्राप्तरागं रक्तवर्णमित्यर्थः, प्राणवर्त्म—नासारन्ध्रं यस्य तेन नासारन्ध्रगतरक्तेन इत्यर्थः।

(२०) वपुरिति।—वपुषः—शरीरस्य, विततया—विस्तारेण गतजीवत्वेन देहस्य संकोचाभावादिति भावः व्यक्तं—स्पष्टं यथा तथा, विभाव्यमानः—दृश्यमानः कोमलानाम्—सुकुमाराणां क्रोडरोम्णाम्—वक्षोलोम्नां शुक्लिमा—श्वैत्यं यस्य तथाभूतेन शशेन—तदाख्येन पशुविशेषेण।

(२१) शितेति।—शिता—तीक्ष्णा या अटनी—धनुष्कोटिः धनुषोऽग्रभाग इत्यर्थः ("कोटिरस्याटनी" इति धनुःप्रकरणे अमरः) तस्याः शिखा—चूडा, तस्या अग्रम्—उपरिभागः तत्र ग्रथिता—निबद्धा, ग्रीवा—कन्धरा यस्य तेन।

(२२) चापेति।—चापेन—धनुषा आहतायाम्—आस्फालितायां, चञ्च्वाम् उत्तानः—ऊर्ध्वीभूतः परिदृष्ट इत्यर्थः व्यात्तमुखत्वादिति भावः ताम्रः,—रक्तवर्णः तालुः—काकुदम्, चञ्चुमूलापरिभाग इत्यर्थः यस्य तेन तित्तिरिणा—तदाख्येन पक्षिणा स्वभार्यायाः—आखेटकस्य व्याधस्य भार्याया इत्यर्थः वर्णकमुष्टिमिव—मुष्टिगृहीतवर्णकमिव प्रथमम् अक्षरलेखनमेव "हाते खडी" इति वङ्गभाषया प्रसिद्धं विधानम् इति यावत् शुद्धस्वरूपं चञ्चुकरूपं प्रथमं स्वयमात्मव्यापारमात्मनः प्रकाशयन्तमिव इति भावः।

(२३) विषमेति।—विषमेण—दारुणेन विषेण—गरलेन लिप्तेन दंष्ट्राग्रेण च इति भावः दूषितं—नष्टं च वदनम्—अग्रभागः मुखं यस्य तेन कृष्णाहिना इव—कृष्णसर्पेण इव, मूलगृहीतेन—मूलं—अधोभागः, पुच्छदेशः च गृहीतः—

व्यपदर्शितकराग्रं, जङ्गममिव गिरितटतमालपादपं, यन्त्रोल्लिखितम् अश्मसारस्तम्भमिव भ्रमन्तम्, (२४) अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव गिरेर्विन्ध्यस्य गलन्तं, पङ्कस्थलीं करिकुलानां, कालपाशं कुरङ्गयूथानां, (२५) धूमकेतुं मृगराजचक्राणां, महानवमीमहं महिषमण्डलानां, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, कामुकमिव कालरात्रेः शबरयुवानम् आदाय आजगाम;

धृत तम, विकर्णेन—तदाख्यास्त्रविशेषेण कर्णरहितशरविशेषेण वा, व्यपदर्शितकराग्रम्—व्यासक्तदक्षिणहस्ताग्रभाग, विदलितशरेण दधानमित्यर्थः। जङ्गम—चरिष्णु, गतिमन्तमित्यर्थ, गिरोति।—गिरितटे—पर्वतप्रस्थे, ये तमालपादप,—कालस्कन्धस्त तमिव, श्यामवर्णत्वादिति भाव। यन्त्रोल्लिखित—शाणयन्त्रघृष्टमित्यर्थ, शिल्पविशेषविलिखितमिति वा, अश्मसारस्तम्भमिव—दृढपलरस्थूणामिव, मसृणत्वश्याम-वर्णदृढकायत्वादिति भाव।

(२४) अञ्जनशिलाच्छेदमिव—कज्जलप्रस्तरखण्डमिव। अयःसारमिव—लौहस्य स्थिरांशमिव। करिकुलानां—गजयूथानां, पङ्कस्थलीमिव—सकर्दमभूमिमिव, मारकत्वादिति भाव, यथा करिणो दुस्तरपङ्कमासाद्य गौरवात् समर्था, अवतीर्णाश्च तथा अमुं प्राप्य अपि न पलायितुं समर्था, विपन्ने च इति तात्पर्यम्। [ 'पङ्कस्थलीं करिकुलानाम्' इत्यत्र "पाकलं करिकुलानाम्" इति पाठे,—करिकुलानां पाकलं—तदाख्यं हस्तिनां ज्वरमिव, ("पाकलं कुष्ठभैषज्ये पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी) तदाख्यज्वरस्य करिणां प्राणनाशकत्वात्, यदुक्तं वैद्यके,—"असाध्योऽयं ज्वरो व्याधि गौमहिषाश्वकुञ्जरे। किञ्चित् कृच्छ्रतमो गुणात्मन्यथा जीव घातकः॥" "पाकलं अ तु नागानामभितापस्तु वाजिनाम्" इत्यादि। पाकलो यथा करिहन्ता तथा अयमपीति भाव ]। कुरङ्गयूथानां—मृगसङ्घानां, कालपाशं—यमस्य बन्धनरज्जुमिव, दर्शनमात्रेणैव हननादिति भाव।

(२५) मृगराजचक्राणां—सिंहसमूहानां, [ राजसमूहानामित्यपि व्याख्यते ] धूमकेतुम्—वह्निम, अग्निदर्शनस्य सिंहानां भयप्रदत्वादिति भाव, यद्वा—धूमकेतुमिव—उत्पातसूचकग्रहमिव, मारकत्वादिति भाव। धूमकेतु प्रादुर्भाव राजचक्राणामपि अशुभं सूचयतीति बोद्धव्यम्। महिषमण्डलानां—महिषसङ्घानां, महानवमीमहं—शारदीयदुर्गानवमीमहोत्सवं,

दूरे च स्थापयित्वा विज्ञापयाम्बभूव,—"देव। सर्व्वस्य अस्य विन्ध्यस्य स्वामी, सर्व्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा (२६) स्वस्रीयः सकलस्य अस्य विन्ध्यकान्तारारण्यस्य पर्णानामपि अभिज्ञः, किमुत प्रदेशानाम्। एनं पृच्छतु देव, योग्योऽयम् आज्ञां कर्त्तुम्" इति कथिते च निर्घातस्तु (२७) क्षितितलनिहितमौलिः प्रणामम् अकरोत्, उपनिन्ये च तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु सम्मानयन् स्वयमेव तम् अप्राक्षीत,—"अङ्ग। अभिज्ञा यूयम् अस्य सर्व्वस्य उद्देशस्य। (२८) विहारशीलाय दिवसेषु एतेषु भवन्तः। सेनापतिर्वा

लक्ष्मीकल्पं कथासाद भाव ("लेख उल्लेख ऋषभ" इत्यमरः) महाश्वेतीद्वे इह्ना सहिता वल्लभेन विभ्रमेण उपास्कारति इत्यते। "ह्रदमिव क्षिमासा" इत्यादि विशेषणवती सुन्दरा जीवविलासवरांगणात् इति भावा याध्य कल्पावे,—तव प्राविनाशिकाया यमभगिन्या, अवगन्तुमरणादित्याहतात्रा सन्नाश्वसा कामुकाम्य—कास्मिन् अस्य वहु जीवहत्यासङ्गात् तवप्राणनाशिका यमभगिन्या काल्पसलतृष्णा वीक्ष्या। शबरयुवान—शबरजातीये तरुणवयस्के पुमासम। आनयन—प्राप। दूरे—दाह समीपादान भाव। विन्ध्यस्य—विन्ध्यारण्यस्य, स्वामी—अधिपतिः। सर्व पल्लीपतीनां—सर्वेषां—सकलानां पल्लीपतीनां—क्षुद्रग्रामाधिपतीनां, ("पल्ली स्याद ग्रामकुटी स्त्री" इति मेदिनी) प्राग्रहरः—श्रेष्ठः।

(२६) स्वस्रीयः—भागिनेयः। विन्ध्यकान्तारारण्यस्य—विन्ध्यावनदुर्गमकाननस्य, ("कान्तारो वर्त्म दुर्गमम्" इत्यमरः)।

(२७) क्षिति०।—क्षितितले—भूतले, निहिता—स्थापिता, मौलिः,—मस्तकं येन सः ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः)। तित्तिरिणा सह शशोपायन—तित्तिरिपक्षिसहितशशकोपढौकनमित्यर्थः, उपनिन्ये—ददाविति भावः। अङ्ग इति सम्बोधने अव्ययम्। इत्यर्थः। अप्राक्षीत्,—जिज्ञासितवान्। उद्देशस्य—वनप्रदेशस्येत्यर्थः।

(२८) एतेषु दिवसेषु—कतिपयदिवसेष्विति भावः, यद्वा,—एतेषु—वनोद्देशेषु,

अन्यस्य वा तदनुजीविनः कस्यचित् (२९) उदाररूपा नारी आगता भवेद्दर्शनगोचरम् ?" इति ।

निर्यातस्तु (३०) भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः प्रणनाम, दर्शितादरश्च व्यज्ञापयत्—"देव ! प्रायेण अत्र हरिण्योऽपि न अपरिचिताः सञ्चरन्ति सेनापतेः, कुत एव नार्यः ? नापि एवंरूपा काचित् अमला। तथाऽपि देवादेशात् इदानीम् अन्वेषणं प्रति प्रतिदिनम् अनन्यकार्यैः क्रियते यत्नः। (३१) इतश्च अर्द्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती (३२) प्रभूतान्तेवासि-

---

दिवसेषु—प्रतिदिनमित्यर्थः, विहारशीला,—विचरणपरा । सेनापतेः,—भूकम्पस्य । तदनुजीविनः,—सेनापतेः परिजनस्य ।

(२९) उदाररूपा—महासौन्दर्यशालिनी, अतिरूपवतीत्यर्थः, ("उदारो दातृमहतोः" इत्यमरः)।

(३०) भूपालेति।—भूपालस्य—राज्ञः हर्षस्य यत् आलापनम्—आभाषणम्, सम्बोधनपूर्वकवाक्यप्रयोग इत्यर्थः तदेव प्रसादः,—अनुग्रहः महापराक्रमस्य सम्राजो हर्षस्य साक्षादनेकशः सह सम्भाषणाभावादिति भावः तेन। बहुमन्यमानः,—श्लाघमानः । दर्शितादरः—ससम्मानमित्यर्थः । अपरिचिताः —अज्ञाताः, ["अपरिचिताः" अथवा "अपरिगताः" इति पाठेऽपि स एवार्थः, "सर्वे गत्यर्था ज्ञानार्थाः" इति नियमात्]। कुत एव नार्यः,—मानुष्यस्तु कथमपि नैवापरिज्ञाताः सञ्चरितुं प्रभवन्तीति भावः । अमला, अत्रागता इति शेषः । देवादेशात्—राज्ञो भवत आज्ञया। अनन्यकार्यैः —नास्ति अन्यत्—अन्वेषणादपरम्, कृत्यम्—कार्यं येषां तैः, अन्यकार्यं परिहृत्य इत्यर्थः, अस्माभिरिति शेषः ।

(३१) इतः,—अस्मात् स्थानात्, अर्द्धगव्यूतिमात्रे—क्रोशैकपरिमिते, ("गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः) मुनिमहिते—ऋषिपूजिते महीधरमालामूलरुहि—पर्वतश्रेणिपादमूलजाते, महीरुहाम्—वृक्षाणाम्, षण्डे—समूहे, कानन इत्यर्थः, पिण्डपाती—पिण्डाय—ग्रासमात्रान्नाय, पतति—भिक्षां चरतीति तथोक्तः, ग्रासमात्रान्नोपयोगिभिक्षाकर इत्यर्थः, न तु सञ्चयीति भावः ।

(३२) प्रभूतेति।—प्रभूतैः,—बहुभिः, अन्तेवासिभिः,—शिष्यैः, ("छात्रान्ते-

परिहृत: पराशरी दिवाकरमित्रनामा गिरिनदीम् आश्रित्य प्रतिवसति, स यदि विन्देत् वार्त्ताम्" इति। तत् श्रुत्वा नरपति: अचिन्तयत्,—"श्रूयते हि (३३) तत्रभवत: सुगृहीतनाम्न: स्वर्गतस्य ग्रहवर्म्मणो बालमित्रं मैत्रायणीय: त्रयी विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधि: सौगते मते युवा एव काषायाणि गृहीतवान् इति। प्रायश्च जनस्य जनयति (३४) सुहृदपि दृष्टो सुशम् आश्वासम्। अभिगमनीयाश्च गुणा: सर्व्वस्य। कस्य न (३५) प्रतीक्ष्यो मुनिभाव: ? भगवती वैधेयेऽपि धर्म्मगृहिणी गरिमाणम् आपादयति प्रव्रज्या, किं पुन: सकलजनमनोमुषि विदुषि जने ?

---

आश्रितो स्थित्वे" इत्यमर:) परिहृत—वीष्ट्य। पराशरी—भिक्षु, ["पराशरी" इत्यत्र "पाराशरी" इति पाठेऽपि स एवार्थ:, "भिक्षु: परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी" इत्यमर:]। वार्त्ता—उदन्त, वार्त्तां इति भाव:, विन्देत—जानीयादित्यर्थ:।

(३३) तत्रभवत:—मान्यस्य, सुगृहीतनाम्न:,—प्रात:स्मरणीयस्य, विख्यातस्येत्यर्थ:। बालमित्र—शैशवसुहृत्, मैत्रायणीय,—वेदशाखाविशेषाध्यता ब्राह्मणायन—ब्राह्मणकुलजात द्विजश्रेष्ठो वा, उत्पन्नसमाधि,—चित्तैकाग्र्यमिष्ट:, गृहीतनियमो वा ("स्यु: समर्थननीवाकनियमाश्च समाधय:" इत्यमर:) सौगते—सुगत,—बुद्ध, तस्य इदं तस्मिन् मते—शास्त्रे, बौद्धधर्म्ममाश्रित्य इत्यर्थ:, त्रयी—त्रिवेदीम्, ऋक्सामयजुःरूपक वेदत्रयमित्यर्थ:, ("स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर:) विहाय—त्यक्त्वा, वैदिकधर्म्मं परित्यज्येत्यर्थ:, काषायाणि—कषायरक्तानि वसनानि।

(३४) सुहृत—मित्र, दृष्ट:—साक्षात्कृतोऽपि, किमपि अकुर्व्वन्नपीति भाव:, आश्वासम्—आशा, प्रीतिं वा, भगिनीपतेर्ग्रहवर्म्मणो मित्रत्वात् तत्सम्बन्धेन ममापि मित्रभूतस्य अस्य किमप्यकुर्व्वतोऽपि दर्शनं मे आनन्दप्रदं भविष्यतीति भाव:। अभिगमनीया:—अनुसरणीया:। सर्व्वस्य—यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भाव:, "गुणा: पूजास्थानं गुणिषु न च लिङ्गं न च वय:" इति तात्पर्य्यम्।

(३५) प्रतीक्ष्य,—पूज्य, ("पूज्य: प्रतीक्ष्य:" इत्यमर:)। मुनिभाव,—

यतो नः (३६) कुतूहलि हृदयम् अभूत् सततमस्य दर्शनं प्रति, प्रासङ्गिकमेव इदमापतितम् अतिकल्याणं, पश्यामः प्रयत्नप्रार्थितदर्शनं जनम्" इति। प्रकाशश्च अब्रवीत्,—"अङ्ग! समुपदिश तम् उद्देशं, यत्रास्ते स पिण्डपाती" इति। एवमुक्तश्च तेनैव उपदिश्यमानवर्त्मा प्रावर्त्तत गन्तुम्।

अथ क्रमेण (३७) गच्छत एव तस्य अनवकेशिन, कुड्मलितकर्णिकाराः, प्रचुरचम्पकाः, (३८) स्फीतफलेग्रहयः, फलभरनमितनमेरव, नीलदलनलदनारिकेलनिकरा, करि·

सापत्नभाव। भगवती—सर्वशक्तिमती, अभ्यर्हिणी—अवश्यपवी, प्रव्रज्या—सन्यासधर्म इत्यर्थः, वैधेयोऽपि—मूर्खोऽपि, गरिमाण—गौरवम् आपादयति—प्रतिपादयति, मूर्खोऽपि सन्यासमाश्रयति चेत सर्वथा पूज्यो भवति इति सरलार्थ। सकलजनमनोमुषि—सर्वलोकमनोहरि।

(३६) कुतूहलि—समुत्सुकम्। प्रासङ्गिकं—प्रसङ्गात—भगिन्या अन्वेषणरूप कार्यान्तरादित्यर्थः आगतम्। इदं—तद्दर्शनावसररूपम्। प्रयत्नात।—प्रयत्नेन—प्रकृष्टचेष्टया, बहुद्वारैरित्यर्थः, प्रार्थितं—वाञ्छितं, दर्शनम्—अवलोकनं यस्य तादृशम्, दुर्लभदर्शनमित्यर्थः।

(३७) "अथ क्रमेण गच्छत एव तस्य" इत्यस्य "दर्शनपथमवतेरुः तरवः" इति परेण सम्बन्धः। तान् विशिनष्टि अनवकेशिन इत्यादि।—अनवकेशिन,—अवकेशिन,—वन्ध्या, अफला इति यावत् ("वन्ध्योऽफलोऽवकेशी च" इत्यमरः) ते न भवन्तीति फलवन्त इत्यर्थः। कुड्मलितकर्णिकाराः,—कुड्मलिताः,—सञ्जातमुकुलाः, कर्णिकाराः—द्रुमोत्पलाः, आरग्वधवृक्षा वा येषु ते, ("कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी)। प्रचुरचम्पकाः,—प्रचुराः,—बहुलाः, चम्पकाः,—स्वनामख्यातपुष्पवृक्षा येषु ते।

(३८) स्फीतेति।—स्फीताः,—प्रवृद्धाः, फलेग्रहयः,—अवन्ध्याः, फलवन्त इत्यर्थः येषु तथोक्ताः, ("स्यादवन्ध्यः फलेग्रहिः" इत्यमरः)। फलेति।—फलानां भरेण—भारेण, नमिताः,—अवनताः, नमेरवः—सुरपुन्नागवृक्षाः, रुद्राक्षवृक्षा वा येषु तथोक्ताः। ["फलभरनमितनमेरव" इत्यत्र "फलभरभरितनमेरव" इति पाठे,—फलानां भरेण—अतिशयेन, बाहुल्येनेत्यर्थः, ("भरोऽतिशयभारयोः"

केसरसरलपरिकराः, (३९) कोरकनिकुरम्बरोमाञ्चितकुरबकराजयः, (४०) रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः, (४१) प्रविकसितकेसररजोविसरबध्यमानचारुधूसरिमाणः, स्वरजःसिकतिलतिलकतलाः, (४२) प्रविचलितहिङ्गवः,

---

इति मेदिनी ) भरिताः,—पूर्णाः, अत एव नमिता इति भावः, नमेरव एव तयोक्ता ]। नीलेति।—नीलदलाः,—श्यामलपर्णाः, नलदानि—उशीराः, नारिकेलनिकराः,—नारिकेलसमूहाश्च येषु ते, ( "स्यादीरणं वीरणं मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यम्" इति "नारिकेलस्तु लाङ्गली" इत्युभयत्राप्यमरः )। करीति।—करिकेसराः,—नागकेसराः, [ "करिकेसर—" इत्यत्र "हरिकेसर—" इति पाठेऽपि, —हरिकेसराः,—हरिकेसराः, नागकेसरा इत्यर्थः, ( "हरिश्चन्द्रार्कवातास्वशुकभेकयमाहिषु" इति मेदिनी ) सरलाः,—देवदारवः पीतद्रुमा वा, यस्मात् "तार्पिण" इति प्रसिद्धं तैलं क्रियते लोकैरित्यर्थः, ( "पीतद्रुः सरलः पूतिकाष्ठश्च" इत्यमरः ) तेषां परिकरः,—सङ्घः, समूहः इत्यर्थः येषु ते। ( "भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः" इति मेदिनी )।

(३९) कोरकेति।—कोरकाणां—कलिकानां, निकुरम्बैः,—सङ्घैः, रोमाञ्चिताः,—सञ्जातरोमहर्षा इव लक्ष्यमाणाः, कुरबकाणां—रक्तम्लानानां, ये योषिदालिङ्गनेन पुष्प्यन्तीति कविसमयप्रसिद्धिः, तेषामित्यर्थः, राजयः,—श्रेण्यः येषु ते।

(४०) रक्तेति।—रक्तानां—रक्तवर्णानां, विकसितानामित्यर्थः, अशोकानां—वञ्जुलानां, ये योषितां पादाघातेन विकसन्तीति प्रसिद्धिः, तेषामिति भावः, पल्लवलावण्यैः,—किसलयकान्तिभिः, लिप्यमानाः,—विच्छुरत्यः, दश दिशः,—आशाः येषु ते।

(४१) प्रविकसितेति।—प्र—प्रकर्षेण, विकसितानां—प्रस्फुटितानां, केसराणां—बकुलानां, ये कान्तानां सीधुगण्डूषसेकात् विकसन्तीति कविसमयख्यातं, तेषामित्यर्थः, ( "अथ केसरे बकुलः" इत्यमरः ) रजोविसरैः—परागप्रसरैः, बध्यमानाः,—सङ्घट्यमानाः, चारवः,—मनोज्ञाः, धूसरिमाणः,—धूसरत्वानि येषां येषु वा ते। स्वरजः इति।—स्वरजोभिः,—निजपरागैः, सिकतिलानि—सैकतमयानि वालुकामयानीव लक्षितानीत्यर्थः, तिलकानां—तिलकतरूणां, ये प्रसाधिताङ्गनाऽवलोकनमात्रेणैव पुष्पिता सञ्जायन्ते इति भावः, तेषां तलानि—अधोदेशाः येषु येषां वा ते।

(४२) प्रविचलितेति।—प्रविचलिताः,—कम्पिताः, हिङ्गवः,—हिङ्गुवृक्ष-

मुखमुद्वहन्तीम्; आकाशमपि (१४४) शून्यतया अतिशयानाम्; मृन्मयीमिव निश्चेतनतया; मरुन्मयीमिव निश्वाससम्पदा; पावकमयीमिव सन्तापसन्तानेन; (१४५) सलिलमयीमिव अस्रप्रस्रवणेन; वियन्मयीमिव निरवलम्बनतया; (१४६) तडिन्मयीमिव पारिप्लवतया; शब्दमयीमिव परिदेवितवाचोबाहुल्येन; (१४७) मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां

---

प्रभं, विवर्णामित्यर्थः । हतच्छायामपि विच्छायामित्यापाततः विरोधात् विरोधाभासालङ्कारः ।

(१४४) शून्यतया—रिक्ततया, हृदयस्येति भावः । अतिशयानाम्—जयन्तीम्, आकाशमिव शून्यतया व्याप्ताम्, अथवा हृदाकाशमनु सतोऽप्यधिक शून्याम्, स्वजनविरहादिति भावः । निश्चेतनतया—निस्पन्दतयेति यावत्, मृन्मयीमिव—मृत्तिकाघटितामिव पञ्चसु भूतेषु केवल क्षितिमयीमिव न तु अबादिमयीमिति भावः, एवमुत्तरत्रापि बोद्धव्यम् । निश्वाससम्पदा—दीर्घनिश्वासबाहुल्येनेत्यर्थः, मरुन्मयीमिव—वायुमयीमिव, अविरत दीर्घनिश्वास त्यजन्तीमिति यावत् । सन्तापसन्तानेन—सन्तापप्रवाहेणेत्यर्थः पावकमयीमिव—अग्निमयीमिव, केवल तेजोमयीमिवेत्यर्थः, प्रबलशोकानलतप्तामिति भावः ।

(१४५) अस्रप्रस्रवणेन—वाष्पवर्षणेन, सलिलमयीमिव—जलमयीमिव, केवल अम्मयीमिवेत्यर्थः, अनवरतमस्रु मुञ्चन्तीमिति भावः । निरवलम्बनतया—निराधारतया, निराश्रयतया इत्यर्थः, वियन्मयीमिव—आकाशमयीमिव, केवल व्योममयीमिवेत्यर्थः, अतीव निराश्रयामिति भावः ।

(१४६) पारिप्लवतया—चञ्चलतया, (चञ्चल तरलञ्चैव पारिप्लवपरिप्लवे इत्यमरः) तडिन्मयीमिव—विद्युन्मयीमिव हृदयचालनया अतीव अस्थिरामिति भावः । परिदेवितवाचोबाहुल्येन—विलापवाक्यनिवहेन, शब्दमयीमिव—शब्दस्वरूपिणीमिव, अनवरत विलपन्तीमिति भावः । मृन्मयीमिवेत्यारभ्य शब्दमयीमिवेत्यन्त यावदुत्प्रेक्षालङ्कारः ।

(१४७) मुक्तेति ।—मुक्तानि—त्यक्तानि, निर्गमितानि च, मुक्ताः—मौक्तिकानि अंशुकानि—उत्कृष्टवसनानि, यद्वा—मुक्तांशुक—मुक्ताख्यमंशुकं, मालवदेशज मुक्ताखचित सूक्ष्मवस्त्रविशेष इति यावत् रत्नानि—मणयः कुसुमानि—पुष्पाणि, कनकपत्राणि—सुवर्णरचितपत्ररचनाविशेषाः, सौवर्णपत्राणि च, आभरणानि

धातुरुत्सङ्गे महाऽनर्थे च; दूरीकृतां भर्त्रा सुखेन च; (१५५) विरेचितां भ्रमणेन आयुषा च; आकुलां केशकलापेन मरणोपायेन च; विवर्णिताम् अश्रुधूलिभिः अङ्गरेदनाभिश्च; दग्धां (१५६) चण्डातपेन वैधव्येन च; धृतमुखीं पाणिना मौनेन च, गृहीतां प्रियसखीजनेन मन्युना च; तया च (१५७) भ्रष्टैः बन्धुभिः विश्वासैश्च, मुक्तेन श्रवणयुगलेन आत्मना च, परित्यक्तैः भूषणैः सर्वारम्भैश्च, भग्नैर्वलयैः मनोरथैश्च, चरणलग्नाभिः परिचारिकाभिः दर्भाङ्कुरसूचीभिश्च,

---

मित्यर्थः । स्थिता—कृतावस्थाना, कृतनिवासा च । धातुरुत्सङ्गे—उपमातृक्रोडे, महाऽनर्थे—प्रबलविपत्तौ च, पतिता—निहितदेहा, मग्ना च । दूरीकृता—विरहिताम् ।

(१५५) भ्रमणेन—अटनेन, आयुषा—जीवितकालेन च, विरेचिता—त्यक्ता, अतिशक्तिहीनाम् आसन्नमरणाञ्चेत्यर्थः । केशकलापेन—सुदीर्घविस्रस्तकुन्तलसमूहेन, मरणोपायेन—उद्वेष्टना च, आकुला—व्याकुला, सुदीर्घकेशपाशसंयमनाक्षमतया, केनोपायेन मरिष्यामीति चिन्तया चेति भावः । अश्रुधूलिभिः—मार्गरजोभिः, विवर्णिता—मलिना, विच्छायीकृताम्, श्रमक्लेशादिति भावः ।

(१५६) चण्डातपेन—तीक्ष्णसूर्यसन्तापेन, वैधव्येन च—विगतः धवः,—पतिः यस्याः सा विधवा, तस्या भावः वैधव्यं तेन विधवितया इत्यर्थः । पाणिना—करेण, मौनेन च—तूष्णीम्भावेन, धृतमुखी—विधृतवदना, निरुद्धवाच, करतलोपरि स्थापितगण्डा, मौनावलम्बिनी चेत्यर्थः । मन्युना—क्रोधेन, गृहीता—धृताम्, आक्रान्ताञ्च ।

(१५७) भ्रष्टैः,—च्युतैः, नष्टैरित्यर्थः, ध्वस्तैश्च, बन्धुभिः,—भर्त्रादिभिः, विश्वासैः,—सुखचेष्टितैश्च । ["बन्धुभिः" इत्यादौ "जीवितेन" इत्यन्यपदं इत्यभ्युत्तरपदे दृश्यते] मुक्तेन—निरलङ्कारेण, शून्येन च । सर्वारम्भैः—कार्योपक्रमैः, सकलकार्यैरित्यर्थः । भग्नैः,—खण्डितैः, विनष्टैश्च । चरणलग्नाभिः,—पादपतिताभिः, मा अस्मान् विहाय प्राणान् जहीहि इति निवारयन्तीभिरिति भावः, चरणविद्धाभिश्च, दर्भाङ्कुरसूचीभिः—अभिनवोद्भिन्नकुशाग्रैः ।

(१५८) हृदयविनिहितेन चक्षुषा प्रियेण च, (१५९) दीर्घैः शोकश्वसितैः केशैश्च, क्षीणेन वपुषा पुण्येन च, पादयोः पतन्तीभिः दृष्टाभिः अश्रुधाराभिश्च, स्वल्पावशेषेण परिजनेन जीवितेन च; (१६०) अलसाम् उन्मेषे; दक्षाम् अश्रुमोक्षे; सन्ततां चिन्तासु; विच्छिन्नाम् आशासु; क्षामां कार्ये; स्थूलां श्वसिते; (१६१) पूरितां दुःखेन; रिक्तां सत्त्वेन; अध्यासितां आयासेन; शून्यां हृदयेन; निश्चलां निश्चयेन; चलितां धैर्यात्; अपि च वसतिं व्यसनानाम्; आधानम् आधीनाम्; अवस्थानम् अनवस्थानाम्; आधारम् अधृतीनाम्; आवासम्

(१५८) हृदयविनिहितेन—हृदयार्पितेन, मनसि निवेशितेनेत्यर्थः, चित्तस्थापितेन च, प्रियेण—भर्त्रा।

(१५९) दीर्घैः—आयतैः, लम्बमानैश्च, शोकश्वसितैः—शोकजनिश्वासैः। क्षीणेन—क्षामतां गतेन च, वपुषा—शरीरेण। स्वल्पावशेषेण—विरलेन अल्पमात्रावशिष्टेनेत्यर्थः, निःशेषप्रायेणेत्यर्थश्च।

(१६०) उन्मेषे—चक्षुरुन्मीलने, अलसा—मन्थरा, जडप्रायामित्यर्थः, निमीलितनयनामिति यावत्। दक्षा—पटुः सा, प्रबलवेगेनाश्रु मुञ्चन्तीमित्यर्थः, या अलसा सा कथं दक्षा? इति आपाततो विरोधः, उन्मेषाश्रुमोक्षरूपविभिन्नाधिकरणिकतया च तयोः परस्परमविरोधात् विरोधाभासोऽलङ्कारः; एवमुत्तरत्र। सन्तताम्—अविच्छिन्नां निरन्तरामित्यर्थः, सततं चिन्तयन्तीमिति निष्कर्षः, विच्छिन्ना—रहिता, हताशामित्यर्थः, सन्तता विच्छिन्नामिति विरोधः। श्वसिते स्थूला—दीर्घश्वसन्तीमिति यावत्, क्षामा स्थूलामिति आपाततो विरोधः, कार्श्यश्वसितयोः सामानाधिकरण्याभावेनाविरोधात् विरोधाभासः, एवमन्यत्रापि।

(१६१) सत्त्वेन—विद्यमानतया, अस्तित्वेन इत्यर्थः, बलेन उत्साहेन वा, रिक्ता—रहिता, मृतप्राया दुर्बला निरुत्साहा वा इति भावः, पूरिता रिक्तामिति विरोधः। आयासेन—क्लेशेन, अध्यासिताम्—अधिष्ठिताम्, अनुभूतक्लेशामित्यर्थः, अध्यासिता शून्यामिति विरोधः। निश्चयेन—निर्णयेन, निश्चला—स्थिरा, स्थिरसङ्कल्पामित्यर्थः। चलिता—च्युताम्; निश्चला चलितामिति विरोधः। व्यसनानां—विपदां, वसतिम्—आश्रयम्। आधीनां—मानसीनां व्यथानां,

प्रमादानाम्; आस्पदम् आपदाम्; (१६२) अभियोगम् अभाग्यानाम्; उद्वेगम् उद्वेगानाम्; कारणं करुणायाः; पारं परायत्ततायाः योषितम्। चिन्तितवानस्मि च चित्रम्॥ ईदृशीमपि आकृतिम् उपतापाः स्पृशन्ति॥ इति।

सा तु ममोपगते मयि तदवस्थाऽपि (१६३) सबहुमानम् आनतमौलिः प्रणतवती। अहन्तु (१६४) प्रपन्नकरुणा-प्रेर्यमाणः ताम् आलपितुकामः पुनः कृतवान् मनसि—"कथमिव (१६५) महानुभावाम् एनाम् आमन्त्रये? 'वत्से।' इति अतिप्रणय, 'मातः।' इति चाटु, 'भगिनि।' इति (१६६) आत्मसम्भावना, 'देवि।' इति परिजनालाप,

---

("पद्याधिर्मानसी व्यथा" इत्यमरः) आधानम्—आधारम्। अनवस्थानां—दुःस्थानामित्यर्थं अवस्थान—वासस्थानम्। अधृतीनाम्—धैर्य्याभाव। प्रमादानां—विपत्तीनाम् अवसन्नताना वा। आस्पद—स्थानम्।

(१६२) अभियोगम्—आक्रान्तिम्, आक्रमणस्थानमित्यर्थं, दुर्भाग्याक्रान्तामिति यावत्। उद्वेगाना—व्याकुलतानामित्यर्थं, भयानां वा, उद्वेगम्—उद्गमन स्थानमित्यर्थ, आश्रयस्थानमिति भाव। करुणायाः कारणं—हेतु, कृपाविभावस्य हेतुभूतामित्यर्थ, तद्दर्शने स्वत एव करुणा जायते इति भाव। परायत्ततायाः—पराधीनताया पारम—अन्तम, अवसानमित्यर्थ, इतोऽप्यधिकपरायत्ततायाः कस्यचन कुत्राप्यदर्शनात् एकान्तपरायत्ताऽभिनीमिति भाव। चित्रम्—आश्चर्यम्। उपतापाः,—सन्तापा, मनस्तापा इति यावत्।

(१६३) सबहुमान—सादरम्, आनतमौलि—अवनतमस्तका।

(१६४) प्रपन्नेति।—प्रपन्नया—महत्या, करुणया—कृपया, प्रेर्यमाणः,—नीयमान, अतीव कृपाविवशहृदय इत्यर्थं। आलपितुकाम,—सम्भाषितुकाम।

(१६५) महानुभावा—मान्यनीयाम्। आमन्त्रये—सम्भाषे। अतिप्रणय,—अतिमात्रस्नेहम्, अतिविश्रब्धता वा, एतादृकसम्भाषणस्य स्नेहविश्रम्भाभिव्यञ्जकतया अपरिचितायाम् तव अयुक्तमिति भाव। चाटु—चाटुवाक्यम् वाणिक्षेपम् सन्तोषणमित्यर्थं, प्रियोक्ति वा एतदपि पूर्ववदयुक्तमिति भाव।

(१६६) आत्मसम्भावना—आत्मन समादर, भिन्नो मम तादृशी भगिनी न

'राजपुत्रि !' इति (१६७) अस्फुटम्, 'उपासिके !' इति मनोरथः, 'स्वामिनि !' इति (१६८) भृत्यभावाभ्युपगमः, 'भद्रे !' इति इतरस्त्रीसमुचितम्, 'आयुष्मति !' इति अवस्थायाम् अप्रियं, 'कल्याणिनि !' इति (१६९) दशाया विरुद्धं, 'चन्द्रमुखि !' इति अमुनिमतं, 'बाले !' इति (१७०) अगौरवोपेतम्, 'आर्य्ये !' इति जरारोपणं, 'पुत्रवति !' इति फलविपरीतं, (१७१) 'भवति !' इति सर्व्वसाधारणम्; अपि

---

सम्भवति इति चाम्मयोरेव स्यादिति भावः । परिजनालापः,—परिजनस्य—भवनपरिवारस्य, निजमहस्यजनमनुष्यस्येत्यर्थः, आलापः,—सम्भाषणम्, नाहं तथेति भावः ।

(१६७) अस्फुटम्—अव्यक्तम्, तथात्वेनाज्ञातत्वादिति भावः । उपासिके !—सेवके ! बौद्धसन्न्यासिनि ! इत्यर्थो वा । मनोरथः,—अभिलाषः, स्वमनोऽनुकूलं वचनमित्यर्थः, तथा हि—आत्मन उपासकतया सर्वमेव उपासकं मन्यामहे, यदि हि इयं तथा न स्यात् तदा तथोक्तिविफलैवेत्यभिप्रायः ।

(१६८) भृत्यभावाभ्युपगमः—दासभावस्वीकारः, न चायुक्तः स्वेशो दासत्वाभिधायकत्वादिति भावः । इतरस्त्रीसमुचितम्—सामान्यनारीसम्बन्धि, इयन्तु न तथा दृश्यते, तत् कथं तथा सम्बोधनार्हेति भावः । अवस्थायाम्—मरणदशायाम् अप्रियम्—न प्रीतिकरः तादृश्यामवस्थायां न कोऽपि जीवितं प्रियं मन्यते, अत एव अप्रीतिकरस्य वचनस्य कस्यापि प्रति प्रयोक्तुमनौचित्यात् इति भावः, उक्तञ्च मनुना,—"सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् । प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥" इति ।

(१६९) दशायाम्—अमङ्गलावस्थायाम्, विरुद्धम्—विपरीतम्, तादृश्यां कालेऽस्याः कल्याणासम्भवात् मिथ्याभूतस्य च वचनस्य प्रयोक्तुमनौचित्यादिति भावः । अमुनिमतम्—मुनिजनानभिमतम्, तपस्विजनविरुद्धमित्यर्थः, विलासिकामुकयोरेव सम्बोधनमिदम् इति भावः ।

(१७०) अगौरवोपेतम्—गौरवे अयुक्तमित्यर्थः, लघुत्वव्यञ्जकमिति यावत् । जरारोपणम्—वार्द्धक्याध्यासनम्, जरतीनामेव तथा सम्बोधनीयत्वादिति भावः । फलविपरीतम्—फलेन—तादृशेन दुर्विपाकरूपेण, विपरीतम्—विपर्यस्तम्, पुत्रसत्त्वे न तादृशी दुरवस्था जायते इति भावः ।

(१७१) भवति !—मान्ये ! इत्यर्थः । सर्व्वसाधारणम्—सर्वेषां साधारणम्—

च 'कासि ?' इति अनभिजातं, 'किमर्थं रोदिषि ?' इति दुःखकारणस्मरणकारि, 'मा रोदीः' इति शोकहेतुम् अनपनीय न शोभते, 'समाश्वसिहि' इति किम् आश्रित्य ? 'स्वागतम् ?' इति यातयामं, 'सुखम् आस्यते ?' इति मिथ्या ।

इत्येवं चिन्तयति एव मयि, तस्मात् (१७२) स्त्रैणात् उत्थाय अन्यतरा योषित् आर्य्यरूपा इव शोकविक्लवा समुपसृत्य, कतिपयपलितशारं शिरो नीत्वा महीतलम्, अतुलहृदयसन्तापसूचकैः अश्रुबिन्दुभिः चरणयुगलं दहन्ती मम अतिकृपणैः अक्षरैश्च हृदयम् अभिहितवती,—'भगवन् !

---

सामान्यं, तेनात्र अयुक्तम्, असामान्यमूर्त्तित्वात् तस्या इति भावः । अनभिजातम्—अकुलोचितं, "कीदृशं कुलमलङ्कृतासि" ? एवं प्रश्नस्य सत्कारसम्भूतायाम् अनादराभिव्यञ्जकत्वादिति भावः । दुःखेति ।—दुःखस्य—मनःपीडाया इत्यर्थः यत् कारणं—हेतुः तस्य स्मरणं—पूर्वानुभूतस्य मनसि आविर्भवणं, तत् कारयतीति तथोक्तम्, रोदनकारणे आख्यायमाने पूर्वज्ञातस्य पुनःस्मारणादिति भावः, पूर्वज्ञातप्रबोधकतया व्यथाकरमिति तात्पर्यम् । अनपनीय—अनपनीय दूरमकृत्वेति यावत् । समाश्वसिहि—आश्वस्ता भव, धैर्य्यमवलम्बस्व इत्यर्थः । किम् आश्रित्य ?—समाश्वासनहेतुं कमाश्रित्य ब्रवीमीति भावः । यातयामम्—असामयिकं, जीर्णप्रायम् इति यावत् पुरातनसम्बोधनं वा इति भावः, यद्वा,—यातः,—व्यतीतः, यामः,—प्रहररूपः कालः यस्य तथाविधम्, तथा हि—"स्वागतम्" इति प्रश्नस्य प्रथमदर्शनसमयरूपकालमात्रकृततया इदानीं प्रहरादप्यधिके व्यतीतकाले तदभिधानस्य नितरामन्याय्यत्वादित्यभिप्रायः । आस्यते—उपविश्यते, स्थीयते इत्यर्थः । मिथ्या—अलीकं, प्रत्यक्षमेव असुखव्यञ्जककार्य्यस्य दर्शनात् इति भावः ।

(१७२) स्त्रैणात्—स्त्रीसमूहात् । आर्य्यरूपा इव—कुलीनस्वभावा इव दृश्यमाना इत्यर्थः, शोकविक्लवा—मन्युविधुरा । कतिपयेति ।—कतिपयानि—अल्पसङ्ख्यकानि पलितानि—जरसा शुक्लकेशवृन्दानि, ("पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः) तैः शारं—चित्रं, शबलमित्यर्थः । अतुलहृदयसन्तापसूचकैः,—निरुपमचित्तसन्तापव्यञ्जकैः । अतिकृपणैः,—अतिदीनैरक्षरैः, अतिकरुणैरिति यावत्, अक्षरैः हृदयं दहन्ती ।

(१७३) सर्व्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। प्रतिपन्नदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः। (१७४) करुणाकुलगृहञ्च भगवतः शाक्यमुनेः शासनम्। (१७५) सकलजनोपकारसज्जा सज्जनता जैनी। परलोकसाधनञ्च धर्म्मो मुनीनाम्। प्राणरक्षणाच्च न परं (१७६) पुण्यजातं जगति गीयते जनेन। (१७७) अनुकम्पाभूमयः प्रकृत्या एव युवतयः, किं पुनर्विपदभिभूताः? साधुजनश्च सिद्धचैत्यम् आर्त्तवचसाम्। यत इयं नः (१७८) स्वामिनी मरणेन पितुः, अभावेन भर्त्तुः, प्रवासेन च भ्रातुः, भ्रंशेन च शेषस्य बान्धववर्गस्य, (१७९) अतिमृदुहृदयतया अनपत्यतया च निरवलम्बना परिभवेन च नीचा-

(१७३) सर्वसत्त्वानुकम्पिनी—सर्वप्राणिकृपाकारिणी, प्रव्रज्या—सन्न्यासधर्म्म। सौगता,—बौद्धा, प्रतिपन्नेति।—प्रतिपन्नानाम्—आपन्नानाम्, आश्रितानामित्यर्थः, दुःखस्य—क्लेशस्य, क्षपण—निवारणमेव, दीक्षा—व्रत, तत्र दक्षा,—पटव।

(१७४) शाक्यमुने,—बुद्धदेवस्य, शासनम्—आदेश, शास्त्रं वा, करुणेति।—करुणाया—कृपाया, कुलगृह—कुलमन्दिर, कारुण्यस्य आयुत्पत्तिस्थानमित्यर्थः। तेन हि भगवता सुदयहृदयेन सर्वजीवेषु कारुण्यस्यैव प्राधान्येन दर्शितत्वादित्यभिप्राय। यद्वा,—करुणाकुलस्य—प्रभूतकृपाया, गृहम्—आवास।

(१७५) जैनी—जिनसम्बन्धीया, बौद्धाचारसम्भूता इत्यर्थः, सज्जनता—साधुता, सकलेति।—सकलाना—सर्वेषां, जनाना—लोकानाम्, उपकारे—हितविधाने, सज्जा—प्रवृत्ता, उद्युक्ता इति यावत्। धर्म्म,—विष्णुमोहित आचार, परलोकसाधनम्—उत्कृष्टलोकप्रापक।

(१७६) पुण्यजातं—पुण्यनिचय।

(१७७) प्रकृत्या—स्वभावत, अनुकम्पाभूमय,—कृपापात्राणि। विपदभिभूता,—विपन्ना स्त्रिय। आर्त्तवचसाम्—आर्त्तानां—विपन्नानां, वचसां—वाक्यानां, सिद्धचैत्य—सिद्धस्थान, निश्चितफलस्थानमित्यर्थः, प्रसिद्धाश्रय इति यावत्।

(१७८) स्वामिनी—अधीश्वरी। प्रवासेन—विदेशावस्थानेन। शेषस्य—अवशिष्टस्य, बान्धववर्गस्य—स्वजनसमूहस्य, भ्रंशेन—विनाशेन, सर्वथा पलायनेन वा इत्यर्थः।

(१७९) अतिमृदुहृदयतया—अतिकोमलान्तःकरणतया, अनपत्यतया—

रातिक्रमेण, प्रकृतिमनस्विनी, अमुना च (१८०) महाऽटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या, दग्धदैवदत्तैः एवंविधैः बहुभिः उपर्युपरि व्यसनैः विक्लवीकृतहृदया, दारुणं दुःखमपारयन्ती सोढुं, निवारयन्तम् (१८१) अनतिक्रान्तपूर्वं स्वप्नेऽपि अवगणय्य गुरुजनम्, (१८२) अनुनयन्तीः अखण्डितप्रणया नर्मसु अपि समवधीर्य प्रियसखीः, (१८३) विज्ञापयन्तम् अशरणम् अश्रुव्याकुलनयनम् अपरिभूतपूर्वं मनसाऽपि परिभूय भृत्यवर्गम् अग्निं प्रविशति, परित्रायताम्। आर्योऽपि तावत् (१८४) असह्यशोकापनयनोपायोपदेशनिपुणा

---

अप्रसन्नतया, नीचारातिक्रमेण—पामरजनप्रयुक्तेन, हीनान्तःकरणैरविहितेनेति यावत्, परिभवेन—तिरस्कारेण, उत्पीडनेनेत्यर्थः, निरवलम्बना—निराश्रया। प्रकृतिमनस्विनी—स्वभावत एव प्रशस्तान्तःकरणा, स्वामिनी इत्यनेनान्वयः।

(१८०) महाऽटवीपर्यटनक्लेशेन—दीर्घारण्यभ्रमणायासेन, कदर्थितसौकुमार्या—क्लेशितमार्दवा। दग्धदैवदत्तैः—हतविधिविहितैः, व्यसनैः—विपत्पातैः, विक्लवीकृतहृदया—व्याकुलीकृतान्तःकरणा। दारुणं—घोरम्। अपारयन्ती—अशक्नुवती।

(१८१) अनतिक्रान्तपूर्वम्—अनुल्लङ्घितपूर्वम्। अवगणय्य—अगणयित्वा, गुरुजनानां वाक्यमुल्लङ्घ्येत्यर्थः।

(१८२) अनुनयन्तीः—प्रबोधयन्तीः, मरणाध्यवसायात् निवर्तयितुमनुनयं कुर्वतीरित्यर्थः, नर्मसु अपि—परिहासेषु अपि, अखण्डितप्रणया—अविच्छिन्नसद्भावा, अविचलितस्नेहा इति यावत्। समवधीर्य—अवज्ञाय, सखीनामपि सानुनयवचनमनाकर्ण्येत्यर्थः।

(१८३) विज्ञापयन्तम्—मा प्रविशाग्निं मा प्रविशाग्निम् इत्येवं बहुशः निवेदयन्तम्, अशरणम्—अनाथं, मनसाऽपि अपरिभूतपूर्वं—चेतसाऽपि अनादृतपूर्वम्। परिभूय—अनादृत्य।

(१८४) असह्येति।—असह्यस्य—सोढुमशक्यस्य, शोकस्य—मन्योः, अपनयनं—निरसनं, तस्य उपायः—साधनं, तस्य उपदेशे—शिक्षायां, निपुणा—दक्षा

व्यापारयतु वाणीम् अस्याम्" इति च अतिकृपणं व्याहरन्तीम् अहम् उत्थाप्य उद्विग्नतरं शनैः अभिहितवान् —'आर्ये! यथा कथयसि, तथा। अस्मद्गिराम् (१८५) अगोचरोऽयम् अस्याः पुण्याशयायाः शोकः। शक्यते चेत् मुहूर्त्तमात्रमपि (१८६) त्रातुम्, उपरिष्टात् न व्यर्था इयम् अभ्यर्थना भविष्यति। मम हि गुरुः अपर इव भगवान् (१८७) सुगतः समीपगत एव। कथिते मया अस्मिन् उदन्ते नियतम् आगमिष्यति परमदयालुः। दुःखान्धकारपटलभिद्भिश्च सौगतैः सुभाषितैः (१८८) स्वकैश्च दर्शितनिदर्शनैः नानागमगुरुभिः गिरा कौशलैः कुशलशीलाम् एनां प्रबोधपदवीम् आरोपयिष्यति' इति। तच्च श्रुत्वा 'त्वरताम् आर्यः' इत्यभिदधाना सा

---

याम्। व्यापारयतु—प्रयुङ्क्ताम्। अस्याम्—अस्याः स्वामिन्याम्। अतिकृपणम्—अतिदीनम् अतिकारुण्यमयं व्याहरन्तीम्—भाषमाणाम्। उद्विग्नतरम्—अतिव्याकुलम्। यथा कथयसि—सर्वसत्त्वानुकम्पनो इत्यादि यत् वदसि तथा—तत् तथैव, सत्यमित्यर्थः।

(१८५) अगोचरः,—असाक्षात्करणीयः, अविषय इत्यर्थः, अनपनेय इति भावः। पुण्याशयायाः,—पवित्रस्वभावायाः।

(१८६) त्रातुम्—आत्मप्रवेशव्यवसायात् निवारयितुमित्यर्थः। उपरिष्टात्—परतः मुहूर्त्तानन्तरमित्यर्थः। अभ्यर्थना—याच्ञा यदि मुहूर्त्तकालं प्रबोधवाक्यैरेषं रक्षितुं शक्यते तदा अस्मद्गुरुम् आनीय तस्य उपदेशतोऽस्याः शोकं प्रशमय्य पुनः प्रार्थनां सफलयिष्यामीति निष्कर्षः।

(१८७) सुगतः,—बुद्धदेवः। उदन्ते—वृत्तान्ते ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः)। नियतम्—निश्चितम्। दुःखेति।—दुःखानि—मनःपीडा एव, अन्धकाराः—तिमिराणि तेषां पटलं—समूहः, तस्य भिद्भिः—नाशकानि तैः, सौगतैः—सुगतसम्बन्धिभिः, सुभाषितैः,—सद्वाक्यैः सुबद्धवचनैरिति यावत्।

(१८८) स्वकैः—निजैः, दर्शितनिदर्शनैः,—उदाहृतदृष्टान्तैः, नानेति।—नाना—विविधैः, आगमैः—शास्त्रैः हेतुभिः, शास्त्रयुक्तिमाश्रित्य कथनादिति भावः, गुरूणि—महान्ति, गौरवयुक्तानीत्यर्थः तैः, गिरा—वाचा, कौशलैः,—नैपुण्यैः,

पुनरपि पादयोः पतितवती। सोऽहमुपगम्य त्वरमाणः (१८९) व्यतिकरम् इमम् अश्रुतिकरम् अशरणकृपणबहुयुवतिमरणम् अतिकरुणम् अत्रभवते गुरवे निवेदितवान्" इति।

अथ (१९०) भूभृत् भैक्षव समवधार्य तद्भाषितम् अश्रुमिश्रितम्, अश्रुतेऽपि स्वसुः शान्ते निमीलितमना मन्युना, सर्वाकारसंवादिन्या दशया एव दूरीकृतसन्देहः, दग्ध इव सोदर्याः स्वाश्रवणेन श्रवणयोः, (१९१) श्रमणाचार्यम् उवाच,—"आर्य! (१९२) नियतं सैवेयम् अनार्यस्य अस्य जनस्य अतिकठिनहृदयस्य अतिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैः एताम् अवस्थां नीता निष्कारणवैरिभिः वराकी,

---

शमितागुणोरित्यर्थः कुसमशीता—सुखविलासिनीत्यर्थः प्रबोधपदवीं—प्रकाशमार्गं, शीकलालिकरमुपायमित्यर्थः।

(१८९) अश्रुतिकरम्—अश्रैर्व्यजनकम्, अशरणेति।—अशरणानाम्—निराश्रयाणां कृपणानां—दयितानां करुणापात्राणामित्यर्थः बहूनां—अनेकासां युवतीनां—तरुणीनां, मरणं—मृत्युं यस्मिन् तम् अतिकरुणम्—अतिशोकावहं, व्यतिकरं—, व्यसनं विपदमित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)। अत्रभवते—पूज्याय।

(१९०) भूभृत—नृपाल। भैक्षव—भिक्षुकम्। समवधार्य—सावहितं श्रुत्वेत्यर्थः। स्वसुः,—भगिन्याः। मन्युना—शोकेन ("मन्युः शोके तु यज्ञ स्त्रियाम्" इत्यमरः) निमीलितमना —मनसोऽन्तर्गतापि प्रतीतहृदयता इत्यर्थः भावान्तरहृदय इति यावत्। सर्वाकारसंवादिन्या—सर्वाकारेण—सर्वप्रकारेण, संवादिन्या—संवदति —एकमेव वाक्यमेकीकृत्य व्यवहरति तयोक्तया, यद्वा,—सर्वाकारं—सर्वमेवाकारं, संवदति—अनुकरोति या तया निखिलशारीरिकसम्यानकथनाभिज्ञातयेत्यर्थः दशया—अवस्थया। सोदर्याः।—सोदर्यायाः,—भगिन्याः, स्वाश्रवणेन—दुःश्राऽऽकथनेन, श्रवणयोः,—कर्णयोः।

(१९१) श्रमणाचार्यं—भिक्षुश्रेष्ठं, बौद्धाचार्यं दिवाकरमित्रमित्यर्थः।

(१९२) नियतं—निश्चितम्, अनार्यस्य—असाधोः। अतिनृशंसस्य—अति निर्दयस्य। भागधेयैः,—दुर्दैवैरित्यर्थः। निष्कारणवैरिभिः,—अहेतुकशत्रुभिः,

प्रावर्त्तत। क्रमेण च समुपगत शुश्राव लतावनान्तरितस्य मुमूर्षा-महत' स्त्रैणस्य तत्कालोचितान् अनेकप्रकारान् आलापान्,—"भगवन्! धर्म्म! (१९७) धाव शीघ्रम्। क्वासि? कुलदेवते।! देवि! धरणि! धीरयसि न दुःखिता दुहितरम्?। क्व नु खलु (१९८) प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मी?। (१९९) नाथ! सुखरवत्स्य! अनाथा विविधाऽऽधिविधुरा वधू विधवा विबोधयसि किमिति न इमाम्?। भगवन्! सुगत! भक्तजने (२००) सञ्ज्वरिणि सुप्तोऽसि?। राजधर्म! (२०१) पुष्पभूति भवनपक्षपातिन्! उदासीनोभूतोऽसि कथम्?। त्वयि अपि

---

बोद्धव्या। प्रावर्त्तत—प्रातिष्ठत। मुमूर्षा—मर्त्तुमिच्छा स्त्रैणस्य—स्त्रीसमूहस्य, तत्कालोचितान्—मन्युसमये प्रयुक्तान् भेदभूयान्नानित्यर्थ।

(१९७) धाव—द्रुतम् आगच्छ त्वामाश्रिता दयमकाले म्रियते अत शीघ्र मागत्य एना रक्ष इति भाव। धराणि!—सर्व्वधारणकारिणि। पृथ्वि! न धीरयसि?—न धीरा करोषि? न सान्त्वयसि? दुःखेन खिन्नाया ते कन्या धीरा एव भवितुमर्हति अत एना धीरा कुरु इति भाव।

(१९८) पुष्पभूतिकुटुम्बिनी—पुष्पभूते —तदाख्यस्य वंशपूर्वजस्य कुटुम्बिनी—गृहिणी लक्ष्मी राजभोग्यत्वादिति भाव, लक्ष्मी,—पुष्पभूते राज्ञ श्रीरत्यर्थ, प्रोषिता—गता।

(१९९) नाथ!—प्रभो! सुखरवत्स्य!—सुखरकुलप्रसूत? प्रहरवत्स! इति यावत प्रहरवर्म्मेण पूर्वजराजन्यवर्ग वा, [सुख प्राधान्यमस्यास्तीत्यर्थे "रप्रकरणे—" इत्यादि वार्त्तिकात मत्वर्थे रप्रत्यय] अनाथाम—अशरणा विवधात।—विविधाभि —नानाप्रकाराभि आधिभि,—मनस्तापै विधुरा—व्याकुला ता विधवा—पतिहीना, वधू—भार्य्या स्नुषा वा ("वधू स्त्री स्नुषा नवोढासु भार्य्यास्वङ्गनासु च॥" इति मेदिनी) विबोधयसि?—प्रबोधयसि? सान्त्वयसीत्यर्थ।

(२००) सञ्ज्वरिणि—सन्तापवति ("सन्ताप सञ्ज्वर समौ" इत्यमर)। सुप्तोऽसि?—निद्रितोऽसि किम्? भक्तजनमनस्ताप न पश्यसि किमित्यर्थ।

(२०१) पुष्पभूतिभवनपक्षपातिन्—पुष्पभूतिमहानुरागिन्!, पुष्पभूति॰

विपन्नाम्बव । विन्ध्य ! वन्ध्योऽयम् मञ्जलिबन्धः ? । मातः ! महाऽटवि ! रटन्ती न शृणोषि इमाम् आपत्पतिताम् ? । (२०२) पतङ्ग ! प्रसीद, पाहि पतिव्रताम् अशरणाम् । प्रयत्नरचित ! क्षतघ्न ! चारित्रचण्डाल ! न रक्षसि राजपुत्रीम् ? । (२०३) किम् अवधृत लक्षणे ? । हा देवि ! दुहितृस्नेहमयि ! यशोवति ! सुखिताऽसि दग्धदैवदस्युना । देव ! दुहितरि दह्यमानायां न (२०४) आपतसि ? प्रतापशील ! शिथिलीभूतम् अपत्यप्रेम ? । महाराज ! राज्यवर्द्धन ! न धावसि ? (२०५) मन्दीभूता भगिनीप्रीतिः ? अहो ! निष्ठुरः प्रेतभाव !! । व्यपेहि पाप ! पावक ! स्त्रीघातनिर्घृण ! ज्वलन्

---

] मद्यामात्य एकान्ततया राजधर्मप्रतिपालनात् राजप्रश्नस्य तयाऽत्र बोध्यम् । उदासीनीभूत,—निरपेक्ष आत्मशासकस्य स्वकर्मसंस्काराधरत्वादिति भावः । वन्ध्य,—विफल, यत अञ्जलि बद्धा प्रार्थ्यमानोऽपि विपन्नामम्बाम त्वं न रक्षसीति भावः । महाऽटवि !—अरण्यानि । रटन्तीं—विलपन्तीं विलाप श्रुत्वाऽपि न प्रतिकरोषि ? इति भावः ।

(२०२) पतङ्ग !—सूर्य ! पक्षिन् वा, ("पतङ्गौ पक्षिसूर्यौ च" इत्यमरः)। प्रयत्नरचित !—प्रयत्नेन—प्रकृष्टेन यत्नेन रक्षित—पालित !, क्षतघ्न !—कृतोपकाराघकारिन् ! प्रयत्नरक्षितस्त्वेऽपि इदानीं विपन्नाया रक्षिकाया राजपुत्र्याः रक्षाऽकरणात् कृतघ्नत्वं चारित्रस्येति भावः चारित्रचण्डाल !—चारित्रेषु—सुचरितेषु चण्डाल—हीन ! इत्यर्थ, चण्डालवत् क्रूरतरकर्मकरत्वादिति भावः ।

(२०३) अवधृते,—एकाग्रचित्ते किम् अवधृतम् ?—किं गृहीतम् ? किमर्थं अयुक्तमित्यर्थ, निरर्थकं स्थितमिति भावः । दग्धदैवदस्युना—हतविधिरूपतस्करेण, सुखिताऽसि—सुखयुक्ताऽसि ।

(२०४) आपतसि—आगच्छसि । शिथिलीभूत—ह्रासं गतम् ।

(२०५) मन्दीभूता—अल्पीभूता । प्रेतभाव —मरण, विगतचेतनत्वरूपस्य प्रेतत्वस्य मातृजनसम्बन्धेषु निरपेक्षतया ममत्वबोधराहित्यात् भगिनीप्रीतिः अपगता, प्रेत हि प्राग्भूतसम्बन्धविस्मरणात् तस्य निष्ठुरत्वमभिहितमिति भावः । व्यपेहि—अपगच्छ, दूरमपसरेत्यर्थः । स्त्रीघातनिर्घृण !—नारीहननात् निष्करुण !

न लज्जसे ?। भ्रातर्वात। दासी तवास्मि, (२०६) सवादय स्तुतं देवीदाहं देवाय दुःखितजनार्त्तिहराय दर्पाय। (२०७) नितान्तनि शूक। शोकश्वपाक। सकामोऽसि ?। दुःखदायिन्। वियोगराक्षस। तुष्टोऽसि ?। विजने वने कमाक्रन्दामि ? कस्मै कथयामि ? कमुपयामि शरणम् ? कां दिशं (२०८) प्रतिपद्ये ? करोमि किम् अभागधेया ?। (२०९) गान्धारि। गृहीतोऽयं लतापाशः ?। पिशाचि। मोचनिके। मुञ्च (२१०) शाखाग्रहणकलहम्। कलहंसि। हंसि किमतःपरम् उत्तमाङ्गम् ?। मङ्गलिके। (२११) मुक्तगलं किमद्यापि कथ्यते ?। सुन्दरि। दूरीभवति सखीसार्थः।

(२०६) दुःखितेति।—दुःखितजनानां—क्लिष्टलोकानाम् आर्त्तिहराय—दुःखपीडाप्रशमकाय दर्पाय—देवाय इन्द्रसंज्ञाय ["क्रियया यमभिप्रैति—" इत्यादि वार्त्तिकात् चतुर्थी] देवीदाहं—देव्या,—राज्ञ्याश्रिया, दाहं,—अग्निप्रवेशं तं, सवादय—ज्ञापय।

(२०७) नितान्तनि शूक।—नितान्तम्—एकान्तं, नि,—नास्ति शूकः —दया यस्य तत्सम्बुद्धौ, ("शूकोऽस्त्री श्लक्ष्ण दययोः" इति मेदिनी) अतनिर्दय। इत्यथ, शोकश्वपाक।—मन्युचाण्डाल। सकामोऽसि—पूर्णमनोरथोऽसि अद्य त्वयसीत्यर्थेति भाव। तुष्टोऽसि ?—प्रीतोऽसि ? स्वजनैरस्मान् वियुज्य इति भाव। आक्रन्दामि —आह्वयामि, ("आक्रन्द क्रन्दने त्राणे मित्रदारुणयुद्धयो" इति मेदिनी)।

(२०८) प्रतिपद्ये—गच्छामि। अभागधेया—अभाग्या, दुर्भगा इत्यर्थः।

(२०९) गान्धारि। मोचनिके। इत्यादीनि समभिव्याहृतदासीनां सम्बोधनानि। लतापाश,—प्रततिरज्जु, गृहीत,—धृत, उद्बन्धनार्थमिति भाव सखीति शेष।

(२१०) शाखाग्रहणेति।—शाखाया,—विटपस्य, ग्रहणं—धारणम्, उद्बन्धनार्थमिति भाव, तत्र कलहं,—विवादं तम्, अहमग्रे एतस्या शाखायामात्मानमुद्बध्नामीत्येवं रूपम् इति भाव। उत्तमाङ्ग—शिर, हंसि—ताड्यसि अन्तरमेव मुक्ता मरिष्यन्ति, तत्र हि शिरोहननेनालमिति भाव।

(२११) मुक्तगल—मुक्तकण्ठम्। सखीसार्थ,—वयस्यावर्ग, दूरीभवति—दूरं गच्छतीत्यर्थ, म्रियते इति भाव।

(२१२) स्वास्यसि कथमिव अशिवे शवशिबिरे शबरिके। १। (२१३) सुतनु। तनूनपाति पतिष्यसि त्वमपि १। मृणालकोमले। मालावति। म्लानाऽसि १। मातर्मातङ्गिके। (२१४) मङ्गीकृतः त्वयाऽपि मृत्युः १। वत्से। वञ्जिके। वत्स्यसि कथम् अनभिप्रेते प्रेतनगरे १। नागरिके। (२१५) गरिमाणम् आगताऽसि अनया म्लानतया। विराजिके। (२१६) विराजिताऽसि राजपुत्रीविपदि जीवितव्ययव्यवसायेन। (२१७) भृगुपतनाभ्युद्यमभागाभिज्ञे। सङ्गारधारिणि। धन्याऽसि। केतकि। क्व पुनः द्रष्टव्यो स्वप्नेऽपि (२१८) सुस्वामिनी १। मेनके। जन्मनि जन्मनि देवीदास्यमेव ददातु देवो दैव दहन् दहनः।

---

(२१२) अशिवे—अमङ्गले, शवशिबिरे—श्मशाने इति भावः, स्वास्यसि—स्थितिं करिष्यसि।

(२१३) सुतनु।—सुगात्रि। तनूनपाति—वह्नौ ("अग्निर्वैश्वानरो वह्नि ... । ... तनूनपात्" इत्यमरः)। म्लानाऽसि—विवर्णाऽसि, मलिनेति भावः।

(२१४) मङ्गीकृतः—स्वीकृतः। अनभिप्रेते—अनीप्सिते, प्रेतनगरे—श्मशानपुरे इत्यर्थः वत्स्यसि—वासिष्यसे, स्थास्यसीत्यर्थः।

(२१५) गरिमाणम्—गौरवम्, म्लानता—प्राणा।

(२१६) राजपुत्रीविपदि—राजपुत्र्याः—राज्यश्रिया इति यावत् विपदि—व्यसने जीवितव्ययव्यवसायेन—प्राणत्यागनिश्चयेन विराजिता—शोभिता प्रशंसितेत्यर्थः।

(२१७) भृगुपति।—भृगौ,—प्रपातात् पततीति ... इत्यर्थः ("प्रपातस्तटो भृगु" इत्यमरः) पतन—पात, तत्र य अभ्युद्यम,—अभियोग, भागश्च अंशः, तस्य भाग—मजन ... यावत्, ... भाव तदभिज्ञा—तद्विषयज्ञानवती, सदा ... भृगुपतन ... विज्ञा ... तस्सम्बुद्धौ सङ्गारधारिणि। ... धन्याऽसि—प्रशस्याऽसि, भृगुपतनाद्युद्यमादिति भावः।

(२१८) सुस्वामिनी—अनुरूपा कर्त्री। देवीदास्य—देव्याः,—राज्यश्रियाः, दास्य—कैङ्कर्यम्। दहन्—भस्मीकुर्वन्। दहनः,—अग्निः।

विजये। (२१९) वीजय ललाटम्। मानुमति। (२२०) नमति इन्दीवरिका दिवं गन्तुकामा। कामदासि। देहि दहनप्रदक्षिणावकाशम्। विरचिके। विरचय वह्निम्। (२२१) विकिर किरातिके। कुसुमप्रकरम्। कुरविके। कुरु (२२२) कुरुबककोरकाऽऽचितां चिताम्। चामरं चामरग्राहिणि। गृहाण पुनरपि कण्ठे। (२२३) मर्षयितव्यानि नर्मदे। नर्मनिर्मितानि निर्मर्यादहसितानि। भद्रे। सुभद्रे। भद्रमस्तु ते परलोकगमनम्। (२२४) अग्राम्यगुणानुरागिणि। ग्रामेयिके। गच्छ सुगतिम्। (२२५) वर्मलिके। अन्तरं प्रयच्छ, आपृच्छते छत्रधारी। देवि। देहि दृष्टिम्,

(२१९) कुमानुष—अपि वीजय—व्यजनवायुना शीतय इत्यर्थः।

(२२०) नमति—प्रणमति। दिवं—स्वर्गम्। कामदासि।—कामाकाङ्क्षिणि। दहनप्रदक्षिणावकाशम्—अग्निप्रदक्षिणीकरणावसरम्, अपि आत्मविसर्जनात् प्राक् अग्निप्रदक्षिणीकरणे मा विघ्नमुत्पादय इति भावः। [ 'विरचिके' इत्यत्र 'विचारके' इति पाठान्तरम् ]। विरचय—प्रज्वालयेति भावः।

(२२१) कुसुमप्रकरं—पुष्पनिचयं विकिर—विक्षिप।

(२२२) चिता—मृतदाहार्थकाष्ठभूमिः, कुरुबकेति।—कुरुबकाणां—नीलझिण्टीनां, कोरकैः—कलिकाभिः, आचिताम्—व्याप्ताम्।

(२२३) नर्मनिर्मितानि—परिहासकृतानि, निर्मर्यादहसितानि—अमर्यादसूचकानि हास्यानि मर्षयितव्यानि—सोढव्यानि क्षमणीयानीत्यर्थः, यथा यत् पारस्परार्थं त्वामुद्दिश्य प्राक् उच्चैः हसितं, भवत्या मर्यादातिक्रान्तिकरं तत् सोढव्यमिति भावः। भद्र—मङ्गल, मङ्गलकरमित्यर्थः।

(२२४) अग्राम्येति।—अग्राम्याः,—नागरिकाः, महान्तः इति यावत्, [ ग्रामे भवा इत्यर्थे ग्रामाद्यखञौ" (४।२।९४ पा०) इति यञ्, पश्चात् नञ्समासः ] तैश्च ये गुणाः,—स्वाम्यनुरागादयः, तेषु अनुरागः,—आसक्तिः विद्यते यस्याः तत्सम्बुद्धौ, ग्रामेयिके।—ग्रामवासिनि। सुगतिं—शोभनां गतिं वाञ्छनीयस्वर्गलोकमित्यर्थः।

(२२५) अन्तरम्—अवकाशं, प्रयच्छ—देहि। आपृच्छते—सम्भाषते, [ "आङि नुप्रच्छ्योः" इति वार्त्तिकात् आङ्-पूर्वकात् पृच्छतेरात्मनेपदम् ]।

(२२६) दृष्टा तव जहाति जीवितं विजयसेना। सेयं मुक्तिका मुक्तकण्ठम् आरटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि। पत्रलता। कलिङ्गसेने! अयं (२२७) पश्चिमः परिष्वङ्गः, पीडय निर्भरम् उरसा माम्। (२२८) असवः प्रवसन्ति वसन्तसेने।। मञ्जुलिके! (२२९) मार्जयसि कतिकृत्वः सुदुःसहदुःखसङ्घास्रदिग्धं चक्षुः इदम्? रोदिषि कियत् आश्लिष्य च माम्?। (२३०) निष्प्रमाणम् ईदृशं प्रायशो यशोधने।। (२३१) धीरयसि अद्यापि किं मां माधविके!? का इयम् अवस्था आश्वासनानाम्?। गतः कालः कालिन्दि! सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके!

---

(२२६) दृष्टा—प्रिया। जहाति—त्यजति। नाटकसूत्रधारी—नाटकस्य—अभिनेयकाव्यस्य सूत्रधारी—नटी इत्यर्थः, [ सूत्रं नाटकोपसाधनं धारयति या सा इत्यर्थे धारयतेः कर्मणि अणि रूपम् ] मुक्तकण्ठम्—उच्चैरित्यर्थः, आरटति—आक्रन्दति, आक्रन्दतीत्यर्थः। बहुमता—आदृता।

(२२७) पश्चिमः,—चरमः, [ पश्चाद्भव इत्यर्थे "अग्रादिपश्चाड्डिमच्" इति वार्त्तिकात् डिमच् ] परिष्वङ्गः,—आलिङ्गनम्। निर्भरं—निर्दयं, गाढमित्यर्थः।

(२२८) असवः,—प्राणाः, [ "पुंसि भूम्न्यसवः प्राणाः" इत्यमरवचनात् असूनां नित्य बहुत्वमेव ] प्रवसन्ति—गच्छन्ति दूरमित्यर्थः।

(२२९) सुदुःसहेति।—सुदुःसहैः,—अतिदुःसहैः दुःखानां सङ्घैः—मनःपीडासमूहैः, यत् अस्रं—विगलितं नेत्राम्बु, तेन दिग्धं—लिप्तं, वाष्पजलानुलिप्तमित्यर्थः, कतिकृत्वः—कतिवारान्, [ "संख्यायाः—" (५।४।१७ पा०) इति कृत्वसुच् ] मार्जयसि—शोधयसि, निर्मलीकरोषीत्यर्थः, [ मार्ष्टेः णिचि लटि रूपम् ]। आश्लिष्य—आलिङ्ग्य, कियत्—कियत्कालम्।

(२३०) निष्प्रमाणं—अपरिमितं, ईदृशं—दुःखबहुलमिति भावः।

(२३१) धीरयसि—स्थिरयसि। आश्वासनानां—प्रबोधानां, किमयं कालः प्रबोधदानस्य? इति भावः। गतः,—अतीतः। सखीति।—सखीजनेषु—वयस्यालीषु, यः अनुनयः,—प्रार्थना, 'मा कुप्य' 'प्रसीद' इत्यादिरूप इति भावः, यद्वा—सखीजनानां यः अनुनयः,—सान्त्वनं, सान्त्वनासूचकवाक्यमयीत्यर्थः, तत्र अञ्ज

मत्तपालिके! (२२२) कृताः पृष्ठतः प्रणयिनीप्रणिपातानु-रोधाः। (२२३) शिथिलय चकोरवति! चरणग्रहणं ग्रहिणि!। कमलिनि! किमनेन पुनः पुनः (२२४) दैवोपालम्भेन? न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्ये! महत्तरिके! तरङ्ग-सेने! नमस्कारः। सखि! सौदामनि! दृष्टाऽसि?। समुपनय (२२५) हव्यवाहनार्चनकुसुमानि कुमुदिके!। देहि चिता-रोहणाय रोहिणि! हस्तावलम्बनम्। (२२६) अम्ब! धात्रि! धीरा भव, भवन्ति एवंविधा एव कर्म्मणां विपाकाः

---

सय,—कादम्बवनश्रीणां तेषाम्, इदानीं मरणाध्यवसाये दृढीभूते नास्ति सखीजन-प्रसादनस्य सखीजनानुरोधरक्षणस्य वा समय इति भावः।

(२२२) प्रणयिनीति।—प्रणयिनीनां—स्निग्धवयस्यानां, प्रणिपाते,—विनयैः करणे, ये अनुरोधाः,—अनुवर्त्तनानि, 'मा म्रियस्व' 'अस्मान् पालय' इत्याद्युक्त्या विनय-प्रदर्शनपूर्वकानुसरणानि यानि ता, पृष्ठतः कृताः,—पश्चात् कृताः उपेक्षिताः इत्यर्थः, इदानीं सख्यादीनां सर्वासामेव ममतादिकं परित्यज्य मरणायैव कृतसङ्कल्पाऽस्मि इति भावः।

(२२३) शिथिलय—मन्दीभूतं कुरु, मा कुरु इति यावत्। ग्रहिणि।—आग्रहवति।।

(२२४) दैवोपालम्भेन—नियतितिरस्कारेण। नेति।—सखीजनसङ्गमसुखं—सहचरीसहवासानन्दः, चिरं—यावज्जीवमित्यर्थः, न प्राप्तं, कैरपि कारणैरपि वा इति शेषः, अतः दैवोपालम्भोऽलमिति भावः। महत्तरिके।—महाशये।। सौदामनि! —भो सौदामनीनामधेये। सखीविशेषसम्बोधनमेतत्, [सुदामा पर्वतभेदः तेनैकदिगित्यर्थे "तेनैकदिक्" (४।३।११२ पा०) इति अण्, स्फटिकमयस्य सुदाम्नः पर्वतविशेषस्य एकस्मिन् भागे जातत्वात् विद्युत् इयं सखीति ज्ञेयम्। "सौदामिनि!" इति पाठस्तु प्रामादिक एव, "सुदाम्ना अद्रिणा एकदिक् सौदामनी" इति दीक्षितवचनात्, काशिकाकारा अप्येवमाहुः] दृष्टा?—अवलोकिता? मयेति शेषः, त्वां किं पुनः लोकोत्तरीयमिति भावः।

(२२५) हव्यवाहनार्चनकुसुमानि—अग्निपूजार्थपुष्पाणि। हस्तावलम्बनम्—करार्पणं, तव प्रसारितं हस्तं धृत्वाऽहं चितामधिरोहामि इति भावः।

(२२६) अम्ब!—मातः! धात्रि!—उपमातः! विपाकाः,—परिणामाः।

पापकारिणीनाम्। (२३७) आर्य्यचरणानाम् अयमञ्जलिः। परः परलोकप्रयाणप्रणामोऽयं मातः।। मरणसमये कस्मात् लवङ्गिके। (२३८) उत्कलिका बलीयान् आनन्दमयो हृदयस्य मे?। (२३९) हृष्यन्ति उच्चरोमाञ्चमुञ्चि किम् अङ्गीकृत्य अङ्गानि?। वामनिके। वामेन मे (२४०) स्फुरितम् अक्ष्णा। वृथा विरससि वयस्य। वायस। कृते क्षीरिणि स्थले स्थले क्षीणपुण्यायाः पुरः। हरिणि। हेषितमिव हयानाम् उत्तरतः?। कस्य इदम् (२४१) आतपत्रम् उच्चम् अत्र पादपान्तरेण प्रभावति विभाव्यते?। कुरङ्गिके। केन सुगृहीतनाम्नो नाम गृहीतम् अमृतमयम् आर्य्यस्य?। देवि। दिष्ट्या वर्द्धसे देवस्य हर्षस्य आगमनमहोत्सवेन।

---

(२३७) आर्य्यचरणानाम्—आर्य्यस्य—ज्येष्ठस्य भ्रातुः हर्षस्य, चरणानां—पादानाम् अयमञ्जलिः,—अयं प्रणाम इति यावत्। परः,—पश्चिमः, चरमः।—परलोके—लोकान्तरे, प्रयाणाय—प्रस्थानाय, प्रणाम—नतिः।

(२३८) उत्कलिका,—उत्कण्ठा।

(२३९) उच्चरोमाञ्चमुञ्चि—उच्चाः,—प्रबलाः, रोमाञ्चाः,—रोमोद्गमाः, तान् मुञ्चन्ति—प्रकटयन्तीति तथोक्तानि [मुञ्चते कर्त्तरि क्विपि रूपम्]। किम् अङ्गीकृत्य—अवलम्ब्य, किमानन्दकारणमधिकृत्येति यावत्, हृष्यन्ति—पुलकितानि भवन्ति।

(२४०) अक्ष्णा—नेत्रेण, स्फुरितं—स्पन्दितं, मङ्गलसूचकमेतदिति भावः। विरससि—रौषि। ["विरुवसि" इत्यत्र 'विरससि' इति पाठे—विश्वासरौद्यर्थं]। वयस्य।—सखे। वायस।—काक। कृते क्षीरिणि—वटाश्वत्थादिक्षीरप्रधाने वन स्थली, यदुक्तं,—"न्यग्रोधोडुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्॥" इति। पुरः,—अग्रतः। उत्तरतः,—उत्तरस्यां दिशि, हयानाम्—अश्वानां, हर्षविषयं [कर्त्तरि षष्ठी वैकल्पिकी] हेषितमिव—ह्रेषारवमिव, ["हेषृ ह्रेषृ ह्रेषृ अव्यक्तशब्दे" इति हेषते भावे निष्ठा]।

(२४१) आतपत्रं—छत्रं पादपान्तरेण—वृक्षान्तरालेन, विभाव्यते—लक्ष्यते। सुगृहीतनाम्नः,—प्रातःस्मरणीयनाम्नः। अमृतमयं—पीयूषात्मकं, श्रवणमङ्गलप्रदमिति भावः। दिष्ट्या—भाग्येन।

इत्येतच्च श्रुत्वा सत्वरम् (२४२) उपससर्प, ददर्श च मुह्यन्तीम् अग्निप्रवेशाय उद्यतां राजा राज्यश्रियम्, (२४३) आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम्।

अथ (२४४) तेन भ्रातुः प्रेयसः प्रकोष्ठबद्धानाम् ओषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता, वमता इव पारिहार्य्यमणीनाम् अचिन्त्यं प्रभावम्, अमृतमिव नखचन्द्ररश्मिभिः उद्गिरता, (२४५) बध्नतेव चन्द्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूडामणिं मूर्द्धनि, मृणालमयाङ्गुलिना इव अतिशीतलेन निर्वापयता

---

(२४२) उपससर्प—समीपमाजगाम। मुह्यन्ती—मोहमुपागतां, भ्रातृशोकमनस्तापयोर्द्विगुणितदुःखभारेण इति भावः।

(२४३) आललम्बे—जग्राह। मूर्च्छेति।—मूर्च्छया—मोहेन, भ्रातृदर्शनजनितद्विगुणोच्छ्वसितशोकाऽऽवेगेन इति भावः, उक्तञ्च—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासेन, मीलिते—मुद्रिते, लोचने—नयने यस्याः तथाभूतायाः। ससम्भ्रमं—सत्वरम्।

(२४४) तेन—पूर्वोक्तेन, हस्तस्पर्शेनेत्यर्थेन सम्बन्धः। प्रेयसः—अतिप्रियस्य, [प्रियशब्दादीयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना प्रादेशः] भ्रातुः—हर्षस्य प्रकोष्ठबद्धानां—कूर्परमणिबन्धान्तरनिवेशितानाम् ओषधीनां—लताविशेषाणां, प्रत्युज्जीवनक्षमं—प्राणप्रदानसमर्थमित्यर्थः रसविसरमिव—द्रवौघमिव, क्षरता—स्रवता। पारिहार्य्यमणीनां—कटकरत्नानाम् ("आवापकः पारिहार्य्यः कटको वलयोऽस्त्रियाम्" इत्यमरः) अचिन्त्यम्—अतर्क्यं, प्रभावं—माहात्म्यं, वमता—उद्गिरता।

(२४५) चन्द्रोदयच्युतशिशिरशीकरं—चन्द्रस्य—इन्दोः, उदयात्—प्रकाशात्, च्युतः—स्रवितः, शिशिरात्मा—तुषारात्मा, शीकरः—कणः यस्मात् तं, चन्द्रकान्तचूडामणिं—चन्द्रकान्तमणिनिर्म्मितमुकुटरत्नं, मूर्द्धनि, बध्नतेव—विदधतेव, सङ्घटयतेत्यर्थः। मृणालेति।—मृणालमयाङ्गुलिना—बिसघटितकरशाखया, मृणालवदतीवशैत्यप्रदया अङ्गुल्या इत्यर्थः, यद्यपि अङ्गुलिशब्दस्य स्त्रीत्वं कोषेषु दृश्यते, तथाऽप्यत्र पुंसि प्रयुक्तम्, अत एवाह वाचस्पत्ये—पुंस्त्वमपि, "संवृताधरोष्ठमङ्गुलिना—" इति शाकुन्तले" इति। निर्वापयता—प्रशमयता

दह्यमानं हृदयं, (२४६) प्रत्यानयता इव कुतोऽपि
जीवितम्, आह्लादकेन हस्तसंस्पर्शेन सहसैव समुन्मिमील
राज्यश्रीः। तथा च (२४७) असम्भावितागमनस्य
अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्य इव
कण्ठे समाश्रित्य तत्कालाविर्भावनिर्भरेण अभिभूतसर्वात्मना
दुःखसम्भारेण निर्दयं नदीमुखप्रणालीभ्यामिव मुखाभ्यां स्थूल-
प्रवाहम् उत्सृजन्ती बाष्पवारि विलोचनाभ्यां,—"हा तात!
हा अम्ब! हा सख्यः!" इति व्याहरन्ती मुहुर्मुहुः,

---

(२४६) प्रत्यानयतेव—प्रत्यावर्तयतेव। कुतोऽपि—कस्मादपि, अविज्ञात-देशादपि यावत्। समुन्मिमील—नेत्रोन्मीलनं चकारेत्यर्थः।

(२४७) असम्भावितागमनस्य—असम्भावितम्—अप्रत्याशितम्, अतर्कित-मित्यर्थः, आगमनम्—उपस्थिति यस्य तथाभूतस्य, अचिन्तितदर्शनस्य—अचिन्तित—प्राक् मनसाऽपि अनालोचितं दर्शनम्—अवलोकनं यस्य तादृशस्य। स्वप्नेति।—स्वप्ने—निद्राऽवस्थायां, दृष्टम्—अनुभूतमित्यर्थः, दर्शनं—साक्षात्कारः यस्य तथाभूतस्य। समाश्रित्य—समालिङ्ग्य, आसज्येत्यर्थः। तत्कालेति।—स एव कालः,—समयः तस्मिन्, भ्रातृसाक्षात्कारसमये इत्यर्थः, आविर्भावेन—उदयेन, निर्भरः,—अतिशयितः प्रगाढ इत्यर्थः तेन, निर्दयम्—दृढं यथा तथा, अभिभूतसर्वात्मना—सर्वाङ्गाभिभाविनेत्यर्थः, दुःखसम्भारेण—शोकातिरेकेण, यद्वा,—निर्दयं—प्रगाढम्, अविश्रमितमित्यर्थः, तद्यथा तथा उत्सृजन्ती इत्यनेन सम्बन्धः, मुखाभ्याम्—अग्रादिभागाभ्यां, नदीति।—नद्याः,—सरितः, मुखस्य—प्रभवस्थानस्य सत्यर्थं, ये प्रणाल्यौ—पयःपदव्यौ ताभ्याम्, ("द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः) स्थूलप्रवाहं—स्थूलः,—पृथुः, महानित्यर्थः, प्रवाहः,—प्रवृत्तिः, निर्गमनमित्यर्थः यस्य तथाभूतं, बाष्पवारि—अश्रु, "बाष्पमूष्माश्रु नाऽस्त्रे" इति मेदिनीकरोक्तेः बाष्पशब्देनैव नेत्रसलिलार्थबोधात् वारिशब्दस्याधिक्येन तथा कथितपदताऽऽख्यदोषवत्त्वमिदमिति विभाव्यते, तथाऽपि श्रवणकुण्डलादिशब्देषु श्रवणादीनामिव सन्निधेः प्रतिपत्त्यर्थमेव तदुपन्यास इति ज्ञेयं, तथा हि वामनः,—"कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः सन्निधेः" इति (२ अधि० १ अध्या० १४ सू०) व्याहरन्ती—कथयन्ती, विलपन्तीत्यर्थः।

(२४८) उच्चैस्तराञ्च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठम् अतिचिरं विक्रुश्य,—"वत्से ! स्थिरा भव त्वम्" इति भ्रात्रा (२४९) करस्थितमुखी समाश्वास्यमानाऽपि,(२५०)"कल्याणिनि ! कुरु वचनम् अग्रजस्य गुरोः" इति आचार्येण याच्यमानाऽपि, "देवि ! न पश्यसि देवस्य अवस्थाम् ? अलमतिरुदितेन" इति राजलोकेन अभ्यर्थ्यमानाऽपि, "स्वामिनि ! भ्रातरम् अवेक्षस्व" इति परिजनेन विज्ञाप्यमानाऽपि, (२५१) "दुहितः ! विश्रम्य पुनः आरटितव्यम्" इति निवार्यमाणाऽपि बान्धववृद्धाभिः, "प्रियसखि ! (२५२) कियद्रोदिषि ? तूष्णीमास्स्व, इदं दूयते

---

(२४८) उच्चैस्तराम्—अतिशयेन इत्यर्थः, ["किमेत्तिङव्यय—" (५।४।११ पा०) इति तरप् आमु] समुद्भूतेति।—समुद्भूतेन—समुत्पन्नेन, आविर्भूतेनेत्यर्थः, भगिन्याः—सहोदरायाः च स्नेहसद्भावः—प्रीतिभावः, तस्य भारेण—भरेण, आधिक्येनेत्यर्थः, भावितः,—जनितः मन्युः—शोकः यस्य तथाभूतेन, भ्रात्रा इत्यनेनान्वयः, समुद्भूत मन्युना हेतुना इत्यर्थो वा, मुक्तकण्ठम्—सशब्दमित्यर्थः। विक्रुश्य—विलप्य।

(२४९) करेति।—करे—हस्ते, भ्रातुरिति शेषः, स्थित—रक्षितम्, मुखम्—वदनं यस्याः तथाभूता ["करस्थितमुखी" इत्यत्र "करस्थगितमुखी" इति पाठे—करात्—प्रागिव्याः स्थगितम्—आच्छादितम्, भ्रात्रा इति शेषः, क्रन्दननिवारणार्थमिति भावः, मुखम्—वदनं यस्याः तथाभूता] समाश्वास्यमानाऽपि—प्रबोध्यमानाऽपि सान्त्व्यमानाऽपीत्यर्थः।

(२५०) कल्याणिनि।—सञ्जातमङ्गले! भद्रदर्शनात् प्राप्तशुभफले! इत्यर्थः, कुरु वचनम्—वाक्यं प्रतिपालयेत्यर्थः। आचार्येण—दिवाकरमित्रेण। अलम्—निषेधार्थकमव्ययम्, अतिरोदनं मा कुरु इत्यर्थः। राजलोकेन—सामन्तनृपसमूहेनेत्यर्थः, अभ्यर्थ्यमाना—प्रार्थ्यमाना। अवेक्षस्व—पश्य। परिजनेन—अनुजीविजनेन।

(२५१) दुहितः।—कन्ये। आरटितव्यम्—रोदितव्यमिति भावः। बान्धववृद्धाभिः,—बान्धवेषु—स्वजनेषु, याः वृद्धाः,—वर्षीयस्यः ताभिः।

(२५२) कियत्—कियत्कालमित्यर्थः। तूष्णीम्—मौनम्, आस्स्व—उपविश, मौनावलम्बनं कुरु इत्यर्थः, मा रुदिहि इति यावत्। इदम्—अयम्, दूयते—सन्तापमनुभवति।

देवः" इति सखीभिः अनुनीयमानाऽपि, (२५३) चिरसम्भावितानेकदुःसहदुःखनिवहनिर्वहण वाष्पोत्पीडपीड्यमानकण्ठभागा, (२५४) प्रभूतमन्युभारभरितान्तःकरणा, करुणकाहलेन स्वरेण कतिचित्कालम् अतिदीर्घं रुरोद। विगते च मन्युवेगे वक्षेः समीपात् आक्षिप्य भ्रात्रा नीता निकटवर्त्तिनि तरुतले निषसाद।

(२५५) शनैः आचार्यस्तु तथा हर्षं इति विज्ञाय विवर्धितादरः सुतरां मुहूर्त्तमिव अतिवाह्य (२५६) निभृतसंज्ञाज्ञापितेन शिष्येण उपनीतं नलिनीदलैः स्वयम् आदाय मन्त्री

---

(२५३) चिरेति।—चिर—दीर्घकालं व्याप्येति भावः, सम्भावितानि,—अनुभूतानि इत्यर्थः यानि अनेकानि—बहूनि दुःसहानि—दुर्वहानि, दुःखानि—क्लेशाः, तेषां निवहः,—समूहः तस्य निर्वहणं—निर्वाहः परिसमाप्तिरित्यर्थः, सुचिरोपभुक्ताना दुःसहाना शोकसमुदयाना परिणाम इति यावत्, तेन यो वाष्पोत्पीडः,—वाष्पाणां—नेत्रोदकानाम् उत्पीडः—प्रवाहः तेन पीड्यमानः,—रुध्यमानः, कण्ठभागः,—गलप्रदेशः यस्याः तथाभूता।

(२५४) प्रभूतेति।—प्रभूतेन—प्रचुरेण, मन्युभारेण—शोकभरेण, भरितम्—आपूरितम्, अन्तःकरणं—चेतः यस्याः तथोक्ता, करुणकाहलेन—करुणेन—कारुण्यरसेन काहलः,—अव्यक्तः, अतिशय इत्यर्थः, पूर्ण इति यावत् तेन करुणरसपूर्णेन, करुणरसोद्दीपकेनेत्यर्थो वा, ("काहलस्तु रणवाद्ये। अव्यक्तवाचेऽपि खलितशब्दे भृशे त्रिषु ॥" इति मेदिनी) अतिदीर्घम्—अत्युच्चैःस्वरम्, ["अतिदीर्घम्" इत्यत्र "अतिचिरम्" इति पाठान्तरम्]। मन्युवेगे—शोकप्रसरे। आक्षिप्य—आकृष्य। निषसाद—उपविवेश, ["सदिरप्रतेः" (८।३।६६ पा०) इति षत्वम्]।

(२५५) शनैः—मन्दम्, अत्वरतया इत्यर्थः, [उपविवेश इति क्रियायाः विशेषणमिदम्]। आचार्यः,—दिवाकरमित्रः, तथा—तादृशः, मर्मार्दित भावः, यद्वा—तथा—तेन व्यापारेणेत्यर्थः प्रागुक्तघटनेति यावत्। विवर्धितादरः,—वि—विशेषेण, वर्धितः,—वृद्धिं गतः आदरः—बहुमानः यस्य तथाभूतः। अतिवाह्य—यापयित्वा।

(२५६) निभृतेति।—निभृतया—निःशब्दया, संज्ञया—इङ्गितेन, ज्ञापितः,—आदिष्ट इत्यर्थः तेन। नलिनीदलैः,—पद्मिनीपत्रैः।

मुखप्रक्षालनाय उदकम् (२५७) उपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमम् (२५८) अनवरतरोदनाताम्रं चिरप्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव ससुखचक्षु अक्षालयत्, पश्चात् आननम्। (२५९) प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दः सञ्जभूव सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दम् अब्रवीत् ससारम्,—"वत्से। वत्सस अत्र भवतः भद्रत्तम्। एष ते भर्त्तुर्हृदयं द्वितीयम्, अस्माकञ्च गुरुः" इति। राजवचनात् (२६०) राजदुहितरि प्रतिपरिचयश्रवणोद्घातेन पुनः आनीतनेत्राम्भसि नमस्याम् आचार्यैः

(२५७) उपनिन्ये—आपतवान् दत्तवान् इति यावत्।

(२५८) अनवरतात्।—अनवरतेन—अश्रान्तेन रोदनेन—क्रन्दनेन आताम्रम्—आरक्तं चिरमिति।—चिर—दीर्घकालं व्याप्य प्रवृत्त—प्रसृतम्, अश्रुजलजाल—वाष्पसमूहः यस्मात् तथाभूतम् अत्र अश्रुशब्देनैव नेत्रसलिलरूपार्थस्य बोधात् जल शब्दस्य पुनरुक्ततया कथितपदताऽऽपद्यते दोष, वामनस्तु एकार्थपदघटितवाक्ये एकार्थत्व दोषम् अभिहितवान्। एवञ्च तन्मते यथा कर्णावतंसादिशब्दानां श्रीकण्ठकर्णपदत्वभावे दोषादर्शनं तथा अत्रापि सद्य पतिताश्रुमयजलप्रवाहरूपविशेषार्थस्य पर्यवसानाददोष, तथा च वामन,—कर्णावतंसादिपदे कर्णादिध्वनिनिर्मिति। सन्निधानादिबोधार्थम्, इति (२ अधि० १ अध्या० १० सू०) सद्य—अचिरात्, चक्षु—नयनम् अक्षालयत्—अक्षालयत्। आननम्—मुखम्, चक्षु इति सम्बन्ध।

(२५९) प्रक्षालितेति।—प्रक्षालित—धौत मुखशशी—आननेन्दुः येन तस्मिन्। सर्वत,—समन्तात्। लिखित इव—चित्रार्पित इव। ससारम्—भावकीम्। मन्दम्—अभिशब्दश, शनैः, प्रथम इत्यर्थो वा। अत्रभवत—पूजनीयस्य। भर्त्तु,—सहचरस्य, द्वितीय हृदयम्—अपर शरीरम्, अन्तरङ्गमित्रमित्यर्थ।

(२६०) राजेति।—प्रत्यु,—सहचरस्य परिचय,—सन्तव, तदीयवार्त्ता इत्यर्थ तस्य श्रवणोद्घात—आकर्णनप्रसङ्ग तेन पुन,—भूय आनीतेति।—आनीतम्—उपाहृतम्, नेत्रयो—चक्षुषो अम्भ—सलिलं यस्या तथाभूतायाः भर्त्तुर्भर्द्गन्येन सम्बन्धताऽऽकथनेन पुनर्वाष्पायमाणनेत्रायामित्यर्थ, राजदुहितरि—राजकन्यायाम्, कादम्बर्यामिति यावत्, नमस्याम्—प्रदर्शनं कुर्वत्याम्।

(२६१) प्रयत्नरचितागतबाष्पाम्भःसम्भारभज्यमानधैर्य्यार्द्रलोचनः (२६२) किञ्चित्पराहृत्तनयनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार,—"कल्याणराशे! अलं रुदित्वा अतिचिरं, राजलोको न अद्यापि रोदनात् निवर्त्तते। क्रियताम् अवश्यकरणीयः स्नानविधिः, स्नात्वा च गम्यतां (२६३) तामेव भूयो भुवम्"।

अथ भूपतिः (२६४) अनुवर्त्तमानो लौकिकमाचारम् आचार्य्यवचनञ्च, उत्थाय स्नात्वा (२६५) गिरिसरिति, सह स्वसा तामेव भूमिम् अयासीत्। (२६६) तस्याञ्च सपरिजनां प्रथमम् आहितावधानः पार्श्ववर्त्ती परवर्ती भूत्वा (२६७) पतिपिण्डप्रदर्शितप्रधानप्रतिपक्षाभ्यवहारकरणां भगिनीम् अभोज-

(२६१) प्रयत्नेति।—प्रयत्नेन—प्रकृष्टचेष्टया, रचितानि अपि—निरोधितान्यपि, आगतानि—उपस्थितानि यानि बाष्पाम्भांसि—अश्रुजलानि, तेषां सम्भारेण—निवहेन, भज्यमानं—क्षोभ्यमाणं, व्यपगतप्रायमित्यर्थः, यत् धैर्य्यं—धीरत्वं तेन आर्द्रे—सिक्ते लोचने—नेत्रे यस्य तथाभूतः। अत्रापि बाष्पाम्भःपदं पूर्व्ववत् कथितपदताऽप्यदोषावहमिति ज्ञेयम्।

(२६२) किञ्चित्पराहृत्तनयन,—आवर्त्तितचक्षुः। प्रदर्शितप्रश्रय,—प्रकटितविनय। मृदुवादी—मधुरभाषी, कोमलस्वराभिभाषी इत्यर्थः। कल्याणराशे।—मङ्गलश्रीभाजनम्। अतिचिरं—सुदीर्घकालम्, अलं रुदित्वा—रोदनेनालं, क्रन्दनं मा कुरु इत्यर्थः।

(२६३) तामेव—पूर्व्वाधिष्ठानभूतां, यत्र आगतोऽसि तामित्यर्थः, भुवं—स्थानं, भूयः,—पुनरपि।

(२६४) अनुवर्त्तमान,—अनुसरन्, पालयंश्च।

(२६५) गिरिसरिति—पर्व्वतीयनद्याम्।

(२६६) तस्याञ्च—भूमौ इत्यर्थः, आहितावधान,—कृताभिनिवेश, सर्व्वं पर्य्यवेक्षणपरः इत्यर्थः, सपरिजना—सपरिवारां, सानुजीविनीकामित्यर्थः, भूत्वा परवर्त्ती—शोकपरवशामित्यर्थः।

(२६७) पतीति।—पत्युः,—ग्रहवर्म्मणः, पिण्ड,—मृतेभ्यो देय, गोलाकार-

यत्; अनन्तरञ्च स्वयम् आहारस्थितिम् अकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जात् (२६८) गौडसम्भ्रम, (२६९) गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनं, निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं, श्रुत्वा च आहारनिराकरणम्, अनाहारपराहतायाश्च विन्ध्याटवीपर्य्यटनखेदं, (२७०) जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत् सर्व्वमशृणोत् (२७१) व्यतिकरं परिजनतः। ततः सुखासीनम् एकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजन

---

जनसङ्घात इत्यर्थं तस्मिन् प्रदर्शितेन—जीवितेन, यस्तु पितुः दातव्यं जीवितया मत्वा तत्र जीवनम् आहारं विना न रक्षितुं शक्यते, तत्पिण्डमदत्त्वा आत्मघाति महान् धर्म्म प्राप्नुयात् नरकवासस्य स्वीकरणं पश्चादवलोकितमेवेति यावत्। प्रयत्नेन—प्रकृष्टानुरोधेन हेतुनेत्यर्थः, प्रतिपन्न—स्वीकृतम्, अभ्यवहारकरणं—भोजनव्यापारः यथा तथा विधा, भर्त्तरि बहुमानात् तत्पिण्डदानार्थमेव अभ्यवहारक्रिया कृता न तु सा तदा स्वजीवने स्पृहावती आसीत् इति तात्पर्य्यम्। आहारस्थितिम्—आहाराय-भोजनाय, स्थितिम्—च स्थाम्, उपवेशनमित्यर्थः ("स्यादास्या आसना स्थितिः" इत्यमरः) यद्वा,—आहारेण स्थितिम्—अवस्थानम् आत्मजीवनरक्षणमित्यर्थः, ("स्थितिः स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनि" इत्यमरः)।

(२६८) गौडसम्भ्रम—गौडाधिपात् भयम्।

(२६९) गुप्तित,—कारागारात् कारायां बन्धनात् इत्यर्थः ("गुप्तिः भूयकरस्थाने कारागारे च रक्षणे" इति मेदिनी)। कुलपुत्रेण—सत्कुलप्रसूतेन, निष्कासन—बहिष्करणम्, उद्धरणमित्यर्थः। आहारनिराकरण—भोजनपरित्यागम्। अनाहारपराहतायाः,—उपवासपीडितायाः।

(२७०) जातनिर्वेदायाः,—उत्पन्नवैराग्यायाः, पावकप्रवेशोपक्रमणम्—वह्निप्रवेशप्रक्रमम्।

(२७१) व्यतिकर—वृत्तान्त, व्यसनं वा, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)। परिजनतः—परिजनसकाशात्। विविक्तभुवि—विजनप्रदेशे। भगिनीद्वितीय—भगिनी—सहोदरा एव, द्वितीया—द्वितीयसहचरी यस्य तं, केवलं भगिन्या सहावस्थितमित्यर्थः। दूरेति।—दूरे—विप्रकृष्टस्थाने,

राजानम् आचार्यः समुपसृत्य शनैः श्रावयाञ्चक्रे; स्थित्वा च कंचित् कालान्तरं ( २७२ ) लेशतो वक्तुमुपचक्रमे,—

"श्रीमन्। आकर्ण्यताम्, ( २७३ ) आख्येयमस्ति नः किंचित्—अयं हि यौवनोन्मादात् परिभूय भूयसीर्भार्या यौवनावस्थान्तरतरलतरः ( २७४ ) ताराराजो रजनीकर्णपूरः पुरुहूतपुरोधसो बृहस्पतेः ( २७५ ) पुरन्ध्रीं धर्मपत्नीं पत्नीयन् अतितरलः तारां नाम अपजहार; नाकतश्च पलायाञ्चक्रे। ( २७६ ) चकितचकोरलोचनया तया सह रतिकामया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार।

---

स्थित्वा,—अवस्थाय, अनुजीविजन,—परिजन इत्यर्थः यस्य तम्। आचार्य,—हिताकरमिव। श्रावयाञ्चक्रे—उपदिदेश।

( २७२ ) लेशत,—किञ्चित्। उपचक्रमे—आरेभे। [ "प्रोपाभ्यां समर्थाभ्याम्" ( १।३।४२ पा० ) इति आत्मनेपदम् ]।

( २७३ ) आख्येय—वक्तव्यम्। यौवनोन्मादात—तारुण्यजनितबुद्धिवैपरीत्यहेतुना, यौवनेति।—यौवनस्य—तारुण्यस्य, अवस्थान्तरेण—दशयान, तरलतरा,—अतिशयेन स्फुरन्ती, उद्दामयौवनाविर्भावरम्या इत्यर्थ, भूयसी,—बह्वी, सप्तविंशतिम् अश्विन्यादिदक्षदुहितृरित्यर्थ भार्या परिभूय—अवधीर्य अनादृत्येत्यर्थ।

( २७४ ) रजनीकर्णपूर,—निशाकर्णभूषणभूत, ताराराज,—चन्द्र, पुरुहूतपुरोधस,—इन्द्रपुरोहितस्य, बृहस्पते—गुरुपत्नी, ( "गुरुस्तु सुराचार्यौ गीष्पतिर्धिषणो गुरु" इत्यमर )।

( २७५ ) पुरन्ध्री—पतिवतीम। पत्नीयन्—पत्नीमिव आचरन्, [ "उपमानादाचारे" ( ३।१।१० पा० ) इति क्यच् ]। अतितरल,—अतिचपल, कुटिलकामुक इत्यर्थः। अपजहार—मुमोष, तत्र व्यभिचारमकरोदित्यर्थ। नाकत,—स्वर्गात।

( २७६ ) चकितेति।—चकित,—भीत यश्चकोर —पक्षिविशेष, तस्येव लोचने—नयने यस्या तथाभूतया, चकितचकोरलोचनया, चकोरलोचनीनयना इत्यर्थं, रतिकामया—रतिकामुकया, सर्वेति।—सर्वेण—सकलेन, आकारेण—आकृत्या, वपुषेत्यर्थ ( "आकारस्त्विङ्गिताकृती" इत्यमर ) अभिरामया—मनोरमया तया, दर्शनसुन्दर्या इत्यर्थ, सह—तारया, रममाण,—विहरन्।

(२७७) चिराच्च कथञ्चित् सर्व्वगीर्व्वाणवाणीगौरवात् गिरां पत्यु पुनरपि प्रत्यर्पयामास ताम्। हृदये तु (२७८) घनिम्ब-नम् अदह्यत विरहात् वरारोहाया तस्या सततम्।

एकदा तु (२७९) शैलात् उदयात् उदयमानो विमले धारिणि वरुणालयस्य (२८०) सङ्क्रान्तमात्मन प्रतिबिम्ब विलोकितवान्। दृष्ट्वा च तदा सस्मार (२८१) स्मर-स्मेरगण्डस्थलस्य तारायाः मुखस्य, (२८२) मुमोह च मन्मथो-न्माथमथ्यमानमानस (२८३) स्वस्थोऽपि अस्वस्थ स्वीयस

(२७७) चिरात्—दीर्घकालात् परमित्यथ सर्वति।—सर्वेषां—सकलानां गीर्वाणानां—देवानाम् ("अमरा निर्जरा देवा । गीर्वाणा दानवारयः।" इत्यमरः) वाणा—वचनस्य गौरवात्—सम्मानात् देववाक्यानां सम्मानरक्षार्थमित्यथ कथाचन—अतलक्षण मानस्वमपीत भाव गिरां पत्यु—वृहस्पते ["षष्ठी शेष (२।३।५० पा०) इति षष्ठी] ता—ताराम्।

(२७८) घनिम्बनम—दृश्यम—काष्ठे तद्वहित दाहविनिमलत्वादित्यथ अदह्यत—समतप्यत स इति शेष, यद्वा—अदह्यत—अतप्यत विरहानल इति शेष। वरारोहाया—वर—श्रेष्ठ सुन्दर इत्यथ आरोह—श्रोणिभाग यस्या तस्या उत्तमाङ्गनाया इत्यथ ("श्रोणिमप्यारोहो वरस्त्रिया" इति "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्युभयत्राप्यमरः) तस्या—तारया।

(२७९) उदयात् शैलात्—उदयाचलात् उदयमान—उद्गच्छन् [अम्पूव ... शीङादेशस्य "अयत" इत्यस्य धातो रूपमेतत्]। वरुणालयस्य—समुद्रस्य।

(२८०) सङ्क्रान्त—प्रतिफलितम्। प्रतिबिम्ब प्रतिकृतिम्।

(२८१) स्मर—स्मरन् कामात इत्यथ। स्मरगण्डस्थलस्य—विकस स्कपोलतलस्य इषद्धास्यफुल्लकपालद्वयस्य वा। [मुखस्य इत्यत्र "अधीगर्थ—" (२।३।५२ पा०) इति कर्मणि षष्ठी]।

(२८२) मुमोह—वशश इत्यथ। मन्मथेति।—मन्मथस्य—कामस्य उन्माथन—उन्मोडनेन ["मन्मथोन्माथ—" इत्यत्र "मन्मथोन्माद—" इति पाठे—मन्मथन कृत ■ उन्माद,—उन्मत्तता, चित्तचाञ्चल्यमिति यावत तेन] मथ्यमान—विलोड्य मान मानस—हृदय यस्य तथाभूत।

(२८३) स्वस्थ,—प्रकृतिस्थोऽपि, अस्वस्थ,—अप्रकृतिस्थ, इति विरोध,

पीतसकलकुमुदवनप्रभाप्रवाहधवलताराभ्यामिव लोचनाभ्यां वाष्पवारिबिन्दून्। अथ पततः (२८४) तान् उदन्वति समस्तान् एव आचेमुः मुक्ताशुक्तयः। (२८५) तासाञ्च कुक्षिकोषेषु मुक्ताफलीभूतान् अवाप तान् कथमपि रसातलनिवासी वासुकिर्नाम (२८६) विषमुचाम् ईशः। स च तैः मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिः (२८७) एकावलीम् अकल्पयत्; चकार च मन्दाकिनीति नाम तस्याः। (२८८) सा च भगवतः सोमस्य सर्वासाम् ओषधीनाम् अधिपतेः प्रभावात् अत्यन्तविषघ्नी, हिमामृतसम्भवत्वाच्च

---

स्वर्गस्य .—स्वर्गस्य इति तत्परिहारात् विरोधाभासोऽलङ्कारः। [ स्व.—परलोके स्वर्गे इति च कल, तिष्ठति इत्यर्थे स्वविशेषणदपूर्वकात् स्थाधातोः कप्रत्यये "खर्परे शरि वा विसर्गलोपो वक्तव्यः" (वा०) इति विसर्गलोपः ] अपत्यस्नेहाकारणमूलेन दुःखसन्तापादिना विरहिते स्वर्गे स्थितोऽपीत्यभिप्रायः। स्थवीयसः,—अतिस्थूलान्, [ "स्थूलदूर—" (६।४।१५६ पा०) इति ईयसुनि स्थूलस्य स्थवादेशः ]। पीतेति।—पीत—हेलितमित्यर्थः, यत् सकल—समस्त, कुमुदवन—कैरवारण्य सितोत्पलसमूह इत्यर्थः, तस्य प्रभाप्रवाहः,—कान्तिसमूहः, तेन धवला—शुभ्रा, विरहपाण्डुरा इति भावः तारा—कनीनिका ययोस्ताभ्याम्। वाष्पवारिबिन्दून्—अश्रुकणान्, अत्रापि पूर्ववत् वाष्पपदेनैव गतार्थतया वारिशब्दस्य पुनरुक्तेः कथितपदत्वाऽख्यदोषः।

(२८४) उदन्वति—समुद्रे, मुक्ताशुक्तयः,—मुक्ताजनकमुक्तास्फोटाः, तान्—वाष्पवारिबिन्दून्, आचेमुः,—पपुः।

(२८५) तासां—मुक्ताशुक्तीनां, कुक्षिकोषेषु—उदराभ्यन्तरेषु, मुक्ताफलीभूतान्—मौक्तिकरूपेण परिणतानित्यर्थः, तान्—वाष्पबिन्दूनित्यर्थः, कथमपि—केनापि प्रकारेण अवाप—प्राप।

(२८६) विषमुचां—नागानाम्, ईशः,—प्रभुः, नागराज इत्यर्थः।

(२८७) एकावलीम्—एकसरं, हारविशेषमिति यावत्, अकल्पयत्—अरचयत्। तस्याः,—एकावल्याः।

(२८८) सा—एकावली, ओषधीनां—फलपाकान्तानां व्रीहियवादीनाम्, ("ओषध्यः फलपाकान्ताः" इत्यमरः) अधिपतेः,—ईश्वरस्य, ("ओषधीशो निशापतिः"

अमृतेन सर्व्वसत्त्वसन्तापहारिणी बभूव। (२८८) अत: स तां सर्व्वदा विषोष्मशान्तये वासुकिः पर्य्यधत्त।

(२९०) समतिक्रामति च कियत्यपि काले कदाचित् ताम् एकावलीं तस्मात् नागराजात् नागार्ज्जुनो नाम नागैः एव आनीतः पातालतलं भिक्षुः अभिक्षत, लेभे च। निर्गत्य रसातलात् त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ ताम्। सा च अस्माकं कालेन शिष्यपरम्परया कथमपि हस्तमुपगता। यद्यपि च (२९१) परिभव इव

---

त्यमरप्रसादात् चन्द्रस्य सोमस्याभिपतितत्वेऽप्यम) सोमस्य—चन्द्रस्य, प्रभावात् —माहात्म्यात् अत्यन्तविषघ्नी—अतिशयेन विषहरी। हिमेति। —हिम—तुहिनम्, अमृतमिव—पीयूषमिव सन्तापनाशकत्वादिति भावः यद्वा—हिम—शीतलं, यत् अमृत—सुधा चन्द्रमाहि सुधाऽवस्थानात् चन्द्रस्य सुधा नाधिकाऽस्तीति भावः तत्सम्भवत्वात् —तदुत्पन्नत्वात्, यद्वा—हिमं यत् अमृतं—जलं, सामुद्रमिति भावः ("अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते" इति मेदिनी) तत्सम्भवत्वात् समुद्रगर्भस्थशुक्तिमध्ये मुक्तारूपेण परिणमनादिति भावः सर्व्वसत्त्वसन्तापहारिणी—निखिलजीवानां सन्तापनाशिनी।

(२८८) ["अत" इत्यत्र "यत" इति पाठान्तरम्]। विषोष्मशान्तये—विषसन्तापनिवृत्तये नागलोकस्य विषपूर्णत्वात् स्वस्यापि विषजज्वालत्वादिति वा भावः। पर्य्यधत्त—परिहितवान्।

(२९०) समतिक्रामति—समतीते, समतिगच्छति इत्यर्थः। नागराजात्—वासुकेः, [भिक्षतेः याच्ञार्थकतया द्विकर्म्मकत्वेन "नागराजात्" इत्यत्र गौणे कर्म्मणि द्वितीया एव भवितुमुचिता तेन "नागराजम्" इत्येव प्रयोक्तुमुचितमिति]। नागैः,—कैश्चित् सर्पैः। भिक्षुः,—बौद्धसन्न्यासी, अभिक्षत—अयाचत। त्रिसमुद्राधिपतये—महाराष्ट्रनरस्वामिने, यद्वा—तिसृषु दिक्षु स्थिताः समुद्राः यस्य स त्रिसमुद्रः,—अन्तरीपविशेष इत्यर्थः, तदधिपतये। सुहृदे—मित्राय, आत्मन इति शेषः। शिष्यपरम्परया—शिष्यप्रशिष्यक्रमेण। कथमपि—अज्ञातप्रकारेण इत्यर्थः।

(२९१) परिभव इव—अनादर इव, तदनुकरणमिवेत्यर्थः, भिक्षोर्दानग्रहण-

भवति भवादृशां दक्षिम उपचारः तथाऽपि (२९२) बोधिधिया बुद्धिमता सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेण आयुष्मता विपरक्षापेक्षया गृह्यताम्” इत्यभिधाय भिक्षोः (२९३) अभ्यासवर्त्तिनः चीवरपटान्तसंयतां मुमोच ताम् एकावलीं मन्दाकिनीम्।

(२९४) उन्मुच्यमानायामेव यस्यां प्रभालेपिनि लब्धावकाशे विशदमहसि महीयसि विसर्पति रश्मिमण्डले, युगपद्धवलायमानेषु दिङ्मुखेषु, (२९५) मुकुलितलताप्रभूतिपिहितैः आ मूलाद्विकासितमिव तरुभिः, (२९६) अभिनवस्नुगालतुल्यैः

---

दिति भावः। दक्षिम—दानेन निर्वृत्तः, ["ड्वितः क्त्रिः" (३।३।८८ पा०) इति ददातेः क्त्रिः, "क्त्रेर्मम्नित्यम्" (४।४।२० पा०) इति मप् च] उपचारः,—सत्कारः।

(२९२) बोधिधिया—बोधिधिया बोधिरिति विविच्य इत्यर्थः, विज्ञानात्मकत्वात् सन्तानस्यावस्थानमिति भावः। सर्वेति।—सर्वेषां—समस्तानां, सत्त्वराशीनां—प्राणिसङ्घानां, रक्षायां—पालने, रक्षार्थं वा, प्रवृत्तः,—उद्यतः तेन, अत एव रक्षणीय—पालनीयं, शरीरं—देहं येन यस्य वा तथाभूतेन, अवश्यमेव रक्षणार्हं शरीरं येन इत्यर्थः। विपरक्षापेक्षया—विशिष्य आत्मरक्षानुरोधेन।

(२९३) अभ्यासवर्त्तिनः,—अन्तिकस्थितस्य, निकटस्थितस्य इत्यर्थः, ("समीपे निकटासन्न। सदेशाभ्याससविध" इत्यमरः)। चीवरपटान्तसंयता—कौपीनाञ्चलबद्धाम्।

(२९४) उन्मुच्यमानायां,—निष्कास्यमानायां, यस्यां,—मन्दाकिन्यां, प्रभालेपिनि—कान्तिव्यापिनि, लब्धावकाशे—प्राप्तावसरे, बहुदूरव्यापिनीत्यर्थः, विशदमहसि—उज्ज्वलतेजसि, महीयसि—अतिमहति, रश्मिमण्डले—किरणनिचये, विसर्पति—प्रसरति। युगपत्—सहसा, एकदैव वा।

(२९५) मुकुलितेति।—मुकुलिता,—विकासोन्मुखा इति भावः लता,—वीरुध एव, धव—श्रिय, मालिका इति यावत् ताभिः पिहितैः,—सञ्छादितैः इति भावः तरुभिः—वृक्षैः, नायकारात् भावः, आ मूलात्—शिफाम् आरभ्य शिखरपल्लवमित्यर्थः, विकासितम् इव—उन्मीलितमिव, लताविकासविशेषात् भावः।

(२९६) अभिनवेति।—अभिनवं—नूतनं, तत्र उद्गततादवस्थमिति भावः,

धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसरसीहंसयूथैः, (२९७) स्फुटितमिव भरवशविशीर्यमाणधूलिधवलैः गर्भभेदसूचितसूचीसञ्चयशुचिभिः केतकीवाटैः, (२९८) उद्दलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः, (२९९) विधुतसितसटाभारभरितदिक्चक्रैः चलितमिव केसरिकुलैः, प्रहसितमिव (३००) दशनांशुमालाऽऽलोकलिप्यमानवनं वनदेवताभिः, विकसितमिव (३०१) शिथिलितकुसुमकोशकेसराट्टहासनिर-

---

यत् भयात्—विस, तत्र लुब्धे—लोलुपे, धुतेति।—धुतैः,—कम्पितैः, विस्फारितैरिति भावः, पक्षाः,—धुतानां—कम्पितानां, पक्षपुटानां—पतत्रपुटानां, पटलेः,—समूहैः, धवलितं—श्वेतीकृतं, गगनं—नभः यस्मिन् तद्यथा तथा, वनसरसीहंसयूथैः,—आरण्यसरोवरहंसवृन्दैः, धावितमिव—विद्रुतमिव। अत्र प्रकृतानां मन्दाकिनीप्रभाणाम् अप्रकृतहंसयूथधावितरूपेण सम्भावनादुत्प्रेक्षाऽलङ्कारः। एवमुत्तरत्रापि बोध्यम्।

(२९७) भरेति।—भरवशेन—पुष्टिवशेन, परिपक्वत्वेनेत्यर्थः, विशीर्यमाणाभिः,—विकीर्यमाणाभिः, धूलिभिः,—रजोभिः, परागैरिति यावत्, धवलाः,—शुभ्राः तैः, गर्भेति।—गर्भभेदेन—मध्यभागस्फोटनेन, सूचितैः,—प्रकटितैः, स्फुटितैरित्यर्थः, सूचितानामिति वा सूचीनां—सूचीवत् तीक्ष्णानां शिखानां, सञ्चयैः,—समूहैः शुचयः,—विशदाः तैः, केतकीवाटैः—केतकीवनैरित्यर्थः, स्फुटितमिव—विकसितमिव इत्युत्प्रेक्षा।

(२९८) उद्दलितेति।—उद्दलितैः,—निर्गतैः, प्रस्फुटितैरिति भावः, दलैः,—पत्रैः, दन्तुराभिः,—सञ्जातदन्ताभिरिव लक्ष्यमाणाभिः। प्रबुद्धमिव—विकसितमिव इत्युत्प्रेक्षा।

(२९९) विधुतेति।—विधुतेन—कम्पनवशात् विस्तारितेन, विधुतानामिति वा, सितसटानां—श्वेतजटानां, भारेण—भरेण, आतिशय्येनेत्यर्थः, भरितं,—आपूरितं, दिक्चक्रं,—दिक्समूहः, दिङ्मण्डलमित्यर्थः यैः तथाभूतैः, केसरिकुलैः,—सिंहवृन्दैः, चलितमिव—कम्पितमिव इत्युत्प्रेक्षा।

(३००) दशनेति।—दशनांशूनां—दन्तकिरणानां मालाः—समूहः, तस्याः आलोकेन—प्रभया, लिप्यमानं—दिह्यमानं वनम्—अरण्यं यस्मिन् तद्यथा तथा।

(३०१) शिथिलितेति।—शिथिलितानां—श्लथीभूतानां, स्फोटनातिशय्यादिति भावः, कुसुमानां—पुष्पाणां, कोशकेसराः,—कर्णिकारकिञ्जल्काः, अभ्य-

ध्रूमं काश्काननै, (२०२) भ्रान्तमिव सम्भ्रमभ्रमितबाल-पल्लवपरिवेशश्वेतायमानै चमरीकदम्बकैः, (२०३) प्रसृतमिव स्फायमानफेनिलतरलतरतरङ्गोद्गारिणा गिरिणदीपूरेण, (२०४) अपरतारागणलाभमुदितेन उदितमिव विकचमरीचि-चक्राक्रान्तककुभा पूर्णचन्द्रेण, (२०५) प्रक्षालित इव दावा-नलधूलिधूसरितदिगन्तो दिवसः, पुनरिव धौतानि अश्रुजल-क्लिष्टानि नारीणां मुखानि।

---

कासकुसुमकेसरा इत्यर्थः वा, अट्टहासा इव—उच्चैर्हसितानि इव, निरङ्कुशा,—निर्बाधाः यस्मिन् तत् यथा तथा, काशकानने,—इक्षुगन्धाख्यतृणविशेषारण्ये इत्यर्थ।

(२०२) सम्भ्रमेति।—सम्भ्रमेण—त्वरातिशयेन, भ्रमिते,—चालिते, बाल पल्लवपरिवेशे —पुच्छलोमकिसलयमण्डले, श्वेतायमाना,—श्वेता [illegible] आचरन्ति तै, ["कर्तुः क्यङ—" (३।१।११ पा०) इति आचारार्थे क्यङ्] चमरीकदम्बकै, —चमरीसञ्ज्ञकमृगविशेषवृन्दै, भ्रान्तमिव—चलितमिव इत्युत्प्रेक्षा।

(२०३) स्फायमानेति।—स्फायमाना,—वर्द्धमाना, फेनिला,—डिण्डीर युक्तिमन्तः, तरलतरा,—अतिचञ्चला, ये तरङ्गा,—ऊर्मय, तान् उद्गिरति—उद्वमतीति तथाभूतेन, गिरिणदीपूरेण—पर्वतीयसरित्जलप्रवाहेणेत्यर्थः, ["गिरिनद्या-दीना वा" (वा०) इति पाक्षिकणत्वम्] प्रसृतमिव—विस्तृतमिव इत्युत्प्रेक्षा।

(२०४) अपरेति।—अपरो—अन्ये, आकाशसञ्चारितासाम्य नवीनाः, तारापतित्वात् चन्द्रस्य इति भाव, तारागणा,—नक्षत्रवृन्दानि, तेषां लाभ,—प्राप्ति, तेन मुदित,—प्रहृष्ट तेन, विकचेति।—विकचै,—विकसितै मरीचीनां—मयूखानां, चक्रे,—समूहे, आक्रान्ता,—आपूरिता, ज्योतिरेकावृता इति भाव, ककुभ,—दिशः येन तथोक्तेन।

(२०५) प्रक्षालित —धौत। दावानलेति।—दावानलस्य—वनवह्नेः, धूलिभि, —भस्मभिरित्यर्थ, धूसरित,—पाण्डुर, दिगन्त,—आशाप्रान्त यस्मिन् तथाभूत। पुन —प्रथम जलेन प्रक्षालितान्यपि भूयोऽपि इत्यर्थः, धौतानि—क्षालितानि अश्रुजल क्लिष्टानि—बाष्पवर्षेण मलिनानि, मुखानीव—आननानीव। अत्र धावल्यसाम्यात् प्रकृतस्य मन्दाकिनीदर्शनस्य अप्रकृतनारीमुखत्वेन सम्भावनात् उत्प्रेक्षालङ्कार, गुणश्च वस्त्वाचकत्वात्।

राजा तु (२०६) मांसलैः तस्याः सम्मुखैः मयूखैः आकुलीक्रियमाणं मुहुर्मुहुः उन्मीलयन् निमीलयंश्च चक्षुः कथमपि प्रयत्नेन ददर्श (२०७) सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नाग-करशीकरसंहतिं, (२०८) घनमुक्तां शारदीम् इव लेखीकृतां ज्योत्स्नां, (२०९) प्रकटपदकविन्यस्तां तारावीथीमिव बालेन्दोः, (२१०) निश्चलीभूतां महर्षिमालामिव हस्तमुक्ताम्, अभिभूतसकलभुवनभूषणभूतिप्रभावाम् ऐशानीमिव शशि-

(२०६) मांसलैः—प्रभूतैः। तस्याः—एकावल्याः। सम्मुखैः—अभिमुख-प्रसृतैः। आकुलीक्रियमाणं—व्याकुलीक्रियमाणं, प्रतिबध्यमानमित्यर्थः दर्शनशक्त्युपरोधादिति भावः। उन्मीलयन्—उद्घाटयन्। निमीलयन्—मुद्रितं कुर्वन्। प्रयत्नेन—प्रकृष्टचेष्टया, एकावलीप्रभया दृष्टिरोधादिति भावः।

(२०७) सर्वाशापूरणीं—सर्वासामाशानां सर्वदिग्व्यापिनीं वा, सर्वजनीनेष्ट-सम्पादिनीं च पङ्क्तीकृता—श्रेणीकृतैव स्थापिता दिङ्नागेति।—दिङ्नागस्य—ऐरावतस्य, करः—शुण्डः, तस्य शीकरसंहतिमिव निर्गलदम्बुबिन्दुधारामिव। अयन्तु उपमा स्थूलीकृतमुक्ताफलस्य महाप्रमाणस्य आनयनस्य ऐरावतस्य करनिःसृतत्वात् दुष्प्रापत्वहस्तालिङ्गनयोग्यताया इति बोद्धव्यम्।

(२०८) घनमुक्ता—मेघावरणरहिता निरन्तरसन्निविष्टमुक्ताफलखचिता च, शारदी—शरत्कालिकीम्, अतिविशदत्वादिति भावः, लेखीकृता—श्रेणीकृता, ज्योत्स्नामिव—चन्द्रिकामिव।

(२०९) प्रकटेति।—प्रकटम्—उज्ज्वलं, पदकं—मध्यमणिः, पदमिव—चरणमेव इति पदकं तत्र, विन्यस्तं—न्यस्तं यस्यां सा, बालेन्दोः,—नवोदितस्य चन्द्रस्य, वस्तु-दर्शनत्वात् बालेन्दुरिति पदं प्रयुक्तं, तारावीथीमिव—नक्षत्रपङ्क्तिमिव, चित्ताकर्षक-तया अतिस्वच्छतया च तदलानि मुक्ताफलानि द्वितीयाचन्द्रस्य पदविन्यासमार्गमिव शुशुभिरे इति भावः।

(२१०) हस्तमुक्ता—हस्तात्—करात्, भित्तेरिति भावः, हस्तो नाम नक्षत्रं, तस्माच्च मुक्ता—निःसृताम्, अत एव पुंस्त्वयोगोऽपि दृश्यते, तथा हि ज्योतिषे,—"हस्तो मूलं श्रवणः पुनर्वसु मृगशिरस्तथा पुष्यः। पुंसंज्ञितेषु कार्य्यं पुंसवनाय गर्भ गर्भदः ॥" इति। हस्ते समुदयस्य शरत्कालिकत्वात् सप्तर्षिमण्डलस्य अनुल्लङ्घ्यमानस्य तदुदयपादादानमिति चेदम्। निश्चलीभूता—स्थिरीभूता, महर्षिमालामिव—

कला, धवलतागुणगृहीता कान्तिमिव निर्गतां क्षीरराशेः, (२११) अनेकमहामहीभृत्परम्पराऽऽगतां गङ्गामिव दुर्गतिहराम्, (२१२) अनवरतस्फुरिततरलाशुका (२१३) पुरःसरपताकामिव महेश्वरभावागमस्य, घनसारशुक्ला दन्तपङ्क्तिम् इव अभिमुखस्य ईश्वरस्य, (२१४) वरमनोरथपूरणसमर्थां

---

मरीच्यादिसप्तर्षिसमूहमिव। अभिभूतेति।—अभिभूत,—तिरस्कृत, सकलाना—समग्रा, भुवनाना—लोकाना, भूषणभूते—अलङ्कारस्वरूप, प्रभाव,—उत्कर्षः यया ताम्, अन्यत्र—अभिभूत,—तिरस्कृत, सकलभुवनस्य—चतुर्दशलोकस्य, भूषणम्—अलङ्कारस्वरूप रत्नम् मणादिश इति यावत्, तस्य भूते—भस्मन्, भवतिनस्य इति भाव, प्रभाव यया ताम् ऐशानीम—ईशानस्य—शिवस्य इयमिति ताम्, शैवीमित्यर्थः, चन्द्रशेखरस्य शिरःशेखरीभूतामिति यावत्। धवलतेति।—धवलतागुणेन—शैत्यधर्मेण श्वेतवर्णतनुता च गृहीता—आश्रिता, गुम्फिता च ताम्। क्षीरराशे—दुग्धसमुद्रादित्यर्थः क्षीरोदधेरिति वा।

(२११) अनेकेति।—अनेके—बहव महान्त,—उन्नता, श्रेष्ठाश्च महीभृत,—पर्वता राजानश्च तेषां परम्परा—धारा तामागता—उपस्थिता ताम्, दुर्गतिहरां—दारिद्र्यहारिणी, नरकनिवारिणीञ्च। ("दुर्गतिर्नरके नैःस्व्ये" इति मेदिनी)।

(२१२) अनवरतेति।—अनवरत—सतत, स्फुरिता,—स्फूर्तिं गता, तरलस्य—मध्यमणेः, अंशुका,—किरणा, यद्वा,—तरला,—चपला, अंशुका,—किरणा, तरलानि—चपलानि सूक्ष्माणि वा अंशुकानि—पटाश्च यस्या तथोक्ताम्।

(२१३) महेश्वरभावागमस्य—महेश्वरस्य भाव —महैश्वर्यमित्यर्थः, तस्य आगम,—प्राप्ति तस्य साम्राज्यलाभस्य इत्यर्थः पुरःसरेति।—पुरः,—अग्रत सरति—गच्छतीति पुरःसरी ("पुरोऽग्रतोऽग्रेषु सर्तेः" (पा०) इति ट), सा चासौ पताका—वैजयन्ती चेति तामिव। अभिमुखस्य—अनुकूलस्य इति यावत् ईश्वरस्य—प्रभो, दैवस्यात वा, घनसारशुक्ला—कर्पूरवत् धवलाम्, ("अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका॥" इत्यमर) अन्यत्र,—घना—निरन्तरा, सारा—सारवती, दृढश्च, सा चासौ शुक्ला—श्वेता चेति ताम्, दन्तपङ्क्तिमिव—दशनश्रेणीमिव।

(२१४) वरमनोरथपूरणसमर्था—वर,—श्रेष्ठ, मनोरथ,—काम, इच्छा त्मयनेति यावत्, वरस्य—श्रेष्ठस्य मनोरथस्य, तस्य पूरणे—साधने, समर्था—दक्षा

स्वयंवरस्रजमिव भुवनश्रियः, (३१५) निजकरपल्लवावरणदुर्लक्ष्यां (३१६) चक्षूरागविहसितिकामिव वसुधायाः, (३१७) मन्त्रकोपसाधनप्रवृत्तस्य अक्षमालामिव राजधर्मस्य, (३१८) समुद्रालङ्कारभूतां महालेख्यपट्टिकामिव कुबेरकोशस्य, पश्यन् च एतां विस्मयम् आजगाम मनसा सुचिरम्।

---

या, भुवनश्रियः,—जगल्लक्ष्म्याः, राजलक्ष्म्याः इति यावत् स्वयंवरस्रक्—स्वदम्—आत्मना, कन्ययेति यावत्, वरः—वरस्य आपतेरिति भावः, तस्य तस्मै वा स्रक्—प्रभकुसुममाल्यं, भाविपतेर्गलदेशे अर्पणीयमिति भावः।

(३१५) निजेति।—निजाः,—स्वीयाः, कराः—रश्मय एव, पल्लवाः,—किसलयाः, प्रभातानल्पत्वात् दृष्टिरोधकत्वसामर्थ्याच्च इति भावः, निजः—स्वीयः करपल्लवः,—हस्तकिसलयश्च तै तेन च आवरणेन—आच्छादनेन, दुर्लक्ष्याः—दुर्दर्शाम्।

(३१६) चक्षूरागेति।—चक्षुषः,—नेत्रस्य, रागः—प्रीतिः तेन विहसितिका—मन्दहासः लाभ इव, स्वनाथे राजनि प्रणयातिशय्यात् वसुधा करपल्लवेन निजमुखमाच्छाद्य हास्यमप्याच्छिन्न विहसतीवेति भावः।

(३१७) मन्त्रेति।—मन्त्रः,—मन्त्रणा, मन्त्रिभिः सह स्वकर्तव्याकर्तव्यावधारणमित्यर्थः, कोषः,—धनं, साधनं—सम्पादनम्, तत्र तत्कार्ये इत्यर्थः, यद्वा,—तेन, मन्त्रादिसहायेन इत्यर्थः, प्रवृत्तः,—उद्यतः अभीष्टसम्पादने निरतः इति वा तस्य। अथवा—मन्त्रः,—देवादीनां साधनीभूतः तन्त्रादिकः शब्दविशेषः, ("मन्त्रो देवादिभेदे स्यात् देवादीनाञ्च साधने। गुप्तवादेऽपि च पुमान्" इति मेदिनी) स एव कोषः,—कर्मसहायः ("कोषोऽस्त्री कुड्मले पात्रे ०। जातिकोषेऽर्थसङ्घाते च" इति मेदिनी) तस्य साधनाय—सिद्धिलाभाय प्रवृत्तस्य—निरतस्य। अक्षमालामिव—जपमालिकामिव यस्य राज्ञः समीपे एषा रत्नमाला तिष्ठति तस्य मन्त्रादिकमप्रतिहतं सत् भवतीति तात्पर्यम्।

(३१८) समुद्रेति।—समुद्रः—सागरः, तस्य अलङ्कारः—भूषणं तद्भूतां—तद्रूपत्वेन विराजमानामित्यर्थः, निखिलसागरसाररूपामिति यावत्, अन्यत्र,—समुद्रः,—मुद्रया—रत्नाङ्गीयादकाधिकविशेषेण "शीलमोहर" इति वङ्गभाषया प्रसिद्धेनेत्यर्थः, अङ्गुलिस्थमुद्राङ्कनेपयुक्ताङ्गुरीयकचिह्नेन वा सहितस्य योऽलङ्कारः, तद्भूता—तद्रूपा, कुबेरकोशस्य—धनेश्वरभाण्डागारस्य महालेख्यपट्टिकामिव—महत्या—एतावन्ति रत्नानि अस्मिन् कुबेरकोशे सन्तीति गणना, तस्याः लेख्यपट्टिका—"पाटा" इति वङ्गभाषया

आचार्यस्तु ताम् (३१९) उद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः। अथ नरपतिरपि प्रीतिम् उपदर्शयन् प्रत्यवादीत्,— "आर्य! रत्नानाम् ईदृशानाम् अनर्हाः प्रायेण पुरुषाः। तपःसिद्धिः इयमार्यस्य देवताप्रसादो वा। के च वयम् इदानीम् आत्मनोऽपि? किमुत ग्रहणस्य प्रत्याख्यानस्य वा? (३२०) दर्शनात् प्रभृति प्रभूतगुरुगुणगणाकृष्टेन हृदयेन परवन्तो वयम्। (३२१) सङ्कल्पितम् इदम् आ मरणात् आर्योपयोगाय शरीरम्। अत्र कामचारो नः कर्तव्यानाम्" इति।

---

ग्रथिता शिशिरशिलिका तामिव। एताम्—एकावलीम्। सर्वैकस्या एव एकावल्याः सर्वैरसंख्याम्भोधरशोभया देवघटितानां मणिमुक्तानां सन्निवेशात् तेजस्वीषां कालोपमालङ्कारः।

(३१९) उद्धृत्य—उत्तोल्य। बन्धुरे—नतानते, उपस्कन्धोपमे इत्यर्थः, रम्ये वा। ("बन्धुरं मुकुटे पुंसि । त्रिषु कादिम्बनम्रयोः।" इति मेदिनी)। अनर्हाः,—अयोग्याः। तपःसिद्धिः,—तपश्चर्यायाः साफल्यरूपा इत्यर्थः। इयम्—एकावली। देवताप्रसादः,—देवानुग्रहः, तपःप्रभावेण देवानुग्रहेण वा इयमार्येण लब्धा इति निष्कर्षः। के च वयम् आत्मनः,—स्वस्य, स्वदेहस्य इत्यर्थः, प्रभव इति शेषः, न केऽपि वयमित्यर्थः, प्रत्याख्यानस्य—निराकरणस्य, अग्रहणस्येत्यर्थः।

(३२०) दर्शनात्—अवलोकनात्, भवत इति शेषः, [अत्र प्रभृतिशब्दयोगे पञ्चमी, "कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात्" इति दीक्षितोक्तेः]। प्रभूतेति।— प्रभूतानाम्—बहूनां, गुरुगुणानाम्—श्लाघ्यगुणानाम्, यद्वा,—गुरवः—महान्तः, गुणानाम्—दयादीनां, गणेन—समूहेन, कृतम्—आक्षिप्तं तेन। परवन्तः,—पराधीनाः, भवदायत्ता इति यावत्।

(३२१) सङ्कल्पितम्—मनसा निर्धारितम्। आ मरणात्—मृत्युकालपर्यन्तम्, यावज्जीवमित्यर्थः, ["पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति पञ्चमी] आर्योपयोगाय—आर्यस्य—मान्यस्य भवत, उपयोगः,—व्यवहारः, इष्टकार्यसाधनमित्यर्थः तस्मै आर्यमुपयोक्तुमिति भाव, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति चतुर्थी] सङ्कल्पितमित्यन्वयः। अत्र—शरीरे इत्यर्थः, नः,—अस्माकं, कर्तव्यानाम्—

(३२२) समतिक्रान्ते च कियत्यपि काले, गते च एकावलीवर्णनाऽऽलापे लोकस्य, अनन्तरं (३२३) सव्यथविश्रब्धा राज्यश्रीः ताम्बूलवाहिनीं पत्रलताम् आहूय उपांशु किमपि कर्णमूले शनैः आदिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्,—"देव! देवी विज्ञापयति,—'न स्मरामि आर्यस्य पुरः कदाचिदुच्चैः वचनमपि, कुतो विज्ञापनम्। इयं हि (३२४) शुचाम् असह्यता व्यापारयन्ती हतदैवदत्तादेशा (३२५) शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वा (३२६) अवलम्बनम्। (३२७) उभयविकलानान्तु दुःखा-

---

कार्यार्थी, कामचार,—यथेच्छचारित्वम्, अत्र मदीयेन शरीरेण भवत यथेष्टं मनोरथं सम्पादयिष्यामीति भाव अद्येदं मदैव सम्पूर्णाधिकार इति फलितम्।

(३२२) समतिक्रान्ते—गते। लोकस्य—तत्रस्थस्य जनस्य, एकावलीवर्णनाऽऽलापे—एकावल्या,—मन्दाकिन्या, वर्णनमेव—विवरणमेव आलाप,—प्रसङ्ग तस्मिन्, [ "यस्य च भावेन" (२।३।३७ पा०) इति सप्तमी ] गते—निवृत्ते इत्यर्थं।

(३२३) सव्यथविश्रब्धा—सव्यथविश्वासा अवान्तराभावात् विगतसाध्वसा इति भाव। उपांशु—गुप्तम्। पार्थिवं—राजानं हर्षमिति यावत्। देवी—राज्यश्री। न स्मरामीति।—ज्येष्ठस्य ते समक्षम् अन्येन केनचित् सममपि उच्चै भाषणमहं कदाचन कृतवतीति इदानीं अपि न शक्नोमि तव पुर साक्षात् आवेदयितुं दूरे एव तिष्ठतु इति निष्कर्ष। आर्यस्य—मान्यस्य, भवत इत्यर्थ, [ "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति षष्ठी ]।

(३२४) शुचां—शोकानाम्, असह्यता—दुःसहता। व्यापारयन्ती—विज्ञापयितुं नियोजयन्तीत्यर्थं। हतम्।—हतेन—दुष्टेन इति यावत्, दैवेन—भाग्येन, दत्त,—अर्पित इत्यर्थ, आदेश,—अनुमतिर्यस्यै तथाभूता, दुर्भाग्यायत्ता इत्यर्थ।

(३२५) शिथिलयति—शिथिलं करोति, ह्रासयति इत्यर्थं, यत भवतोऽपत: आमन्त्रितुं प्रवर्त्तते इति भाव।

(३२६) अवलम्बनम्—आश्रय।

(३२७) उभयविकलानान्तु—उभाभ्यां—पत्या पुत्रेण चेत्यर्थं, विकला,—

ऽनलेऽन्वनायमानं प्राणितम् अश्लीलत्वमेव केवलम्। (३२८) आर्य्यागमनेन च कृतोऽपि प्रतिहतो मरणप्रयत्नः। अतः (३२९) काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामयम् अपुण्यभाजनं जनः' इति"। जनाधिपस्तु तदाकर्ण्य तूष्णीमेव अतिष्ठत्।

अथ आचार्य्यः (३३०) सुधीरम् अभ्यधात्,—"आयुष्मति। शोको हि नाम पर्य्यायः पिशाचस्य, रूपान्तरम् आवेशस्य, (३३१) तारुण्यं तमसः, विशेषणं विषस्य।

---

विरहिता तासाम, भर्तृरहितानाम् इत्यर्थ, पतिपुत्रविहीनानाम् इति भाव, [ "उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति अयच् । "उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे, तेन उभयत, उभयत "उभयपक्षविनीतनिद्रा" इत्यादि सिद्धम्" इत्याहु: तत्त्वबोधिनीटीकाकृत ] दुःखितेति।—दुःखमेव—मनःपीडा एव, अनलः,—अग्नि तस्य इन्धन—काष्ठ, तदिवाचरत् दुःखाग्नीन्धनायमान, शोकानलदाहप्रसूतमित्यर्थः; [ "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङि आत्मने च रूपम् ] प्राणित—जीवित प्राणधारणमित्यर्थ अश्लीलत्वमेव—धार्ष्ट्यमेव, निर्लज्जत्वमेव इत्यर्थ; विधवाया जीवनं केवलं दुःखायैव, लोकापवादाय च इति भाव ।

(३२८) आर्य्यागमनेन—आर्य्यस्य—भवत, आगमनेन—उपस्थित्या, मरणप्रयत्न,—मृत्युचेष्टा इति यावत, प्रतिहत —व्याहत ।

(३२९) काषायेति।—कषायेण रक्त काषायं—रक्तवसनमित्यर्थ, भिक्षुधार्य्यमिति भाव, [ "तेन रक्तं रागात्" (४।२।१ पा०) इत्यण् ], तस्य ग्रहण—धारणं, प्रव्रज्याऽवलम्बनमित्यर्थ, तत्र अभ्यनुज्ञा—अनुमति तया, अपुण्यभाजन—पापीत्यर्थ.। जनाधिप,—नृपः । तूष्णीं —मौनी, निरुत्तरमित्यर्थ ।

(३३०) सुधीर—अमृतधैर्य्यं यत्र यथा स्यात् तथा, धैर्य्यावलम्बनपूर्वकमित्यर्थ अतिस्थिरं वा, मन्दं मन्दमित्यर्थ, ( "धीरो धैर्य्यान्विते स्वैरे बुधे क्लीवन्तु कुङ्कुमे" इति मेदिनी ) पिशाचस्य—नीचाधमस्य देवयोनिविशेषस्य, चित्तविक्षेपकत्वादिति भाव, पर्य्याय,—नामान्तरम्, आवेशस्य—वातव्याधिविशेषस्य, अचेतनतया मूर्च्छनलक्षणस्य इति भाव, रूपान्तरम्—अन्यविधं रूपम् ।

(३३१) तारुण्य—यौवन, तमस,—अन्धकारस्य, सर्वाच्छादकत्वादिति भाव.। विशेषण—विशेष, भेदमात्रमित्यर्थ, मोहोत्पादकत्वादिति भाव.।

(२२२) अनन्तकः प्रेतनगरनायकः अयम्, अनिर्हृतिधर्म्मा दहनः अयम्, अक्षयो राजयक्ष्मा अयम्, (२२३) अलक्ष्मीनिवासो जनार्दनः अयम्, अपुण्यप्रवृत्त चापलकः अयम्,

(२२२) अयं—शोकः, अनन्तकः,—अन्तम्—विनाशं करोति इति अन्तकः, [तत्करोतीत्यर्थे अन्तशब्दात् णिच् ण्वुल्] स न भवतीति अनन्तकः,—अनिहन्ता इत्यर्थः, प्रेतनगरनायकः—यमः, अन्तक इति यावत्, अत्र अन्तकत्वराहित्ये प्रेतपुरनायके नितान्तमसम्भवदपि शोकस्य अन्तकादपि भीषणताद्योतनाय अन्तकात्वरूपकमधिकं वैशिष्ट्यमुपात्तं, तथा च अन्तकः केवलमन्तं जनयति, शोकस्तु तदन्तमयमपि दहति, इति शोके अन्तकतादात्म्याध्यासात् रूपकं, तत्राधिकारूढवैशिष्ट्यरूपमनामलङ्कारः — "अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्" लक्षणात् विशेषणशेषात् स्थितमित्यवगन्तव्यम्। शोकपक्षे तु—अनन्तकः,—अनन्तम्—अशेषं, पाररहित्यमित्यर्थः कायति—प्रख्यापयति, ज्ञापयतीत्यर्थः इति अनन्तकः,—असीम इत्यर्थः। अनिर्हृतिधर्म्मा—अनिर्हृतिः,—अनिर्वाणं, धर्म्मः,—स्वरूपं यस्य सः, सदैव प्रज्वलितस्वरूपः, ["धर्म्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच्] दहनः—अग्निः, अत्र शोके दहनतादात्म्याध्यारोपात् रूपकं, निर्वाणराहित्यञ्च दहने असम्भाव्यमपि इति अत्र तदारोपात् अधिकं वैशिष्ट्यमुपात्तं, तथा च दहनः प्रज्वलन्नेव केवलं दहति निर्वाणभूतस्तु दहनात् विरमति, शोकस्तु सदैव सन्तप्तः देहं व्यथयति न तु कदाचिदुपशाम्यतीति शोकस्य दहनादपि भीषणत्वद्योतनात् पूर्ववदलङ्कारः। शोकपक्षे तु—अनिर्हृतिः,—अस्वास्थ्यम्, उद्वेगमिति यावत् ("निर्हृतिः स्वस्थितायाञ्च गमने च सुखे स्त्रियाम्" इति मेदिनी) धर्म्मः यस्य तथाभूतः, शोकस्य सदैव सन्तापकत्वादिति भावः। अयं—शोकः अक्षयः—नास्ति क्षयः—नाशः यस्मात् तथोक्तः, क्षयरहित इत्यर्थः, राजयक्ष्मा—क्षयरोगविशेषः, तत्पक्षे तु—नास्ति क्षयो यस्य तथोक्तः, यावज्जीवस्थायी इत्यर्थः। यद्यपि क्षयराहित्यं राजयक्ष्मणि अत्यन्तमसम्भवदपि शोकस्य राजयक्ष्मणोऽपि भीषणत्वद्योतनाय अक्षयत्वरूपम् अधिकं वैशिष्ट्यमुपात्तम्, तथा च राजयक्ष्मा केवलं स्वाश्रयमेव क्षिणोति, शोकस्तु सर्वानेव सपरिजनान् युगपत् विनिहन्ति इति शोके राजयक्ष्मतादात्म्याध्यासात् पूर्ववदलङ्कारः।

(२२३) अलक्ष्मीनिवासः,—अलक्ष्म्याः,—निर्ऋतेः, "अलक्ष्मी" इति ख्यातायाः लक्ष्मीविरुद्धायाः इत्यर्थः, निवासः—आश्रयः, जनार्दनः,—विष्णुः, ["नन्दिग्रहि—" (३।१।१३४ पा०) इति ल्युः]। अत्र लक्ष्मीनिवासत्वाभावस्य जनार्दने अत्यन्तासम्-

अयम्, (३३६) अबुधसेवितो ग्रहवर्गः अयम्, अयोगसमुत्थो ज्योतिष्प्रकारः अयम्; (३३७) स्नेहात् वायुप्रकोपः, मानसात् अग्निसम्भवः, (३३८) आर्द्रभावात् रजःक्षोभः, रमात्

---

दिति बोध्यं, विनायकः,—विघ्नः ("विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" इति मेदिनी), यद्वा,—विशेषेण नयति—मारयति यः सः मारकः इत्यर्थः ।

(३३६) अबुधसेवितः,—बुधः,—सौम्यग्रहः, तेन सेवितः,—युक्तः न भवति इति तथोक्तः, बुधवर्जित इत्यर्थः, ग्रहवर्गः,—ग्रहाः—सूर्यादयः, ("ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥" इति मेदिनी) तेषां वर्गः,—समूहः । अत्रापि ग्रहवर्गे बुधविहीनत्वस्यासम्भवात् पूर्ववदलङ्कारः । शोकपक्षे तु—अबुधैः,—मूर्खैः, सेवितः—आश्रित इत्यर्थः, ग्रहाणां—व्यसनानां, वर्गः अज्ञानिनामेव शोकोदयात् इति भावः । अयोगेति ।—अयोगः,—चित्तवृत्तिनिरोधाभावः, तेन समुत्थः,—उत्पन्नः, ज्योतिष्प्रकारः,—एव ज्ञानम्, अयोगे ज्योतिषः समुदयस्या—सम्भवात् पूर्ववदलङ्कारः, अनेकार्थाभिधायित्वेन च सर्वत्र श्लेषानुप्राणितमेतद्विरोधद्वयम् । शोकपक्षे तु—अयोगेन—अननुकूलदैवेन, समुत्थः—समुद्भूतः, यद्वा,—योगे—प्रियसमागमे सति, न समुत्तिष्ठति इति अयोगसमुत्थः, ज्योतिष्प्रकारः,—अग्निस्वरूपः, दाहकतया इति भावः ।

(३३७) स्नेहात्—पुष्टिहेतुभूतस्नेहात्, वायुप्रकोपः,—क्षोभः, वातप्रशमकात् घृतादिस्नेहात् वायुप्रकोपः इति विरोधः । स्नेहात्—प्रणयात्, वायुप्रकोपः,—उन्मादरोगस्वरूपः इत्यर्थः, इति तत्परिहारः । शोकपक्षे—स्नेहात्—प्रणयजन्यत्वात्, वायुप्रकोपत्वं च स्नेहात् पुत्रकलत्रादिजन्यत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम् । एवमुत्तरत्रापि । मानसात्—तदाख्यात् देवसरसः, अग्निसम्भवः—समुद्भूताग्निस्वरूपः अग्निनिर्वापहेतुभूतात् जलात् अग्निसम्भवः इति विरोधः, मानसात्—चेतसः, अग्निसम्भवः,—अनलोत्पत्तिः, शोकस्य अन्तर्दाहकत्वात् मनःसमुद्भवत्वाच्च इति परिहारः । शोकपक्षे—मानसात्—चेतसः, अग्निसम्भवपक्षे च मानसात्—देवसरोविशेषजायमानत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम् ।

(३३८) आर्द्रभावात्—सरसत्वात्, आर्द्रीभूतस्थलादपीत्यर्थः, रजःक्षोभः —रजसां—धूलीनां, क्षोभः,—प्रसरः, धूलीप्रसरनिवारकात् जलाद्यार्द्रवस्तुनः रजःक्षोभः इति विरोधः, आर्द्रभावात्—वात्सल्यात्, रजःक्षोभः,—रजसः,—गुणविशेषस्य, क्षोभः, विजृम्भितं, शोकस्य रजोगुणकार्यत्वादस्य रजोगुणविकारस्वरूप,

कारलब्धप्रवेशप्रसरस्य प्राणतस्करस्य, (३४१) शून्यताहेतोः महाभूतग्रामघातकस्य, (३४२) सकलविग्रहक्षपणदक्षस्य दोषचक्रवर्त्तिनः, (३४३) कार्श्यश्वासप्रलापोपद्रवबहलस्य दीर्घरोगस्य, (३४४) असद्वृत्तस्य सकललोकक्षयधूमकेतोः, जीवि-

---

पत्नी च वाच्यवत् प्राज्ञकृष्णयोः ॥" "दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च" इत्युभयत्रापि मेदिनी ) ते एव अन्धकाराः, मोहाः, अज्ञानानि इति यावत्, तासु रात्रिषु ये अन्धकाराः,—तमांसि इति च ते तमः,—प्राप्तः प्रवेशप्रसरः,—अभ्यन्तरागमनावकाशः येन तथाभूतस्य, प्राणतस्करस्य—जीवनापहारिणः अन्यर्थं, प्राणविघातकचौरस्वरूपस्य इति यावत् ।

(३४१) शून्यताहेतोः,—किंकर्त्तव्यताविमूढताकारणस्य, यद्वा —शून्यता—जनाभावता, निर्जनता इत्यर्थः हेतुः,—उद्बोधकारणं यस्य तथाभूतस्य, एकाकितायां शोकहृद्धित्वादिति भावः, महेति।—महाभूतग्रामाणां महतां—प्रभूतानां, सर्वेषामिति यावत्, भूतग्रामाणां—प्राणिसमूहानां, मानवादीनामित्यर्थः, घातकः,—नाशकः तस्य, तस्करस्वरूपस्येत्यर्थः, यद्वा,—महाभूतग्रामाणां—क्षित्यादिपञ्चमहाभूतानां, घातकस्य प्रबलशोकाधीनकार्य्यभूतस्य देहस्य नाशात् कारणभूतस्य पञ्चमहाभूतस्य क्षित्यादिषु बाह्यपञ्चभूतेषु लयादिति भावः ।

(३४२) सकलेति।—सकलानां—सर्वेषां, समस्तानां वा विग्रहः—शरीराणि, विरोधाः, युद्धानि इति यावत्, ("विग्रहः कायविस्तारविभागौ ना रणेऽस्त्रियाम्" इति मेदिनी ) तेषां क्षपणे—क्षयकरणे दक्ष इव —निपुणः तस्य दोषचक्रवर्त्तिनः,—दोषाणां—कामक्रोधादिरिपूणां, चक्रे—मण्डले, वर्त्तते—मुख्यतया तिष्ठतीति तथोक्तस्य, निखिलदोषाधिराजस्वरूपस्य इति भावः ।

(३४३) कार्श्येति।—कार्श्यं—कृशता, शोकेन रोदनेन च इति भावः श्वासः,—दीर्घनिश्वासः, व्याधिविशेषश्च, प्रलापः,—अनर्थकं वचनं ("प्रलापोऽनर्थकं वचः" इत्यमरः) शोकेन बुद्धिविपर्ययात्, व्याध्यारम्भकदोषकोपाच्च इति भावः ते एव उपद्रवाः,—उत्पाताः, व्याधेरुत्तरकालजाः अन्ये व्याधयश्च ते बहलः,—पूर्णः तस्य, उपद्रवलक्षणमुक्तं वैद्यके,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमविरोधित्वात् स ह्युपद्रव उच्यते ॥" इति, दीर्घरोगस्य—दीर्घकालभोग्यरोगविशेषस्वरूपस्य, यक्ष्मादितुल्यस्येति यावत् आ देहधारणादस्यानपायित्वादिति भावः ।

(३४४) असद्वृत्तस्य—असति—असाधुविषये, निन्दनीये आचरणादौ इति,

(३४७) किमुत नवनवमालिकाकुसुमकोमलानां सरसबिस-तन्तुदुर्बलकम् अबलानां हृदयम्।

एवं सति (३४८) सत्यव्रते! वद, किमत्र क्रियते? कतम उपालभ्यते? कस्य पुर उच्चैः आक्रन्द्यते? हृदयदाहि दुःखं वा व्याप्यते? सर्वम् (३४९) अचिरेणैव निमील्य सोढव्यम् अमूढेन मर्त्यधर्मणा। पुण्यवति! पुरातन्य स्थितय एता केन शक्यन्तेऽन्यथा कर्तुम्? (३५०) संसरन्त्यो नक्तन्दिवं द्राघीयस्यः

---

(३४७) किमुत—किं पुनः, नवेति।—नवा—अभिनवमुद्गता, या नव मालिका—नवमल्लिका, पुष्पलताविशेष इत्यर्थः तस्याः कुसुमानि—पुष्पाणि इव, कोमलाः,—सुकुमाराः तासाम्। सरसेति।—सरस—आर्द्रं, यत् बिसतन्तु,—मृणालसूत्रं, तद्वत् दुर्बलकम्—अनुकम्पार्हम्, अतीव दुर्बलमित्यर्थः ["अनुकम्पायाम्" (५।३।७६ पा०) इति कन्] किञ्चिदपि पीडनासहिष्णु इति यावत्।

(३४८) सत्यव्रते।—सत्यम्—अवञ्चितमिति भावः, व्रत—चारित्रमिति भावः, यस्याः तत्सम्बुद्धौ, यद्वा,—सत्य—सत्याचरणमेव, व्रत—नियमः दीक्षा वा यस्याः तत्सम्बुद्धौ। कतम,—को जन इत्यर्थः, ["वा बहूनां जातिपरिप्रश्ने डतमच्" (५।३।९३ पा०) इति डतमच्] उपालभ्यते?—तिरस्क्रियते? आक्रन्द्यते?—रुद्यते? हृदयदाहि—मनःसन्तापकरम्। व्याप्यते—कथ्यते, ज्ञाप्यते इति यावत्।

(३४९) मर्त्यधर्मणा—मरणधर्मवता मानवेन इत्यर्थः ["धर्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच्] अमूढेन शोकातिशयेन हता इत्यर्थः शोकेन तान्यभिभूयेति यावत्, ["अमूढेन" इत्यत्र "मूढेन" इति पाठे,—मूढेन—जडेन, शोकविह्वलेनेत्यर्थः] अक्षिणी—नेत्रे, निमील्य—मुद्रयित्वा, सोढव्यं—सहनीयम्। एताः,—वक्ष्यमाणा अन्यत्रप्राप्ता इत्यर्थः, पुरातन्य —चिरन्तन्यः, अनादिकालादागच्छन्त्य इत्यर्थः, स्थितयः,—मर्यादाः अन्यथा कर्तुं—विफलीकर्तुं खण्डयितुमित्यर्थः।

(३५०) नक्तन्दिवम्—अहोरात्र, नक्तञ्च दिवा च इति विग्रहः ["अचतुर—" (५।४।७७ पा०) इति द्वन्द्वो निपात्यते] संसरन्त्य —प्रवहन्त्यः द्राघीयस्यः,—अतिदीर्घाः, अनन्ता इत्यर्थः, कदाऽपि न विच्छिन्ना भवन्तीति यावत्, प्रवाहरूपेण सदैव प्रवर्तन्ते इति तात्पर्यम्।

(३५१) जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः पञ्चजनानाम्। (३५२) पञ्चमहाभूतपञ्चकुलाधिष्ठितान्तःकरण-व्यवहारदर्शननिपुणाः सर्व्वंदृशो विषमा धर्म्मराजस्थितयः। (३५३) क्षणमपि क्षममाणा गलन्ति आयुष्काला-

---

(३५१) पञ्चजनानाम्—मानवानाम्, ("मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः॥" इत्यमरः) जन्मेति।—जन्म च—उत्पत्तिश्च, जरा च—वार्द्धक्यमित्यर्थः, मरणञ्च—मृत्युश्च, तानि तद्रूपाणीत्यर्थः, घटनानि—व्यापारा एव घटीयन्त्राणाम्—उद्घाटनानाम्, कूपात् जलोद्धरणयन्त्राणामित्यर्थः, ("उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः" इत्यमरः) राजयः—श्रेणयः, तासां रज्जवः,—गुणाः, नियतमुत्थानपरिपतनयोगात् जलोद्धरणरज्जुर्यथा यथा अतिदीर्घा भवन्ति तथा उत्पत्तिवार्द्धक्यमृत्युश्रेणयः मानवानामपि संसारः अनादिप्रवाहेण अतिदीर्घो भवतीति समुदितार्थः, अतिदीर्घाः जलोद्धरणयन्त्ररज्जवो हि यथा घटाविव जलानामुद्धरणकर्मणि व्याप्रियन्ते, तथैव जनानां जन्मादीनि राशिविन्दिव सततमेव संसरन्ति इति निष्कर्षः, अत्र श्लोक विभजीदि इति तु पङ्क्तिम्।

(३५२) पञ्चेति।—पञ्चानाम्—पञ्चसङ्ख्याकानाम्, महाभूतानाम्—क्षित्यादीनाम्, तद्विकाराणामित्यर्थः मानवानामिति भावः, पञ्चकुलानि—चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि इति यावत्, तानि अधिष्ठितम्—अध्यक्षतया स्थितम्, ["पञ्चकुलम्,—अध्यक्ष" इति केचित्, तदार्थे पञ्च महाभूतानि—महाभूतविकाराः चक्षुरादय इत्यर्थः, तान्येव पञ्चकुलम्—अध्यक्षम्, तत् अधिष्ठितम् आक्रम्य स्थितमित्यर्थः] अन्तःकरणम्—मनः तस्य व्यवहारः,—चेष्टितं तस्य दर्शने—अवलोकने, निपुणाः,—तत्पराः, सर्वं पश्यन्तीति सर्वदृशः,—सर्वसाक्षिण इत्यर्थः, कर्मानुसारेण सर्वेषामेव अपक्षपात दण्डपुरस्कारादिविधायिन इति भावः ["सर्वकुलास्वकरीषेषु कषः" (३।२।४२ पा०) इति खच्] धर्मराजस्थितयः,—अन्तकव्यापाराः विषमाः—दारुणाः, मानवाः पञ्चेन्द्रियैः यद्यदाचरन्ति, सर्वान्तर्द्रष्टा धर्मराजस्तत् सर्वमतिनिपुणभावेन सूक्ष्मं विचारयति इति निष्कर्षः।

(३५३) क्षणमिति—निमेषकालपरिमितकालमपि अल्पसमयमपीति यावत्, क्षममाणाः—सहमानाः, अपेक्षमाणा इत्यर्थः, अगणयन्त्य इति यावत् मानवानाम् आयुषाम् इयन्तो निमेषा इयन्त्य काष्ठा अतिक्रान्ता, इत्येवम् अतिसूक्ष्मकालमपि

कालनकुशला निलये निलये कालनाडिकाः। जगति (२५४) सर्व्वजन्तुजीवितोपहारघातिनी सञ्चरति झटिति चण्डिका यमाज्ञा। (२५५) रटन्ति अनवरतम् अखिलप्राणि-प्रयाणप्रकटनपटवः प्रेतपतिपटहाः। प्रतिदिशं (२५६) पर्य्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः (२५७) कालकूटकान्तिकालकायाः कालपाशपाणयः कालपुरुषाः। प्रति-

---

विचारयन्त्य इति भावः, आयुरिति।—आयुष्कालस्य—जीवितकालस्य, कलन—सङ्ख्यान, गणनाकरणसामर्थ्ये, [ "आयुष्कालाकलन—" इत्यत्र "आयुष्कालाकलन—" इति पाठे,—आयुषः कलायाः,—अंशस्य, अतिसूक्ष्मभागस्येति भावः, यद्वा,—काष्ठ-परिमाणस्य, ("कला स्यात्—मूलवृद्धौ। कलनाकालमानयोः॥" इति मेदिनी) कलन—सङ्ख्यानम्] तत्र कुशलाः,—पटवः, कालनाडिकाः,—कालस्य—धनकालस्य, नाडिकाः,—छिद्राः, घट्यन्त्राणि काष्ठ इत्यर्थः, घटिका इति यावत्, ["नाडी नालिकायाः घट्यपि" इत्यमरः। "नाडिका" इत्यत्र "नालिका" इति पाठेऽपि स एवार्थः] निलये निलये—गृहे गृहे, ["नित्यवीप्सयोः" (८।१।४ पा०) इति वीप्सया द्विर्भावः] गलन्ति—पतितगच्छन्ति।

(२५४) सर्वेति।—सर्वेषां—सकलानां, जन्तूनां—प्राणिनां, जीवितमेव—जीवनमेव, उपहारः,—उपढौकनम्, तत्र घातिनि—ग्रहणार्थं धावतीति तथाभूता, सर्व्वभूतजीवनापहरणनिरता इत्यर्थः, चण्डिका—भीषणा, कठोरा देवी च, यमाज्ञा—यमस्यादेशः।

(२५५) अखिलेति।—अखिलानां—समस्तानां, प्राणिनां—जीवानां, प्रयाण—यमभुवनमपि गमनम्, तस्य प्रकटनम्—आघोषणं, तत्र पटवः—कुशलाः, प्रेतपति-पटहाः,—प्रेतपतेः,—यमस्य, पटहाः,—वाद्यभेदाः, रटन्ति—नदन्ति, सर्व्वे प्राणिनो यमपुरं गच्छन्तीति निश्चय।

(२५६) पर्य्यटन्ति—भ्रमन्ति। पेटकैः,—समूहैः, अन्योऽन्यमेकीभूय इत्यर्थः। प्रतप्तेति।—प्रतप्तम्—अत्युष्णम्, यत् लोहम्—अयः, तद्वत् लोहिते—रक्ते, अक्षिणी—नेत्रे येषां ते।

(२५७) कालेति।—कालकूटस्य—विषस्य, कान्तिरिव कान्तिः,—द्युतिः येषां तथाविधाः, अत एव कालाः,—कृष्णवर्णाः, कायाः,—देहाः येषां तथोक्ताः, काल-

भवन भ्रमन्ति (३५८) भीषणकिङ्करकरघट्टितयमघण्टापुट-पटुटाङ्कारभयङ्कराः (३५९) सर्व्वसत्त्वसङ्घसंहरणाय घोराघातघोषणाः। दिशि दिशि (३६०) वहन्ति बहुचिताधूमधूसरितप्रेतपतिपताकापतितगृध्रदृष्टयः (३६१) शोककृतकोलाहलाकुलकुटुम्बिनीविकीर्णकेशकलापशबलशव-शिविका-सहस्रसङ्कुलाः (३६२) किलकिलायमानश्मशानशिविरशिवा-

---

पाशपाणय,—कालपाश,—यमरज्जु, पाणौ—हस्ते येषां तथाविधा, कालपुरुषा, —यमदूता इत्यथ, प्रतिपुर पटवे पर्यटन्ति इत्यन्वय ।

(३५८) भीषणेति ।—भीषणानां भयङ्कराणां, किङ्कराणां—भृत्यानां, यम दूतानामिति यावत्, करै,—हस्तै, घट्टिता,—हता, ताडिता वा, या यमघण्टा,—यमकस्य वाद्यविशेषा, तासां पुटानां—सम्पुटानां, घण्टाद्य स्वर्णसुवर्णाकारवस्तु-विशेषाणामिति यावत्, पटुभि,—उत्कटै, टाङ्कारै,—"टां टां" इत्यनुकरणध्वनि विशेषै भयङ्करा —भीषणा [भय कुर्व्वन्ति या सा इत्यर्थे करोते खच् सुम् च]।

(३५९) सर्वेति ।—सर्वषां—समस्तानां सत्त्वानां—प्राणिनां सङ्घस्य—समूहस्य, संहरण—संहार विनाश इत्यथ तस्मै, घोरेति।—घोरा,—दारुणा, आघाता,—ताडनानि, यासु तथाविधा घोषणा,—राजाज्ञाप्रचारा, प्रजाभिरेताभिरचिरत्वमेव स्थानमागन्तव्यमित्येव यमनृपतेरादेशप्रचारा इति यावत् प्रतिभवन भ्रमन्ति इत्यनेनान्वय ।

(३६०) वहन्ति—विराजन्ते इत्यथ । बह्विति ।—बहुभि,—प्रभूतै, चिताधूमै,—मृतदहनकाष्ठचुल्ल्युत्थधूम्रध्वजै, धूसरिता,—मृतकपाण्डुवर्णता. प्राप्ता, मलिनिता इत्यथ, या प्रेतपत,—यमस्य, पताका,—वैजयन्त्य, तासु पतिता,—निबद्धा इत्यर्थ, शवभक्षणलालसया इति भाव, ["—पताकापतित—" इत्यत्र "—पताका पटुपतित—" इति पाठे,—पताकासु पटु—अत्यर्थं यथा तथा, पतिता] गृध्राणां—प्रसमांसभक्षणां, दृष्टय,—नयनानि यासु तथोक्ता ।

(३६१) शोकेति ।—शोकेन—शुचा, कृत,—विहित, य कोलाहल,—कलकलरव तेन आकुलानां—व्याकुलानां, कुटुम्बिनीनां—कुलाङ्गनानां, पुरन्ध्रीणां वा, ("स्यात् तु कुटुम्बिनी पुरन्ध्री" इत्यमर) विकीर्णै,—विक्षिप्तै, केशकलापै,—कुन्तलसमूहै, शबला —विविधवर्णा, या शवानां—मृतानां, शिविका, —यानविशेषा तासां सहस्रै,—समूहैरित्यर्थ, सङ्कुला,—आकीर्णा ।

(३६२) किलेति ।—किलकिलायमाना,—घनसान्द्रविस्तृतया भ्रमन्त, किल-

शावकाः (३६३) परलोकावसथपथिकसार्थप्रस्थानविशिखा-वीथयः। (३६४) सकललोककवलनावलेहनलम्पटा बहला वहंलिहा (३६५) लेढि लोहिताचिता चिताङ्गारकाली कालरात्रिजिह्वा जीवितानि जीविनाम्। (३६६) तृप्ति-मप्रिचिता च भगवतः सर्व्वभूतभुजो बुभुक्षा मृत्योः।

---

किमिति सशब्दं शब्दं कुर्वाणा वा इत्यर्थः [ किलकिला इव आचरन्ति इत्यर्थे "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा० इति क्यङि आनचि च रूपम् ] श्मशानमिश्रितस्य —पितृवनमण्डपस्य प्रेतावासस्य इत्यर्थः ("श्मशानं स्यात् पितृवनम्" इत्यमरः) यद्वा,—श्मशानमिव शिविरं येषां तादृशाः, शिवाशावकाः,—शृगालशिशवः यासु तथाविधा, मृतदेहभक्षणाशया इति भावः।

(३६३) परलोकेति।—परलोक एव—लोकान्तरमेव [ आवसति अत्र इत्यर्थे वसते भ्यच ] आवसथ,—वसतिस्थानम् आलय इत्यर्थः, तस्य ये पथिकसार्था,—पान्थनिवहा, तेषां प्रस्थानस्य—प्रयाणस्य विशिखावीथय,—रथ्याश्रेणय, पुराभ्यन्तरस्थाः प्रशस्तमार्गसमूहा इत्यर्थः, ("रथ्या प्रतोली विशिखा" "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्युभयत्राप्यमरः) दिशि दिशि वहन्ति इत्यनेनान्वयः।

(३६४) सकलेति।—सकलानां—सर्वेषां, लोकानामेव—प्राणिनामेव, कवलानां—ग्रासानाम्, अवलेहः —आस्वादः तत्र लम्पटा—लुब्धा। बहला—दीर्घा। वहंलिहा—छिद्रान्वेषिणी, यद्वा,—वह—स्कन्धः "वह स्यात् वृषभस्कन्धे वाहे गन्धवहेऽपि च" इति मेदिनीवचनात् वृषस्कन्धवाचकस्य वहशब्दस्यात्र सामान्यतः स्कन्धार्थे एव प्रयोगो बोद्धव्य, लेढि—आस्वादयति, स्कन्धशोणितं पिबतीति भाव या सा, स्कन्धं मोटयित्वा रक्तपायिनीत्यर्थ, यद्वा,—वह—गन्धवह, प्राणवायुमिति भाव, लेढि या सा, प्राणघातिनीत्यर्थ, [ "वहाभ्रे लिहः" (३।२।३२ पा०) इति खश् ]।

(३६५) लेढि—आस्वादयति। लोहिताचिता—रक्तव्याप्ता, जीवानां रक्त-पानादिति भाव, चिताङ्गारकाली—चिताङ्गारवत—शवदाहचुल्लिस्थाग्निरहिताङ्गारवत्, काली—कृष्णवर्णा कालरात्रिजिह्वा—कालरात्रे,—यमभगिन्या, सर्वभूत-प्राणापहारिण्याः मृत्युदेव्या वा, कल्पान्तरात्रेर्वा, जिह्वा—रसना।

(३६६) सर्वभूतभुज,—सर्वप्राणिभक्षकस्य, मृत्यो,—यमस्य ("मृत्युर्ना मरणे यमे" इति मेदिनी) बुभुक्षा—क्षुधा, तृप्ति—सन्तोषम्, अप्रिचिता—न प्रिचिता,

(३६७) अतिद्रुतवाहिनी च अनित्यतानदी। (३६८) क्षणिकाश्च महाभूतग्रामगोष्ठाः। (३६९) रात्रिषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनाम्। (३७०) अशुभशुभाविष्टविवशा विशरारवः शरीरनिर्माणपरमाणवः। (३७१) छिद्वरा जीवबन्धनपाशतन्त्रीतन्तवः। सर्व्वमात्मनोऽनीश्वरं विश्वं नश्वरम्।

---

शिवामप्रासा, अनिशानाभावात् इत्यर्थः, [ शिवते क्षयस्य औणादिकस्य कर्त्तरि निष्ठायां रूपम् ])। बहुभोजनेनापि यस्या वितृष्णा न जायते इति भावः।

(३६७) अनित्यतानदी—अनित्यता—क्षयशीलता एव, नदी—सरित्, अतिद्रुतेति।—अतिद्रुतम्—अतिशीघ्रं, वहति—गच्छतीति तथोक्ता, अनित्यमिदं जीवनं द्रुतमेव क्षयतीत्यर्थः।

(३६८) महेति।—महाभूतानां—क्षित्यादीनां पञ्चानां ग्रामस्य—समूहस्य, गोष्ठाः,—समाजाः, सभा इत्यर्थः, पञ्चमहाभूतात्मका जीवसङ्घा इति यावत्, क्षणिकाः,—क्षणस्थायिनः।

(३६९) गात्रेति।—गात्र—शरीरमेव [ "गात्र—" इत्यत्र "पात्र—" इति पाठे,—पात्रम्—आधारः, जीवस्येति शेषः, शरीरमित्यर्थः, तदेव ] यन्त्र—नियमकारि वस्तुविशेषः, तस्य पञ्जरा,—अस्थीनि एव, दारूणि—काष्ठानि, रात्रिषु—रजनीषु प्रतिरात्रि इत्यर्थः, भङ्गुराणि—भङ्गप्रवणानि, प्रतिनिशान्ते आयुष्कालस्य एकैकदिनक्षयादिति भावः।

(३७०) अशुभेति।—अशुभानां—दुष्कृतानां शुभानाञ्च—सुकृतानाञ्च, आवेशेन—अधिष्ठानेन विवशाः,—परायत्ताः, सुकृतदुष्कृतकर्म्मानुसारेण शुभाशुभफलभोगिनः न तु स्वेच्छया शुभमशुभं वा जीवाः समर्था इति भावः, पुण्याऽभावेऽपि पश्वादियोनिषु गमनादिति तात्पर्य्यं, शरीरनिर्माणपरमाणवः,—देहघटकद्व्यणुकारम्भकपदार्थविशेषाः, विशरारवः—वि—विशेषेण शरारवः,—परस्परमुपघातकाः, परस्परोपघातेन विश्लेषात् चिरस्थायिन इत्यर्थः, ("शरारुर्घातुको हिंस्रः" इत्यमरः) स्वजन्ये देहे नष्टेऽपि परमाणूनामविनाशित्वादिति भावः, [ "शॄवन्द्योरारुः" (३।२।१७३ पा०) इति विपूर्व्वकात् शॄणाते आरुः ]।

(३७१) जीवेति।—जीवानां—प्राणिनां, बन्धनस्य—संसारबन्धनस्य, पाशानां—रज्जूनां, तन्त्रीतन्तवः,—तन्त्रीरूपाणि सूत्राणि, यद्वा,—जीवानां बन्धनाय

एवम् (३७२) अवष्टभ्य नात्मानम् एवं अर्हसि मेधाविनि। मृदुनि मनसि तमसः प्रसरं दातुम्। एको हि (३७३) प्रतिसङ्ख्यानक्षणे आधारीभवति धृतेः। अपि च दूरगतेऽपि हि शोके ननु इदानीम् अपेक्षणीय एव अयं ज्येष्ठः पितृकल्पो भ्राता

---

—संसारकारायां सम्प्रनाय, पाशा,—मृगपक्ष्यादिबन्धनाय वागुरा इत्यर्थः, ("पाशः केशादिपूर्वे स्यात् तस्माहे कर्णपूर्वकः। सुकर्णे च खासामध्यात्मृगपक्ष्यादिबन्धने॥" इति मेदिनी) तेषां सन्नीतत्वम्. छिदुरा,—विच्छेदप्रवणा, ["विदिभिदिच्छिदेः कुरच्" (३।२।१६२ पा०) इति कुरच्]। आत्मन,—स्वस्य, अनीश्वरम—असाधारणम, नास्ति ईश्वरो यस्मिन् तत्, ईश्वरभिन्नमित्यर्थः, केवलमीश्वरस्यैव नियन्तृत्वेन तस्यादन्यस्य सर्वस्यैव क्षयित्वादित्यपि व्यज्यते, सर्वं—कृत्स्नं, विश्वं—जगत्, विश्वस्य वस्तुजातमिति यावत्, नश्वरं—नाशप्रवणम्, अभवत् सर्वमेव असदभूत्, तेषां स्थायित्व-सम्पादने स्वस्य कस्यापि सामर्थ्यं नासीदित्याशयः।

(३७२) अवष्टभ्य—निरुध्य।—अर्हसि—योग्या भवसि। मेधाविनि! इति राज्यश्रिया आमन्त्रणम्, धारणावद्बुद्धिशालिनि इत्यर्थः, ["अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति मेधाया मत्वर्थे विनिः, ततः ङीप्]। मृदुनि—कोमले, दुःखसहनासहे इति यावत्। ["मनसि" इत्यत्र आधारस्यैव बाध्यत्वात् न चतुर्थी]। तमसः,—मोहस्य, प्रसरं—विसर्पणं विस्तारमित्यर्थः, अवकाशमिति यावत्।

(३७३) प्रतिसङ्ख्यानक्षणे इति।—प्रतिसङ्ख्यानं—विवेककुशला मतिः तस्य क्षणः,—समयः, तदाविर्भावकाल इत्यर्थः, धृतेः,—धैर्यस्य, आधारीभवति—आश्रयतामापद्यते [अनाधार आधारः सम्पद्यमानो भवतीत्यभूततद्भावार्थे "कृभ्वस्ति-योगे—" (५।४।५० पा०) इति च्वि] विवेकिनी बुद्धिरेव धैर्ये विश्वस्तु कारणं इति भावः, सर्वमेवेदमनित्यमिति विवेकिन्या बुद्ध्या आकलय्य स्वयमेव धैर्यमव-लम्बस्व, नाधीरा भव इति अकूताशयः। दूरगते—दूरम—अतिशयं गत — प्राप्ते, आरूढ इत्यर्थः तस्मिन् अतिवर्द्धितेऽपीति यावत्। नन्विति सम्बोधने भो! इत्यर्थः। इदानीम्—ईदृश्यां दशायामित्यर्थः, वैधव्यदशायामिति यावत् पित्रादेरभावे, भ्रातुः परिरक्षणादन्यो लोकाभावाच्च इति वा भावः। अपेक्षणीय—अनु सरणीय इत्यर्थः, नारीणां स्वातन्त्र्याभावादिति भावः, यद्वा,—अपेक्षणीय —द्रष्टव्य, एतादृशस्य भ्रातुर्मुखं प्रति दृष्टिपातः कर्तव्य इति भावः। पितृकल्प,—पितृसदृशः; ["ईषदसमाप्तौ—" (५।३।६७ पा०) इति ईषदूनार्थे कल्पप्]।

भवत्या गुरुः। (२७४) इतरथा को न बहु मन्येत कल्याणरूपम् ईदृशं सद्वृत्तम् आर्यभवत्याः काषायग्रहणकृतम्? (२७५) अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या। ज्यायः खलु इदं पदम् आत्मवताम्। (२७६) महाभागस्तु भिनत्ति मनोरथम् अधुना। यत् अयम् आदिशति, तदेव अनुष्ठेयम्। (२७७) यदि भ्राता इति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवान् इति, यदि राजा इति, सर्व्वथा स्थातव्यम् अस्य नियोगे" इति उक्त्वा (२७८) व्यरंसीत्।

(२७९) उपरतवचसि च तस्मिन् निजगाद नरपतिः,—

---

(२७४) इतरथा—अन्यथा, नो चेदित्यर्थः, आर्यभवत्याः,—मान्यायाः, ईदृशं—काषायग्रहणरूपमित्यर्थः, कल्याणरूपं—मङ्गलरूपं, श्रेयोभूयिष्ठमित्यर्थः, सद्वृत्तम्—अभिप्रायं को न बहु मन्येत?—आद्रियेत?।

(२७५) भगवती—सर्वशक्तिमती, प्रव्रज्या—सन्न्यासधर्मः, अखिलेति।—अखिलस्य—समग्रस्य मनोज्वरस्य—मनःपीडायाः, प्रशमनम्—अपनयनं, तस्य कारणं—हेतुः। आत्मवताम्—मनस्विनाम्, इदं पदं—काषायग्रहणमित्यर्थः ज्यायः,—श्रेष्ठमित्यर्थः, ["ज्य च" (५।३।६१ पा०) इति ईयसुनि प्रशस्यस्य ज्यादेशः, "ज्यादादीयसः" (६।४।१६० पा०) इति ज्यादुत्तरस्य ईयसुन आकारादेशश्च]।

(२७६) महाभागः—श्रीमान् हर्षः मनोरथं—सङ्कल्पं, भिनत्ति—खण्डयति, विफलीकरोतीत्यर्थः आतुरे भ्रातरि विलोक्य सङ्कल्पोऽयमिदानीं परित्याज्य इति भावः। अनुष्ठेयं—कर्त्तव्यम्।

(२७७) यदि भ्रातेत्यादि।—यदि भ्राता, अत एव अयं मान्य इति शेषः, इति, मन्यसे इति शेषः, एवं ज्येष्ठादिष्वपि योजनीयम्। वत्सलः,—स्निग्धः, मयि स्नेहपरायण इत्यर्थः, ["वत्सांसाभ्यां कामबले" (५।२।९८ पा०) इति लच्]। तदा सर्व्वथा—सर्वैः प्रकारैः, अस्य नियोगे—आज्ञायां, स्थातव्यं—वर्त्तितव्यम्।

(२७८) व्यरंसीत्—विरराम, ["व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्]।

(२७९) तस्मिन्—दिवाकरमित्रे, ["यस्य च भावेन—" (२।३।३७ पा०) इति सप्तमी] उपरतवचसि—निवृत्तवाक्ये, नरपतिः,—हर्षः, निजगाद—उवाच।

"आर्य्यम् अपहाय कोऽन्य एवम् अभिदध्यात्? अनभ्यर्थितदैव-निर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य। (३८०) स्नेहार्द्रमूर्त्तयो मोहान्धकारध्वंसिनश्च धर्म्मप्रदीपाः; किन्तु (३८१) प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथम् अतिप्रीतिः अभिलषति। (३८२) धीरस्यापि धार्ष्ट्यम् आरोपयति (३८३) हृदयलघिमलङ्घितम् अतिवल्लभत्वम्।

अपहाय—त्यक्त्वा, आर्य्ये विनेत्यर्थः। अभिदध्यात्—कथयेत्। अनभ्यर्थितेति।—अनभ्यर्थिता,—न अभ्यर्थिता,—न याचिता, अथ च दैवेन—विधिना, अनुकूलेनेति भावः, यद्वा,—अनभ्यर्थितम्—अप्रार्थितं, यत् दैवं—सौभाग्यमित्यर्थः, अयाचितत्वे सौभगतम् इति भावः तेन निर्म्मिता—सृष्टा, प्रयोदिता इत्यर्थः, विषमेति।—विषमा—दारुणा, विपत्—विपत्तिः, तत्र अवलम्बनस्तम्भाः,—आश्रयस्थानानीत्यर्थः, अयाच्य-माना अपि भवन्तः कल्याणिनश्च विपन्नानामप्रार्थितसौभाग्यबलेनैव अकस्मादागत्य विपदस्त्रायन्ते इति सरलार्थः।

(३८०) स्नेहेति।—स्नेहेन—प्रीत्या, तैलादिना च, आर्द्रा—सरसा, सिक्ता च, मूर्त्तिः,—आकारः येषां तथोक्ताः, मोहेति।—मोह,—अज्ञानता एव, अन्धकारः—तिमिरम्, आवरकस्वभावादिति भावः, तस्य ध्वंसिनः,—नाशिनः, उपदेशप्रदानेन आलोकदानेन च इति भावः, धर्म्मप्रदीपाः,—धर्म्ममयाः दीपाः, धर्म्माश्रिताः सर्व्वभूतेष्वेव दयापराः सदुपदेशप्रदायकाश्चेत्यर्थः।

(३८१) प्रणयेति।—प्रणयस्य—स्नेहस्य, प्रदानेन—अर्पणेन प्रदर्शनेनेति यावत्, दुर्ललिता—जनितधार्ष्ट्यस्य अतिप्रीतिः,—अतिप्रणयः, दुर्लभमपि—दुष्प्रापमपि, मनोरथम्—अभिप्रेतम्, अभिलषति—आकाङ्क्षति।

(३८२) धीरस्य—प्रधानस्य, गम्भीरस्य इत्यर्थो वा, धार्ष्ट्यम्—उद्धतत्वं, प्रागल्भ्यमित्यर्थो वा, आरोपयति—जनयति, [ आङ्पूर्व्वकात् रोहते णिचि लटि रूपम् "रुहः पोऽन्यतरस्याम्" (७।३।४३ पा॰) इति हकारस्य पः ]।

(३८३) हृदयेति।—हृदयस्य—चेतसः, लघिम्ना—लघुत्वेन, चापल्येनेत्यर्थः, लङ्घितम्—अतिक्रान्तम्, अतिभूमिं गतमित्यर्थः, दुर्व्वलचेतस्तया अहमेवास्य अतिप्रियान् इति निश्चयादतिप्रकर्षमिति भावः, यद्वा—हृदयस्य लघिमा—लघुत्वं, सङ्कोच इत्यर्थः, लङ्घितः,—अतिक्रमितः, दूरीकृत इत्यर्थः, वात्सल्यवतः समीपे कोऽपि सङ्कोचः न कर्त्तव्य इति धियेति भावः येन तत्, अतिवल्लभत्वम्—अतिप्रियत्वम्, अतिप्रियत्वज्ञानमित्यर्थः।

(३८४) युक्तायुक्तविचारशून्यत्वाच्च शालीनम् अपि क्षिपयन्ति स्वार्थतृष्णाः प्रागल्भ्याम्। (३८५) अभ्यर्थनायां रत्नानि च जलनिधय इव मर्य्यादाम् आर्य्याः। इत्थमेव च (३८६) शरीरमिदम् अनभ्यर्थितेन प्रथममेव आतिथ्याय माननीयेन भवता मह्यम्। अतः किञ्चित् अर्थये भदन्तम्,—इयं नः स्वसा बाला च (३८७) बहुदुःखखेदिता च सर्व्वकार्य्यावधीरणोपरोधेनापि यावत् लालनीया नित्यम्। अस्माभिश्च (३८८) भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैः भूत्वा सकललोकप्रत्यक्षं

---

(३८४) स्वार्थतृष्णा —स्वकार्य्यसिद्ध्यभिलाषा, युक्तेति।—युक्तायुक्तयोः,—कार्य्याकार्य्ययोः, विचारे—वितर्के, शून्य,—अक्षम, तस्य भाव तत्त्वात्, शालीनम् —अधृष्टं धीरमित्यर्थं, विनीतमिति यावत्, जनमिति शेष, ("स्यादधृष्टे तु शालीन" इत्यमर) प्रागल्भ्यम्—धौद्धत्य धृष्टतामित्यर्थं।

(३८५) अभ्यर्थनायां —प्रार्थनायां मर्य्यादामित्यनेन सम्बन्धः। ["अभ्यर्थनायाः" इति क्वचित् पञ्चमी वा]। दर्शन्ति—पालयन्ति, शीलहयन्ति इत्यर्थ, जलनिधय —सागरा। मर्य्यादा—सीमा, वेलाश्च।

(३८६) इद—दृश्यमान, भवदीयमित्यर्थं। अनभ्यर्थितेन—अयाचितेन। आतिथ्याय—अतिथिसत्काराय, अतिथये वा, ("स्यादातिथ्यमतिथ्यर्थे त्रिलिङ्गमतिथौ पुमान" इति मेदिनी) अत —स्वशरीरस्यार्पणात्, भदन्तं—बौद्धाचार्य्यं त्वामित्यर्थं, अर्थये—याचे।

(३८७) बहुदुःखखेदिता—प्रबलाऽधिक्लिष्टा। सर्वकार्य्येति।—सर्वेषां—सकलाना, कार्य्याणा—कर्म्मणाम्, अवधीरणम—अवहेलनमेव उपरोध,—बाधा तेन, यद्वा,—सर्वकार्य्यावधीरणे—निखिलकर्म्मपरित्यागे, य उपरोध,—अनुरोध सर्वकार्य्यत्यागे सहित्वाऽपीत्यर्थं, यावत् लालनीया—यत्नेन पालनीया एव, ("यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमर)।

(३८८) भ्रात्रवधेति।—भ्रातु,—राज्यवर्द्धनस्य वधेन—हननेन, अपकारिण,—द्रोहिण, ये रिपव,—शत्रव, तेषां कुलस्य—वंशस्य प्रलयकरणे—विध्वंसने, तत्र उद्यत —प्रवृत्त तस्य, बाहो —भुजस्य, विधेयै,—वशवर्त्तिभि अधीनैरित्यर्थ, भुजबलगर्व एव भ्रातृघातिनां शत्रूणां समूलमुन्मूलनाय मामादिशतीत्यर्थं।

प्रतिज्ञा कृता। (३८९) पूर्वयाऽवमाननयाऽभिभवम् असहमानैः अर्पित आत्मा कोपस्य। अतः (३९०) नियुङ्क्ष्वां कियन्तमपि कालम् आत्मानम् आर्योऽपि कार्ये मदीये। दीयताम् (३९१) अतिथये शरीरम् इदम्। अद्य प्रभृति यावदयं जनः (३९२) लघयति प्रतिज्ञाभारम्, आश्वासयति च तातविनाशदुःखविक्लवाः प्रजाः, तावत् इमाम् अत्रभवतः कथाभिश्च धर्म्याभिः, (३९३) कुशलप्रतिबोधविधायिभिः उपदेशैश्च अरजोभिः, (३९४) शीलोपशमदायिनीभिश्च देशनाभिः,

(३८९) पूर्वेति।—पूर्वया—प्रथमया, अप्राप्तपूर्वयेति भावः मुख्यया वा, अवमाननया—अवज्ञया, मात्सर्यधर्षणया इति भावः, यः अभिभवः,—तिरस्कारः तम्, असहमानैः,—असहमानैः, सोढुमशक्नुवानैरित्यर्थः, कोपस्य—क्रोधस्य, आत्मा—मनः, धैर्यं वा, ("आत्मा यत्ने स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी) अर्पितः,—दत्तः, कोपाकुलोऽभवमिति भावः।

(३९०) आत्मानम्—शरीरम्, मदीये कार्ये—मम हितकर्मणीत्यर्थः, नियुङ्क्ष्वां—नियुक्तं करोतु ["स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्त्तिकात् युजेरात्मनेपदम्] यथा मम सुमङ्गलं स्यात्, तथा भवता चरितव्यमिति भावः।

(३९१) अतिथये—गृहागताय, मह्यमिति शेषः।

(३९२) लघयति—लघूकरोति, अवतारयतीति यावत्, प्रतिज्ञां निस्तरतीति भावः। तातेति।—तातस्य—"पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति वचनात् ज्येष्ठस्येत्यर्थः, विनाशेन—अपायगमनेनेत्यर्थः, यत् दुःखं—मनःपीडा, तेन विक्लवाः,—विह्वलाः, आर्त्ता इत्यर्थः, प्रजाः,—प्रकृतीः, आश्वासयति—सान्त्वयति। इमाम्—मत्सहोदराम् अत्रभवतः,—पूज्यस्य ते, धर्म्याभिः,—धर्मादनपेताभिः, धर्मोपदेशसमन्विताभिरित्यर्थः ["धर्मपथ्यर्थ—" (४।४।९२ पा०) इति यत्]।

(३९३) कुशलेति।—कुशलानां—मङ्गलानां, प्रतिबोधः,—विज्ञानं, तं विदधति—जनयन्तीति तथोक्तैः, शोकविनाशदैरित्यर्थः, अरजोभिः,—रजोगुणवर्जितैः, सत्त्वोद्रेककरैः इति भावः।

(३९४) शीलोपशमदायिनीभिः,—शीलस्य—स्वभावस्य, सर्वदा शोकदुःखमग्नस्येति भावः, उपशमदायिनीभिः,—प्रशमकारिणीभिः, मनसः शान्तिजननीभिरित्यर्थः, देशनाभिः,—कथाभिः, शिक्षाभिरित्यर्थः।

(३९५) क्लेशप्रहाणहेतुभूतैश्च तथागतैः दर्शनैः, (३९६) अस्मत्पार्श्वोपयायिनीमिव प्रतिबोध्यमानाम् इच्छामि। इयन्तु ग्रहीष्यति मयैव (३९७) समं समाप्तकृत्येन काषायाणि। अर्थिजने च किमिव न अतिसृजन्ति महान्तः? (३९८) सुरनाथम् आत्मास्थिभिः अपि यावत् कृतार्थम् अकरोत् धैर्य्योदधिः दधीचः। (३९९) मुनिनाथोऽपि अनपेक्षितात्मस्थितिः

---

(३९५) क्लेशेति।—क्लेशस्य—संसारसन्तापस्य, प्रहाण—क्षय, तस्य हेतुभूतानि—कारणरूपाणि तैः, शान्तिप्रदैरित्यर्थः, तथागतैः,—तादृशैः, दर्शनैः—ज्ञानैः, दृष्टान्तैर्वा, यद्वा,—तथागत—बुद्ध, ("सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः) तस्य इव तथागतैः, बुद्धसम्बन्धिभिरित्यर्थः, दर्शनैः,—शास्त्रैः, बौद्धशास्त्रप्रबोधप्रदैः उपदेशवचनैरित्यर्थः, ("दर्शनं नयनस्वप्नबुद्धिधर्म्मोपलब्धिषु। शास्त्रदर्पणयोश्च" इति मेदिनी)।

(३९६) अस्मदिति।—अस्माकं पार्श्वं—समीपम्, उपयाति—उपगच्छति, तिष्ठतीत्यर्थः तथोक्ताम्, अस्मत्पार्श्ववर्त्तिनीं प्रतिबोध्यमानाम्—उपदिश्यमानाम् अस्मत्पार्श्वस्थितमेवात्मानं यथा बुध्यते तथा क्रियमाणाम् इत्यर्थः यावदहं रिपुकुलोन्मूलनाय प्रजारक्षणाय च व्यापृतस्तिष्ठामि तावन्मदीयभगिनीमिमां स्वपार्श्वमवस्थाप्य तथा प्रतिबोध्यतां, यथेयं मददर्शनात् न अधीरीभवति, परन्तु अस्मत्समीपवर्त्तिनीमिव, आत्मानं मन्यते इति भावः।

(३९७) समं—सह। समाप्तकृत्येन—कार्य्यं समाप्तवता, शत्रुविनाशरूपं प्रजारक्षणरूपञ्च कार्य्यं समाप्येत्यर्थः। अर्थिजने—याचकजने। अतिसृजन्ति—ददति।

(३९८) धैर्य्योदधिः,—धैर्य्यसागरः, दधीचः,—तदाख्यमुनिः, आत्मास्थिभिः,—आत्मनः,—स्वस्य, अस्थिभिः,—कङ्कालैः, सुरनाथम्—इन्द्रं, यावत्—अवधारणे, साकल्ये वा, कृतार्थं—सिद्धमनोरथं, सम्पूर्णरूपेण कृतकृत्यमित्यर्थः। असौ हि दधीचपरनामा मुनिः वृत्रासुरवधोद्यताय इन्द्राय वज्रनिर्म्माणार्थं स्वदेहस्यास्थीनि सम्प्रददात्, वज्ररूपैः तैरसौ [illegible] निजघानेति पौराणिकी वार्त्ताऽत्रानुसन्धेया।

(३९९) मुनिनाथः,—मुनीन्द्रः, सुगत इति यावत्, ("सर्वज्ञः सुगतो, बुद्धः ०। मुनीन्द्रः श्रीघनः शास्ता" इत्यमरः) अनपेक्षितेति।—न अपेक्षिता—न विरचिता, आत्मनः,—स्वशरीरस्य, स्थितिः,—रक्षणं येन तथाभूतः, स्वशरीररक्षा-

अनुकम्पा इति ज्ञात्वा कृपावान् आत्मानं (४००) वठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान्? अतः परं भवन्त एव बहुतरं जानन्ति" इत्युक्त्वा तूष्णीम्बभूव भूपतिः।

भूयस्तु बभाषे भदन्तः,—(४०१) "भव्या न द्विः उच्चारयन्ति वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणाः कायबलिम् इमाम् अमुना जनेन। (४०२) उपयोगस्तु निरुपयोगस्य अस्य लघुनि गुरुणि वा कृत्ये गुणवदायत्त." इति।

---

अनपेक्षमाण इत्यर्थं, अनुकम्पा—दया, इति ज्ञात्वा—इति मत्वा, अनुकम्पार्ह इति विविच्येत्यर्थ।

(४००) वठरसत्त्वेभ्य,—जडप्राणिभ्य, सिंहादिभ्य इति भाव, कतिकृत्व,—कतिवारान्, ["संख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति कृत्वसुच्] श्रूयते हि पुरा कामपि सिंहीं सद्य प्रसूतां बुभुक्षया स्वशावकान् भक्षयितु प्रवृत्तां दृष्ट्वा बुद्धदेव करुणापरवशात् तस्यै स्वमांसप्रदानेन तान् शावकान् परररक्षदिति। बहुतर—प्रचुर, मदुक्ताख्यानाख्यानमन्यविधम् अपि च स्वदेहदानरूपमुदाहरणमित्यर्थ।

(४०१) भव्या,—साधव। द्वि,—द्विवार, द्विप्रकार वा, ["द्वित्रिचतुर्भ्यः सुच्" (५।४।१८ पा०) इति सुच्]। अमुना जनेन—अनेन लोकेन, मयेति भाव, प्रथममेव—दर्शनक्षण एवेत्यर्थ, गुणा,—धैर्यौदार्यादय इत्यर्थ, भवदीया इति भाव, इमा—परिदृश्यमाना मदीयामित्यर्थ, कायबलि—शरीररूपमुपहार, ["बलि, पूजोपहारयो" इत्यमर। "करोपहारयो पुंसि बलि प्राण्यङ्गजे स्त्रियाम्" इत्यमरोक्तेः अत्र उपहारार्थकबलिशब्दस्य स्त्रीलिङ्गत्व चिन्तनीय, तेन "इमाम्" इत्यत्र "इमम्" इति पाठ समीचीन] प्रतिग्राहिता,—कृतप्रतिग्रहा कृता, प्रतिग्रह कारिता इत्यर्थं, स्वीकरणमापादिता इति यावत्, ("प्रतिग्रह स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे" इति मेदिनी) अहं भवद्भ्य शरीरमिदमुपहारीकृतवान् इति निष्कर्ष।

(४०२) निरुपयोगस्य—निष्प्रयोजनस्य, परस्मादुपयोगमनपेक्षमाणस्येति भाव, अस्य, भवत इति शेष, उपयोग,—उपकार, गुणवत्—सम्यक् इत्यर्थं, आयत्त,—अधीन, अहं यावच्छक्यमनेन कायेन भवत उपकार विधास्यामीति तात्पर्यम्, यद्वा,—निरुपयोगस्य—केनापि सत्कृत्ये अनुपयोगितया व्यर्थीभूतस्य इति भाव,

अथ (४०३) तथा तस्मिन् अभिनन्दितप्रणये प्रीयमाणः पार्थिवः तत्र ताम् उषित्वा विभावरीम् (४०४) उषसि वसनालङ्कारादिप्रदानपरितोषितं विसर्ज्य निर्घातम् (४०५) आचार्येण सह ससारम् आदाय प्रयाणकैः कतिपयैः एव कटकम् अनुजाह्नवि निविष्टं प्रत्याजगाम।

तत्र च (४०६) राज्यश्रीप्राप्तिव्यतिकरकथां कथयन् एव

---

अस्य—मम, मदीयकायस्य इत्यर्थः, लघुनि—स्वल्पायाससाध्ये इत्यर्थः, गुरुणि—प्रचुरायाससाध्ये इत्यर्थः, कृत्ये—कार्ये, उपयोग,—व्यवहार, नियोग इत्यर्थः, गुणवदायत्त,—गुणवत,—गुणिन भवत, आयत्त,—अधीन, मया पूर्वमेव शरीरमिदं भवद्भ्योऽस्य उपकारीकृतम्, अतः शरीरेऽस्मिन् गुणिनो भवत एव पूर्णाधिकार, अधुना लघुनि गुरुणि वा यस्मिन् एव कार्ये इदं नियोजयसि, तदेवाखण्डविचारितं करिष्यामीति निष्कर्षः।

(४०३) तस्मिन्—दिवाकरमित्रे, तथा—तादृश्यप्रकारेणेत्यर्थः, अभिनन्दितप्रणये—अभिनन्दित,—आदर समर्थित इत्यर्थः, प्रणय—याच्ञा येन तस्मिन् ("प्रणयः प्रश्रये प्रेम्णि याच्ञाविश्रम्भयोरपि" इति मेदिनी) आदरेण गृहीताभ्यर्थने इति इत्यर्थः, प्रीयमाण,—तुष्यन्, ["प्रीयते" इत्यस्य शानौ दैवादिकस्य शानचि रूपम्]। विभावरीं—रजनीम् ["अकर्मकधातुभिर्योगे देशः कालः—" इति वार्त्तिकात् कालवाचकस्य कर्मत्वम्] उषित्वा—वासित्वा, अवस्थाय इत्यर्थः।

(४०४) उषसि—प्रभाते, वसनेति।—वसनानि—वस्त्राणि, अलङ्काराश्च—आभरणानि च, आदयो येषां तानि, वसनालङ्कारादीनि, तेषां प्रदानेन—अर्पणेन, परितोषित,—प्रीणित तं, निर्घात—प्रागुक्त शबरयुवान, विसर्ज्य—परित्यज्य, स्वस्थान गमयित्वेत्यर्थः।

(४०५) आचार्येण—श्रमणगुरुणा दिवाकरमित्रेण। कतिपयैः,—स्वल्पैः, प्रयाणकैः,—यानाभि, स्वल्पैरेव दिनैः स्वल्पैरेव समयैर्वा इत्यर्थः, अनुजाह्नवि—जाह्नवी—गङ्गा, तस्या अनु—तटसमीपे इत्यर्थः, ["अनुर्यत्समया" (२।१।१५ पा०) इत्यव्ययीभाव, "अव्ययीभावश्च" (२।४।१८ पा०) इति नपुंसकत्वञ्च] निविष्ट—स्थित, कटक——शिबिरम्।

(४०६) राज्येति।—राज्यश्रिया,—तदाख्या हर्षभगिन्या, प्राप्ति—लाभ, व्यतिकर,—व्यतिकर:, अर्थात्सम्मेलनमित्यर्थः, यद्वा,—व्यतिकर,—व्यसन,

प्रणयिन्यो रविरपि ततार गगनतलम्। (४०७) बहलमधुपङ्कपिङ्गलः पङ्कजाकर इव सञ्चुकोच चक्रवाकवल्लभो वासरः। (४०८) प्रकीर्णानि नवरुधिररसारुणवर्णानि लोकालोकजुंषि (४०९) यजूंषि इव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि

राज्यधीसङ्गाला विरचिरित्यर्थः, ("अथ व्यतिकर पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी) तयो कथा—वार्ता, प्रणयिन्य,—सुहृद्रः, ["क्रियया यमभिप्रैति—" (पा०) इति चतुर्थी] कथयन्—वदिन्, ["लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति हेतौ शतृ। "कथयन्" इत्यत्र "कथयत" इति पाठे—कथयतां इवंसनाद्वनेत्यर्थः, "षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी] ततार—अलङ्घयत्, अस्ताचलमगमदित्यर्थः।

(४०७) बहलेति।—बहलेन—प्रभूतेन, मधुना—मकरन्दधारा, पङ्केन—इवेत इत्यर्थः, पिङ्गल,—कपिल, वासरोऽपि परिणतिकाले पिङ्गलवर्णो भवति, पङ्कजाकर इव—पद्माकर इव, चक्रवाकवल्लभ,—चक्रवाकाणां—रथाङ्गनाम्नां, वल्लभ,—प्रिय, मिलनसम्पादकत्वादिति भाव, वासर,—दिवस, सञ्चुकोच—सङ्कुचितवान्, क्षीणतामयासीत इत्यर्थः। पद्माकरोऽपि चावाप्तमुद्रितया चक्रवाकवल्लभ, इति तेन सह वासरस्यार्थसाम्यात्मोपमाऽलङ्कारः।

(४०८) प्रकीर्णानि—विस्तारितानि, दिक्षु विदिक्षु च व्याप्तानीत्यर्थः। नवेति।—नव,—प्रत्यग्र, सद्योनिर्गत इत्यर्थः, रुधिररस,—रक्तद्रव तद्वत्, तेन च अरुण,—लोहित, वर्णं,—रूप येषां तानि लोकालोकजुंषि—लोकालोक,—सप्तसमुद्रव सूर्यकिरणसम्पर्कसीमापन्नस इति यावत्, तस्य पार्श्वयोरालम्बस सद्भावस्य च सम्भवात् इयाख्यानिति ख्यातस्य त जुषन्ते—सेवन्ते, आश्रयन्तीत्यर्थः तथोक्तानि, लोकालोकपर्वताश्रयीणि इत्यर्थं, लोकदृष्टिविविकराणि इति भाव, ["जुषते" इत्यस्य भौवादिकस्य कर्तरि क्विप्] अथवा,—लोकाना—जनानाम, आलोक—दर्शनम ("आलोको दर्शनोद्द्योतौ" इत्यमर) जुषन्ते—सेवन्ते इति तथोक्तानि, लोकदृष्टिगोचराणीत्यर्थः, उद्गीर्य बहिष्करणादिति भाव।

(४०९) कुपितेति।—कुपितेन—क्रुद्धेन, गुरु वैशम्पायन प्रतीति भाव, याज्ञवल्क्येन—तदाख्यमुनिना, वक्त्रात्—मुखात्, वान्तानि—उद्गीर्णानि, यजूंषीव—यजुर्वेदानिव, वैशम्पायनशिष्या इति शेष। निजवपुषि—स्वदेहे। पुरा वैशम्पायनशिष्य याज्ञवल्क्य गुरौ वैशम्पायनस्य सकाशात् वेदानधीत्य सर्वेषु शिष्येषु प्रमादिष्ट

( ४१० ) पूषा पापमुषि पुनरपि सञ्जहार जालकानि रोचिषाम् ।

स्वगुरौ ब्रह्महत्यापापक्षयकारकं व्रतमेकाकी एवाचरितुमिच्छन् गुरुणा विप्रावमाननात् समर्हिषुणा मदात् मत्परिगृहीतान् परित्यजेति उपालब्धः सर्वानेवाधीतान् वेदान् मायामुद्गवान्, तदानीं च तान् मुनयः तित्तिरयो मन्त्रलोलुपतया तित्तिरीभूय आददुः, तत एते वेदभागाः कृष्णयजुर्वेदा इति उच्यन्ते। तथा हि विष्णुपुराणे—"शिष्यानाह च भो शिष्याः । ब्रह्महत्यापहं व्रतम् । चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥ अथाऽऽह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विजैः । क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥ ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् । मुच्यतां यत् त्वयाऽधीतं मत्तो विप्रावमानक ॥

इत्युक्तो रुधिराक्तानि सरूपाणि यजूंष्यथ । छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥ यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज । जगृहुस्तित्तिरीभूत्वा तित्तिरीयास्तु ते ततः ॥ एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः । अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम । वाजिनस्ते समाख्याताः सूर्योऽप्यश्वोऽभवद्यतः ॥" इत्यादि । एवमेवात्र वाजसनेयिसंहिताभाष्ये तत्रभवान् महीधरः, तथा हि—"तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश, ते च स्वशिष्येभ्यः । एवं परम्परया सहस्रशाखो वेदो जातः । तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत् । तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच, मदधीतं त्यजेति । स योगसामर्थ्यात् मूर्तां विद्यां विधाय उद्ववाम । वान्तानि यजूंषि गृहीतानि गुरुणा अन्ये वैशम्पायनशिष्याः तित्तिरयो भूत्वा यजूंषि अभक्षयन् । तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि । ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान् । तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्" इति ।

( ४१० ) पूषा—सूर्यः । पापमुषि—पापक्षयकारिणि, [ पापं मुष्णाति मोषते मुष्णते वा इत्यर्थे क्विप् ] । रोचिषा—तेजसा किरणानामित्यर्थः, जालकानि—निचयान् सञ्जहार—संहृतवान्, तिरोधापयामासेत्यर्थः । यथा हि वैशम्पायनशिष्याः तित्तिरयो भूत्वा याज्ञवल्क्यमुखनिर्गतानि रुधिराक्तानि छर्दितानि यजूंषि स्ववपुषि संहारयन्नाम् एवमेव पूषाऽपि स्वरोचिषां जालकानि निजवपुषि सञ्जहारेति यजुर्भिः सह रोचिषां जालकानामभेदसाम्योक्तेरुपमालङ्कारः ।

शोणितक्वाथकषायितकुक्षिः अतिविशङ्कटः कटाह इव च बार्हस्पत्यः, (४२०) सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाऽऽभोग इव महाभैरवस्य मुहूर्त्तम् अदृश्यत। (४२१) जलनिधिजलप्रतिबिम्बितरविबिम्बराजिभास्वराभ्रावलम्बिनो गृहीतार्द्रमांसभारा इव चाबभासे वासरावसानवेला

---

पाकः तस्य पिशुनः—सूचकः राज्ञोऽभिचारादिकरणप्रसिद्धेः। शोणितेति।—शोणितस्य—रक्तस्य, क्वाथेन—निष्पाकेन, तापेन घनीकरणेन इत्यर्थः ("क्वाथः स्यादतिदुःखेऽपि निष्पाके च द्रवस्य च" इति मेदिनी) कषायितः,—रक्तीकृतः, कुक्षिः,—अभ्यन्तरं यस्य तथाभूतः अतिविशङ्कटः,—अतिभीषणः, रक्तोपलिप्तत्वादिति भावः, ["वे शालच्छङ्कटचौ" (५।२।२८ पा०) इति शङ्कटच्प्रत्ययः] बार्हस्पत्यः,—बृहस्पतेरयं बार्हस्पत्यः कटाह इव—स्थालीविशेष इव। पुरा देवासुरयुद्धावसरे देवगुरुः बृहस्पतिरसुरवधसाधनाय आथर्वणिकाभिचारक्रियामकरोदिति पौराणिकी कथाऽत्रानुसन्धेया। अत्रासुररक्तोपलिप्तरक्तकटाहेन साकमुष्णांशोरवैधर्म्यसाम्यादुपमाऽलङ्कारः।

(४२०) सद्य इति।—सद्यः—तत्क्षणं निपातश्च एव इत्यर्थः गलितः—निःसृतः गजदानवस्य—गजासुरस्य, देहात्—शरीरात् यत् लोहितं—रक्तं तस्य उपलेपनं—अनुलेपनेन भीषणः,—उग्रः, महाभैरवस्य—महारुद्रस्य मुखेति।—मुखमण्डलस्य—वदनबिम्बस्य, आभोग इव—आयतनमिव अदृश्यत—अवलोकितः, पूर्वोक्तविधः उष्णरश्मिरिति पूर्वेण सम्बन्धः। महादेवकृतगजासुरनिधनवार्ता काशीखण्डे अष्टषष्टितमेऽध्याये उपवर्णिता, तथा हि—"कश्चिदासुरमुख्योऽसौ समायाति गजासुरः। प्रमथ्नन् प्रमथान् सर्वान् निजवीर्यमदोद्धतः॥ ततस्त्रिशूलहस्तस्तमायान्तं दैत्यपुङ्गवम्। विज्ञायावध्यमन्येन शूलेनाभिजघान तम्॥ प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः। छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम्॥" इति। अत्र गजदानवरक्तोपलिप्तमहाभैरवमुखमण्डलेन साकमुष्णांशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः, एकस्यैवोपमेयस्य भूयसामुपमानानां दर्शनादियं मालारूपा वदितव्या,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति दर्पणोक्तेः।

(४२१) जलनिधीति।—जलनिधेः,—समुद्रस्य जलेषु,—सलिलेषु, प्रतिबिम्बिता—प्रतिफलिता, या रविबिम्बराजिः,—सूर्यमण्डलच्छायाश्रेणिः, तया भास्वरं—दीप्तिमत्, यत् अभ्रम्—आकाशं मेघो वा तदवलम्बिनी—तदाश्रयिणी, अत एव

वेतालनिभा। (४२२) ज्वलत्सन्ध्यारागरज्यमानजल-प्रवाहः पुनरिव (४२३) पुराणपुरुषपीवरोरुसम्पुटपिष्टमधु-कैटभरुधिरपटलपाटलवपुः अभवत् अधिपतिः अर्णसाम्।

---

गृहीत,—धृत, आर्द्र,—सरस, तदेकपलिङ्क इति यावत, मांसभार,—पिशितराशि यया तथाभूतेव वासरावसानवेला—सन्ध्याकाल कृष्णवर्णा इति भाव, वेतालनिभा—वेतालसदृशी, व्यभासे—शुशुभे, वेतालोऽपि आर्द्रमांसभार वहतीति भाव। अत्र समुद्रनीरे प्रतिफलितया लौहित्यात् आर्द्रत्वेन प्रतीयमानया, सान्ध्यकालिक सूर्यस्य अरुणप्रभया क्वचित क्वचित श्यामरुचे मेघपुञ्जस्य आरक्तीकृततया, ईषदन्धकारीभूतायाः वासरावसानवेलाया गृहीतार्द्रमांसभारवेतालसादृश्यप्रतीते उपमाऽलङ्कार सुव्यक्त एव।

(४२२) ज्वलदिति।—ज्वलता—राजमानेन, सन्ध्यारागेण—सायङ्कालिकारुणवर्णेन, रज्यमान,—कुर्व्यमाण, प्रतिफल्यमानतया रक्तीक्रियमाण इत्यर्थ, जलप्रवाह —सलिलराशि यस्य तथाभूत।

(४२३) अर्णसा—जलाना ("सलिलं कमलं जलम्। अम्भोऽर्णस्तोय—" इत्यमर) अधिपति,—प्रभु, समुद्र इत्यर्थ, पुन,—प्राक्तन, पुराणेति।—पुराण,—सनातन, पुरुष,—पुमान् नारायण इत्यर्थ, तस्य पीवरे—स्थूले, ऊरुसम्पुटे—सक्थिरूपाधारे, सक्थियुगल वा, पिष्टयो,—निष्पेषितयोरित्यर्थ, मुद्गरेनेव इति भाव, मधुकैटभयो,—तदाख्ययोरसुरयुगलयो, रुधिरपटलेन—रक्तसमूहेन पाटलम्—आरक्त, वपु —शरीर यस्य तथाभूत, अभवदिव—अजायतेवेत्यर्थ अर्णसामधिपति पुराणपुरुषपाटलवपुर्धुक बभूवेवेति भाव। अत्र उपमेयीभूते अर्णसामधिपतौ पुराणपुरुषपीवरोरुसम्पुटपिष्टमधुकैटभरुधिरपाटलवपुष उपमानभूतस्य तादात्म्याध्यासात् स्फुटैककोटिकसम्भावनात्मकोत्प्रेक्षाऽलङ्कार। सृष्टिप्रारम्भे जलनिधौ शयानस्य भगवतो नारायणस्य नाभिकमलात् ब्रह्मा समुदभवत्। तदानीं च तस्यैव भगवत कर्णमलात् दानवासुरौ मधु कैटभश्च समुत्पद्य बुभुक्षया नाभिकमलस्थित ब्रह्माणम् भक्षितुम् उद्यतौ तदवलोक्य भीतेन ब्रह्मणा स्तुता योगनिद्रा विष्णो शरीर तत्याज, ततश्च समुत्थाय भगवान तौ तथाविधौ दृष्ट्वा पञ्चवर्षसहस्र ताभ्यां बाहुयुद्ध कृत्वा तयोरेव सन्तुष्टयोर्वरं लब्ध्वा ऊरुदेशे निधाय चक्रेण निहतवानिति मार्कण्डेयपुराणे—"तदा दानवासुरौ घोरौ विख्यातौ मधुकैटभौ। विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ॥" इत्यादि देवीमाहात्म्यम् अत्र अनुसन्धेयम्।

( ४२४ ) अवसिते सन्ध्यासमये समनन्तरम् ( ४२५ ) अपरि-
मितयशःपानतृषिताय मुक्ताशैलशिलाचषक इव निजकुमु-
दकीर्त्या, ( ४२६ ) कृतयुगकरणोद्यताय आदिराजराजतशासन-
मुद्रानिवेश इव राज्यश्रिया, सकलद्वीपजिगीषाचलिताय श्वेत-
द्वीपदूत इव च आयत्या, ( ४२७ ) श्वेतभानुः उपानीयत
निशया नरेन्द्राय इति ।

इति श्रीबाणभट्टकृते हर्षचरिते राज्यश्रीप्राप्तिर्नाम

अष्टम उच्छ्वासः ॥ ८ ॥

( ४२४ ) अवसिते—समाप्तिं गते, अतिक्रान्ते इत्यर्थः ।

( ४२५ ) निजकुमुदकीर्त्या—पुष्पभूतिवंशस्य यशसा, अपरिमितेति ।—अपरिमितानि,—प्रभूतानि यशांसि—कीर्त्तयः, तेषां पानाय—पेयविषयीकरणाय, अधिगमायेत्यर्थः, तृषितः,—तृष्णार्त्तः, लुब्ध इत्यर्थः तस्मै, नरेन्द्राय इत्यनेनान्वयः, सर्वदिग्विजयिन इति भावः, मुक्ताशैलशिलाचषक इव—मुक्तागिरिप्रस्तरखण्डरूपपानपात्रमिव, ( "चषकोऽस्त्री पानपात्रम्" इत्यमरः ) ।

( ४२६ ) राज्यश्रिया—राजलक्ष्म्या कृतेति ।—कृतं—सत्यं युगं, तस्य करणे—विधाने, पुनः प्रवर्त्तने इत्यर्थः, पापाचारिणः उन्मूल्य चतुष्पाद्धर्मसंस्थापनद्वारा इति भावः, उद्यतः,—प्रवृत्तः तस्मै, आदिराजेति ।—आदिराजस्य—प्रथमनृपतेः, मनोः वैवस्वतस्य वैण्यस्य पृथोर्वा इत्यर्थः, राजती—रजतनिर्म्मिता, शासनमुद्रा—राज्याधिकारमुद्रा, राजनामाङ्कितप्रत्ययोत्पादकमुद्राविशेष इत्यर्थः तस्याः निवेश इव—मुद्रितावयव इव । आयत्या—उत्तरकालेन, आगामिन्या शुभया नियत्या इत्यर्थः, ( "उत्तरः कालः आयतिः"-इत्यमरः) सकलेति ।—सकलानां—सर्वेषां, सप्तानामष्टादशानां वा इत्यर्थः, द्वीपानां—जम्बुशाकादीनां समन्ताज्जलवेष्टितभूभागानां, जिगीषया—जयाकाङ्क्षया, चलितः,—प्रस्थितः तस्मै, श्वेतद्वीपदूतः,—श्वेतद्वीपस्य—अष्टादशद्वीपान्तर्गतस्य प्रभेदस्य, दूतः—वार्त्तावहः, तद्द्वीपस्वामिनो सन्देशमादाय आगत इति भावः, चन्द्रस्य अतिशुभ्रकान्तित्वात् श्वेतद्वीपदूतत्वौपम्यं सुसङ्गतमेवेति । दैवमेवानुकूलं श्वेतद्वीपग्रहणार्थं तद्द्वीपेश्वरदूतं हर्षाय प्रेरितवदिति निष्कर्षः ।

( ४२७ ) निशया—रजन्या, श्वेतभानुः,—शुभ्रांशुः, चन्द्र इति यावत्, नरेन्द्राय—हर्षाय, उपानीयत—प्राप्यत, उपायनीकृत इति यावत्, [ नयतेर्द्विकर्म्मकत्वेऽपि उपपूर्वकस्य तस्य उपहारकरणार्थकत्वेन सम्प्रदानरूपत्वात् "नरेन्द्राय"

इत्येव चतुर्थी, न तु द्वितीयेति वेदितव्यम्]। निशा श्वेतभानुं निष्कलङ्क कीर्त्तिसमर्पितमुक्ताशैलशिलाचषकमिव, राजलक्ष्मीसमर्पिताऽधिराजराज्यशासनमुद्रा-निवशमिव, आयतिप्रदत्तश्वेतद्वीपदूतमिव च नरेन्द्रमानयदिति निष्कर्ष चन्द्रोदयोऽभूदिति भाव। अत्रैकस्मिन्नेव श्वेतभानौ भूयसा तथाविधचषकादीनामवैधर्म्यसाम्योक्ते मालोपमाऽलङ्कार।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां
श्रीहर्षचरितव्याख्यायाम् अष्टम उच्छ्वास ॥ ८॥

